# MANUŚANHITA.
# OR
# INSTITUTES OF MANU.

COMMENTED AND EDITED

BY

PUNDIT GANGADHUR KAVIRATNA KAVÍRAJ

---

*PUBLISHED BY*

DHARANIDHAR RAY KAVIRAJ.

---

# मनुसंहिता।

---

श्रीयुक्त गङ्गाधर कविरत्न कविराज कृत

प्रमादभञ्जनी टीका सहिता।

श्रीयुक्त धरणीधर राय कविराज कर्त्तृक

प्रकाशिता।

---

बहरमपुर—सैदाबाद।

प्रमादभञ्जनयन्त्रे

मुद्रिता।

---

१२८९।



# मनुसंहिता।

## प्रमादभञ्जनीटीका।

### प्रथमाध्याय।

ओँ नमः शिवाय।

शिवमर्द्धाविवशिवा वर्द्धनारीनराकृती। प्रकृतीनिताक्रियायुक्तौ पितरौप्रणमाम्यहम्॥ १॥ पूर्व्वैरनेकैर्बु-
धमानभिर्धिया प्रमादतोमानवधर्म्मसंहिताम्। व्याख्यायधर्म्मोबहुधाविलोपितः प्रमादभञ्जन्यमलाविधीयते॥ २
योधर्म्मशास्त्रस्यनिगूढमर्थंत स्तत्त्वं नविज्ञाय करोत्यतत्त्वतः। व्याख्यांतलाद्धर्म्मविलोपदोषतः सराजदण्डंरसमाच्छि-
दार्हति॥ ३॥ असद्व्याख्यार्णवेघोरे मग्नांमानवसंहितां। वेदान्तवत्सञ्छन्दं तत्त्वतोऽहंममोद्यमः॥ ४॥ स्फुरतु
हृदयसंस्थेश्यामतोश्यामकेश्या हिमलरुचिरवर्णाध्यानमय्युत्थितावाक्। मनुवचनमसद्व्याख्यार्णवा दुद्धरन्तीममंमृदु-
रसनायांवाङ्मृतान्तदोषा॥ ५॥ वागव्यक्तपदापरामृत मयीसूक्ष्मासतीभास्वती हृत्पद्मास्वरसद्मनिस्थितवती
पश्चाद्ईतक्रमात्। प्रत्ताव्यक्तपदामृतात्र रसनायांमाङ्गनेक्रीडतिभाषाऽमेवकलाविधीमन् वचोव्याख्याविधौ-
सास्पदे॥ ६॥ अत्र्यादिभिर्धर्म्मशास्त्रे यान्युक्तानिपृथक्पृथक्। तेषांभिन्नार्थकाभ्यांभिन्नार्थैरधिकार्थकैः॥ ७॥
कश्चित्स्यार्थकैर्वाक्यैःसमनीयप्रयत्नतः। व्याचक्षेऽधेयतवोधार्थमद्य मानवसंहिताम्॥ ८॥ सर्व्वशास्त्रंकृतादौ-
तुशास्त्रं हिसुमेधसाम। आसीदेतनचैवासीत्त्रिपिवद्धंततःपुनः॥ ९॥ द्वापरान्तेमुनिवरो व्यासःसत्यवतीसुतः।
वेदान्विभज्यचतुरो मुनीन ध्यापयच्छुभान्॥ १०॥ सुमन्तोजैमिनिःपैलोवैशम्पायनएवच। साङ्गांस्ते जगृहु-
र्वेदा न्यथापान्स्मृतीनपि॥ ११॥ तेचशिष्यान् बहून्वेदान् साङ्गानध्यापयंस्ततः। मीमांसासूत्रमकरोज्जै-
मिनिः स्मृतिवेदयोः॥ १२॥ तद्वद्व्यासोऽथशिष्येभ्योधर्म्मशास्त्राणि कृत्स्नशः। अध्यापयच्च प्रथमंस्मृतिंमानव
संहिताम्॥ १३॥

अथखलुनापृष्टाउपदेष्टार*उपदिशन्तिकिमपि*तस्मादादौसंहितायाः*प्रकाशकऋषिःप्रश्ननिर्द्दिशति ॥ * ॥

**मनुमेकाग्रमासीन मुपगम्यमहर्षयः । प्रतिपूज्ययथान्याय मिदंवचनमब्रुवन् ॥ १ ॥**

स्वायम्भुवमाद्यं मनु*मेकाग्रमव्यग्रचित्त*मेवासीनंमहर्षयउपगम्य*यथान्यायं प्रतिपूज्य ॥ १ ॥ मनुकृतया-गतोचितसत्कारा*दनन्तरंयथान्यायं*सत्कृत्यवचनमिदं*वक्ष्यमाणमब्रुवन् ॥ २ ॥ तद्यथा ॥ १ ॥

**भगवन्सर्व्ववर्णानां यथावदनुपूर्व्वशः । अन्तरप्रभवानाञ्चधर्म्मान्नोवक्तुमर्हसि ॥ २**

भगवन्नित्यादि ॥ १ ॥ * ॥ भोभगवं स्त्वंसर्व्वेषांवर्णानां*ब्राह्मणक्षत्रियवैश्य*शूद्राणामन्तरप्रभवानाम-राणांधर्म्मा*न्नोऽस्मभ्यंवक्तुमर्हसीति ॥ १ ॥ * ॥ २ ॥ * ॥ ननुसन्तिधर्म्मोपदेष्टारोदेवा*अनेकेचबहवो ब्रह्माद-यस्तांस्तु*किमर्थंमहर्षयोमनुमेवोपजग्मुः ॥ १ ॥ वेदाचार्य्या ब्रह्मादयोगाचार्य्याः शिवो*धर्म्माचार्य्यास्तु स्वाय-म्भुवोमनुरि*त्यतोधर्म्म जिज्ञासवस्तमूपायुः ॥ २ ॥ उक्तंचपराशरेण* स्वसंहितायां व्याख्याय*धर्म्ममेवो-पदिष्टवते ॥ ३ ॥

**नकश्चिद्वेदकर्त्तास्तिवेदस्मर्त्ताचतुर्मुखः । तथैवधर्म्मंस्मरतिमनुःकल्पान्तरान्तरे इति ॥ ४ ॥ कौर्म्मेचेश्वरगीतायां*विभूतियोगकथने*भगवताशिवेनोक्तम* सर्व्वेषांवेदविदुषामहं स्वायम्भुवोमनुरिति ॥ ५ ॥**

इत्यभिप्रेत्यमहर्षयस्तदुपगमनव्यापारमाहुः ॥ ६ ॥

**त्वमेकोह्यस्यसर्व्वस्य विधानस्यस्वयम्भुवः । अचिन्त्यस्याप्रमेयस्यकार्य्यतत्त्वार्थवित्प्रभो ॥ ३ ॥**

त्वमेकइत्यादि ॥ १ ॥ भोप्रभो हियस्मात्त्वमेकोऽस्यसर्व्व*स्याखिलस्यजगतोविधानस्य*सर्गरक्षाप्रलयविधा-नकर्त्तुः ॥ १ ॥ अप्रमेयस्यलौकिक*प्रमाणैः प्रत्यक्षानुमानादिभि*रज्ञातस्वरूपस्याचिन्त्यस्यहृदा*चिन्तयितुमश-क्यस्य ॥ २ ॥ स्वयम्भुवःपरमेश्वरस्यविधानस्य*कार्य्याणां तत्त्वार्थविदसितस्मा*द्धर्म्मान्वक्तुंत्वमर्हसि ॥ ३ ॥ अथ-वैकस्यैवाचष्टे* यस्मात्त्वमेकोऽद्वितीयोऽस्यसर्व्वस्य* प्रत्यक्षश्रुतस्मृत्या* दानुमेयस्यविधानस्यवेदस्य ॥ ४ ॥ विधीयन्तेकर्म्माणि अग्निहोत्रादीनि*येनेतिविधानं वेद*स्तस्यस्वयम्भुवोऽपौरुषेयस्य ॥ ५ ॥ अचिन्त्यस्य-शाखा* विभिन्नत्वादियत्तया* परिच्छेत्तुमयोग्यस्य ॥ ६ ॥ अप्रमेयस्यमीमांसादिन्याय* निरपेक्षतयाऽन-वगमस्याप्रमेयस्य ॥ ७ ॥ कार्य्यमनुष्ठेयमग्निष्टोमादि*तत्त्वं ब्रह्मसत्यंज्ञान*मनन्तंब्रह्मेत्यादि वेदान्तवेद्यम् ॥ ८ ॥ तदेवार्थःप्रतिपाद्य*भागस्तंवेत्सीति कार्य्यतत्त्वार्थवित्*भवसिभोप्रभो इति ॥ ९ ॥ ततसर्व्वमयुक्तंनहि*वेदः स्व-यंपौरुषेयोपि*परमपुरुषादीश्वरात्सम्भूतो*यतउक्तं मुण्डके ॥ १० ॥

**यःसर्व्वज्ञःसर्व्वविद्यस्यज्ञानमयंतपः । तस्मादेतद्ब्रह्मनाम रूपमन्नञ्चजायतइति ११**

शास्त्रयोनित्वादिति चोक्तं*नापाचिन्त्यमियत्तया*परिछिन्न त्वाम्मन्वादिभिर्ज्ञातत्वात् ॥ १२ ॥ नापरमं यीम न्वादिभिःखलु* मीमांसादिनाय निरपेक्षतये* ज्ञावगततत्त्वार्थत्वात् ॥ १३ ॥ * ॥ ३ ॥ *.॥

**सतैःपृष्ठस्तथासम्यगमितौजामहात्मभिः । प्रत्युवाचार्च्च्यतान्सर्व्वान्महर्षीन्श्रूयतामिति ॥ ४ ॥**

सतैरित्यादि ॥ १ ॥ अमितौजाइत्यमिततत्त्ववान्स*मनुर्महात्मभिस्तैर्महर्षिभि*स्तथासम्यक्पृष्टः सर्व्वां* स्तान्महर्षीनार्च्च्य यथार्हंसत्कृत्य*श्रूयतामितिप्रत्युवाच ॥ १ ॥ * ॥ ॥ * ॥ धर्म्मान्नोवक्तु महंसीतिधर्म्मं* पृष्टोमनुः प्रथमतो*धर्म्म स्वरूपं विवक्षु*र्धर्म्म प्रादुर्भावमाह ॥ १ ॥

**आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयंप्रसुप्तमिवसर्व्वतः ॥ ५ ॥**

आसीदिदमित्यादि ॥ ५ ॥

**असद्वाइदमग्र आसीत्ततोवैसदजायत । तदात्मानं स्वयमकुरुततस्मात्तत्सुकृतमुच्यते ॥ ६ ॥**

इति तैत्तिरीयशाखोक्तमन्त्र*मस्याच तच्छीशाखोक्तं*सदेवसौम्येदमग्र आसी*दितिश्चाक्यानां च मूला*मद्वरेतं वचनांस.इ ॥ २ ॥ इदं महाप्रलयावस्थंयत्किञ्च*प्राणाप्राणिभूतमतमोरूपं*तत्सर्व्वंतमोभूतं पूर्व्वमासीत् । ३ । तर्हि किं निश्चियतम*स्तत्तमोभूत मिदंप्रा*गासीदितिनेत्याह ॥ ४ ॥ अप्रज्ञातमिति निश्चि*यत्तमस्तद्विलोकेषु* सर्व्वैरेवप्रत्यक्षेण प्रज्ञायते ॥ ५ ॥ यत्तुतमोनकेरपि*प्रत्यक्षेण प्रज्ञात,यस्मात्तेत*त्तमोभूतमिदं सर्व्वंज्ञा प्रज्ञातं ॥६॥ तर्हि किं कल्पान्तेयत्तु*तमस्तत्तमोभूतमिदमासी*न्नेत्याह तदा हि तमो न भवति ॥ ७ ॥ उक्तं छान्दोग्योपनिषदि ॥

**अथततऊर्द्ध्वउदेत्य*नैवोदेतानास्तमेता*एकलएवमध्येस्थाता*तदेष श्लोको-भवति ॥ ८ ॥ नवैतत्रनिम्लोचोनोदीयायकदाचन । देवास्तेनाहं सत्येनमाविराधिषिब्रह्मणा ॥ इति ॥ ९ ॥ नहवाअस्माउदेति*ननिम्लोचतिसकृद्दिवा*हैवास्मै भवतीति ॥ १० ॥**

तर्हि किं त्रिगुणसाम्य*लक्षणे प्रकृत्यवशेषे*प्राकृते महा प्रलये* यत्तमोज्योति र्विहीनं*स्तिमितमेवा स्तवत्तमोभूत**त्तज्ञविष्णुपुराणे ॥ ११ ॥

नाहर्नरात्रिर्न नभोनभूमि*र्नासीत्तमोज्योतिरभून्नचान्यत्*श्रोत्रादिबुद्ध्यानुपल-
भ्यमेकं*प्राधानिकंब्रह्मपुमांस्तदासीत् इति ॥ १२ ॥

नासीत्तमोज्योतिरिति*न तमोनज्योतिरिति*सजलमेघा वलिवासे नभसि*यथास्तिमितं तम*स्तद्वत्तमोभूतमिति ॥ १३ ॥ नैताद्दशा लक्षणमिति*स्तिमितत्वं तस्य लक्षणं तर्हि यत्तम स्तर्क्यं तत्तमोभूतं*नैताद्दशमतर्क्यमिति ॥ १४ ॥ अथ तर्हि किं निर्व्वाणाख्ये*परमात्मशिवात्मशेषे*प्राकृत प्रलये यत्तम*स्तत्तमोभूतमिदमासीत् ॥ १५ ॥ यदुक्तं श्वेताश्वतरोपनिषदि। यजुर्वेदीयमन्त्रेषु ॥ १६ ॥

यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञाचतस्मात् प्रसृतापुराणी ॥ १७ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवविदित्वातिमृत्युमेति नान्यः पन्थाविद्यतेऽयनायइति ॥ १८ ॥

नैताद्दशविज्ञेयमिति*तदिति तमः साङ्ख्ययोगाधिगम्य*मुक्तं श्वेताश्वतरोपनिषदिच । १९ ।

नित्योनित्यानां चेतनश्चेतनानां बहूनां यो विदधातिकामान्। तत् कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वादेवं मुच्यते सर्व्वपाशैरिति ॥ २० ॥

विज्ञानमयकोषस्यात्मायोगस्त*द्विज्ञानं तेनाधिगम्यः*सपरमात्मापुरुषः*इतरां साङ्ख्ययोगाधिगम्यं तमः २१ —इत्यत्र तमोभूतमिदं*सर्व्वतः प्रसुप्तमिव*प्राक् सर्गादासीदिति ॥ २२ ॥ सर्व्वतःप्रसुप्तःपुरुषोयथा * सुषुप्तिस्थानः खल्वात्मा*प्राज्ञस्तमसानिगूढः*क्रियागुणव्यपदेश*रहितएववर्त्तते ॥ २३ ॥ तथातमोभूतमिदं*सर्व्वं मूलप्रकृतौ प्रा*गवर्त्ततमूलप्रकृतिस्तुशक्तिः*क्रियागुणव्यपदेश*हीनाप्रसुप्तेवावर्त्तत ॥ २४ ॥ एतदुक्तं श्वेताश्वतरोपनिषदि। ब्रह्मवादिनो वदन्तीत्युपक्रम्य ॥ २५ ॥

ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानिनिखिलानितानिकालात्मयुक्तान्यधितिष्ठत्येकः इति ॥ २५ ॥

अतएवब्रह्मवादिनः*स्वगुणैरिति स्वप्रभावशक्तिभि*र्निखिलानि कारणानिपूर्वोक्तानि ॥ २६ ॥ स्वभावनियति-यदृच्छा*प्रधानचेतन्य पुरुष*पञ्चमहाभूतानि*कालजीवात्म युक्तानि ॥ २७ ॥ एषामधिष्ठाता यएकोदेवः*शिवस्तस्यात्मायाशक्ति*स्तांस्वगुणै र्निगूढांब्रह्मअपश्यन् ॥ २८ ॥ देवस्यात्मेति विशेषणेनदेवस्य*निजशक्ति ज्ञानबल*क्रियादीनांव्यवच्छेदः ॥२९॥ इत्यर्थंभावमयमिदं*सर्व्वं यदातमोरूप*प्रभावरूपं भवति*तदामहत्तमे तक्रियागुणादीनां*

सतीसर्गस्थिति प्रलयादिभ्यो * निवर्त्तमानावर्त्तते ॥ २१ ॥ एतदेव प्राक्सर्गात्क्रियागुणा * व्यपदेशाभावात्सद * पासदिता भिप्रायेण * तैत्तिरीयशाखायामुक्तं ॥ २२ ॥ असद्वाइदमग्रआसीदितितच * सदितिसिद्धान्तं निश्चित्यछान्दोग्ये * सदेवसौम्येदमग्र * आसीदेकमेवेत्युक्तं ॥ २३ ॥ * ॥ ५ ॥ * ॥ अथसर्गकालेऽस्माच्छक्तिब्रह्मणः * प्रथमं यद्जायत * तत्संक्षेपणोच्यते ॥ १ ॥

ततःस्वयम्भूर्भगवानव्यक्तोव्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ ६ ॥

ततःस्वयम्भूरित्यादि * ततःशक्तिब्रह्मणःस्वयम्भूर्यथा * जज्ञेतदुक्तंतैत्तिरी * योपनिषदिमन्त्रेण ॥ १ ॥ ततोवैसदजायतेति * प्रस्यब्राह्मणंछान्दोग्योपनिषदि * सप्ततिवादेऽक्तस्य ॥ २ ।

तद्धैकआहुरसदेवसौम्येद * मग्रआसीदेकमेवा * द्वितीयंतस्मादसतःसज्जायेतेति ॥ ३ ॥ कुतस्तुखलुसौम्यैवं * स्यात् कथमसतःसज्जायेततस्मात् * सत्त्वेवसौम्येदमग्र * आसीदेकमेवाद्वितीयं ॥ ४ ॥ तदैक्षतबहुस्यांप्रजायेयेति * तत्तेजोऽसृजततदैक्षतबहु * स्यांप्रजायेयेतितदपोऽसृजत ॥ ५ ॥ ताऐक्षन्तबहुस्यामप्रजायेम * होतिताअन्नमसृजन्त ॥ ६ ॥

इति तेजोवन्नमिति * त्रयंसत्ततोऽजायत * यद्वतेजस्तल्लोहित * मिवरूपंतेजसांवीजम् ॥ ७ ॥ यास्ताआपस्ताःशुक्लाइवमत्वासा * मपामाकारभूतारसाश्रयाः * यत्तदन्नंतत्कृष्णमिव ॥ ८ ॥ त्रिभिरेतैर्लोहितशुक्लकृष्णै * रूपाहिताऽसौशक्तिःमा * गजावाग्रूपागायत्रीवभूव ॥ ९ ॥ एतल्लोहितशुक्लकृष्णाभासा * गायत्रीनामैतक्रिया * गुणव्यपदिष्टंसत्ततोऽजायत ॥ १० ॥ याबैसागायत्रीसैव * लोहितशुक्लकृष्णात्म * तेजोवन्नांशंविना * परमव्योमांशेन ॥ ११ ॥ षट्-अगःशुभावद्धो * त्रिधियंस्मात्सस्वयःशिव * स्तंस्वयमात्मानं शिवमकरुत * तस्मात्स्वयरूपत्वात्तत् * सुकृतंधर्मनामोच्यते ॥ ११ ॥ अतएवासौस्वयम्भूः * शिवादिदेवोधर्मोऽरुच्यते * स्तदेषश्लोकस्तैत्तिरी * योपनिषद्युक्तएव ॥ १२ ॥

असद्वाइदमग्रआसीत्ततोवैसदजायत।तदात्मानंस्वयमकुरुततस्मात्तत्सुकृतमुच्यते इति ॥ १४ ॥ उक्तंचकणादेन * यतोऽभ्युदयनिःश्रे * यससिद्धिःसधर्मः इति ॥ १५

इतेयतद्धर्मस्वरूपमुक्तातस्य * कार्यं निखिलमुच्यते * व्यञ्जयन्निदमित्यादि ॥ १६ ॥ भगवान् सर्व्वैश्वर्यवानव्यक्तो * वाङ्मनसाभ्यामग्राह्यः * इदंमहाभूतादिव * त्तद्विद्यातिदाश्रयं * सम्राशिवर्गुदादि ॥ १७ ॥ तद्वाञ्जयन्सृजमानो * वृत्तौजास्तेषांज्योतिर्भि * र्वृत्तंमण्डलमोजोज्योतिःस्वरूपं * वलंयस्यसआदित्यः * पश्चात्तज्योतिर्मण्डलः ॥ १८ ॥ तथाऽवृत्तौजाःसन्यत्तमो * महानिर्व्वाणप्रलयेऽभू * त्तत्तमोनुदः प्रादुरासी * दितियतदुक्तंवेदादिषु ॥ १९ ॥ तद्यथा

मुण्डकोपनिषदि * यः सर्व्वज्ञः सर्व्ववि * द्यस्य ज्ञानमयं तपः * तस्मादेतद् ब्रह्म नाम * रूपमन्नञ्च जायते इति ॥ २० ॥
अथैतद् ब्रह्म सदाशिवगुं दादि * पंचब्रह्ममुरुपास्ते * त्तिरीयोपनिषदि चा * सद्वा इदमग्र आसी * दित्यस्यानुवाकउक्तः ॥२१॥

ततोऽकामयत बहु * स्यां प्रजायेयेति स तपोऽतप्यत * स तपस्तप्त्वा सर्व्वमसृजत ॥२२॥ यदिदं किञ्च सर्व्वं * तत्सर्व्वं सृष्ट्वा * तदेवानुप्राविशत् ॥ २३ ॥ निरुक्तञ्चानिरुक्तञ्च * निलयनञ्चानिलयनञ्च * विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवद्यदिदं किंच * तत्सर्व्वं सत्यमित्याचक्षते इति ॥ २५ ॥

एष श्रौतवाक्यो भगवतोपमन्युनामहर्षिणा च * वायवीयपुराणेतु * व्याख्यातस्तद्यथोच्यते ॥ २६ ॥

ज्ञानक्रियाचिकीर्षाभिस्तिसृभिः स्वीयशक्तिभिः। शक्तिमानीश्वरः शश्वद्विश्वं व्याप्यावतिष्ठते ॥ २७ ॥ ज्ञानशक्तिस्तु कार्य्यं यत्कारणं करणं तथा। प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति ॥ २८ ॥ इदमित्थमिदं नेत्थं भवेदित्यभिमानिका। इच्छाशक्तिर्महेशस्य नित्या कार्य्यनियामिका ॥ २९ ॥ अथेच्छया क्रियाशक्तिर्यथाध्यवसितं धिया। कल्पयत्यखिलं कार्य्यं क्षणात् सङ्कल्परूपिणी ॥ ३० ॥ यथा शक्तिसमुत्थाना शक्तिः प्रसवधर्म्मिणी। शक्त्या परमया नित्या प्रसूते सकलं जगत् ॥ ३१ ॥ एवं शक्तिसमायोगाच्छक्तिमानुच्यते शिवः। शक्तिशक्तिमदुत्थन्तु शाक्तं शैवमिदं जगत् ॥ ३२ ॥ यथा न जायते पुत्रः पितरं मातरं विना। तथा भवं भवानीं च विना नैव चराचरम् ॥ ३३ ॥ परमात्मा शिवः प्रोक्तः शिवा चैव प्रकीर्त्तिता। पितामहेश्वरो ज्ञेयः शिवा मातेति कीर्त्त्यते ॥ ३४ ॥ तस्माच्छक्तिमयं सर्व्वं जगत् स्थावरजङ्गमम्। शिवाद्यवनिपर्य्यन्तं यया ततमिदं जगत् ॥ ३५ ॥ ततः शिवाख्याया शक्तिः शक्त्या शक्तिसमुत्थया। तस्यां वै क्षोभ्य मायायामादौ नादः समुत्थितः ॥ ३६ ॥ नादाद्विनिःसृतो बिन्दुर्बिन्दोरोमित्यभूद्ध्वनिः। ज्ञातुर्महेश्वरी जाता शुद्धविद्या महोदया ॥ ३७ ॥ सा वाचामीश्वरी शक्तिर्वागीशाख्या तु शूलिनः। या सा वर्णस्वरूपेण मातृकेति विजृम्भते ॥ ३८ ॥ तत्त्वदर्णमयो देवो बभूवादौ सदाशिवः ॥ अथानन्तसमायोगात् कलां मायामवासृजत् ॥ ३९ ॥

नियतिश्च कलाविद्याकालश्च गुणपूरुषौ ॥ मायातःपुनरेवाभूदव्यक्तं त्रिगुणात्मकम् ॥ ४० ॥ त्रिगुणाव्रततोऽव्यक्तादिविकाराः स्युस्त्रयोगुणाः ॥ सत्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत् ॥ ४१ ॥ गुणेभ्यःक्षोभ्यमाणेभ्यो गुणेशास्त्रिमूर्तिनः ॥ अभवन्महदादीनि तत्त्वानिच यथाक्रमम् ॥ ४२ ॥ तेभ्यःस्युरण्डपिण्डानि ह्यसङ्ख्यानि शिवाज्ञया ॥ इत्येवं शक्तिशिवाभ्यां सर्गो यथा ॥ ६३ ॥

तथैवं शक्तिशिवाभ्यां*मनुप्रविष्टतेजोवन्न*विकारवर्णात्मकध्वनिमया*विद्यास्त्रयब्रह्मपुरुषः* सदाशिव आदावभूत् ॥ ४४ ॥ * ॥ ततस्ततसोऽपराविद्यामायाख्या * वभूवुस्तत्रार्थर्व्वविद्याग्रगः * सेतिहासपुराणोऽथर्व्ववेदोऽभूत् ॥ ४५ ॥ सामविद्याश्रयःसाम*वेदोयजुर्विद्याश्रयो* यजुर्वेदऋग्विद्याश्रयऋग्वेदः ॥ ४६ ॥ इतिद्वेविद्ये परापरेब्रह्मणी*पञ्चब्रह्मपुरुषाः*सदाशिवोवेदान्तोवेदाश्चत्वारः॥४७॥ एषांपञ्चानांब्रह्मणां*निलयनंनामरूप*मन्नस्त्रयथाऽजायततदुक्तंच*छान्दोग्योपनिषदि ॥ ४८ ॥

तस्य इवाएतस्य हृदयस्य*पंचदेवशुषयःस*योऽस्यप्राङ्शुषिःसप्राणः * सचक्षुःस आदित्यः ॥ ४९ ॥ अथयोऽस्यदक्षिणःशुषिःस व्यान*सश्रोत्रंसचन्द्रमा*अथयोऽस्य प्रत्यङ्शुषिः *सोऽपानःसा वाक्सोऽग्निः ॥ ५० ॥ अथयोऽस्योदङ्शुषिः* स समानस्तन्मनः*सएवविद्युत्पर्जन्यः ॥ ५१ ॥ अथयोऽस्योर्द्ध्वःशुषिःसउदानः*सवायुः स आकाश*स्तवाएतेपञ्चब्रह्म*पुरुषाःस्वर्गस्यलोकस्यद्वारपाः ॥ ५२ ॥

एतेप्राणादयःपञ्च*ब्रह्मपुरुषाःऋग्वेद*यजुर्वेदसामवेदा* थर्व्वाङ्गिरसाख्यवेद * सदाशिवाख्यवेदान्ताःक्रमेण ज्ञेयाः ॥ ५३ ॥ यथैषांनाम*रूपमन्नञ्चा*जायततच्च*यथैवोक्तं ॥ ५४ ॥

असौवाआदित्यो देवमधुतस्य*द्यौरेवतिरश्चीनोवंशोऽन्तरीक्ष* मपूपोमरीचयःपुत्राः ॥ ५५ ॥ तस्ययेप्राञ्चोरश्मयस्ताएवास्य*प्राच्योमधुनाड्यऋचएव*मधुकृतऋग्वेदएव* पुष्पंताअमृताआपः ॥ ५६ ॥ तावाएताऋचएतमृग्वेद* मभ्यतपंस्तस्याभितप्तस्ययश*स्तेजइन्द्रिय* मन्नाद्यंरसोऽजायत ॥ ५७ ॥ तद्व्यक्षरत्तदादित्यमभितो * ऽश्रयत्तद्वाएतद्यदेत * दादित्यस्यरोहितंरूपम् ॥ ५८ ॥ अथयेऽस्यदक्षिणारश्मयस्ताएव*वास्यदक्षिणामधु*नाड्योयजूंष्येवमधु*कृतो

**योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥७॥**

योऽसाववाक्तः स्वयम्भूरतीन्द्रियः * इन्द्रियाणामतिक्रान्तोऽग्राह्योवाङ्मन * साभ्यामग्रहीतुमशक्यः ॥ १ ॥ सूक्ष्मोऽणोरणीयान्सनातनोनित्योऽचिन्त्यश्च तथाचिन्तयितुमशक्यः * सस्वयं सर्वभूतमयः ॥ २ ॥ कालरूपं प्रधाना * व्यक्तमहदादितत्त्वभूतात्मकः * सन्नुद्बभावुद्भीतवान् ॥ ३ ॥ तद्यथा। विद्याविद्याद्वयपञ्च * ब्रह्मपुरुषाणां मध्ये * पञ्चविद्याश्रयः सद्धाभिर्वाब्रह्म * प्रणवादित्रयीमयः * पुरुषस्त्रिधावभूव ॥ ४ ॥ तत्राचैकांशः ऋग्वेदप्रविष्ट * द्वितीयोऽशोयजुर्वेदे * तृतीयोंऽशः सामवेदे ॥५॥ तथाथर्ववेदश्चत्रिधाभूत्वाद्या * न्ताऋग्वेदाविष्टत् * पौष्टिकांशोयजुर्वेदे * आभिचारिकोऽशः साम * वेदेऽथैवं त्रयीत्वभूत् ॥ ६ ॥ त्रयीचैकोभूयसदभूत्तत्सतं * तत्पुनर्द्विधाभूत्वाद्यः * कालोमहाविष्णुरभूत् * द्वितीयार्द्धश्चिदभूत् ॥७॥ चित्प्रसादांशः स्वेच्छोनामात्मास * विष्णुश्चिद्गुणांशः पुनः प्रधानाख्यः * सब्रह्मानामदेवता ॥ ८ ॥ ततः स्वेच्छयाधिष्ठितं * प्रधानं कालः प्रविश्य * स्वेच्छं क्षोभयन्प्रधानंच * संक्षोभाविकाश्य गुणां * स्त्रीन्पृथगेवचकार ॥ ९ ॥ असौभगवान्स्वयम्भू * र्विद्याविद्यापञ्चब्रह्म * पुरुषादीन्प्रधानान्तान् * प्रविश्यैकीभूयत्रिगुण * साम्यलक्षणमव्यक्तं नामात्माभूत् ॥ १० ॥ तदव्यक्तं त्रिगुणवैषम्यलक्षणं * महान्तमात्मानं सृष्ट्वा * ऽहङ्कारं ततः ससर्ज ॥ ११ ॥ अहङ्कारस्त्रिधाभवद्वैकारिकोनामसात्विकस्तैजसो * नामराजसोभूतादि * नामतामस इति ॥ १२ ॥ ततभूतादिः पञ्चतन्मात्राणि * महाभूतानि ससर्ज * शब्दस्पर्शरूपरस * गन्धमात्राः खमारुत * ज्योतिरम्बुभूपञ्चमाः ॥ १३ ॥ तैजसस्तदशेन्द्रियाणि ससर्ज * वैकारिकोमनोदेवताश्चैषां * ससर्ज सृष्ट्वा चैतानि * सर्वभूतमयः सोऽभूत् ॥ १४ ॥ * ॥ ७ ॥ एवमव्यक्तत्रिगुणलक्षणः सद * सदात्मकोऽव्यक्ताख्यात्मा * यदित्थं सर्वभूतमयोबभूव * तदुक्तं मुण्डकोपनिषदि ॥ १५ ॥

**यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः * सहस्रशः प्रभवन्ति सरूपाः। तथाऽक्षराद्विविधाः सौम्यभावाः * प्रजायन्ते तत्र चैवापियन्ति ॥ १६ ॥**

इतितत्स्वरूपावह्नेर्महान्तः * प्रजायन्तेततोयदजायतत * दुक्तं ततः परं तत्र ॥ १७ ॥

**दिव्योह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरोह्यजः। अप्राणोह्यमनाः शुभ्रोह्यक्षरात्परतः परः ॥ १८ ॥ एषोऽहङ्कारस्तद्यथा * एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ १९ ॥**

अत्रप्राणः पञ्चमहाभूतानि * तत्पूर्वपूर्वानुप्रवि * ष्टानिपुनः खादीनीति ॥ २० ॥*॥ ७ ॥ एवसर्वभूतमयोऽव्यक्ताख्यात्मा * त्माऽव्याकृतशरीरोस * न्नसौपरमात्माशिवः * पुनर्यदेवससर्ज ॥ १ ॥ तच्छान्दोग्योक्तं सदाहसोऽभिधास्ये * तत्रादिभिः पंचभिः श्लोकैः ॥ २ ॥

**आपोनाराइतिप्रोक्ताआपोवैनरसूनवः । तायदस्यायनंपूर्ब्बं तेननारायणःस्मृतः ॥ १० ॥**

नरं एवतदृताणि*निपातनान्नाराआपः * इतार्थोऽणविधानज्ञापनार्थं चोक्तं * नरसूनवइतिनरः* सुतयोक्तात्मा आपः ॥ २ ॥ * ॥ १० ॥ * ॥ ब्रह्मेतिनामुष्यनिरुक्तिमाहयः*तत्कारणमित्यादि ॥ ११ ॥

**यत्तत्कारणमव्यक्तंनित्यंसदसदात्मकम् । तद्विसृष्टःसपुरुषोलोकेब्रह्मेतिकीर्त्त्यते ॥ ११ ॥**

यदेवतत्प्रसिद्धं *सदसदात्मकंतत्तु*विद्याअयोविज्ञान*मसदविज्ञानंतात् ॥ २ ॥ त्रिगुणसाम्य लक्षण*मव्यक्तं नामब्रह्मनित्यं * तेनावाक्तेनब्रह्मणा*विसृष्टइतिब्रह्मानाम*लोकेसपुरुषउक्तः ॥ ३ ॥ * ॥ ११ ॥* ॥ अथतस्मिन्न-ण्डे कथमयमजायतेतात*उच्यतेतस्मिन्नण्डेस * इत्यादितत्कार्यञ्च ॥ १ ॥ तस्मिन्नित्यादि ॥ १२ ॥

**तस्मिन्नण्डेसभगवानुषित्वापरिवत्सरम् । स्वयमेवात्मनोध्यानात्तदण्डमकरोद्द्विधा ॥ १२ ॥**

तस्मिन्नप्सर्वारम्भे ऽण्डे *सभगवान्नारायणो*ब्रह्मापरिवत्सरं दैवमेकाब्द * उषित्वात्मनःशिवस्य*ध्यानात्त दण्डं द्विधाकरोत् ॥ १॥०॥ * ॥ १२ ॥ * ॥

**ताभ्यांसशकलाभ्याञ्चदिवं भूमिञ्चनिर्म्ममे । मध्येव्योमदिशश्चाष्टावपांस्थानञ्चशाश्वतम् ॥१३ ॥**

तस्मादण्डाद्वैजातः*सनारायणःपञ्चतन्त्रो*ब्रह्माताभ्यामण्डशकलाभ्यांदिवं भूमि *ञ्चयथासङ्ख्यं निर्म्ममे॥१॥ हैमेनतदण्डस्यशकलेन*स्वर्लोकंराजतेनभू*लोकंनिर्म्ममेमध्येतु*द्यावापृथिव्योरन्तर्व्योमान्त*रीक्षलो-कंदिशश्चाष्टौ ॥ २ ॥ उर्द्ध्वाधश्चदिशौप्रागेवप्रसिद्धे *अपामितियाएताया* आपोऽग्रेभूतसर्गे *तासांशाश्वतंस्थानञ्च निर्म्ममे ॥ ३ ॥ तदुक्तमैतरेयोपनिषदि*सईक्षतलोकान्नुसृजाइति* सइमाल्लोकानसृजत् ॥ ४ ॥ अम्भोमरीचीम रमापोऽदोम्भः*परेणदिवं द्यौःप्रति*ष्ठान्तरीक्षं मरीचयः*पृथिवीमरोयाअधस्तात्ताआपः ॥ ५ ॥ इति ॥ * ॥ १२ ॥ एवं लोकान्सृष्ट्वालिङ्ग*शरीरिणःपुरुषान्प्रा*गयथाससर्जतदाह*उद्बबर्हेत्यादिश्लोकैः ॥ १४ ॥

**उद्बबर्हात्मनश्चैव मनःसदसदात्मकम् । मनसश्चाप्यहङ्कार मभिमन्तारमीश्वरम् ॥१४ ॥**

**महान्तमेवचात्मानंसर्व्वाणित्रिगुणानिच । विषयाणांग्रहीतॄणिशनैःपञ्चेन्द्रियाणिच ॥ १५ ॥**

सइतानुवर्त्ततेच*सनारायणोमाश्मा*स्वस्मादात्मनःस्वस्मादेव*स्थूलत्वात्सदसदात्मकं*मनउद्बबर्होऽजहार॥१॥ मन-सश्चमनःस्थमेवाहङ्कार * मभिमन्तारमीश्वर * उद्बबर्होऽजहार ॥ २ ॥ प्रागेवाव्यक्तात्त्वंतन्त्रा * इयानिमहद्भू तानि*अर्थोविंशतितत्त्वानि*जातानितत्सर्वंतत्त्व*मथोत्क्रेपमहाञ्ज्ञा ॥३॥ स्वशरीरस्थानांतेषां* मनःप्रभृतीनां सत्त्व*कला.ण.अं.म.नाभि.ये.स.नारः ॥४॥ एतदाद्विभिस्तुगोके* मैतनालिङ्गशरीरि*पुरुषामर्गएवोक्तः*नतुमहदा दिसर्गः ॥५॥ एतद्विद्वानृषिस्तुप्रातश्च*महदादिक्रमेणैव*जगन्निर्म्माणमिति*दर्शयितुंतत्सृष्टिमा*होदबर्हेत्येव मादि ॥६। ब्रह्मात्मनःपरमात्मनःसकाशा*त्सोनक्रमेणमनउद्धृतवानि*तावमादितदयुक्तं *नह्यास्तिपरमात्मनो*मनः प्रभृतिकिञ्चित् ॥ ७ ॥ * ॥ १४ ॥ * ॥ उद्बवइ ॥

महान्तमित्यादि ॥ १५ ॥ चाप्यनयएवमहान्तं विद्यासंजीवमात्मानं * मनसाउदवर्ह * विषयाणांशब्दा-
दीनां ग्रहीतृणिपञ्चबुद्धीन्द्रियाणिनकर्म्मेन्द्रियाणि ॥ १ ॥ मनेउदवर्हसर्व्वाणितानि*मनःप्रभृतीनिलष्टौ त्रिगुणानि
सत्वरज*स्तमोगुणविकारात्मकानिस्युः ॥ २ ॥ तत्रेन्द्रियाणिपञ्चाहङ्कारिकाणि*नतुमात्राभौतिकानि ॥ ३ ॥ १५
इतष्टौमनःप्रभृतीनि*स्वस्मादुद्धृतावरह्मा*यदकरोत्तदचाते*तेषान्त्ववयवानित्यादि ॥ १६ ॥

**तेषान्त्ववयवान्सूक्ष्मान्षसामप्यमितौजसान्। सन्निवेश्यात्ममात्रासुसर्व्वभूतानिनिर्म्ममे १६**

तेषांषसासहङ्कार*पञ्चेन्द्रियाणाममितौ*जसांसूक्ष्मानवयवानेकम * आत्मनोमहतोविद्या *तत्रामात्रासुखे-
कयः ॥ १ ॥ सन्निवेशायंअपित्वा*सर्व्वभूतानिविधान*मयानुत्म्यामुसर्व्वपुरुषान्निर्म्ममे ॥ २ ॥ • ॥ १६ ॥
यानीमानिसर्व्वभूतानिनिर्म्ममे*तेषांसंज्ञानिरुक्तिमाह*यस्मात्तवयवेत्यादि ॥ १७ ॥

**यन्मूर्त्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयन्तिषट्। तस्माच्छरीरमित्याहुस्तस्य**
**मूर्त्तिंमनीषिणः॥ १७॥**

तस्यमहतआत्मनःषड्येसूक्ष्मा * अहङ्कारपञ्चेन्द्रिय*मनोवयवाइमानि * वक्ष्यमाणपञ्चमहा* भूतादीन्या-
श्रयन्ति ॥ १ ॥ तस्यमहतआत्मन* स्तांषट्सूक्ष्मावयवात्मिकांमूर्त्तिं * महाभूताद्याश्रयणा * मनीषिणःशरीर
माहुः ॥ २ ॥ * ॥ १७ ॥ ननुमायिकानान्याश्रयन्तीत्यत*आहतदाविशन्तीत्यादि ॥ १८ ॥

**तदाविशन्तिभूतानिमहान्तिसहकर्म्मभिः। मनश्चावयवैःसूक्ष्मैःसर्व्वभूतकृदव्ययम् १८**

यदात्महङ्कारपञ्चेन्द्रियाणां* सूक्ष्मात्मावयवान्प्र*विकमएकोकस्यामात्ममात्रायां * ब्रह्मामन्नार्थे यतत् ॥ १ ॥
तदातेसूक्ष्माःषड्वयवाःसूक्ष्मैः*स्वयवैर्मनश्चतानिविशन्ति*समनोमयःपुरुषोऽभवत्॥ २ ॥ तदामहान्तिपंचच*भूतानि
कर्मभिःपंच * कर्मेन्द्रियैःसूक्ष्मैरवयवैर्युक्तं * विशन्तीतिप्रप्राणमयःपुरुषः ॥ ३ ॥ इतिसप्तदशैकं लिङ्गंशरीर *
मव्ययंविनानिर्म्माणं *नवेतिसर्व्वभूतकृत्* स्थलसर्व्वपुरुषाणां*भूताआवीजधर्म्मकं ॥ ४ ॥ लोकेखलुयत्तत्कारणं
मव्यक्तं*नित्यंसदसदात्मकं *सदहानानन्दमयःपुरुषः ॥ ५ ॥

**उक्तमप्येतन्मुण्डकोपनिषदि*अग्निर्मूर्द्धाचक्षुषीचन्द्रसूर्यौ * दिशःश्रोत्रेवाग्विवृ**
**ताश्चवेदाः। वायुःप्राणोहृदयंविश्वमस्य* पद्भ्यांपृथिवीह्येषसर्व्वभूतान्तरात्मा।**
**इति ॥ ६ ॥**

एषसर्व्वभूतान्तरात्मेतिस्थूला * मनुस्वायंदेसोऽय * मव्यक्ताख्य आनन्दमयःपुरुषः ॥ ७ ॥ महदादीनित्तत्व
योविंशतिं * तत्त्वानिसृष्ट्वाप्रविश्यसर्व्व * भूतमयस्त्वव्याकृत * शरीरोलोकेऽत्रोहभो ॥ ८ ॥ सएवसमस्तएष*
व्याकृतशरीरोनारायणोनाम*महाब्राह्मावभूवाण्डात् ॥ ६ ॥ अस्यनारायणस्यवास्ता*एतेलिङ्गशरीरिणः*पुरुषा

न्तरात्मा ॥ १० ॥ * ॥ १८ ॥ इदंसप्रदर्शकं सूक्ष्मशरीरं*यथाभवतत्राह* सर्व्वभूत*तदाह*तेषामिदन्त्वि-तारादि ॥ १८ ॥

**तेषामिदन्तुसप्तानांपुरुषाणांमहौजसाम । सूक्ष्माभ्योमूर्त्तिमात्राभ्यःसम्भवत्यव्य-याद्व्ययम ॥ १९ ॥**

तेषांमहौजसां सप्तानामेव*महदहङ्कारपञ्च*बुद्वीन्द्रियाणां पुरुषाणां*सूक्ष्माभ्योमूर्त्ति मात्राभ्यो*यद्वायंसूक्ष्म शरीरम ॥ १ ॥ तदव्ययशरीरं अयन्तु पुनः*सप्रदर्शकं लिङ्गं*शरीरंचाव्ययवचाते ॥ २ ॥ तस्मादव्ययाल्लिङ्गशरीर द्वाय*मिदन्तुस्थूलशरीरं*सम्भवतीति वीजधर्म्मकथनम ॥ ३ ॥ * ॥ १९ ॥ अथकथमस्यादव्ययादयं*सम्भवतितत्रवि वीज*.मतातआहाद्यादाद्यस्येतादि श्लोकस ॥ १ ॥ * ॥ २ ॥

**आद्याद्यस्यगुणन्त्वेषामवाप्नोतिपरःपरः । योयोयावतिथश्चैषांसस तावद्गुणःस्मृतः ॥२०**

तदादिपञ्चभूतानि * महान्तीतिगानितुखं*वायुर्ज्योतिरापोभूरि*तेषामनितेषांपूर्व्वःपूर्व्वः*परंपरमवाप्नोवि यत् ॥ १ ॥ तेनेप्रामाद्याद्यस्यमहाभूतस्य*गुणन्तुशब्दंस्पर्शं रूपंरसं*गन्धंपरःपरोवायु*प्रभृतिरवाप्नोतीति ॥ २ । तद्यापोर्योवायुरादि*र्भावोयावतिथःसस*तावद्गुणःस्मृतइति ॥ ३ ॥ शब्दगुणमाकाशंतत्स्पर्श * गुणोवायात प्रवेशाच्छब्द*स्पर्शगुणोवायुरभूत् ॥ ४ ॥ वायोरूपगुणंज्योतिषाद्यप्र*वेशात्वात्मकंज्योतिः*शब्दस्पर्शरूपगुणम् ॥५ त्रिगुणमात्तेजसस्तु*रसगुणास्वपरवप्र*वेशाचतुर्गुणाआपोवभूवुः ॥ ६ ॥ चतुर्गुणानामपां च*गन्धगुणायांपृथिव्या* सतप्रवेशात्पृथिवी*पञ्चगुणावभूवेति ॥ ७ ॥ पञ्चविशेषभूतानान्नाखात्मा*सर्व्वेषांप्राणिनमन्नमयान * मेतानि हिपञ्चभूतानि*तस्मिन्सूक्ष्मशरीरे प्रतिष्ठितानि ॥ ८ ॥ जरायुजाण्डादियोनिषु*तत्तद्वीजमवक्रम्य*प्रविश्य सूक्ष्मशरीरी भूतात्मा*पुर्व्वमेभ्यः पञ्चभूतेभ्यः* अभूतानि सृजति ॥ ९ ॥ * ॥ २० ॥ इतोवं सूक्ष्मशरीरिणः पुरुषान्*सृष्ट्वा यत करोत्तदाह*सर्व्वेषान्तुस इतादि ॥ १ ॥ * ॥ २१ ॥

**सर्व्वेषान्तुसनामानि कर्म्माणिचपृथक्पृथक् । वेदशब्देभ्यएवादौपृथक्संस्थाश्च निर्म्ममे ॥ २१ ॥**

यएतेसूक्ष्मशरीराः*सृष्टास्तेचतसृषुयोनिषुजाता*यद्यन्नाम कर्म्माकृतयोभवन्ति ॥ १ ॥ आदौवेदोक्तशब्देभ्य स्तेषांपृथक्पृथङ्नामानि*देवासुरादीनिनरादीनिपशु*गोमहिषविहङ्गादीनि*नामानिनिर्म्ममेतथा ॥ २ ॥ तेषांयस यत्कर्म्मत*त्तेषांयस्यायासंस्थाचाकृतिस्ताश्च*सनारायणोनिर्म्ममे ॥ ३ ॥ * ॥ २१ ॥

**कर्म्मात्मनांचदेवानांसोऽसृजत प्राणिनांप्रभूः । साध्यानाञ्चगणंसूक्ष्मंयज्ञञ्चैवस-नातनम् ॥ २२ ॥**

कर्म्मात्मनामितादि ॥ कर्म्मात्मानांयोयोदेवग्रादित्यादिर्दिवादिकरोतिसस * कर्म्मात्मकोदेवस्तेषां * कर्म्म कारिणांदेवानां*गणंसूक्ष्मंब्रह्माऽसृजत् ॥ १ ॥ साधिनाञ्चगणंसूक्ष्मं*साध्यानाञ्चसूक्ष्मंगणं*सूक्ष्मंसनातनं यज्ञञ्चैव सृजत् ॥२॥*॥२२॥ अथात्र इदपसङ्गेयं*मार्कण्डेयपुराणेयत्*क्रौष्टुकिं प्रतिमार्कण्डेयउवाच ॥१ ॥ निष्प्रभेऽस्मिन्

रालोकेतव्र्वतस्तमसावृते। वृहदण्डमभूदेकमक्षरंकारणं परम॥ ३॥ तद्दिमेतदण्डस्थो भगवान् प्रपितामहः। ब्रह्मयोनिःस्वयंब्रह्मयः स्रष्टा जगतांप्रभुः। तन्मुखादोमिति महान भूच्छब्दोमहामुने। ततोभूर्भुवश्चोर्द्धान्ततः स्वरयन्तरं॥ ४॥ एताव्याहृतयस्तिस्रःस्वरूपं तद्विवस्वतः। ओँमित्यस्मात्स्वरूपाच्चतुच्छरूपंरवेःपरम॥ ५॥ ततोमहद्गतिस्थूलंजनःस्थूलतरस्ततः। ततस्तपस्ततः सत्यमितिमूर्त्तानिसप्तधा॥ ६॥ स्थितानितस्वरूपाणि भवन्ति-नभवन्तिच। स्वभावभावयोर्भावं यतोगच्छतिसंश्रयम॥ ७॥ आद्यन्तं यत्परं सूक्ष्मम रूपं परमं स्थितम्। ओँ मितुक्तं मयाविप्र तत् परं ब्रह्मतद्वपुः॥ ८॥ तस्मा-दण्डाद्विभिन्नात्तु ब्रह्मणो व्यक्तजन्मनः। ऋचोवभूवुः प्रथमं प्रथमाद्वदनान्मुने॥ ९॥ जवापुष्पनिभाःसद्य स्तेजोरूपास्तुसंहताः। पृथक्पृथग्विभिन्नाश्च रजोरूपवहास्ततः॥ १०॥ यजूंषिदक्षिणाद्वक्त्रादनिवद्धानि काञ्चनम। यादृग्वर्णं तथावर्णान्यसंहतिधराणिच॥ ११॥ पश्चिमंयद्विभोर्वक्त्रं ब्रह्मणः परमेष्ठिनः। आविर्भूतानिसामानितितच्छन्दांसितानिच॥ १२॥ अथर्व्वनामशेषंच भृङ्गाञ्जनचयप्रभम्। यावद्घोरस्वरूपंतदाभिचारिकशान्तिकम॥ १३॥ उत्तरात्प्रकटीभूतं वदनात्तस्यवेधसः। तत्र्वस्त्त्वतमःप्रायं सौम्यासौम्यस्वरूपवत्॥ १४॥ ऋचोरजोगुणाःसत्त्वं यजूंषि चगुणोमुने। तमोगुणानि सामानितमःसत्त्वमथर्व्वसु॥१५॥ एतानिज्वलमानानितेजसाऽप्रतिमेनवै पृथक्पृथगवस्थानमार्च्छपूर्व्वमिवाभवन्॥ १६॥ ततद्दादयंयत्तेजओँ मितुक्त्याभिशब्द्यते। तस्यस्वभावाद्यत्तेजस्तत्समावृत्यसंस्थितम१७ यथायजुर्मयं तेजस्तदतत्साम्नांमहामुने। एकत्वमुपयातानिपरेतेजसिसंश्रये॥ १८॥ शान्तिकंपौष्टिकंचैवतथाचैवाभिचारिकम्। ऋगादिषुलयंब्रह्मन् त्रितयंत्रिष्वथागमत१९ ततस्तन्मण्डलीभूतं छान्दसं तेजउत्तमम्। परेणतेजसा ब्रह्मन्नेकत्व मुपयाति-तत्॥ २०॥ इति॥ इत्येवमृग्वेदादिपञ्चब्रह्म।तम* काम्तमयेखलुनारायणस्या*दितास्यमण्डलेजातेपुनर्यत्स* ससर्जतन्मण्डकोक्तंवेदंस्मृतावाह॥ १॥

अग्निवायुरविभ्यस्तुत्रयंब्रह्मसनातनम्। दुदोहयज्ञसिद्ध्यर्थमृग्यजुःसामलक्ष-णम्॥ २३॥

अग्नीत्यादि॥ २३॥ मुण्डकोपनिषदियथा॥ *॥ तस्मादृचःसाम यजूंषिदीक्षायज्ञा-श्चसर्व्वेक्रतवोदक्षिणाश्च। संवत्सरश्चयजमानश्चलोकाः सोमोयत्र पवतेयत्र सूर्यः॥ १॥ तस्माच्चदेवाबहुधासं प्रसुताःसाध्यामनुष्याः पशवोवयांसि। प्राणापानौव्रीहियवौतपश्च-श्रद्धासत्यंब्रह्मचर्यंविधिश्च॥ २॥ सप्तप्राणाः प्रभवन्तितस्मात् सप्तार्च्चिषः समिधः सप्त-

ष्टीमाः। सप्त मे लोकाये प्रचरन्ति प्राणा गुहाशयानिहिताः सप्तसप्त ॥ ३ ॥ अतःसमुद्रा गिरयश्चसर्व्वे अस्मात् स्यन्दन्ते सिन्धवः सप्तरूपाः। ततश्चसर्व्वा ओषधयो रसाश्चयेनैषभूतैस्तिष्ठते ह्यन्तरात्मा ॥ ४ ॥ इति ॥ अम्नीत्यादिभिश्चतुर्भिःश्लोकैरेक*वाक्यं तद्यथोच्यते *इमावच्यमाणाःस्थूलाः* प्रजाःस्रष्टुमिच्छन्निमा * ऋग्वेदादिसृष्टिंससर्ज ॥ १ ॥ अग्निस्तृतीयंमहाभूतं * वायुश्चतुर्थंमहाभूतं * रविरस्य नारायणस्य*हितासापञ्चात्मतमण्डलं ॥ २ ॥ ऋग्यजुःसामलक्षणं *त्रयंब्रह्मसनातन*ऋग्वेदं यजुर्वेदञ्च*सामवेदञ्चेतित्रयी ॥ ३ ॥ अग्नेऋग्वेदं दुदोह*वायोर्यजुर्वेदं रवेः * सामवेदं यज्ञसिद्ध्यर्थमिति ॥ ४ ॥ ११ ॥ कालमित्यादि ॥ २४ ॥ २५ ॥

कालंकालविभक्तीश्चनक्षत्राणिग्रहांस्तथा। सरितःसागरान्शैलान् समानिविषमाणिच ॥ २४ ॥ तपोवाचंरतिञ्चैवकामञ्चक्रोधमेवच। सृष्टिंससर्जचैवेमांस्रष्टुमिच्छन्निमाःप्रजाः ॥२५

कालंसंवत्सरंससर्ज*कालविभक्तीरयनादीः*समानिविषमाणिचेति*उच्चावचानिसर्व्वाणि ॥१॥*॥२४॥२५॥

कर्म्मणाञ्चविवेकार्थंधर्म्माधर्म्मौव्यवेचयत। द्वन्द्वैरयोजयच्चेमाःसुखदुःखादिभिःप्रजाः ॥ २६ ॥

कर्म्मणामित्यादि ॥ २६ ॥ वच्यमाणानांप्रजानां * कर्म्मणांविवेचनार्थं *धर्म्माधर्म्मौव्यवेचयत् ॥ १ ॥ एभिर्यथाविधियज्ञादिभिस्त * कर्म्मभिः तैर्धर्म्मःस्यात्*एभिरवैधैःकर्म्मभि * रधर्म्मोभवतीत्येवं ॥ २ ॥ इमावच्यमाणाःस्थूलाः*प्रजाःस्रष्टुमिच्छन्निमाः*भूतमशरीरिणीःप्रजा*स्ताभ्यांधर्म्माधर्म्माभ्यांच ॥ ३ ॥ सुखदुःखादिभिर्द्वन्द्वैः*सुखदुःखशीतोष्णादि* द्वन्द्वैरयोजयदिति ॥ ४ ॥ * ॥ २६ ॥ * ॥ ननुयादृमाःप्रजाःस्रष्टुमिच्छन * ब्रह्मासृष्टिमिमांससर्ज *ताःप्रजाःकथंसम्भविष्यन्तीत्यत*आह्वाणुगोमात्राइत्यादि ॥१॥ * ॥२७॥

अण्व्योमात्राविनाशिन्योदशार्द्धानांच याःस्मृताः। ताभिःसार्द्धमिदंसर्व्वंसम्भवत्यनुपूर्व्वशः ॥ २७ ॥

आद्याद्यास्येतान्नेनोक्तानां*दशार्द्धानांपञ्चानांपूर्व्वं*पूर्व्वभूतानुप्रविष्टानां*याविनाशिन्योऽण्व्योमात्राः ॥१॥ ताभिरण्वीभिर्विनाशिनीभिःपञ्च*स्थूलभूतानांमात्राभिः*सार्द्धमिमं दृश्यशरीरिसर्व्वम*नुपूर्व्वशःसम्भवति ॥ २ ॥ विनाशिन्यइतिविशेषणेन*पूर्व्वपूर्व्वभूतानुप्रविष्टपञ्च*भूतानामण्व्योमात्राइत्युक्तंस्येयं ॥ ३ ॥ ननुपञ्चानांमहाभूतानामणुगो*मात्रानहितास्तुस्थुल*पंचभूततयापरि*णामिन्योनित्यत्वाच्चनविनाशिन्यः ॥ ४ ॥ * ॥ २७ ॥

यन्तुकर्म्मणियस्मिन्सन्ययुङ्क्तप्रथमंप्रभुः। सतदेवस्वयंभेजे सृज्यमानःपुनःपुनः ॥ २८ ॥

पुराणेषु ॥१२॥ **अभिवादितस्तुयोविप्रोनाशिषंकुरुते यदि । श्मशाने जायते वृक्षोगृध्रकङ्कसमावृतः ॥१४॥ इति ॥** नखलुचत्वारोवर्णा*एवजातयइतिनियमः * सामान्यप्रभेदोद्विजातिः*समानःप्रसवात्मिका* जन्मत्वसमानप्रसवात्मकम् ॥ १५ ॥ ननुकथंवर्णो जातिर्भवति* शुक्लादयोवर्णाब्राह्मणादयः*समानप्रसवात्मकः*कारणसमवायोजातिः ॥ १६ ॥ सतांब्राह्मणादयोवर्णाः*रक्तादयोनरूपभेदाः*किन्तर्हिब्राह्मणःसत्त्व*गुणप्रायत्त्वेन-रक्त*वन्नैर्मल्याच्छुक्ल उक्तः ॥१७॥ रजोगुणप्रायत्वात्क्षत्रियोरक्त*इवेतिरक्तोवर्णउक्तो * वैश्यस्त्रिगुणप्रायत्वात्* पीतइवेतिपीतः ॥१८॥ तमोगुणप्रायत्वाच्छूद्रःकृष्णइ*वेतिकृष्णावर्णउक्तः*इन्द्रे इत्युपमङ्गेयम् ॥१९॥ यमसौब्राह्मणं*वर्णं स्वमुखान्निरवर्त्तयत्तं*गायत्र्याच्छन्दसासृष्ट्वा*द्विधाऽपाटयदथ ॥२०॥ तस्यार्द्धेनपतिं निर्ममे तस्याच* पत्नीमपरार्द्धेन*यं वाहुभ्यांक्षत्रियं वर्णमसृज*त्तंत्रिष्टुभाच्छन्दसाऽसृजत् ॥२१॥ सृष्ट्वाचतं द्विधापाटयत्तस्यचा*र्द्धेन-पतिं समसृज*दर्द्धेनतयोःपत्नीं च ॥२२॥ यमुरुभ्यांवैश्यं वर्णं*मसृजत्तंजगत्याच्छन्दसाऽसृजत्*द्विधाचापाटयत्तस्यार्द्धेनपति*मर्द्धेनतेषांपत्नींञ्च ॥२३॥ पद्भ्यांयंशूद्रं वर्णमसृजत्तं*नकेनापिच्छन्दसान * चापाटयत्तस्मादन्यसंस्कारेशूद्रः ॥२४॥ छन्दसैषांरुगं उक्तोवशिष्ठेन*स्वसंहितायांतद्यथा ॥२५॥ **गायत्र्याच्छन्दसा ब्राह्मणमसृज* त्रिष्टुभाराजन्यं जगत्यावैश्यं * नकेनचिच्छन्दसाशूद्र * मित्यसंस्कार्योविज्ञायते ॥२६॥ अतएवदशमाध्याये वच्यते *ब्राह्मणःक्षत्रियोवैश्यस्त्रयोवर्णाद्विजातयः । चतुर्थएकजातिस्तु शूद्रोनास्तितुपञ्चमः ॥ इति ॥२७॥** एषांत्रयाणांद्विजानां*पाटनमुक्तंवशिष्ठेन*स्वसंहितायांतद्यथा २७ **पाटितोयंद्विजःपूर्व्वमेकदेहःस्वयम्भुवा । पतयोऽर्द्धेनचार्द्धेनपत्न्योऽभूवन्निति श्रुतिः ॥२८॥ यावन्नविन्दते जायांतावदर्द्धोभवेत् पुमान् । नार्द्धं प्रजायते पूर्णःप्रजायेतेतिचश्रुतिः ॥२९** अतिपत्न्योःसन्तानन्तु*विवाहमन्त्रैर्भवति*विप्रक्षत्रियवैश्यानाम ॥२९॥*॥३१॥ सत्त्वसर्गमुक्त्वास्थूल*सर्गोयथाऽभूत्तथा* तदिदानीं दर्शयति ।

**द्विधाकृत्वात्मनोदेह मर्द्धेनपुरुषोऽभवत् । अर्द्धेननारीतस्यांस विराजमसृजत् प्रभुः ॥ ३२ ॥**

द्विधाकृत्वेत्येवमादि ॥ १ ॥ ३२ ॥ सप्रभुर्नारायणोब्रह्माख्यदेहं * द्विधाकृत्वार्द्धेनपुरुषोऽभव*दर्द्धेननारीचाभवत् ॥ १ ॥ येते सूक्ष्मशरीरिण*स्तेषामेकं मिथुनधर्म्मेणतस्यां* सार्द्धाङ्गभूतायांनार्य्यां*विराजं स्थूलपुरुषमसृजत ॥ २ ॥ * ॥ ३२ ॥ * ॥

**तपस्तप्त्वाऽसृजद्यन्तुसस्वयंपुरुषोविराट् । तंमांवित्तास्यसर्व्वस्यस्रष्टारं द्विजसत्तमाः ३३**

तपइत्यादि ॥ ३३ ॥ सविराट् पुरुषःस्वयं तपस्तप्त्वा*यमसृजत्तं मांवित्त ॥ १ ॥ ३३ ॥

**अहंप्रजाःसिसृक्षुस्तु तपस्तप्त्वासुदुष्करम । पतीन् प्रजानामसृजं महर्षीनादितोदश ॥३४**

अहमित्यादि ॥ ३४ ॥ प्रजाःस्रष्टुमिच्छन्नह* मादितःप्रजानांपतीन्* दशमहर्षीनसृजम ॥ ३४ ॥ तान्यथा-नुपूर्व्वमोऽसृजत्तदाह*मरीचिरित्यादिश्लोकेन ॥ १ ॥ ३५ ॥

**मरीचिमत्र्यङ्गिरसौपुलस्त्यंपुलहं क्रतुम । प्रचेतसं वशिष्ठञ्चभृगुं नारदमेव च ॥३५ ॥**

वक्ष्यामि ॥ १ ॥ * ॥ ४० ॥ * ॥ अथानिक्रमयोगश्चाभिधास्यामि ॥ १ ॥ * ॥ ४१ ॥ यथेदानीं चतुर्विधा * योनयः कर्म्मशरीरिणामुत्पत्तौ * तासु यस्यां योनौ ये जायन्ते तद्वाक्त ॥ १ ॥

**पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ ४३ ॥**

पशवइत्यादि ॥ ४३ ॥ पशवो ग्राम्या गवादयः * साधारणो गजावीतौ * मृगा आरण्या इति विशेषणं ॥ १ ॥ व्याला दुष्टपशवः उभयतोदतइ * चूर्द्धाधोदन्ताये यांति * उभयतोदतो वक्र * श्रोणीदन्ताद्वक्ष्यमाणं दर्शयेति ॥ २ ॥ जम्बुकभावपृथक्त्वे शिवाकला * जतुदन्ताश्च दक्षुश्च्द्वो * मले इत्यपदादयो हि * पृथक्शब्दा इत्याहुरेके ॥ ३ ॥ उभयतोदइत्यस्य नैव * रक्षःपिशाचमनुष्याणां प्राप्तौ * स्पष्टार्थं पुनर्व्वचनं कृतं ॥ ४ ॥ जरायुजाइति जरायुश्चर्म्म * विशेषेये नावृतः सन् * गर्भाशयवर्त्तते ॥ ५ ॥ * ॥ ४३ ॥

**अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः । यानि चैवम्प्रकाराणि स्थलजान्यौदकानि च ४४**

अण्डजाइत्यादि ॥ ४४ आदावन्तर्गर्भे वर्त्तते ततोऽण्डात् * पुनर्जायन्तइत्यण्डजाः * पक्षिणइत्यादयः ॥ १ ॥ * ॥ ४४ ॥

**स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् । ऊष्मणश्चोपजायेतयच्चान्यत्किञ्चिदीदृशम ॥ ४५ ॥**

स्वेदजमित्यादि ॥ ४५ ॥ स्विद्यतेऽनेनेति स्वेद * ऊष्मात इत्यर्थः ति * ऊष्मणश्चोपजायते इति * नपार्थिवद्रव्याणां तापेन क्लेदः ॥ १ ॥ * ॥ ४५ ॥ * ॥

**उद्भिज्जाः स्थावराः सर्व्वे बीजकाण्डप्ररोहिणः । ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ४६**

उद्भिज्जाइत्यादि ॥ ४६ ॥ जायमानो यद्द्रव्यं भिनत्ति सा खलु इदं यानि स्तत्तां संजायन्ते तउद्भिज्जाश्चतुर्विधाः पास्तयानिर्द्देशात् ॥ १ ॥ बीजकाण्डप्ररोहिणइति * बीजप्ररोहिणः काण्ड * प्ररोहिणश्च भवन्ति ॥ २ ॥ चातुर्विध्यं तेषां क्रमाद्दर्शयति * ओषधाइत्यादिते हि * चतुर्विधा ओषधिवनस्पति * वृक्षवीरुद्भेदादिति ॥ ३ ॥ सर्वाः ओषधयः फलपाकान्ता इति * यासां फलपाके नाशस्ता बहु * पुष्पफलोपगा ओषध्यश्चेयाः ॥ ४ ॥ * ॥ ४६ ॥ * ॥

**अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७**
**गुच्छगुल्मन्तु विविधं तथैव तृणजातयः । बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८ ॥**

अपुष्पइत्यादि ॥ ४७ ॥ यउद्भिज्जा अपुष्पाः फलवन्तस्ते * वनस्पतयो वटादयः * ये चोद्भिज्जाः पुष्पिणश्च * फलिनश्च ते वृक्षा वानस्पत्याख्याः ॥ १ ॥ * ॥ ४७ ॥ * ॥ ये चोद्भिज्जा गुच्छश्च गुल्मश्च यतश्च * विविधं तथैव विविधाः * तृणजातयः प्रताना * वल्ल्य एव च बीजकाण्डरुहाः ॥ १ ॥ ते वीरुध इत्युक्ता मन्वान्तरे * इति चतुर्विधा उद्भिज्जाः ॥ २ ॥ * ॥ ४८ ॥ * ॥

**तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना । अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ४९ ॥**

तमसेत्यादि ॥ ४९ ॥ एते चतुर्विधा उद्भिज्जाः * कर्म्महेतुना लोके कृतं * यदशुभकर्म्म तद्धेतुना * तमसा नव कर्म्मणा ॥ १ ॥ तमसा वेष्टिताः सन्तः * बहिःसंज्ञाहीना अन्तः * संज्ञा सुखदुःखसमन्विता भवन्ति ॥ २ ॥ * ॥ ४९ ॥ * ॥

एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः। घोरेऽस्मिन् भूतसंसारे नित्यं सततयायिनि ॥ ५० ॥

एतदन्तास्त्वित्यादि ॥५०॥ ब्रह्माद्या एतदन्तास्त्वेताः* स्थावरपर्य्यन्ताः* गतयो निपुणगतयो मया* नित्यं सततयायिनि* घोरेऽस्मिन् भूतसंसारे समुदाहृताः ॥१॥ तत्र नारायणोऽसौ ब्रह्माण्डजः* स्तेन सृष्टा सर्व्वशरीरिणस्ततः* हीजमात्सादजरायु* जादिचतुर्योनिगतयः ॥२॥*॥५०॥

एवं सर्व्वं स सृष्ट्वेदं माञ्चाचिन्त्यपराक्रमः। आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥ ५१ ॥

एवमित्यादि ॥५१॥ एवमुक्तप्रकारेण* सर्व्वमिदं सोऽचिन्त्यपराक्रमो* ब्रह्मा सृष्ट्वा विराजं माञ्च सृष्ट्वा ॥१॥ द्विपरार्द्धमितं स्वस्य स्थितेः कालं* स्वस्य चरमेण कालेन पीडयन्* स्वस्यात्मना वा तत्त्वात्मा स्वेऽन्तर्दधे इति ॥२॥*॥५१॥*॥

यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति ॥ ५२ ॥

ननु यावत्कालं चरमकालेन* न पीडयति तावन्तं* कालं स किं करोतीत्यत* आह यदेत्यादि श्लोकान् ॥ १ ॥*॥५२॥ स नारायणो ब्रह्मादेवो यदा* जागर्त्ति तावन्तं कालं* मिदं जगच्चेष्टते सञ्जीवति ॥१॥ यदा शान्तात्मा स्वपिति* तदा सर्व्वमिदं महो* लोकपर्य्यन्तं निमीलति* कल्पान्तप्रलयं याति ॥ २ ॥*॥ ५२ ॥ कथमित्यत आह तस्मिन्नित्यादि ॥ ५२

तस्मिन् स्वपति तु स्वस्थे कर्म्मात्मानः शरीरिणः। स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति ॥ ५३ ॥

तस्मिन्नारायणे ब्रह्मणि स्वस्थे तु* स्वपति सति शरीरिणः* कर्म्मात्मान इन्द्रियाणि * स्वकर्म्मभ्यो निवर्त्तन्ते * मनश्च ग्लानिमृच्छति ॥ १ ॥ एतस्मिन् काले चतुर्मुखविष्ण्वादयोऽपि स्वपन्तीति * नामरत्वान्न प्रलीयन्ते * मनुष्यादयस्तु प्रलीयन्ते ॥ २ ॥ पुनर्यदा स जागर्त्ति* तदा पुनरिदं जगज्जीवत् सत्* चेष्टते इत्यथ पुनः पुनर्भवति ॥ ३ ॥ ५३ ॥ ततः कथमन्तर्दधातीत्यत* आह युगपदित्यादि ॥ १ ॥ * ॥ ५४ ॥ * ॥

युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि। तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः ॥ ५४ ॥

यदा सर्व्वेषां शरीरिणां सर्व्व * शरीरिण आत्मानस्त * तस्मिन्नारायणे महात्मनि सर्व्वे * युगपत् प्रलीयन्ते ॥ १ ॥ तदायं सर्व्वभूतात्मा * नारायणो ब्रह्मा स्वस्था * सर्व्वांशे नरूप्य कल्पा * निर्वृतः सन् सुखं स्वपि * तीति सुप्तो भवति ॥ २ ॥ ५४ ॥

तमोऽयन्तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः। न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः ॥ ५५ ॥

तमोऽयमित्यादि ॥ ५५ ॥ अयं चतुर्मुखो ब्रह्मा * नारायणोऽयमादितः * तमः समाश्रित्य सेन्द्रिय एव * चिरं निर्वृतः स्वं कर्म्म न कुरुते ॥ १ ॥ ततोऽनन्तरं मूर्त्तितः * उत्क्रामति य एवावाक्तात्मासौ * व्याकृतमिदं शरीरं भवान् ॥ २ ॥*॥५५॥

यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति ॥५६॥

यदाणुमात्रिक इत्यादि ॥ ५६ ॥ अयमितः परं वर्त्तते * यदायं नारायणो ब्रह्मा* यत्तदव्यक्तात्मा * महदादीनि तत्त्वानि * समाश्रित्य शरीरी ब्रह्माऽभवत् ॥ १ ॥ तदव्यक्तात्मकाणुमात्रिको भूत्वा * स्थास्नु चरिष्णु च बीजं*

स्थावरजङ्गमानांसूक्ष्म * शरीराणप्रविश्यभ्रमतिक्रम ॥ २ ॥ निखिलमवाप्ताखायमात्मानं समा* विश्यतितैःसर्व्वं स्वस्य सृष्टीयद्वा*भवतितदामूर्त्तिमिमांवन्ति ॥ ३ ॥ विशयाचेतद्वाकृतशरीरं*तल्लोकस्थावाप्तांप्रविशन्तत्र * लीयतेतदा पृथिव्यादीनिच * तत्त्वानिस्वस्व प्रकृतौलीयन्ते ॥ ४ ॥ तदाखेकर्म व्यवाप्तं सम्पद्यते *. तद्वाक्तस्थानांत्रयाणां गुणानां*तमोरजसिलीयते * रजःसत्त्वेततएकीस्यात् ॥ ५ ॥ एकीभूतंत्रिगुणं*प्रधानंनामतत्तस्मात्*कालाख्य- प्रथग्वृत्ति*एवंत्रयाणांपार्थक्ये*प्राप्तानामम्महाप्रलयोज्ञेयः ॥ ६ ॥ *॥५६॥

एवं जागरस्वप्नाभ्यामिदं सर्व्वं चराचरम् । सजीवयतिचाजस्रं प्रमापयतिचाव्ययः ॥ ५७ ॥

एवमित्यादि ॥५७। सब्रह्माएवमुक्तप्रकारेण*जागरेणसर्व्वमिदं*चराचरंजीवयति*स्वप्नेनप्रमापयति*चेतेव- मजस्रं स्यात् ॥ १ ॥ तथाचपुनःपुनःकल्पोभवति*वहूनांकल्पानामन्ते*सचस्थास्नुचरिष्णुवीजमविशा* मर्त्तिमेतां निमज्जति ॥ २ ॥ * ॥ ५७ ॥ * ॥

इदंशास्त्रंतु कृत्वासौमामेवस्वयमादितः । विधिवद्ग्राहयामासमरीच्यादींस्त्वहंमुनीन् ॥५८॥

इदमित्यादि ॥ ५८ ॥ स्पष्टार्थःश्लोकोऽयं ॥ ५८ ॥

एतद्वोऽयंभृगुःशास्त्रं श्रावयिष्यत्यशेषतः । एतद्धिमत्तोऽधिजगे सर्व्वमेषोऽखिलंमुनिः॥५९

एतद्व इत्यादि ॥ ५९ ॥ भोमहर्षयश्चायुष्मा* नयंभृगुरेतच्छास्त्र* मशेषतःश्रावयिष्यति ॥ १ ॥ कस्मादित्यत आह एतदित्यादि * हियस्मादेषभृगुर्मुनि * रेतन्मद्वाग्ब्रह्मणाप्रोक्तंधर्म्ममय * सर्व्वंशास्त्रं मत्तोऽखिलमधि- जगे ॥ २ ॥ * ॥ ५९ ॥

ततस्तथासतेनोक्तो महर्षिर्मनुनाभृगुः । तानब्रवीदृषीन्सर्व्वान्प्रीतात्माश्रूयतामिति॥६०

तत इत्यादि ॥ ६० ॥ ततोऽनन्तरन्तुसमहर्षिर्भृगु * स्तेनस्वायम्भुवेन मनुनोक्तःसन् * तान्सर्व्वानृषीन् श्रूयतामित्यब्रवीत् ॥ १ ॥ * ॥ ६० ॥ अथभृगुर्यथावयाश्रकारेन*इत्याह स्वायम्भुवेत्यादि ॥ १ ॥ ६१ ॥

स्वायम्भुवस्यास्यमनोःषड्वंश्यामनवोऽपरे । सृष्टवन्तःप्रजाःस्वाःस्वामहात्मानोमहौजसः॥६१

अस्यस्वायम्भुवस्यमनोरन्तरे *प्रथमसर्गेप्रथम*कल्पे यासृष्टिःसामनुनाप्रोक्ता ॥१॥ ततःप्रभृतयश्चवहवःकल्पा*अतीताःसाम्प्रतिकेऽस्मिन्*श्वेतवराहकल्पे प्र*वर्त्तमाने यत्तदुच्यते ॥२॥ अस्यस्वायम्भुवस्यमनोरपरे *तंश्याःसहशभवाः षड्*मनवःक्रमेणस्वाःस्वाः*प्रजाःपुत्रादिसन्ततीः*स्वस्वान्तरे सृष्टवन्तः ॥ ३ ॥ * ॥ ६१ ॥ ते षड्मनवःके किंवंश्या इत्यत*आहस्वारोचिषइत्यादि ॥ १ ॥ * ॥ ६२ ॥

स्वारोचिषश्चौत्तमिश्च तामसोरैवतस्तथा । चाक्षुषश्चमहातेजाविवस्वत्सुतएवच ॥ ६२ ॥

महातेजा इतिप्रत्येकंयोज्यं * यद्यदंश्चयथोयस्त * मार्कण्डेयपुराणे * विस्तीर्णरेणज्ञातव्यं * तत्सं- ग्रहेणोच्यते ॥ १ ॥ अरुणास्पदनगरे * वरुणातटेकश्चिद्ब्राह्मणोऽवात्सीत * सहिमालयोपरि कथञ्चिद्- गात् ॥ २ ॥ तत्रतंस्त्रुमौलिया * वरूथिनीनामाप्सरा * सब्राह्मणःसक्तचित्तावभूव ॥ ... ब्राह्मणस्तां-

प्रत्याख्याय * स्वर्गमगात्ततः सा * दुःखितचित्ताऽवर्त्तत ॥ ४ ॥ तत्प्रभावात्तस्यामासक्तचित्तश्चकलि * नाम गन्धर्व्वस्तया प्राक् प्रत्याख्यातः * स्वारोचिषमूर्त्तिमास्थाय तामुपागात् ॥ ५ ॥ ततो जातः पुत्रः स्वरोचिर्नाम भूत् * स्वरोचिषाभाषितः स तु * स एकदा क्रीडार्थमपि च * वनं विहर्त्तुं जगाम ॥ ६ ॥ तत्र देवैः प्रार्थितात * वनदेवतास्वगर्भ * लाग- तातांस्तमुपागात् ॥ ७ ॥ ततो जातः पुत्रो द्युतिमान्नाम * स्वारोचिषो मनुरभूत् ॥ ८ ॥ * ॥ १ ॥ उत्तानपादस्य पुत्र* उत्तमो नाम तस्य च * जाया बहुला नाम बाभ्रवासीत् ॥ १ ॥ सा तस्याः सख्या नागराजकन्यया * वरुणोत्तमात् पुत्र मजनयत् * स औत्तमिर्नाम मनुः ॥ २ ॥ * ॥ २ ॥ सुराष्ट्रो नाम राजासीत् * स विमर्द्दाख्येन राज्ञा * पराजितो राज्या- द्भ्रष्टो वनमगात् ॥ १ ॥ तत्र प्राक्मृता स्वजाया * स्वलूत्पलावती नाम * मृगरूपमद्राक्षीत् * यापान्मृगी बभूव ॥ २ ॥ सा तद्वनमागतात * राजानं रमयाञ्चक्रे तमसि * ततो जातः पुत्रस्तामसो नाम मनुरभूत् ॥ ३ ॥ * ॥ ३ ॥ स्वायम्भुववं- शे जातो * दुर्गमो नाम राजा स * स्वजायायां रेवत्यां * पुत्रं जनयामास स * रैवतो नाम मनुरभूत् ॥ १ ॥ * ॥ ४ ॥ ब्रह्मणश्चक्षुषो जातः * पूर्व्वं यः स तु चाक्षुषो * नाम्ना विख्यातो बभूव ॥ १ ॥ स मृत्वा पुनरनमित्रेन्द्र * नामक्षत्रियात्तत्प- त्न्यां * गिरिभद्रायां जातः पुत्र * चाक्षुषो नाम मनुरभूत् ॥ २ ॥ * ॥ ५ ॥ सूर्य्यात् संज्ञायां जायायां * जातः प्रथमः पुत्रो यः * स वैवस्वतो नाम मनुः ॥ १ ॥ * ॥ ६ ॥ * ॥ ६२ ॥

**स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः । स्वे स्वेऽन्तरे सर्व्वमिदमुत्पाद्यापुश्चराचरम् ॥६३॥**

स्वायम्भुवाद्या इत्यादि ॥ ६३ ॥ एते स्वायम्भुवाद्याः सप्त * भूरितेजसो मनवः * स्वे स्वेऽन्तरे सर्व्वमिदं * चराचरं किञ्चित् स्वयं * किञ्चित् प्रजापतिभिश्चोत्पाद्यापुः ॥ १ ॥ * ॥ ६३ ॥ नन्वयं ब्रह्मा जागर * स्वप्नाभ्यां यदिदं सर्व्वं * जीवयति प्रमापयति * तत् कतिकालान् जागर्त्ति * कतिकालान् स्वपितीत्यत आह ॥ १ ॥ * ॥

**निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला । त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रस्तु तावतः ॥६४॥**

निमेषा इत्यादि ॥ ६४ ॥ अक्ष्णोर्निमेषा दश चाष्टौ चेत्यष्टादश * निमेषकालः काष्ठा भवति * ताः काष्ठास्त्रिंशत्तु कला ॥ १ ॥ त्रिंशत्कला मुहूर्त्तः स्यात् * तावता मुहूर्त्तेनेति * त्रिंशता मुहूर्त्तैरहो * रात्रस्तु नृणां भवति ॥ २ ॥ ६४ ॥ ननु कोऽस्याविभाजकः * किं सूर्य्योऽथवा चन्द्रोऽथ * वोभयोऽन्यतरः को वेत्यत * आह रात्र्यहनी इत्यादि ॥ १ ॥ * ॥ ६५ ॥

**अहोरात्रे विभजते सूर्य्यो मानुषदैविके । रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः ॥६५॥**

मानुषदैविके * इति दैवत्वे पि च * पितॄणां पृथगुच्यते ॥ १ ॥ मानुषाणां देवानाञ्च * रात्र्यहनी द्वे सौरे * सूर्य्यो वि- भजते ॥ १ ॥ तत्र रात्रिर्भूतानां मानुषी रात्रि * र्मनुष्याणां स्वप्नाय दैवी रात्रि * र्देवानां स्वप्नायाहस्तु * कर्म्मणां चेष्टायै प्रायः ॥ २ ॥ * ॥ ६५ ॥

**पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः । कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी ॥६६॥**

अथ मानुषाणां रात्र्यहनी त्रिंश * न्मुहूर्त्तादि विक्रमेणोक्ते * द्विधा प्रोच्यते पित्र्ये इत्यादिभ्याम् ॥ १ ॥ ६६ ॥ पितॄणां रात्र्यहनी द्वे * चान्द्रो मासो मुख्यत्वान्न * सौर इति ज्ञापयति * प्रविभागस्त्वित्यादि ॥ १ ॥ पित्र्ययो रात्र्यहनोः प्रविभागस्तु * पक्षयोः कृष्णशुक्लयोः * कृष्णः पक्षः पितॄणां कर्म्मचेष्टास्वहः * स्वप्नाय शुक्लः शर्व्वरी ॥ २ ॥ ६६ ॥

**दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः । अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ६७**

दैवे इत्यादि ॥ ६७ ॥ सौरो वर्षो दैवे रात्र्यहनी स्यातां * तयोः प्रविभागस्तु दैवमहः * उदगयनं दैवी रात्रिः * दक्षिणायनं भवति ॥ १ ॥ * ॥ ६७ ॥

**ब्राह्मस्य तु क्षपाहस्य यत् प्रमाणं समासतः । एकैकशो युगानां च क्रमशस्तन्निबोधत ॥ ६८ ॥**

ब्राह्मस्येत्यादि ॥ ६८ ॥ क्षपा चाहश्च तयोः समाहारस्तु * ब्राह्मस्याहोरात्रस्य यत्प्रमाणं * युगानामेकैकशश्च यत्प्रमाणं * समासतः क्रमशस्तन्निबोधत ॥ १ ॥ * ॥ ६८ ॥

**चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम् । तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ६९**

चत्वार्याहुरित्यादि ॥ ६९ ॥ दैवे इति विभक्तिविपरिणामात् * दैवानां वर्षाणां चत्वारि * सहस्राणि कृतं युगं * कालज्ञा विद्वांस आहुः ॥ १ ॥ तस्य कृतयुगस्य तु * सन्ध्या पूर्व्वं कल्पस्यान्ते * कलेरन्ते तावच्छती * दैवचतुःशतवर्षं * सन्ध्यांशस्त्रेतायाः पूर्व्वं * दैवचतुःशतवर्षम् ॥ २ ॥ इति दैववर्षाणामष्टशताधिकं * चतुःसहस्रवर्षं * कृतयुगं भवतीति ॥ ३ ॥ ६९ ॥

**इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु । एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥ ७० ॥**

इतरेष्वित्यादि ॥ ७० ॥ कृतयुगादितरेषु * त्रेताद्वापरकलिषु * सन्ध्यासन्ध्यांशसहिते * ष्वेकापायेन क्रमशः * सहस्राणि शतानि च वर्त्तन्ते ॥ १ ॥ पूर्व्वसन्ध्यासन्ध्यांशोऽन्त्यः * दैववर्षाणां षट्शताधिकानि * त्रिसहस्रवर्षं त्रेतायुगं सन्ध्या * पूर्व्वं त्रिशतं सन्ध्यांशोऽन्त्यम् ॥ २ ॥ दैववर्षाणां चतुःशताधिकानि * द्वे सहस्रे द्वापरं स्तः * सन्ध्या द्विशतं पूर्व्वं * सन्ध्यांशोऽन्त्यं च द्विशतं ॥ ३ ॥ दैववर्षाणां द्विशताधिकमेकं * सहस्रं कलियुगं स्यात् * सन्ध्या पूर्व्वं शतवर्षं * सन्ध्यांशोऽन्त्यं शतवर्षम् ॥ ४ ॥ ७० ॥ एतच्चतुर्युगमान * मेकीकृत्याह यदेत * दित्यादिश्लोकमेकं ॥ १ ॥ ७१ ॥

**यदेतत् परिसङ्ख्यातमादावेव चतुर्युगम् । एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ ७१ ॥**

यदेतच्चतुर्युगमादौ * परिसङ्ख्यातमेव * तदेतद्द्वादशसाहस्रं देवानां * वर्षं देवानामेकं युगमुच्यते ॥ १ ॥ * ॥ ७१ ॥

**दैविकानां युगानान्तु सहस्रं परिसङ्ख्यया । ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥ ७२ ॥**

दैविकानामित्यादि ॥ ७२ ॥ दैविकानां युगानां परिसङ्ख्यया * सहस्रं युगं नृणान्तु * चतुःसहस्रयुगं तु * ब्राह्ममेकमहर्ज्ञेयं * तत्र स ब्रह्मा जागर्त्ति ॥ १ ॥ तस्मिन् जाग्रति सर्व्वमिदं जीवति * चतुर्द्दश च मन्वन्तराण्यस्मिन् काले * भवन्ति चतुर्द्दश चेन्द्राः ॥ २ ॥ तावती दैवयुगसहस्रमिता * ब्राह्मी रात्रिरेव च स्यात् * तत्र स ब्रह्मा स्वपिति ॥ ३ ॥ तस्मिन् सुप्ते सर्व्वमिदं * प्रलीयते आमहर्लोकात् * कल्पान्तजीविनो जन * र्लोके वसन्तो वर्त्तन्ते ॥ ४ ॥ * ॥ ७२ ॥

**तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः । रात्रिञ्च तावतीमेव तेऽहोरात्रं विदुर्जनाः ॥ ७३ ॥**

तद्वा इत्यादि ॥ ७३ ॥ पूर्व्वोक्तब्राह्माहोरात्र * कालस्य विष्पष्टार्थमयं श्लोक उक्तः ॥ १ ॥ * ॥ ७४ ॥

तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते । प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥ ७४ ॥

तस्येत्यादि ॥ ७४ ॥ तत्र ब्राह्म्यां रात्रौ प्रसुप्तः स ब्रह्मा * तस्य ब्राह्मस्याहर्निशस्यान्तेऽवसाने * प्रतिबुध्यते जागर्त्ति ॥ १ ॥ प्रतिबुद्धश्च प्रलयात्तदर्थे स * नारायणो ब्रह्मा सिसृक्षुर्भूतानि * सदसदात्मकं स्वं मनः सृजति ॥ २ ॥ ७४ ॥

मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥ ७५

मनः सृष्टिमित्यादि ॥ ७५ ॥ सदसदात्मकतया * सृष्टं मनस्तेन ब्रह्मणा * सिसृक्षया चोद्यमानं * विकुरुते विक्रियमाणात्तस्मात्तु ॥ १ ॥ पूर्वमाकाशं जायते * तस्याकाशस्य गुणं * शब्दं बुधा विदुः ॥ २ ॥ ७५ ॥

आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः । बलवान् जायते वायुः स वै स्पर्शगुणो मतः ॥ ७६

आकाशादित्यादि ॥ ७६ ॥ आकाशात्तु विकुर्व्वाणात् * स्पर्शगुणः सर्व्वगन्धवहः शुचिः * बलवान् वायुर्जायते ॥ १ ॥ * ॥ ७६

वायोरपि विकुर्व्वाणाद्विरोचिष्णु तमोनुदम् । ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ॥ ७७

वायोरपीत्यादि ॥ ७७ ॥ विकुर्व्वाणाद्वायोरपि * विरोचिष्णु तमोनुदं * ज्योतिरुत्पद्यते भास्वत् * तज्ज्योती रूपगुणमुच्यते ॥ १ ॥ * ॥ ७७ ॥

ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः स्मृताः । अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः ॥ ७८

ज्योतिषश्चेत्यादि ॥ ७८ ॥ तस्माज्ज्योतिषो विकुर्व्वाणात् * रसगुणा आपो जायन्ते * विकुर्व्वन्तीभ्यस्ताभ्योऽद्भ्यश्च * गन्धगुणा भूमिर्जायते ॥ १ ॥ इतीयं द्वितीयकल्पादिषु पञ्च * महाभूतानां ब्रह्मणः * पुनरेषादितः सृष्टिः * इतः परमन्या सृष्टिः ॥ २ ॥ एतत्कथनं कल्पान्ते * तेषां नाशज्ञापनार्थं * ततो न निष्प्रयोजनं ॥ ३ ॥ प्रथमकल्पे त्वव्यक्तात् * महान् महतोऽहङ्कारः * तस्मादहङ्कारात् सात्त्विकस्तामसोऽभूत् तत्तु विकारो न प्रकृतिः ॥ २ ॥ ४ ॥ भूतादितस्तामसादहङ्कारात् * आकाशादीनि महाभूतानि वै * बभूवुरिति तानि तु * न कल्पान्ते विनश्यन्ति ॥ ३ ॥ द्वितीयादिषु कल्पेषु * ब्रह्मा पुनरतिरिक्तानि पञ्च * महाभूतानि कल्पान्ते नश्वराणि * मनसो मानसिः सृजति ॥ ४ ॥ इतोऽध्यनात्सर्गमनः प्रकृति * गीतायामुक्ता तद्यथा ॥ ५ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ इति ॥ ६ ॥ यदेतन्न वेद्यं तु * मनः शब्देनाहङ्कार * माहात्म्याहङ्कारशब्देन तत्कार्यमिह * तत्राह मनसो विकार * मध्ये पठितत्वादिति ॥ ७ ॥ एतेनापि व्याख्यानेनाहङ्कारकार्योपाधिका *ऽकृतः स्यात्तस्मात्तदसाधु चेयम् ॥ ८ ॥ एष पञ्चमहाभूतसर्गस्तु * तैत्तिरीयोपनिषदि * पञ्चमोपानुवाकेषु * [illegible]ोक्तं तत्सूत्रकारस्तद्दर्शयति ॥ ९ ॥ तस्माद्वा एतस्मादात्मन आकाशः * सम्भूत आकाशाद्वायुः * वायोरग्निरग्नेरापोऽद्भ्यः * पृथिवी पृथिव्या अन्नं * अन्नात् पुरुष इति ॥ १० ॥ कल्पान्ते सुप्तो योऽसौ ब्रह्मा तस्मादेव * प्रतिबुद्धात्तस्माद्ब्रह्मणः स्व * त्वात्मनो मनस आकाशः सम्भूतः ॥ ११ ॥ इत्येवं प्रेत्यापरत्वो मर्त्यो योऽसौ * तस्माद्गर्भाशयमनुप्रविश्य * शुक्रात्तु वसं योगं गच्छति एतस्मादात्मनः ॥ ११ ॥ मनः करणकादाकाशः सम्भूत * इत्येवमादिरूपेण * पुरुषस्य पुनर्भवो * यथा कल्पान्ते पुनः सर्गः ॥ १२ ॥ इतीदं व्याख्यानमविद्वानादृत * एवमात्मन आकाशादिसर्गं * वाचस्पतिरसाधयत् * [illegible] इत्यङ्गाति ॥ १३ ॥ * ॥ ७८ ॥ ननु मनुना [illegible] * कति कालान् भवतीत्यत * आह यत्प्रागिति ॥ १ ॥ * ॥ ७८ ।

भारतवर्षं मर्त्त्यानांस्यात् ॥ १ ॥ एवं मर्त्त्यैर्यानि कर्म्माणि क्रियन्ते* तेषांकर्म्मणामाशिषः* फलानि लोके ऽत्रयुगं* युगाच्च-रूपं फलन्ति ॥ २ ॥ शरीरिणां प्रभावश्च* शक्तिरत्र युगं वै* लोके ऽत्र फलति ॥ ३ ॥ * ॥ ८४ ॥

अन्ये कृतयुगे धर्म्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ ८५ ॥

अन्ये इत्यादि ॥ ८५ ॥ न केवलमायुरेवं विशेषो युगे* युगे भवतीत्यत आह* धर्म्मा कृतयुग इत्यादि ॥ १ ॥ कृत-युगे ते विविधाः धर्म्मा युग * स्वभावात् प्राणिनां सामर्थ्यात् * त्रेतायामपरे धर्म्मा* द्वापरे चपरे धर्म्माः* कलियुगे चान्ये धर्म्माः ॥ २ ॥ * ॥ ८५ ॥ ते के धर्म्मा* इत्यत आह *तपः परं* मित्यादि श्लोकम् ॥ १ ॥ ८६ ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ ८६ ॥

कृतयुगे परं धर्म्मं तप एव * त्रेतायां परं धर्म्मं ज्ञानमुच्यते । द्वापरे यज्ञमेव परं धर्म्मं * माहुः कलौ युगे दानमेकं परं ॥ १ ॥ * ॥ ८६ ॥ न च सर्व्वस्यैव किमेकविधं * धर्म्मं कृतादिषु तत्तन्मन्तव्या * मथवा पृथक् पृथगि * त्यत आह सर्व्वस्येत्यादि ॥ १ ॥ * ॥ ८७ ॥

सर्व्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः । मुखबाहूरुपज्जानां पृथक्कर्म्माण्यकल्पयत् ८७

सर्व्वस्यास्येत्यादि ॥ ब्रह्मा * सर्व्वस्य सर्गस्य* गुप्त्यर्थं द्विजानां* ब्राह्मणक्षत्रियवैश्य* शूद्राणांकर्म्मा णि पृथगकल्पयत् ॥ १ ॥ ८७ ॥ कस्य कानी* त्यत आह * अध्यापन * मित्यादिकम ॥ १ ॥ ८८ ॥

अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥ ८८ ॥

ब्राह्मणानामित्यत्र नाशार्थे * वर्त्तमानानां ब्राह्मणानां* ब्राह्मणात् स्वस्य पत्नीषु * ब्राह्मणकन्यासु क्षत्रिय* वैश्य कन्यासु ब्राह्मणात् १ जातानामपि मूर्द्धाभि* षिक्ताऽम्बष्ठानांपज्जानां ॥२॥ परब्राह्मणपत्नीषु*पुनर्भूषु च ब्रा ह्मणा*ज्जातानां कुण्डगोलक* पौनर्भवानांब्राह्मणा*नाध्यापनादीनिषट् *कर्म्माण्यकल्पयद् ब्रह्मा ॥ १ ॥ * ॥ ८८ ॥

प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिञ्च क्षत्रियस्य समासतः ॥ ८९ ॥

प्रजानामित्यादि ॥ ८९ ॥ क्षत्रियस्येति क्षत्रियात् * स्वस्य पत्नीषु जातस्य * राजन्यमात्रिषाखस्य ॥ १ ॥ परक्षत्रियपत्नीषु*पुनर्भूषु च क्षत्रिया*ज्जातस्य कुण्डस्य गोलस्य कस्य पौनर्भवस्य च* वाणीनस्य च प्रजारक्षा* दीनि कर्म्माण्य कल्पयत् ॥ २ ॥ विषयेष्वप्रसक्तिरिति*नृत्यगीतादिषु सततानासक्तिः*समासतः संक्षेपतः ॥ १ ॥ * ॥ ८९ ॥

पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ ९० ॥

पशूनामित्यादि ॥ ९० ॥ वैश्यस्येति वैश्यात् स्वस्य *पत्न्यां वैश्यकन्यायां वै *जातस्य तथा परवैश्यपत्नीषु* जातस्य कुण्डस्य गोलकस्य च ॥ १ ॥ पुनर्भूषु जातस्य पौनर्भवस्य* पशुपालनादीनि सप्त*कर्म्माणि ब्रह्मा ऽकल्पयत् ॥ २ ॥ वणिक् पथं वाणिज्यं *स्थलजलपथेन*क्रयविक्रयकर्म्म*कुसीदं वृद्ध्यर्थप्रयोगः ॥ ३ ॥ * ॥ ९० ॥

एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ९१ ॥

एकमित्यादि॥ ८१॥ शूद्रस्येतिशूद्रात्स्वस्य * जायायांजातस्यप्र * शूद्रजायायांजातस्य * पुत्रस्यपौत्रस्यच*पुनर्भूपुपौनर्भवस्य॥१॥ एकमेवकर्मतथाणादर्णाना* मेषांमाह्यबर्णविषयवैश्याना*मनुषयशुश्रूषां * प्रभुर्ब्रह्मासमादिशत्॥ २॥ *॥ ८१॥

**ऊर्द्ध्वंनाभेर्मेध्यतरःपुरुषःपरिकीर्त्तितः। तस्मान्मेध्यतमंत्वस्यमुखमुक्तंस्वयम्भुवा॥ ९२॥**

ऊर्द्ध्वमित्यादि॥ ८२॥ पुरुषःखलुसर्वएवापाद*मस्तकममेधामेधा* मेधातरमेधतमः॥ १॥ तत्राजानुभागमध्यः*इमेधास्ततऊर्द्ध्वमध्यान्नाभे*र्मेधोधर्मेश्वर्द्ध्वंमेधा * ततःकण्ठादूर्द्ध्वंमेधातमइति॥ २॥ तस्मादस्यपुरुषस्य*नाभेर्ध्वकण्ठान्तान्मेधातरा*न्मेधातमंछखंस्य * भुवानारायणेनोक्तम्॥ ३॥ तेनात्राजाताःशूद्र * त्वमेधाजरुभागेजातौ * वैश्योमेधोवाउभयान्तु * जाताःचत्रियोमेधातर * उत्तमाङ्गजोब्राह्मणोमेधातमः॥ ४॥ *॥ ८२॥

**उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैवधारणात्। सर्व्वस्यैवास्यसर्गस्यधर्म्मतोब्राह्मणःप्रभुः॥ ९३**

उत्तमाङ्गेत्यादि॥ ८३॥ ब्राह्मणोनारायणस्योत्तमाङ्ग*सर्वाङ्गभवाज्ज्यैष्ठ्यादग्र*जत्वाद्ब्रह्मणोवेदस्य* धारणाद्ब्राह्मणःसर्व्व * स्यैवास्यसर्गस्यप्रभुः॥ १॥ *॥ ८३॥ तस्माद्ब्राह्मणोधर्म्मतः * प्रभुरित्यत्रचाह* तंहीत्यादिश्लोकम्॥ १॥ *॥ ८४॥

**तंहिस्वयम्भूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत्। हव्यकव्याभिवाह्यायसर्व्वस्यास्यचगुप्तये॥ ९४॥**

हियस्मात्तंब्राह्मणंस्वयम्भूर्ब्रह्मा * तपस्तप्त्वादास्यादादितोहव्य * कव्याभिवाह्यायसर्व्व * स्यास्यगुप्तयेचासृजत्॥ १॥ *॥ ८४॥

**यस्यास्येनसदाश्नन्तिहव्यानित्रिदिवौकसः। कव्यानिचैवपितरःकिम्भूतमधिकंततः॥ ९५॥**

यस्येत्यादि॥ ८५॥ यस्यब्राह्मणस्यास्येन*त्रिदिवौकसोहव्यानि*सदाश्नन्तिपितरश्च * कव्यानश्नन्तिततो*ऽधिकंकिंभूतमस्ति॥ १॥ ८५॥ अपरञ्चश्रेष्ठत्वे*कारणमेतत्प्रदर्श्यते * भूतानामित्यादिना॥ १॥ ८६॥

**भूतानांप्राणिनःश्रेष्ठाःप्राणिनांबुद्धिजीविनः। बुद्धिमत्सुनराःश्रेष्ठानरेषुब्राह्मणाःस्मृताः ९६**

भूतानांस्थावरजङ्गमानां * चेतनाचेतनानांमध्यात्*प्राणिनश्चेतनाःश्रेष्ठाः * प्राणिनांबुद्धिजीविनः॥ १॥ बुद्धिमत्सुमध्येत् * नरामनुष्याःश्रेष्ठाःश्र*नरेषुब्राह्मणाःश्रेष्ठाःस्मृताइति॥ २॥ *॥ ८६॥ तर्हिकिंसर्व्वएव ब्राह्मणाःश्रेष्ठा*ब्राह्मणेष्वश्रेष्ठोनास्ती * तात्राहब्राह्मणेष्विति॥ १॥ ८७॥

**ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः। कृतबुद्धिषुकर्त्तारःकर्त्तृषुब्रह्मवेदिनः॥ ९७॥**

ब्राह्मणेषुमध्येविद्वांसोनिखिल * शास्त्रविदःश्रेष्ठाःस्मृताः * विद्वत्सुब्राह्मणेषुमध्येयेकृत*बुद्धयस्तेश्रेष्ठाःस्मृताः*॥ १॥ कृतबुद्धिषुब्राह्मणेषु * मध्येयेतत्तत्कर्म्मणां*कर्त्तारस्तेश्रेष्ठाःस्मृता*स्तत्तत्कर्म्मणांकर्त्तृषु*मध्येब्रह्मवेदिनोब्राह्मणाःश्रेष्ठाः॥ २॥ *॥ ८७॥

तदप्रामाण्य मनृत * व्याघातपुनरुक्त * दोषेभ्यः पुत्रकामे * ष्टिहवनाभ्यासेषु ॥ ५ ॥ व्याख्यातञ्चैतत्सूत्रं * वात्स्यायनेनतद्यथा * तस्यवेदस्याप्रामाण्य * मनृतदोषात्पुत्रकामेष्ट्यादौ ॥ ६ ॥ अग्निहोत्रहवनादौ * व्याघातदोषादभ्यासे * पुनरुक्तदोषाच्चेति ॥ ७ ॥ तद्यथा। पुत्रकामः पुत्रेष्ट्यायजेतेति * दाप्यात्पुत्रे ष्ट्याजिनः * पुत्रजन्मफलंनेच्यते * इतिदृष्टार्थवेदस्यानृतदोषः ॥ ८ ॥ अग्निहोत्रंजुहुयात्स्वर्गकाम * इताददृष्टार्थोपिवेदो * नप्रमाणंभवति * विहितव्याघातात्तद्यथा ॥ ६ ॥ उदितेहोतव्यमनुदिते * होतव्यंसम याध्युषिते *होतव्यमितिविधाय*विहितञ्चनद्वाहन्ति ॥१०॥ तद्यथाश्यावोऽस्या*हुतिमभ्यवहरति*यउदिते जुहोति ॥११॥ शवलोऽस्या*हुतिमभ्याव*हरतियोऽनु*दिते जुहोति ॥१२॥ श्यावशवलौचास्याहुति * मभ्यवह रतोयःसमया*ध्युषिते जुहोति ॥१३॥ त्रिःप्रथमामन्वाहत्रिरुत्तमामि*त्यभ्यासेपुनरुक्तत्व*दोषोभवतिपुन* रुक्तञ्च प्रमत्तवाक्याम् ॥१४॥ अथास्वसमाधानमुक्तं गौतमे *नाद्यपादेन तद्यथा ॥१५॥ नकर्म्मकर्त्तृसाधनवैगुण्या *दभ्यु पेताकालभेदेदोष*वचनादनुवादोपपत्तेश्च* ॥१६॥ व्याख्यातञ्चैतत्सूत्रं *वात्स्यायनेनर्षिणा*तद्यथादृश्यते ॥१७ नानृतदोषःपुत्रकामेष्टौ*कर्म्मकर्त्तृसाधनवैगुण्या*दिष्टिःसंयोगस्यकर्म्म * तदङ्गिद्म्यत्यःकर्त्तारः ॥१८॥ साधनञ्च विराद्यानिवकालय*त्रयाणामेषांयथोक्तगुणयोगात्*धु्रवं पुत्रस्यजन्मस्यात्*वैगुण्यात्तुविपर्ययः ॥१६॥ नचव्या- घातोहवने *अभ्युपेताकालभेदे*दोषवचनादिति ॥२०॥ योऽभ्युपगतंहवन * कालंभिनत्त्यतस्यानात्वलुहोति * तत्राभ्युपगतकालभेदेदोष*एषउच्यतेविरुद्धिः ॥२१॥ अनुदितेहोतव्यमित्येवंजानन् * यउदितेऽर्केजुहोति * श्यावोऽस्याहुतिमभ्यवहरतीति ॥ २२ ॥ उदितेहोतव्यमिति * जानन्योऽनुदितेजुहोति*शवलोऽस्याहुतिमभ्याव हरति॥२३॥ इत्येवमुदितेऽनुदितेहोतव्य*मितिजानन्यःसमयाध्युषितेजुहोतिश्याव*शवलौद्वावेवचास्या*हुतिमभ्य वहरतः॥२४॥१३॥ इत्येवंकालभेदेदोषोभवतु *श्रुतिद्वैधेतु कथंश्रुतिः *परंप्रमाणंभवती*त्यतआहश्रुतीत्यादि॥१४॥

**श्रुतिद्वैधन्तुयत्रस्यात्तत्रधर्म्मावुभौस्मृतौ। उभावपिहितौधर्म्मौसम्यगुक्तौमनीषिभिः ॥१४॥**

यत्रखल्वेकस्मिन्कर्म्मणिश्रुति*द्वैधंवर्त्तते तत्रोभावेवधर्म्मौ*स्मृतौकस्मादित्यतआहोभावपीत्यादाह॥१॥०॥१४॥ ननुकथंश्रुतिद्वैध*मित्यतस्तदुदाहरणं दर्शयितुमाहोदित इत्यादि ॥ १ ॥ * ॥ १५ ॥

**उदितेऽनुदितेचैवसमयाध्युषितेतथा। सर्व्वथावर्त्ततेयज्ञइतीयंवैदिकीश्रुतिः ॥ १५ ॥**

उदितेहोतव्य*मनुदितेहोतव्य*समयाध्युषिते*होतव्यमितिनु॥ १ ॥ सर्व्वथायज्ञोवर्त्तते*वैदिकीयंत्रिधा श्रुतिरस्ति*तत्रोभावेवधर्म्मावित्यङ्गबुधाः ॥ २ ॥ अभिधायकाभिधेय* नियमनियोगावे* समयउच्यते ॥ ३ ॥ समयेनाध्युषितःकालोयस्य * कर्म्मणोयःकालउक्तः ॥ ४ ॥ * ॥ १५ ॥ एतच्छास्त्राधिकारिण * माहनिषेकादी त्यादि ॥ १ ॥ * ॥ १६ ॥

**निषेकादिश्मशानान्तोमन्त्रैर्यस्योदितोविधिः। तस्यशास्त्रेऽधिकारोऽस्मिन्ज्ञेयोनान्यस्य कस्यचित् ॥ १६ ॥**

निषेकोगर्भाधानं*श्मशानंमरणंविधिः*क्रियाविधिरुदितः*मन्त्रैरेतानेनशूद्र* धर्म्मणानाधिकार इतिस्थापि तम ॥ १ ॥ ० ॥ १६ ॥ नन्वाचारउक्तःसाधूनांधर्म्मस्य*मूलंतेचसाधवःके*इत्यतआहसरस्व*तीत्यादिकश्लोकम्॥१७

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १७ ॥

देवनद्योः सरस्वती*दृषद्वत्योर्मध्ये यो देशस्तं देशं *देवनिर्मितं शास्त्रः ब्रह्मावर्तं नाम्ना बुधाः प्रचक्षते ॥१॥०॥१७

तस्मिन्देशे य आचारः पारम्पर्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते १८

तस्मिन्नित्यादि ॥ १८॥ तस्मिन्ब्रह्मावर्त्तदेशे* पारम्पर्यक्रमागतः कृतयुगावधिवर्णानां चतुर्णां *सान्तरालाणां द्विद्विवर्ण*जातानाञ्च वर्णानाम् ॥ १ ॥ परम्परयाक्रमेणा*गतोय आचारः सर्वै* तेषां सदाचार उच्यते ॥ २॥०॥१८ अपरञ्चाह कुरुक्षेत्र*मित्यादिकं* श्लोकद्वयं ॥ १ ॥ ० ॥ १२ ॥

कुरुक्षेत्रञ्च मत्स्याश्च पंचालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥ १९ ॥

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्व्वमानवाः ॥२०॥

कुरुक्षेत्रञ्चेकोदेशः * मत्स्याश्चैवोदेशाः * पूर्वमत्स्य उत्तरमत्स्यो दक्षिण*मत्स्यः पश्चिममत्स्यः ॥ १ ॥ एवं बहवः पञ्चालाः * शूरसेनाश्च मथुरादय * एषसर्व्वो ब्रह्मर्षिदेशो * ब्रह्मावर्त्ताद्देशादनन्तरो देशः ।२। ६ ।*। एतदित्यादि । २० । एतत्कुरुक्षेत्रादिदेश*प्रसूतस्याग्रजन्मनो*ब्राह्मणस्य सकाशात्*पृथिव्यां सर्व्वमानवाः*स्वं स्वं चरित्रमाचरणं शिक्षेरन् ॥ ० ॥ * ॥ २० ॥

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥ २१ ॥

हिमवदित्यादि । २ । हिमवद्विन्ध्ययोर्मध्ये य*द्देशजातं विनशनात्*कुरुक्षेत्रे यत्सर*स्वत्या अन्तर्धानं ॥ ३ तस्मात्पूर्वं प्रयागात्पश्चिमं चयत्*समध्यदेशः प्रकीर्त्तितः । ४ । ० ॥ * ॥२१ ॥ * ॥

आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्योरार्य्यावर्त्तं विदुर्बुधाः २२

आसमुद्रादित्यादि ॥२२॥ पूर्व्वात्समुद्रादापर्य्यन्तं *पश्चिमात्समुद्रादाचपर्य्यन्तं* तयोर्हिमवद्विन्ध्ययोर्गिर्य्योश्च* मध्यमार्य्यावर्त्तं विदुः ॥ ० ॥ ० ॥ २२ ॥ ० ॥

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥ २३ ॥

कृष्णसारइत्यादि ॥ २३ ॥ यत्र देशे कृष्णसारो*मृगः स्वभावाच्चरति स यज्ञियो देशो ज्ञेय*स्ततः परो म्लेच्छदेशो न यज्ञियः ॥ ० ॥ ० ॥ २३ ॥

एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः। शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्षितः २४॥

एतानित्यादि ॥२४॥ द्विजातयो ब्राह्मणादय एतान्*पूर्व्वोक्तान्देशान्प्रयत्नतः*संश्रयेरन् वृत्तिकर्षितोपि नान्यान्*देशान्संश्रयेरन्निति ॥ १ ॥ शूद्रस्तु वृत्तिकर्षितो * यस्मिन्कस्मिंश्चिद्देशे नि * वसेत्ततो न दोषोस्ति ॥ २४ ॥ ० ॥

एषा धर्म्मस्य वो योनिः समासेन प्रकीर्त्तिता। सम्भवश्चास्य सर्व्वस्य वर्णधर्म्मान्निबोधत ॥२५॥

एषेत्यादि ॥३॥२४॥०॥ एषा धर्म्मस्य योनिरुत्पत्तिदेशो*वो युष्मान् समासेन प्र*कीर्त्तिता सम्भवश्च जगत्सर्गो *मया

समासेनकीर्त्तितः ॥ १ ॥ अथास्यसर्व्वस्यवर्णधर्म्मान्मन्तो*निरोषतवर्णानांधर्म्माःसंस्कारा* अमग्रहणादयोऽत * यावन्तोवचान्तेतान् ॥२॥ ० ॥ चरकेणोक्तं हिकर्त्तुरभिप्रायाः पृथग्विधाः। अतश्च प्रकृतिं वुद्ध्वा देश कालान्तराणि च। तन्त्रकर्त्तुरभिप्रायानुपायांश्चार्थमादिशेत्। इति। इत्यातेलस्मिंस्तन्त्रेऽत*ऊर्द्धं वच्यतेप्रथमे*निषेकादिःसंस्कारोद्विजवर्णानाम् ॥ ४ ॥ द्वितीयोभिक्षाविधिस्ततीयःकर्म्मयोगोब्रह्मचारिणां* ततोऽन्य हाश्रमग्रहणं*विवाहस्तदाश्रमकर्म्म ॥ ५ ॥ तस्माद्भविष्यपुराणोक्त*क्रमोऽत्रतन्त्रे नश्रेयः*सचक्रमस्तस्मिन्पुराणेऽभिधेयस्य ॥ ६ ॥ तद्यथा ॥ वर्णधर्म्मः स्मृतस्त्वेक आश्रमाणामतःपरम्। वर्णाश्रमस्तृतीयःस्याद्गौणो नैमित्तिकस्तथा। इति। अत्रैषांलक्षणमुक्तं। वर्णत्वमेकमाश्रित्य योधर्म्मः संप्रवर्त्तते। वर्णधर्म्मः सउक्तस्तु यथोपनयनं नृप। वर्णाश्रमं समाश्रित्ययोऽधिकारःप्रवर्त्तते। सखल्वाश्रमधर्म्मस्तु भिक्षादण्डादिकोयथा। वर्णत्वमाश्रमत्वञ्चयोऽधिकृत्यप्रवर्त्तते। सवर्णाश्रमधर्म्मस्तु मौञ्जीयद्या मेखलायथा। योगुणेनप्रवर्त्तेतगुणधर्म्मःसउच्यते। क्षत्रियस्ययथाप्रोक्तं प्रजानांपरिपालनम्। निमित्तमेकमाश्रित्य योधर्म्मः संप्रवर्त्तते। नैमित्तिकःसविज्ञेयः प्रायश्चित्तविधिर्यथा। इति प्रमादीत्नैवंविद्वानिह्नवर्ण* धर्म्मशब्दोवर्णधर्म्माश्रमधर्म्मा* दिषु पलहकइतिव्याचष्टे ॥ १ ।अस्मिंस्तन्त्रेभिधेयस्य * क्रमःप्रथमाध्यायेऽक्तो*जगतश्चसमुत्पत्तिं* संस्कारविधिमित्यादि ॥ २ ॥ ० ॥ २५ ॥०॥ जगदुत्पत्त्युपदेशा*दनन्तरं संस्कारविधिमाह*वैदिकैरित्यादिभि ॥ १ ॥ ० ॥ २६ ॥

वैदिकैःकर्म्मभिःपुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्य्यःशरीरसंस्कारःपावनःप्रेत्यचेहच २६

द्विजन्मानामितिकाल * सामानोमनिजुधानात् * भविष्यद्भव द्भूतानां * द्विजन्मवतांब्राह्मण * क्षत्रियवैश्यानांशरीरसंस्कारः ।॥ २ ॥ भविष्यद्भवद्भूतशरीरस्य * संस्कारइहप्रेत्यच * पावनःपवित्रकरो * निषेकादिः पुण्यैरेव * वैदिकैःकर्म्मभिःकार्य्यः ॥ ३ ॥ वैदिकैरितियथोक्त * स्वरवर्णाभ्यामुच्चरितमन्त्रेण * यथोक्तानुष्ठानेनच * व्यापारैर्वैदिकैर्द्विजैरेवकर्त्तव्यः ॥ ४ ॥ नतुयथोक्तस्वरवर्णाभ्यांदुष्टै * र्मन्त्रैर्नवायथोक्तानुष्ठान वाति* क्रमेणनिषेकादिःकर्त्तव्यइत ॥ ५ ॥ स्वरवर्णाभ्यांदुष्टोहि * मन्त्रोनैवस्वार्थमाह * तस्मादमन्त्रोभवति * नचतैःक्रियासिद्ध्यति* महाभाष्येपतञ्जलिनाप्युक्तञ्च ॥ ६ ॥ दुष्टःशब्दःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह। सवाग्वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतोऽपराधात्इति॥ ७ ॥ संस्कारस्यसामान्यलक्षणमुक्तं*चरकेणाकारणञ्च*तद्यथात्रप्रदर्श्यते ॥ ८ ॥ परिमाणंपुनर्मानंसंस्कारःकरणंमतम् ॥ करणंपुनःस्वाभाविकद्रव्याणा* मभिसंस्कारःसंस्कारो* हिगुणाधानमुच्यते ॥ ९ ॥ तेगुणास्तोयाग्निसन्निकर्षशौच * मन्थनदेशकाल*वशेनभावनादिभिः*कालप्रकर्षभाजना* दिभिश्चाधीयन्तइति ॥ १० ॥ व्याख्यातञ्चैतत्तद्यथा *गुणाधानमितियस्मिन्* स्वाभाविकेद्रव्येयेगुणानसन्ति ॥ ११ ॥ तेषांगुणानांतत्रय* दाधानमुत्पादनंतत् * समग्रकरणंसंस्कारइत्युच्यते ॥ १२ ॥ तेगुणास्तोयाग्निसन्निकर्षादिभि* रमन्त्रकैःसमन्त्रकैश्चाधीयन्ते*जनान्तेतद्यथाथप्रदर्श्यते ॥ १३ ॥ हविःप्रलिप्तस्रुक्स्रुवादिपात्राणां* तोयेनधौतात् पवित्रतागुण*उत्पद्यतेइतितोय*सन्निकर्षाद्गुणाधानं ॥१४॥ अशुचितैजसपात्राणामग्निना*दाहाच्छुचित्वगुणाधानं

भवति*विण्मूत्रोत्सर्गादुत्तरं*मृज्जलशौचेनशुद्धिः ॥ १५ ॥ दधिमन्थनात्तक्रभावेनलघुत्व*प्रभृतिगुणाधानंस्यात्*दर्पण
मन्थनादग्निर्जायते*याज्ञिकत्वगुणाधानं ॥ १६ ॥ तीर्थादिदेशवासवशाच्छुचि*त्वादिगुणाधानंभव*तिएवंकालविशेष
वशाच्चसर्व्वं * जलेशारदेप्रशस्तं ॥ १७ ॥ व्यापारोभावनायात्सैवचोत्पादनाक्रिया। भावनयाक्रियययाहिशोषधिषुक्
लक्र*स्वरसादीगुरुलघु*त्वादितद्गुणाधानं ॥ १८ ॥ आदिनाल्वभ्यासादिगुणेनापिच* दृढत्वादिगुणाधानं*कालप्रक-
र्षादासवारिष्टादिषु*बहुविधगुणाधानं ॥ १९ ॥ भाजनविशेषस्थापनात्पाकादि * करणाच्चगुणविशेषाधानंस्यात्।
यथाताम्रपात्रेषु।खण्डखण्डपाकविधानं ॥ २० ॥ आदिनानिवातच्छे*स्थितिस्थापनादिनाच*गुणविशेषाधानंस्यात्
॥ २० ॥ एवंमन्त्रेणप्रोक्षणादक्रैश्चाग*पश्वादिप्रोक्षणाद्गुण*विशेषाधानमित्येव*मादिकमुदाहर्त्तव्यं ॥२१॥ सोऽयं
संस्कारोभविष्य*द्बहुकृतानांब्राह्मण*क्षत्रियवैश्यानामेव*भविष्यद्बहुकृतशरीरस्य ॥ २२ ॥ वैदिकैःस्वरवर्णाभ्यां*
सुस्वरितमन्त्रैर्गार्भै*र्होमादिभिःकर्म्मभिस्तु*निषेकादिरिहलोके*प्रेत्याचमरणेपिपावनस्यकार्य्यः ॥ २३ ॥ निषेकइत्यक-
र्त्तरिच*कारकेसंज्ञायांघञ्*यमभिप्रेत्यास्त्रियागर्भाशये*सेक्तव्यस्यवेत्स्४*शुद्धिरूद्गुणाधानं॥२४॥ तेनप्रथमर्त्तौप्राग्रेतः*
सेकान्निषेकःसंस्कारो*गार्भहोमैर्विधिस्यैःकर्त्तव्यइति ॥२५॥ व्यासंहितायाउक्तं *गर्भाधानंप्रथमर्त्तौ*वितितत्त्वेत्
कथञ्चि*न्नसंस्कारोभवति*तर्हिद्वितीयाद्यतुषु ॥ २६ ॥ यतउक्तंविष्ण्वादिभिः*स्वस्वसंहितायांयथा*तत्रविष्णुसंहि-
तायांयदुक्तं* गर्भस्यस्पष्टताज्ञानेनिषेककर्म्मइति ॥ २७ ॥ शङ्खेनाप्युक्तंतद्यथा * गर्भस्यस्फुटताज्ञानेनिषेकःपरि-
कीर्त्तितः। इति ॥ २८ ॥ गर्भस्येतिगर्भाशयस्यस्पष्टता*स्फुटताश्चविज्ञायतेह्यार्त्तव*प्रवृत्त्याषोडशरात्रंयावत् ।२९।
ततःपुनरस्फुटाभवतियोनिः*सागर्भाशयउच्यते*पुनर्मासान्तेस्फुटाभवतियोनिः ॥ ३०॥ इत्येवंमासिमासिगर्भाशय*
स्फुटास्फुटस्वभवे*तदुक्तंसुश्रुतायुर्वेदे ॥ ३१ ॥ नियतांदिवसेऽतीतेसङ्कुचत्यम्बुजंयथा। ऋतौव्यतीतेनार्य्यास्तुयोनिः
संव्रियतेतया ॥ ॥ ३२ ॥ मासेनोपचितंकालेधमनीभ्यांतदार्त्तवम्। ईषत्कृष्णंतिगन्धञ्चवायुर्योनिमुखंनयेत् ॥३३॥
तद्वर्षाद्द्वादशात्कालेवर्त्तमानमसृक्पुनः। जरापक्वशरीराणांयातिपञ्चाशतःक्षयम् ॥ ३४ ॥ इति ॥ व्यासेनाप्युक्तंत-
द्यथा*रजोदर्शनतोयाःस्युरात्रयःषोडशर्त्तवः। ततःपुंवीजमक्लिष्टं शुद्धेक्षेत्रेप्ररोहति ॥ ३५ ॥ इति ॥ वैदिकैःकर्म्म
भिरितिकिमर्थं*स्वरतोवर्णतश्चादुष्टैर्मन्त्रैस्तु*यथोक्तानुष्ठानेनकृतएव ॥ ३६ ॥ निषेकादिःशरीरसंस्कारइह* लोकेच
प्रेत्याचमरणानन्तरं*परलोकेपावनःपवित्रकरः ॥ ३७ ॥ अधममध्यममध्यमोत्तम*वरप्रवरगुणाधानंस्याद्धि *जन्मनां
ब्राह्मणक्षत्रियवैश्यानां ॥ ३८ ॥ स्वरतोवर्णतोवापि*दुष्टैर्मन्त्रैरयथोक्तविधानेन*कृतानिषेकादिरकृताभवति ३९
स्वरवर्णान्तरदुष्टाहिमन्त्राः *नस्वस्वार्थवाचकाःस्यु*स्तेनसंस्कारासिद्धास्ते *संस्काराभासाभवन्ति*तल्यएवासंस्का-
रेण ॥ ४० ॥ तथाविधसंस्काराभासेनतुसंस्कृताभासाअसंस्कृता*अपियेतेसर्व्वेद्विजाः*शूद्रवद्भावाद्ब्राह्म* णाक्ष-
त्रियावैश्याएव ॥ ४१ ॥ समब्राह्मणसमक्षत्रियसम*वैश्याउक्ताब्राह्मणत्वादनपायात्* उक्तंहिव्याससंहितायां तद्-
यथा ॥ ४२ ॥ सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे। सहस्रगुणमाचार्येह्यनन्तंवेदपारगे ॥ ४३ ॥ ब्रह्मवीजसमुत्-
पन्नोमन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवीचसभवेद्ब्राह्मणःसमः ॥ इति ॥ ४४ ॥ सममब्राह्मणेदानं*मित्यत्राब्रा-
ह्मणइति*सदृशार्थेनञ्समब्राह्मणइति*विवरणादेवबोध्यं ॥ ४५ ॥ एतेनक्षत्रियवैश्यौचव्याख्यातौ * क्षत्रवीजसमुत्-
पन्नो*मन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवीचसभवेत्क्षत्रियःसमः ॥ ४६ ॥ वैश्यवीजसमुत्पन्नो • मन्त्रसंस्कार
वर्जितः। जातिमात्रोपजीवीचससमोवैश्यउच्यते ॥ ४७ ॥ वच्म्यतेत्रवहिस्त्वयं • शूद्रेणतुसमोज्ञेयोयावद्वेदेनजायते

इति ॥ ४८॥ तर्हि शूद्रवत्तेषां कथं सम*ब्राह्मणएवसमक्षत्रियएव*समवैश्यएवेतिविज्ञायते ॥४९॥ तेकथंनशूद्राइतिचे॰
त्तत्रोच्यतेस्वरवर्ण* दुष्टमन्त्रैःसंस्कारैस्तुवेदेजातत्वाभावेऽपि* ब्राह्मणत्वादानपायान्नशूद्रास्यात् ॥ ५० ॥ वक्ष्यन्तेते
शूद्राइति॰वेन्नतेषांब्राह्मणादिभेदेनपरास्वरादिभि॰ रशौचविधानस्योक्तत्वात्तद्यथा॥ ५१॥ जन्मकर्मादिविभ्रष्टः
सन्ध्योपासनवर्जितः। नामधारकविप्रस्तुदशाहं सूतकीभवेदिति ॥ ६२ ॥ एतेनक्षत्रियवैश्यौचद्वादशाहात्शुद्धौ(द्विपोद
शाहेनद्वादशाहेनभूमिपः। वैश्यःपञ्चदशाहेनशूद्रोमासेनशुद्ध्यतीति॥ ५३ ॥ इतेव स्वरवर्णविहीनमन्त्रैःसंस्का
राभासानपुर्ण॰जनकास्तस्मात्तेद्विजत्मनामिहचपेतान्चपावनः ॥ ५४ ॥ इतिज्ञापनार्थवैदिकैःकर्मभिःपुण्यै
रित्युक्तमेषत॰संस्काराभासोनसंस्कारकल्पेपुंशास्त्रेगणितेक्वापि ॥ ५५ ॥ ईदृशाएवसंस्काराभासैः सर्व्वे॰
ब्राह्मणक्षत्रियवैश्याः * इदानींसंस्काराभासाः ॥ ५६ ॥ समब्राह्मणसमक्षत्रियसम *वैश्याःप्रायेणदृश्यन्ते*तेषा
व्यवच्छेदार्थञ्च ॥ ५७ ॥ संस्काराणां नामनिर्निर्द्देशनेन*लत्वादिशब्देनपञ्च* विधविकल्पेनपञ्च * त्रिधगुणा
धानात्मक*संस्काराःकल्पिताः ॥ ५८ ॥ न्यूनकल्पोऽधमगुणाधानकल्पो*मधामगुणाधानञ्च * उत्तमगुणाधा
नञ्च*प्रवरगुणाधानंचाति*प्रवरगुणाधानंचेति ॥ ५९ ॥ कथमेवंविज्ञायते * महर्षिभिर्भेदेन संस्काराणांनिर्द्दे
शात्*तद्यथाविष्णुसंहितायाम ॥ ६० ॥ गर्भस्यस्पष्टताज्ञाने*निषेककर्मस्पन्दनात्*पुरापुंसवनंषष्ठे*ऽष्टमेवा
सीमन्तोन्नयनं ॥ ६१ ॥ जातेचदाकेजातकर्म्मायेन* व्यपगमेनामधेयं ॥ ६२ ॥ माङ्गल्यंब्राह्मणस्य * बल
वत्क्षत्रियस्य*धनोपेतंवैश्यस्य*जुगुप्सितंशूद्रस्य ॥ ६३ ॥ चतुर्थेमास्यादित्यदर्शनंषष्ठे*ऽन्नप्राशनंतृतीयेऽब्दे*
चूडाकरणमिताएव*क्रियास्त्रीणाममन्त्रिकाः*तासांसमन्त्रोविवाहः ॥ ६४ ॥ गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनं
गर्भैकादशेराज्ञो*गर्भद्वादशेवैश्यस्य । ६५ ॥ ततोनन्तरंविवाहइत्येवंयथाज्ञलकारागङ्गादिभिश * दशसंस्कार
निर्द्देशः*कृतोन्यूनकल्पश्च । ६६ । एतैर्दशभिःसंस्कारैः*स्वरवर्णाभासदुष्टैः*मन्त्रैर्यथाक्रमस्थानेनसंस्कृताः*
ब्राह्मणक्षत्रियवैश्याः*वेदेजाताद्विजाःस्युः ।६७। शूद्रभावादपेताश्चभवन्ति*यतउक्तंतावच्छूद्रसमोज्ञेयो* याव
द्वेदेनजायते इति ।६८। इतीवंदशसंस्कार * संस्कारावेदाध्ययनाभावेपुनः * शूद्रत्वमापद्यन्ते ।६९। यत
उक्तंमन्वेवच*योऽनधीत्यद्विजोवेद*मन्यत्रकुरुतेश्रमम् । सजीवन्नेवशूद्रत्व*माशुगच्छतिसान्वयः इति । ७०
एतेवेदाध्ययनहीना*दशसंस्कारसंस्कृता*ब्राह्मणब्रुवक्षत्रिय* ब्रुववैश्यब्रुवाश्चधमाब्राह्मण* क्षत्रियवैश्या
भवन्ति ॥ ७१ ॥ उक्तंहिव्यासेनस्वसंहितायां* द्विगुणंब्राह्मणब्रुवें*इतास्यविवरणे ॥ ७२ ॥ गर्भाधानादिभिर्मन्त्र *
र्वेदोपनयनेनच । नाध्यापयतिनाधीते*सभवेद्ब्राह्मणब्रुवः इति ॥ ७३ ॥ एतेनक्षत्रियब्रुव* वैश्यब्रुवौचव्याख्यातौ*
वेदोपनयनमात्रे*णवेदाध्ययनासिद्धेः ॥ ७४ ॥ एषलधमकल्पःसंस्कारेषु *व्यासेनस्वसंहितायां*मधमगुणमधामगुणो
त्तम*गुणप्रवरगुणाधानं ॥ ७५ ॥ अभिप्रेतार्थाःसंस्काराउक्ता* गर्भाधानपुंसवनंसीमन्तोजातकर्म्माय । नामक्रिया
निष्क्रमणान्नाशनंवपनक्रिया ॥ ७६ ॥ कर्णवेधोव्रतादेशोवेदारम्भक्रियाविधिः । केशान्तःस्नानमुद्वाहोविवाहाग्नि
परिग्रहः ॥ ७७ ॥ त्रेताग्निसंग्रहश्चेतिसंस्काराःषोड़शस्मृताः । नवैताःकर्णवेधान्तामन्त्रवर्ज्जंक्रियाःस्त्रियाः ॥७८॥
इति ॥ अत्रवपनक्रियाचूड़ा*ततःपरंकर्णवेधश्चूड़ातोऽनयोः * व्यासेनक्रमोक्तंतत्रैव ॥ ७९ ॥ कृतचूड़ेचवालेचकर्णवेधो
विधीयते ॥ इति ॥ वालेप्राक्चूड़ातोपिकर्णवेधोः*कृतचूड़ेवाकर्णवेधःकर्त्तव्यः ॥ ८० ॥ व्रतादेशस्तूपनयनः संस्कार *
मात्रंवेदारम्भक्रियाविधिरिति*वेदाध्ययनारम्भपूर्व्वकब्रह्म*चर्य्यव्रताचरणवेदाध्ययनं ॥ ८१ ॥ केशान्तोब्रह्मचर्य्यान्त

राजेवपनं*स्मयुक्तेमधारिणाहि*ब्रह्मचर्यं कर्त्तव्यं*तस्यावपनकरणं ॥ ८२ ॥ स्नानमितियथाविधि* गुर्व्वनुज्ञयास्नात्वा
समावर्त्तनं*गुरुकुलात्पुनःपितृकुलेगमनं । ८३ ॥ अत्रयोगविभागाच्चत्वारःकल्पाः* अधममध्यमोत्तमप्रवरा * ज्ञापकी
र्यां याभवन्तिबुद्धिमद्भिः ॥ ८४ ॥ तद्यथाब्राह्मणएव*लक्षणेनयुक्ते गर्भा * धानाद्युपनयनान्तैः*संस्कृतोवेदारम्भ
कृत्वापिवेत् ॥ ८५ ॥ ब्रह्मचर्य्यमाचरन्वेदाध्ययनं*नकृत्वाकेशास्तत्र*नकृत्वास्नात्वासमावर्त्तोविवाहं * कृत्वागृहा
श्रमं वसेत ॥ ८६ ॥ सनाधीतेनाध्यापयतीतरस्तु * ब्राह्मणएवःक्षत्रिय*एवंवैश्यःशूद्रःस्यात् ॥ ८७ ॥ भ्रष्टब्रह्मच
र्य्याश्रमत्वादधमो*ब्राह्मणःक्षत्रियोवैश्यो*इतिसंस्कारेषुधमःकल्पोऽयं ॥ ८८ ॥ तादृशसंस्कारैःसंस्कृतःशूद्र*इत्यु
वादृशं तोवेदाद्यध्ययने हि*धर्म्मोपवेदाध्ययना*भावात्पुनःशूद्रवद्भावः ॥ ८९ ॥यतउक्तं योऽनधीत्यद्विजोवेद*मन्य
त्रकुरुतेश्रमं । सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः ॥ इति ॥ ९० ॥ पराशरेणाप्युक्तं *अग्निकार्य्यात्परिभ्रष्टाः*
सन्ध्योपासनवर्जिताः । वेदञ्चैवानधीयानाः*सर्व्वेते वृषलाःस्मृताः ॥ ९१ ॥ तस्माद्वृषलभीतेन * ब्राह्मणेनविशे
षतः । अध्येतव्योप्येकशाखा*यदिसर्व्वं नशक्यते ॥ इति ॥ ९२ ॥ अथयोब्राह्मणःक्षत्रियोवैश्योवा* मन्त्रैर्यथावि
धिवेदारम्भक्रिया*विधिं ब्रह्मचर्यं चरन्*वेदाध्ययनं करोति ॥ ९३ ॥ त्रिद्वेकैवेदमेकशाखांवाधीत्य * ह्यादिस्नात
ब्रह्मचर्यो*गुरुणानुमतःस्नात्वा*समावृत्तउद्वाहं करोति ॥ ९४ ॥ पिताज्येष्ठभ्रातृहीनस्यातस्य*वैवाहिकाग्निग्रहणे*
धिकारस्तत्वे पितृ*ग्निग्रहणमकुर्व्वतः ॥ ९५ ॥ विवाहान्तैस्तैःकर्म्मभि*संस्कारोमध्यमऋणाधानं स्यादिति*ततो
मध्यमकल्पोऽयं ॥ ९६ ॥ अग्न्योविद्योऽनतुवाकाअनग्नयः * शूद्रसमानधर्म्माणः * इतिवशिष्ठवचनात् ॥ ९७ ॥
असामेवलवेदस्य * त्र्यहाशौचविधानाच्च *त्र्यहात्केवलवेदस्य*इतिपराशरोक्तत्वात् ॥ ९८ ॥ इतेवञ्चविवाहान्तैस्तै
कर्म्मभिः*यथाविधिसंस्कृतोयः * साग्निकपितृमानथवा*साग्निकज्येष्ठभ्रातृमान् ॥ ९९ ॥ तस्याग्निग्रहणेऽधिकारा
भावात्*कर्म्मस्वपुनर्विकारात्पितृक्रिययाज्येष्ठभ्रातृ * क्रिययाचक्रियासिद्धेः ॥ १०० ॥ साग्निकदशाहादेकाहाशौ
चादि*विधानाद्दुत्तमकल्पः* एकाहाच्छुद्ध्यते विप्रो*योऽग्निवेदसमन्वित * इतिपराशरवचनात् ॥ १०१ ॥ एषयदा
पितृज्येष्ठभ्रातृहीन*श्चाग्निं गृह्णातितदापुनरुत्तमगुणा*धानादुत्तमोभवति*शुद्धिश्चैकाहाद्भवति॥१०२॥ एषोपुनरुत्तमकल्पः
संस्कारेषु*यदापुनरेषत्रेताग्निसंग्रहं*कृत्वासंस्कृतोभवति* तदाप्रवरोभवति ॥ १०३ ॥ त्रेताग्निरग्नित्रयं वै
द्रताग्नि*र्दावाग्निर्ण्व ह्वदाह्वाग्नि* रितुक्तं कात्यायनेनतद्यथा ॥ १०४ ॥ यद्याग्निरग्निनानेनसम्भवेद्वाहितःक
चित् । अग्नयेविविचयइतिजुहुयाद्घृताहुतिं ॥ १०५ ॥ अग्नयोऽप्सुमतेचेतिजुहुयादेइतरे नचेत् ॥ अग्नये शुचये
चेतिजुहुयाद्द्रवाग्निना । १०६ ॥ गृहदाहाग्निनाग्निस्तुयष्टव्यःस्वमवाप्हिजैः ॥ दावाग्निनाचसंसर्गे हृदयं गदित
पाते । इति ॥ १०७ ॥ इतिचतुर्विधःसंस्कार*कल्पोवाऽसेनाभिप्रेतो*गोतमेनातिप्रवर*कल्पमभिप्रेत्याचत्वा*रिंशत्
संस्काराउक्तास्तद्यथोच्यते ॥१०८॥ द्वोलोकेधृतव्रतौराजा ब्राह्मणश्चबहुश्रुतस्तयोश्चतुर्विधस्य मनुष्यजातस्यान्तः
संज्ञानायचलनपतनसर्पणा मायत्तंजीवनं प्रसूतिरक्षण मसंकरोधर्म्मः ॥१०९॥ सएषबहुश्रुतोभवतिलोक*वेदवेदाङ्ग
विदाक्रो*वाकोतिहास पुराणेषुकुशलः ॥११०॥ तदपेक्षस्तद्वृत्तिश्चत्वारिंशता*संस्कारैःसंस्कृतस्त्रिषु* कर्म्मस्वभिरतः
षट्सु*वासामयचाविशेषुभिविनीतः ॥१११॥ षड्भिःपरिहार्य्योराज्ञा* नवध्यश्चावध्यश्चादण्ड्य * स्वावहिष्कार्य्यश्चा
परि*वादाश्चापरिहार्य्यश्च इति ॥११२॥ गर्भाधानपुंसवन*सीमान्तोन्नयनजात * कर्म्मनामकरणनिष्क्रमणान्न*प्राश
नचौडोपनयनानिनव ॥९॥११३॥ चत्वारिवेदव्रतानिस्नानं सह * धर्म्मचारिणाग्निसंयोगः ॥११४॥०॥४॥ पञ्चानां

महायज्ञा वा* महत्वात् देवपितृ*मनुष्यभूतब्रह्मणामितिपञ्च ॥५॥०॥११५॥ अष्टकापार्वणश्राद्ध*श्राविण्याग्रहायणी* चैत्र्याश्वयुजीतिसप्त ॥७॥०॥११६॥ पाकयज्ञसंस्थाः अग्न्याधेय*मग्निहोत्रं दर्शपौर्ण* मासावाग्रयणं चातु*र्मास्यं निरूढ पशुबन्ध*स्सौत्रामणीतिसप्त ॥७॥०॥११७॥ हविर्यज्ञसंस्थाग्निष्टो*मोऽत्यग्निष्टोमउक् थ्यः*षोडशिवाजपेयोऽति*रात्रो ऽप्तोर्याम इतिसप्त*सोमसंस्थाचेत्येतेचत्वारिंशत् ॥८॥०॥४०॥०॥११८॥ वाशब्देनापेरवक्तं*सहस्रगुणमचोर्या*च्छानन्तं वेदपारगइत्याचार्य वेदपारगयोर्द्वयो * र्लक्षणाभ्यांतद्यथा ॥११९॥ अग्निहोत्रीतपस्वीच * वेदमध्यापयेच्चयः। सकल्पं सरहस्यञ्चतमाचार्यं प्रचक्षते ॥१२०॥ इत्यनेनोक्तमकल्प*संस्कृतःप्रदर्शितः। प्रवरातिप्रवरोच* वेदपारग वचनेनतद्यथा ॥१२१॥ इष्टिभिःपशुबन्धैश्च*चातुर्मास्यैस्तथैवच। अग्निष्टोमादिभिर्यज्ञैर्येनचेष्टं सइष्टवान् ॥१२२ मीमांसतेचयोवेदान् षड्भिरङ्गैःसविस्तरैः। इतिहासपुराणानिसभवेद्वेदपारग इति ॥ १२३ ॥ नन्वेवंसति द्विजन्मनांशरीर*संस्कारोवैदिकैःपुण्यैः*कर्म्मभिःकार्य्यःकेनेति*चेत्तत्रोच्यते वैदिक*प्रणाकर्म्मविद्भिःकार्य्यः ॥१२४॥ अतकश्चिदेवंप्रकारेणपञ्च*विधसंस्कारविकल्प*मविद्वाननृषिःप्रमादीचत्वरः ॥१२५॥ अतस्तैत्तरकालिक*जनैरार्ष वचनतयामत्वा*मितिमनसिनिधाय*श्लोकंरचयित्वोवाच ॥१२६॥ अष्टौसंस्कारकर्म्माणि*गर्भाधानमिवस्वयम। पितावर्य्यान्तदनगोवानस्य भावेपितत्क्रमात् इति ॥१२७॥ प्रमादिनोक्तमिदमयुक्तंकस्मात्* बहुविधदोषदर्शनात् ॥१२८॥ गर्भाधानमिवेतिभविष्यद्*पत्यस्यपितास्वजाया*गर्भरेतसआधानं*यथास्वयमेवकुर्य्यात्* नान्नगोवाभि चारदोषात् ॥१२९॥ तथाष्टौसंस्कारकर्म्माणिखलु*गार्भहोमादिचूडान्त*कर्म्माणाष्टौकुर्य्यान्नानाः*इत्यत्रव्दष्टान्ता सिद्धिः ॥१३०॥ प्रागपत्योत्पत्तेःपितृत्वासिद्धे*रुत्कांहिचरकेयथा * सतस्तस्यैवपुत्रस्य * प्रागपत्यात् पितृत्वंन भवतितच्चापत्य इत्युक्तीति ॥१३१॥ भविष्यदपत्यस्यपितेत्यसाधु*प्रयोगस्तत्वाहप्रमादी*नेवमस्तिचेत्रवंप्रयोगो * वात्स्यायनभाष्येयथा* जनिष्यमाणं पुत्रमभिनन्दतीति ॥१३२॥ सत्यमेवंप्रयोगःस्यात् * पुत्रोभविष्यतीतिनत् पिताभविष्यतीतिस्यात् ॥१३३॥ तत्रापितस्याभावेपि*तदनगोवेतिपक्षेदृष्टान्तोन*भवतिसतिचपितरि*तदनेनकृते कोदोषः ॥१३४॥ अष्टाविवितिवगर्भाधानसंस्कार*कर्म्मादिचूडान्तानिसु*स्त्वेनोपनयनसाचा* नाकर्त्तृकत्वंप्रापयेत् ॥१३५॥ यद्यनाकर्त्कोपनयने दोषो*नभवतिकुतोऽन्येषां*संस्काराणांसतिच*पितर्य्यनाकर्त्कत्वेदोषःस्यात् ॥१३६ तत्राहकश्चित्प्रमादी*गर्भाधानमिवेतिगर्भाधानंतु* गर्भहोमादिरेतः*सेकान्तंकर्म्मोच्यते ॥१३७॥ भविष्यदपत्य स्यपितायथा * रेतःसेकान्तं गर्भाधानस्वयं*मेवकुर्य्यान्नान्यगोवाभिचारदोषात् ॥ १३८ ॥ तथापितेवस्वयंपुं * सवनाद्युपनयनान्त*कर्म्माणष्टौकुर्य्यादिति ॥१३९॥ एवमुक्तेपिकेवलमुपनयन*स्यानाकर्त्कत्वंनिरस्तंभवति* शेष दोषोवर्त्ततएव ॥१४०॥ अपरश्चायंदोषः* गार्भहोमादिरेतःसेकान्तंयदि* गर्भाधानसंस्कारःस्यात् ॥१४१॥ तदा तद्दिनेश्राद्धं कृत्वा*कथंमैथुनमापद्येत*तदङ्गत्वेनवाचनिकमितिचे*त्तदापूर्वमहोऽयंदोषः ॥१४२॥ स्वयंतेम काव्यातेहि * वाचनिकंगर्भाधानं* रेतःसेकान्तंकर्म्मगर्भाधान संस्कारइति ॥१४३॥ तेनकिंतद्दिनरेतः*सेके सत्यपितासम्भवःस्या*दपरश्चदोषोऽयं ॥ १४४ ॥ यस्तुमातुर्वापितुर्वा*सपिण्डीकरणंकृत्वा * वृद्धिंकृत्वागर्भा धानसंस्कारं*कुर्य्यात्सकथंतद्दिने *मैथुनंकर्म्मापद्येत ॥१४५॥ इतिप्रदोषोदोषश्चापरोऽयं* यातुखलुमृत मतीविधवास्याः*स्तस्याक्षतौजातेसति*नियोगात्सुतोत्पादने ॥१४६॥ रेतःसेकादेवरादिर्गर्भा* धानस्तिवस्तु सवना*द्युपनयनान्तानाष्टौ*संस्कारकर्म्माणिकुर्य्यात् ॥१४७॥ त्रैवर्णिकेचेत्क्षेत्रजःपुत्रः* पुत्रप्रतिनिधिस्तस्मोमतना

गर्भाधानादारभ्योपनयनपर्य्यन्तैः * सुपन्नयनसंस्कारैरित्युक्तम् ॥ २७ ॥ व्रहास्मै चकर्म्मभिर्यथा शरीरसंस्कृतं स्या * त्तदाहस्वाध्यायेनेत्यादि ॥ १ ॥ ० ॥ २८ ॥ ० ॥

स्वाध्यायेनव्रतैर्होमैस्त्रैविद्येनेज्ययासुतैः । महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुः ॥ २८ ॥

स्वाध्यायेनब्रह्मयज्ञेन * नितान्वेदादिपाठेन * व्रतैश्चान्द्रायणादिभि * र्होमैरग्निहोत्रादिभिः ॥ १ ॥ त्रैविद्येनत्रि वेदोक्तकर्म्मणेज्ययायज्ञेन * वाजपेयादिनासुतैः * सुतोत्पादनेनच * महायज्ञैर्यज्ञैश्चैतै * रियंतनुर्ब्राह्मीक्रि यते ॥ २ ॥ ० ॥ २८ ॥ ० ॥ अथक्रमेणसंस्कारान्वक्तुमारभमाणआहप्राङ्नाभीत्येवमादि ॥ १ ॥ ० ॥ ० ॥

प्राङ्नाभिवर्द्धनात्पुंसोजातकर्म्म विधीयते । मन्त्रवत्प्राशनं चास्यहिरण्यमधुसर्पि षाम् ॥ २९ ॥

गार्भैरित्युक्तत्वात्प्राक्पुंसवनादित्यत्र * गर्भाधानकालसिद्ध * स्तदानिषिक्तकर्म्म * प्राग्यत्स्याभिव्यक्तेः पुंसवनम् । १ । षष्ठेऽष्टमे वासीमन्तोन्नयन * मितिविष्णुयाज्ञवल्क्यौ * सीमन्तश्चाष्टमेमासीतिव्यासः * इत्युक्तं स्पितमेव । २। पुंसोजातस्यपुत्रस्य * प्राङ्नाभिवर्द्धनादित * नाभिनालच्छेदनात्पूर्वं * वेदोक्तमन्त्रै र्जात * कर्म्म विधीयते स्त्रीभिरादिभिः ॥ ३॥ कर्म्मचविधायजातस्य हिरण्यंकिञ्चित्किञ्चिन्मधुसर्पिश्च * गवामेषांमिश्रीकृताना * मस्य मिश्राणांप्राशनं च * मन्त्रैर्नैवविधीयते ॥ ४ ॥ ० ॥ २९ ॥ ० ॥

नामधेयंदशम्यान्तुद्वादश्यांवापिकारयेत् । पुण्येतिथौमुहूर्त्तेवानक्षत्रेवागुणान्विते ॥ ३० ॥

नामधेयमित्यादि ॥ ३० ॥ अस्यजातस्यबालस्य * दशम्यान्तुरात्रावतीतायांसत्या * मेकादशेऽहनिनाम * धेयं पिताभ्यांकारयेत् । १ ॥ द्वादश्यांरात्रावतीतायांत्रयो * दशेऽहनिक्षत्रियस्य * वाशब्दात्पञ्चदश्यां * रात्रावतीतायांषोडशे वैश्यस्य ॥ २ ॥ त्रिंश्यांरात्रावतीतायां * मेकत्रिंशेऽह्निशूद्रस्या * मन्त्रैःपित्रभ्यांनामधेयंकारयेत् ॥ ३ ॥ विष्णुनाचैव मुक्तं स्वसंहितायां * जातेचदारकेजातकर्म्माशौच * व्यपगमेनामधेयमितिनानयोर्विरोधः ॥ ४ ॥ यदिशुद्धदिनेषुननाम धेयं * कारयेत्तदापुण्यतिथ्यादिषु * यथाविधिनानामधेयं कारयेत् ॥ ५ ॥ ० ॥ ३० ॥ यस्ययन्नाम * कुर्यात्तदाह * मङ्ग लामित्य * वमादिश्लोकः ॥ १ ॥ ० ॥ ३१ ॥ ० ॥

मङ्गल्यंब्राह्मणस्यस्यात्क्षत्रियस्यबलान्वितम् । वैश्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितम् ३१

ब्राह्मणस्यमङ्गल्यंनामधेयं * मित्रभद्रादिकं शुभसूचकं * क्षत्रियस्यबलान्वितं शूरादि ॥ १ ॥ वैश्यस्यधनसंयुक्तं देववसुरामधने * त्येवमादिकंनाम ॥ २ ॥ शूद्रस्यजुगुप्सितंनाम * दीनभङ्गुरादिक * मितिप्रायिकाभिप्रेतं ॥३॥०॥ विष्णुनाचोक्तंस्वसंहितायां * मङ्गल्यंब्राह्मणस्य * बलवत्क्षत्रियस्य * धनोपेतंवैश्यस्य * जुगुप्सितंशूद्रस्य ॥ ३ ॥ ० ॥ प्रकारान्तरेणनामकरणमाहशर्म्मव * दित्यादिकमेकश्लोकम् ॥ १ ॥ ३० ॥

शर्म्मवद्ब्राह्मणस्यस्याद्राज्ञोरक्षासमन्वितम् । वैश्यस्यपुष्टिसंयुक्तंशूद्रस्यप्रैष्यसंयुतम् ३२

ब्राह्मणादि बालिकानां * नामधेयं सुखोद्यसुखेनोच्चार्य्य * मधुरमकष्टकरं * तिसृष्टार्थं मनोहरं श्रवणं * ॥ १ ॥ मङ्गलमुच्चारणे शुभसूचकं * दीर्घवर्णान्तमाशीर्व्वादार्थकं च * यथोक्तविधानेनैव * पिता कारयेदिति॥ २ इत्येवं वा स्त्रीसमस्तं वा ब्राह्मणादिकन्यानां * नामधेयकृते विवाहे निष्पन्ने * क्रियाविधौ द्विजातीनां देवान्तं शूद्रायाः दासान्तम् ॥ ३ ॥ ब्रह्मक्षत्त्रियवैश्यानां स्त्रियादेवान्तता स्मृता। दासान्तता तु शूद्राया इति शास्त्रे व्यवस्थितम् ॥ ४ ॥ ० ॥ २३ ॥ ० ॥ एवं नामकरणमुक्त्वा * तदनन्तरं येसंस्काराः * कर्त्तव्यास्तानक्रमेणाह * चतुर्थे मासीत्यादि ॥ ० ॥ २४ ॥

**चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्। षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥२४॥**

शिशोर्जन्मोत्तरं चतुर्थे मासि तु * गृहान्निष्क्रमणं कार्य्यं * याज्ञवल्क्येनाप्युक्तम * अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥ १ ॥ व्यासेनाप्युक्तं स्वसंहितायां यथा * एकादशेऽह्नि नामार्क * सन्दर्शनं मासि चतुर्थके इति ॥ २ ॥ मन्त्रार्णवे चोक्तं * चतुर्थे मासि कर्त्तव्यमादित्यस्य प्रदर्शनमिति ॥ १ ॥ विष्णुनाप्युक्तं चतुर्थे * मास्यादित्यदर्शनमिति * तेन यद्द्यमवचनं पठति ॥ २ ॥ तत्स्तृतीये कर्त्तव्यं मासि सूर्य्यस्य दर्शनमिति तल्लिपिकप्रमादः ॥ तत्स्तु तृतीये कर्त्तव्या मिताविपाठो * मन्वादीनां बहूनां वचनदर्शनात् ॥ ३ ॥ षष्ठेऽन्नेति ॥ * ॥ जातस्य शिशोः षष्ठे मासि तु कर्त्ते * ऽन्नप्राशनं यद्वा कुले * पूर्व्वं कस्यचिदन्नप्राशने यदा * कृते मङ्गलमभूत्त * चेष्टम् ॥ ४ ॥ * ॥ २४ ॥ * ॥ क्रमिकत्वादाह चूड़ेत्यादि ॥ ० ॥ २५ ॥ ० ॥

**चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् २५**

द्विजातीनां सर्व्वेषामेव चूड़ा * कर्म्म धर्म्मतः प्रथमे अब्दे कार्य्यं * तृतीये अब्दे वा श्रुतिचोदनात् ॥ १ ॥ याज्ञवल्क्येनोक्तं चूड़ा * कार्य्या यथाकुलमिति ॥ २ ॥ ० ॥ व्यासेनोक्तं षष्ठे मास्यन्नमश्नीयाच्चूड़ाकर्म्म कुलोचितम। कृतचूड़े तु बाले च कर्णवेधो विधीयते ॥ ३ ॥ इति ॥ मन्त्रार्णवे चोक्तं षष्ठेन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्। इति। ४। यस्त्वाद्य संस्कारार्य्येतिपतेत्स्वकालाच्चेत्कथंचन। कृत्वा तएव कर्त्तव्या तस्योपनयनादधः। इति। ५। स्वकालादतिपतितः * संस्कारउत्तरसंस्कारात् * पूर्व्वं कर्त्तव्य इत्येवं * सर्व्वसंस्कारा उपनयनादधो * नयुगपच्च पर्य्यात्। इति ।६। ० । २५ । क्रमिकत्वादुपनयनमुच्यते * गर्भाष्टमेऽब्द इत्यादि । १ । ० । २६ । । ०

**गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः २६**

उपनीयनमित्युपनयतु * भवानिति यत् प्रयुङ्क्ते * तदुपनायनमुप * नयनक्रियायां चोदनां कुर्व्वीत * णिजन्तादुपनौञ्जोल्युट्। १। निषेकादिकर्म्माणि स्वयं करणे * नविहितानीति * स्वयमकर्त्तव्यानि सुः ॥ २ ॥ तर्हि पित्रादिभिः स्वयं कार्य्याणीति प्राप्तौ * तत्प्रतिषेधार्थं णिचा * पित्रादीनां प्रयोजकत्वं ख्यापितम् ॥ ३ ॥ उपनयनान्ता उक्रिया उपित्रा * दशौ ब्राह्मणान् नियोजयेयुरिति * नतूपनयनमेवोपनायनम् इति। ४ गर्भाष्टमेऽब्दे ब्राह्मणस्येति यो * ब्राह्मणान्मन्त्रैः स्वोढायां * ब्राह्मणकन्यायां वा * क्षत्रियकन्यायां वाथ * वैश्यकन्यायां वा जातः। १। यस्तु ब्राह्मणादपरब्राह्मणेन * मन्त्रेणोढायां ब्राह्मण * कन्यायां क्षत्रियकन्यायां वा वैश्य * कन्यायां वा नियुक्तायां। ३।

अनियुक्तायां वा मधवायां जातः*कुण्डो विधवायां जातो वा*गोलकोयस्तस्यां पुनर्भूं*जातः पौनर्भवः पुत्रः । ३ । य
स्त्वब्राह्मणादनुलोमजायां*मत्तयोनौचान्ढायमेव* क्षत्रियकन्यायां वैश्यायां वाजातः ४ समब्राह्मणास्तस्यतस्यै
वगर्भा*दृष्टमेवर्षे वयसि*उपनयनजनक*क्रियामाचार्यः कुर्व्वीत । ५ । गर्भान्नवमदशम* मैकादशद्वादशम*मासेषुज
न्मभवतिततःपरन्तु*वैकारिकःप्रसवकालइतिहि । ६ । सुश्रुताचार्य्यगणायुर्व्वेदेऽभिहितं तस्माद्गर्भाधानदिन*मार
भ्याष्टमादिवर्षे * गणनाकर्त्तव्यानतु जन्मदिवसमारभ्य । ७ । तेनगर्भाष्टमादिवत्सरोत्सख्या * कालउपनयनस्य *
ब्राह्मणादेस्तोऽधःकालेच ऊर्द्ध्वादिः । ८ । नतु ततऊर्द्धमुपनयनात*इत्थोगर्भाष्टमादाब्दे*पतितचूड़ान्ताःकार्य्याः इति
विष्णुनाप्युक्तं स्वसंहितायां यथा*गर्भाष्टमेऽब्दे ब्राह्मण * स्योपनयनं गर्भैकां * दशेराज्ञोगर्भद्वादशेविशः । इति ।
। १० । व्यासेनवोक्तं । विप्रोगर्भाष्टमेवर्षे क्षत्रएकादशेतथा । द्वादशेवैश्यजातिस्तुव्रतोपनयमर्हति । इति । गर्भता
ने*नचैकादशद्वादशयोरन्वयः । शङ्खेनाप्युक्तं । १२ । गर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनं । गर्भादेकादशेरा
ज्ञोगर्भात्तु द्वादशेविशः । इति । १३ । याज्ञवल्क्येनैवोक्तमष्टमेचाब्दे*ब्राह्मणस्योपनयन * मितनतुमन्वादिभिः*
सर्व्वैर्हिनसम्भवति ॥ १४ ॥ तद्यथा ॥ ० गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनायनम् । राज्ञामेकादशेसैके विशामेके
यथाकुलमिति ॥ १५ ॥ ० ॥ ३६ ॥ अथकाम्योपनयनकालमाह* ब्रह्मवर्च्चसेत्यादि ॥ १ ॥ ० ॥ ३७ ॥ ० ॥

**ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ३७ ॥**

ब्रह्मणोवर्च्चस्तेजस्तत्*कामस्य विप्रवालस्य*पंचमेऽब्दे* राज्ञोबलार्थिनःषष्ठे*ईहार्थिनोवैश्यस्याष्ट* मउपना
यनंकार्य्यम् ॥ १ ॥ उक्तं हि गौतमेनैत*दुपनयनं ब्राह्मण*स्याष्टमे नवमे पंचमे वाकाम्यं*गर्भादिःसङ्ख्यावर्षाणाम् ॥
इति ॥ २ ॥ ० ॥ ३७ ॥ अथोपनयनस्यगौणकाल*माहाषोड़शादित्यादि ॥ १ ॥ ० ॥ ३८ ० ॥

**आषोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ ३८**

आङ्भिहाभिविधौतेन * ब्राह्मणस्यगर्भाद्षोड़शवर्षं * वयोत्यापस्य सावित्रीनातिवर्त्तते ॥ १ ॥ गर्भाष्ट
मेऽब्दे इत्यतोनुवृत्ते * गर्भाद्षोड़शादिति ॥ २ ॥ विष्णुनापिह्येतद्वचनद्वयं *गर्भद्वादशेविशइ*त्यस्मादुत्तरंते
षां सङ्ख्येत्याद्युक्त्या*वक्तव्यव्यवधानेनोक्तं ३ तत्रगर्भेत्यस्यानुवृत्ते * रसक्ताभावदर्शनाः इत्रापिपूर्व्वतोगर्भेत्यस्यानुवृ
त्तिरिष्टा ॥ ४ ॥ याज्ञवल्क्येनापिस्वसंहितायां * मुपनीयगुरुरित्यादि*द्वाविंशति * श्लोकानुक्त्वाभिहितं ॥ ५ ॥
आषोड़शाब्दाद्द्वाविंविंशाच्चतुर्विंशाच्चवत्सरात् । ब्रह्मक्षत्रविशां कालऔपनायनिकःपरः ॥ इति ॥ ६ ॥ तत्रापिग
र्भाष्टमेत्यस्यगर्भशब्द * स्यानुवृत्तेनासम्भवः ७ व्यासेनचस्वसंहितायामुक्तं* विप्रोगर्भाष्टमेवर्षे क्षत्रएकादशेतथा ।
द्वादशे वैश्यजातिस्तुव्रतोपनयमर्हति । ८ । तस्याप्राप्तव्रतस्यायं कालःस्याद्द्विगुणाधिकः । वेदव्रतच्युतोव्रात्यःस
व्रात्यस्तोममर्हति ॥ इति ॥ ९ ॥ अत्रद्विगुणइतिनोक्त्वा * द्विगुणाधिकइत्युक्त्या * गर्भाद्द्विगुणोऽब्दःकालो*
ऽधिककालो*नास्मादधिकःकालोस्त्युप*नयनस्येतिख्यापितं । १० । इत्येवं विष्णुवचनादिदर्शनात्*शङ्खवचनेपि
गर्भा*दित्यस्यानुवृत्तिरिष्टा ॥ ११ ॥ पूर्व्वश्लोके प्रत्येकं गर्भादित्युक्त्या*परश्लोकेतदनउ*वृत्तिनिषेधोज्ञापनात् ॥ १२
तद्यथागर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनं ॥ गर्भादेकादशेराज्ञोगर्भात्तु द्वादशेविशः १३ षोड़शाब्दस्तुविप्रस्य

द्वाविंशः क्षत्रियस्य तु ॥ विंशतिः सवत्सरा स्यात् वैश्यस्य परिकीर्त्तिता ॥ १४ ॥ गर्भाद्षोडशादिति व * व्याख्यानमवि
द्वान् यः स * मर्य्यादायामाङ्‌ प्रश्लिष्ट इत्युक्त्या यद्‌यमवचनं * निर्द्दिश्यतितद्‌ यथा ॥ १५ ॥ पतितायस्यसावित्रीदशवर्षाणि
दशपञ्चच ॥ ब्राह्मणस्य विशेषेण तथाराजन्यवैश्ययोः ॥ १६ ॥ प्रायश्चित्तं यत्तदेषां प्रोवाचवदतां वरः । विवस्वतः सुतः
सोमात्यर्माधर्मार्थतत्त्ववित् ॥ १७ ॥ सशिखं वपनं कृत्वाव्रतं कुर्य्यात्समाहितः हविष्यं भोजयेदन्नं ब्राह्मणान्
सप्तसप्तवा । इति । अत्रदशपञ्चचेति * द्वादशमासपर्य्यन्तं * प्रसवकालमभिप्रेत्यमेन * सएकवत्सरस्ततः परं पञ्चदश
वर्षं । १८ । तथाराजन्यवैश्ययो * रिति क्रविंशवर्षं तु क्षत्रियस्य * त्रयोविंशवत्सरं वैश्यस्येति * सर्व्वतचनाद्‌वि
रुद्धं । २० । तस्मान्नमर्य्यादायामाङ् * जन्मनः प्रभृति पञ्च * दशाद्वाव्दगणनाया ॥ २१ ॥ नवमदशमैकादशमासेषु *
जातानांत्रिद्वादिक्रमासा * न्यूनाभवन्तीतिदोषः ।२२। गौतमेनाभिहितं हि * प्राक्प्रागुपनयनात्काम * चारवाद्भक्षोऽहु
तोऽब्रह्मचारी * यथोपपादमूत्रपुरीषोभवेत् । २३ । नास्याचमनकल्पोवि * द्यतेऽन्यत्रापमार्जन * प्रधावनावोक्षणेभ्यः
॥ २४ ॥ नतदुपस्पर्शनाशौचं नत्वेवै * नमग्निहवनवलिहरणायोनियुञ्ज्या * न्नब्रह्माभिव्याहारये * दन्यत्रस्वधानिनय
नात ॥२५॥ इति । दक्षसंहितायांचोक्तं * जातमात्रः शिशुस्तावद्‌यावदष्टौसमावयः । सहिगर्भसमोज्ञेयो व्यक्तिमात्रः
प्रदर्शितः ॥ २६ ॥ भक्ष्याभक्ष्ये तथापेये वाच्यावाच्ये कृतानृते । अस्मिन्‌काले नदोषोऽस्तिसयावन्नोपनीयते । २७
उपनीतस्यदोषोऽस्तिक्रियमाणैर्विगर्हितैः । अप्राप्तव्यवहारोऽसौयावत्षोडशवार्षिकः ॥ २८ ॥ इतियमेनाप्यभि
हितं हि * ऊनैकादशवर्षस्य पञ्चवर्षात्परस्यच । प्रायश्चित्तं चरेद्‌भ्राता पिता न्यो वापि वान्धवः । २९ । अतोवालतर
स्यापिनापराधोनपातकम् । राजदण्डोनतस्यास्तिप्रायश्चित्तं नविद्यते ॥ ३० ॥इति॥ अतकेचित्प्रमादिनोभाषन्ते *
अष्टौसंस्कारकर्म्माणिगर्भाधानमिवस्वयम् । पिताकुर्य्यात्तदन्योवातस्याभावे पितत्क्रमादिति ॥३१॥ केनचित्प्रमा
दिनाकृतं श्लोक * मार्षमलापभाषन्ते * पितापुत्रस्योपनयनान्तांस्तु * संस्कारान् कुर्य्यान्नान्यः ॥३२॥ तस्य पितुरभावे
पान्योवाकुर्य्या * दितितदसाधु वक्तु * दोषादितिप्राग्‌दर्शितं ।३३। पिताकुर्य्यात्तदन्योवा * तस्याभावेपीतियदुक्तंतत्र * चा
परोऽयं दोषो दृष्टः ॥३४॥ तस्याभावेऽप्यन्यः कुर्य्या * दित्युक्त्यासिद्धौयत्तदन्याद्युक्तं। तत्रतत्पदग्रहणा * मधिकाख्यवाक्य
दोषः ॥३५॥ ततोपिचतस्याभावेइत्यभावः * किमन्योन्याभावः * पितुरन्योऽन्याभाववान् * यः सकुर्य्यादितिचे ॥ ३६ ॥
तदाजीवतिपितरि * पितुर्न्याः सर्व्व एव * कर्त्तुमर्हन्तिप्रागभावश्चपितु * नसम्भवतिनहिप्राक् * पितुरुत्पत्तेः पुत्रः स्यात
। ३७ । तर्हि चात्यन्ताभावे * यदापितासन्निधौनास्तितदान्यः * कुर्य्यादित्यबाधं साभावः पितरि * सतेऽन्यः कुर्य्यादि
तिचेत् ।३८। तदावक्ष्यमाणोक्तव्यवहार * श्रुतिर्नैवोपपद्यते * श्रूयते हि छान्दोग्योपनिषदि। ३९ । उद्दालकेजीवतितस्य *
पुत्रः श्वेतकेतुः पितु * रन्यत्रब्रह्मचर्य्यं द्वादशवर्षं * कृत्वानूचानमानीभूत्वा समावृत्तः पितुरग्रेऽगात्।४०।जीवतिदशर
थे सन्निहिते च * वशिष्ठोरामादीनुपानाययत् । जीवतिचवसुदेवे रामकृष्णौ * सान्दीपनिरुपानायर्यदिति ॥ ४१ ॥
तस्मात्तस्याभावेतदन्यः * कुर्य्यादित्यसङ्गतमि * त्यपरेचदोषाढृष्टाः । ४२ । पुत्राचार्य्यस्य श्राद्धान्न * भोजिब्राह्मणपङ्क्ति
दूषकत्वं * गुरुपित्राचार्य्याणां च * साङ्कर्य्यं दोषोभवति ॥ ४३ ॥ यदिहिपितापुत्रस्य * पुंसवनादिसंस्कारान् * कुर्य्या
त्तदागुरुर्भवतियदु्पनयनसंस्कारं कुर्य्या * त्तदाब्रह्मदाताभवेत् ॥ ४४ ॥तदेकस्मिन् पितरिगुरुत्वं च * पितृत्वं चब्रह्म
दातृत्वं चयुग * पद् भवतिततोभेदोक्तिनस्यात् ॥ ४५ वक्ष्यतेह्यत्रैवस्वयं * आचार्य्याणां मतं पिता * गौरवेणातिरि
च्यते * उत्पादकब्रह्मदात्रो * र्गरीयान् ब्रह्मदः पिता ॥ इति ॥ ४६ ॥ एकस्मिंस्त्रिधात्वेऽज्ञात् कर्पाप * कार्यवचनात्

हिकाग्निं न*गृहीत्वा यान् जनयन्ति ॥६॥ तत्रैतयोर्ब्राह्मणक्षत्रिय*वैश्यत्वाय यथाकालं* गर्भादाषोडशवर्षादिपर्य्यन्तं*यथाविधिनसंस्कृताः ॥७॥ स्वरवर्णाभ्यामदुष्ट* मन्त्रैर्यथोक्तानुष्ठानेन * निषेकादिसंस्कारपूर्व्वेपि नयनसंस्कार*हीनाश्चतश्चाषोड़शाब्दादिरूर्द्धम् ॥८॥ समदशादिषु वर्षेषु * सावित्रीपतिताःसावित्र्याब्रह्म*चर्य्यव्रताधिकारहेतुभूतायां*ग्रहणाच्युताभवन्ति ॥९॥ इत्यतोव्रात्याव्रतं नार्हन्तीति*ते चार्य्यैर्ब्राह्मणक्षत्रियवर्ग्य*विगर्हिताभवन्तीति ॥१०॥ विष्णुसंहितायामपि*चाषोड़शादित्यादिक * वचनद्वयस्योक्तार्थक प्रसिद्धत्वात् ॥११॥ यज्ञेनाप्युक्तं तद्यथा * षोड़शाब्दन्तुविप्रस्यद्वाविंशं चक्षत्रियस्य तु। विंशतिःसचतुष्काचवैश्यस्यपरिकीर्त्तिता ॥१२॥ नाभिभाषितसावित्रीमतऊर्द्ध्वं निवर्त्तयेत्। विज्ञातव्यास्त्रयोप्येते यथाकालमसंस्कृताः। सावित्रीपतितावात्या सर्व्वधर्म्मवहिष्कृताः इति ॥१३॥ वक्ष्यते चात्र स्वयं हि* शूद्रेणतु समोह्येषोयावद्वेदे न जायते इति ॥१४॥ असंस्कृतादिति नप्रसज्यप्रति * षेधे नञ् पर्य्युदासोऽयं *संस्कृतादन्ये येते त्वसंस्कृताः॥१५॥ तेतु त्रिधा यथोक्तब्राह्मणादीनां* पुत्राःस्वरवर्णाभ्यामदुष्टैर्मन्त्रै*र्यथोक्तानुष्ठानेनोप*नीतादन्येऽनुपनीताः॥१६॥ येस्वरवर्णान्यतरदुष्टैर्मन्त्रै*र्यथोक्तानुष्ठानेनोपनीताउप*नीताभासाःषोड़शाब्दादातीताः ॥१७॥ येचयेच स्वरवर्णाभ्यामदुष्टैर्मन्त्रैः * यथोक्तानुष्ठानव्यतिक्रमेणोप*नीताउपनीताभासाः*षोड़शवर्षादतीताः ॥१८॥ इति त्रिधाव्रात्या एते नापरेच*संस्कृतादन्या व्याख्याता*द्विविधाःशूद्रवद्व्या*पन्नवर्णसङ्कराः ॥१९॥ द्विविधाश्चव्रात्याः कुलोत्पन्नावर्ण * सांकर्य्यदोषशूद्रभावापन्नाश्च*तत्रव्रात्यानां त्रयाणां*प्रायश्चित्तं व्रात्यस्तोमः ॥२०॥ व्यासयाज्ञवल्क्याभ्यामुक्तास्तत्र* व्याससंहितायां यथा ॥ २१ ॥ तस्याप्राप्तव्रतस्यायं कालःस्याद्विगुणाधिकः। वेदव्रतच्युतोव्रात्यःसव्रात्यस्तोममर्हतीति ॥ २२ ॥ याज्ञवल्क्यसंहितायाञ्च * आषोड़शाब्दाद्वाविंशाच्चतुर्विंशाच्चवत्सरात्। ब्रह्मक्षत्रविशां कालऔपनायनिकः परः ॥ २३ ॥ अतऊर्द्ध्वं पतन्त्येते सर्व्वधर्म्म वहिष्कृताः। सावित्री पतितावात्या व्रात्यस्तोमादृतेक्रतोः इति ॥२४॥ अत्रतु संहितायांप्रायश्चित्त प्रकरणे वक्ष्यते च*सामान्यतएव यथा ॥ २५ ॥ येषांद्विजानांसावित्री नानूच्येतयथाविधि। तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत् इति ॥ २६ ॥ येषां द्विजानामिति द्विजवर्णानां * नत्वपनयनसंस्काराद्द्विजानां*येऽनुपनयनसंस्कारेणद्विजा * स्तेषां यथाविधिगायत्र्यनूक्ता ॥ २७ ॥ यथाविधिगायत्र्यनुवचने* द्विजत्वं हि न सिद्ध्यति * तस्योपनयनसंस्कारस्यासिद्धेः ॥ २८ ॥ गायत्र्यनुवचने त्रिभिस्तु*पूर्व्वपूर्व्व पुरुषा इत्यादिना*प्रागुक्तायेब्राह्मणक्षत्रियवैश्याः ॥२९॥ तेजनयन्तियान्पुत्रान्*तेभ्योयथाकालंस्वर*वर्णाभ्यामदुष्टैर्मन्त्रै *र्यथोक्तानुष्ठानेनैव*यथोक्ताचार्य्येणगायत्रीप्रदानं ॥३०॥ तद्विपर्य्ययेणगायत्र्यनुवचनं*त्रिविधानां व्रात्यानां भवतितांस्त्रीन् * कृच्छ्रांश्चारयित्वापुन*र्यथावदुपनययेत् ॥३१॥ शूद्रवद्व्यापन्नाःसांकर्य्यदोषा * न्वितास्तुते ये ब्राह्मणक्षत्रियवैश्या * वैवाहिकाग्निग्रहणे * ऽधिकारिणोभवन्त्यपि ॥३२॥ दारान्गृहीत्वाग्निंनगृह्णन्तिते तु*निरग्नयःशूद्रसमानधर्म्माणः*स्वकर्म्मणाश्चाग्निहोत्रा*दीनांत्यक्तारोभवन्ति॥३३॥ ते शूद्रवद्व्यापन्नास्त्यक्तस्वकर्म्माणोयांस्तु * पुत्रान्जनयन्तिते पुत्राःशूद्रव *द्व्यावर्णसाङ्कर्य्यदो*षान्विताभवन्तीत्यतः ॥३४॥ तेषां तद्दोषप्रशम*प्रायश्चित्तंनकारयित्वायदि*यथाकालं स्वरवर्णादुष्टमन्त्रै ॥ ३५ ॥ यथोक्तानुष्ठानेनापि*गायत्र्यनूच्येततथापि*यथाविधिगायत्र्यनु*वचनं नभवतितत्प्रायश्चित्ता*भावे ऽधिकाराभावात् ॥३६॥ स्वरादिदुष्टमन्त्रैर्म्मन्त्रैरुपनये * त्तदापियथाविधिगायत्र्यनु* वचनंनस्याद्दुष्टमन्त्रै * स्तदर्थानभिधानात् ॥ ३७ ॥

एवमयथोक्तानुष्ठाने नापि*स्वस्ववर्णोद्दिष्टमन्त्रैः*गायत्र्यनुवचनं न* यथाविधिगायत्र्यनुवचनं स्यात् ॥३८॥ तदुपनयनाभास*एवनतूपनयनं*तास्त्रीन् कृच्छ्रांश्चारयित्वापुन* र्यथावदुपनाययेत् ॥ ३९ ॥ अपरे ये यथाकालं * यथोक्तविधानेन*स्वस्ववर्णोद्दिष्टमन्त्रै*रुपनीतावेदावरम्भं*कृत्वानवेदमधियते*नब्रह्मचर्यं चवन्ति॥५० ॥विस्नुत ब्रह्मचर्यास्ते* स्वतःसमावर्त्तदारान्* गृहीत्वागृहस्थाधर्मान्तेषां*शूद्रवत्सम्भ्रमः ॥ ४१ ॥ वक्ष्यते हि योऽनधीत्य द्विजोवेद*मन्यत्रकुरुते श्रमं । सजीवन्नेव शूद्रत्व*माशुगच्छतिसान्वयः । इति ॥४२॥ पराशरेणाप्युक्तं हि*अग्निकार्यात्परिभ्रष्टाःसन्ध्योपासनवर्जिताः । वेदञ्चैवानधीयानाःसर्व्वेते वृषलाःस्मृताः ॥४३॥ तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः । अध्येतव्योऽप्येकशाखा यदिसर्व्वोनशक्यते इति ॥ ४४ ॥ वक्ष्यते चात्रस्वयमेव*स्वकर्म्मणाञ्च त्यागेनजायन्ते वर्णसङ्कराः ॥ इति ॥४६॥ इतिद्विविधाः शूद्रवद्भावापन्ना*वर्णसङ्कराश्च ब्राह्मणाद्युवाद्या*स्त्रयस्तेषां प्रायश्चित्त*मिदं कृच्छ्रत्रयमुक्तम् ॥ ४५ ॥ अथापरे द्विविधाः *समब्राह्मणसम*क्षत्रियसम वैश्याः ॥४७ ॥ तत्रैकविधायेषां पूर्व्वपूर्व्व*पुरुषायथाकाले स्वस्ववर्ण * इष्टै*मन्त्रैरुपनीताभासाःस्युः ॥ ४८ ॥ नतत्प्रायश्चित्तं कृत्रापुन, र्यथावदुपनीता यथाकाले * र्हिइर्भवन्तिते ब्रात्याएवज्ञेयाः ॥ ४८ ॥ यथावदुपनयना* भावेगायत्र्यावेदेनचब्राह्मणा*परित्यक्ता * स्तेषामापाततस्त्रीन्कृच्छ्रां * श्चारयित्वायथावद * पनाययेदितादिश्येत्५० तेयान्पुत्रान्जनयाञ्चक्रु*स्ते ब्रात्यात्कुलोत्पन्नावर्णसङ्कराः*शूद्रवद्भावापन्नाश्च ५१ तद्दोषत्रयशान्त्यर्थं *प्रायश्चित्तं नैवकृत्वा*चेदुपनीताभवन्ति*तदुपनयनासिद्धेः ५२ तेपिगायत्र्याब्राह्मणा*परित्यक्ताएषामपि* कृच्छ्रत्रयंप्रायश्चित्तमभिहितं ५३ इयान्तु चर्द्दश्यार*चेदानी सर्व्वेब्राह्मणा*क्षत्रियवैश्याःप्रायेण ५४ अथैवमपियेषां पूर्व्वपूर्व्व*पुरुषानैवोपनीता*स्तेचगायत्र्याब्राह्मणा*पतितत्यक्ताभवन्तीति ५५ तांस्त्रीन्कृच्छ्रांश्चारयित्वा*यथावदुपनाययेदितिमेषां द्विजानामिति*वचनानन्तरं वक्ष्यते ५५ प्रायश्चित्तंचिकीर्षन्तिविकर्म्मस्थास्तुयेद्विजाः। ब्रह्मणाचपरित्यक्तास्तेषामप्येपं तदादिशेत्इति ५६ ईदृशा इदानी बहवोब्राह्मण*क्षत्रियवैश्याभवन्ति*येषान्तुपितादयोपाद्युपनीता*स्तेषामापस्तम्भवचनं ॥ ५२ ॥यस्यपितापितामहा*वनुपनीतौस्याताम् तस्य*संवत्सरं त्रैविद्यकं ब्रह्मचर्यम् ॥५७ ॥ यस्यप्रपितामहादे*रपिनानुस्मर्य्यतउपनयनं* तस्यद्वादशवर्षाणि* त्रैविद्यकं ब्रह्मचर्यम् ॥ ५८ ॥ इत्यापस्तम्भवचने*प्रपितामहादिवचना*द्यावतांपुरुषाणां नै*वोपनयनं भवति*तत्रयःप्रायश्चित्तंकुर्यात्*सउपनयनमर्हति ॥५९॥ एतदविद्वान्कश्चित्*प्रमादोस्वयंश्लोकं*रचयित्वानारद * वचनमिदमितयाह ॥ ६० ॥ आसप्तमात्पुरुषान्नोपनीतायदिद्विजाः । प्रायश्चित्तशतेनापिनतेषां निष्कृतिर्भवेत् इति ॥ ६१ ॥ एतदनार्षं यत्आसप्तमपुरुषादुर्येषामुपनयनं नास्ति*तेषुकिं द्विजादितिप्रयोगःस्यात् ॥ ६२ ॥ नचतेषां ब्राह्मणत्वादर्यायःस्या*द्दासेनाब्राह्मणलक्षणं * समब्राह्मणइवोक्तेः ॥ ६४ ॥ वक्ष्यतेचात्रस्वयंमनुः * तपोवीजप्रभावैस्तुतेगच्छन्तियुगेयुगे । उत्कर्षञ्चापकर्षञ्चमनुष्येष्विहजन्मतः । इति। ६४ ॥ द्विजोऽकुलोत्पन्नवाद्विजादितिचे * त्तत्रापिप्रायश्चित्तशतेनापि*नतेषां निष्कृतिर्भवे*दितिनोपपद्यते ॥६५॥ नहीदमनुपनयनजपापं * पञ्चमहापातकेषूक्तं नवोप*पातकेषु नचक्षुद्रपातकेषु च ॥ ६६ ॥ अनादिष्टपापमेत*दनादिष्टपापप्रायश्चित्तमुक्त*मत्रियाज्ञवल्क्याभ्यां चान्द्रायणं यथा ॥ ६४ ॥ अनादिष्टेषुपापेषु * चान्द्रायणमथोदित*मिताक्षिर्याज्ञवल्केनापियथा* अनादिष्टेषुपापेषुशुद्धिश्चान्द्रायणेनतु । इति ॥ ६८ ॥ सम्वर्त्तेनाप्युक्तं

**ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः। अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥४७॥**

ऋजव इत्यादि ॥ ४७ ॥ ते सर्व्वे ब्राह्मणादीनां दण्डाः सौम्य * दर्शना अव्रणा ऋजवः सत्वचो * ऽनग्निदूषिता नराणां * अनुद्वेगकराः कार्याः स्युः ॥१॥ विष्णुना चोक्ताः दण्डाः * केशान्त ललाट नासादेश तुल्याः * इति नवलक्षणमुक्तम् ॥२ अङ्गिरसे वह्निदण्डास्तु * कर्ण ललाटैस्तु तुल्याः प्रोक्ताः क्रमेन तु। अवक्राः सत्वचः सर्व्वे नाग्निदग्धास्तथैव च। इति ॥३ गौतमेनोक्तास्तु दण्डा * अव्रणा अवक्राः सवल्कला मूर्द्ध * ललाट नासाग्र प्रमाणाः। इति ॥४॥४७॥ अथैषां ब्रह्मचारिभि * र्नित्यधार्य्यत्वमाह * प्रतिगृह्येत्यादि श्लोकम् ॥१॥४८॥

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्। प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥४८**

इत्थं वङ्क्तेषु दण्डे * प्सितं दण्डं प्रतिगृह्य * ग. यत्राभास्करमुप * स्थायाग्निं च तस्मिन् * द्विर्प्रदक्षिणं परीत्य * यथाविधि भैक्षं चरेत् ॥४८॥ विधिमाह भवदित्यादि * ॥४९॥

**भवत्पूर्व्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः। भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥**

उपनीतो द्विजोत्तमो * ब्राह्मणो भवत्पूर्व्वं भैक्षं चरेत् * भवति भिक्षां देहीति ॥ १ ॥ भवन्मध्यन्तु राजन्यो * भैक्षं चरेदिति भिक्षां * भवति देहीति वैश्यस्तु * भवदुत्तरं भैक्षं चरे * दिति भिक्षां देहि भव * तीति सर्व्वत्रोपनीत इतियोजाम् ॥ २॥४९ ॥ तत्रोपनयने निष्पन्ने प्रथमं * या भैक्षं भिक्षेत तामाह * मातरं वेत्यादिना ॥ १ ॥ ५० ॥

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम्। भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥५०**

प्रथमं मातरं भिक्षां * भिक्षेत तदभावे तु * निजां स्वसारं वा तद * भावे मातुर्निजां भगिनीं भिक्षेत ॥ २ ॥ तदभावे तु याचनारी * नैनं ब्रह्मचारिणं भिक्षां प्रदातु * मवज्ञायप्रत्याख्यात * कुर्य्यात्तां प्रथमं भिक्षेत ॥३ ॥ विष्णुनाचोक्तं भिक्षावाक्यं यथा * भवदाद्यं भवन्मध्यं * भवदन्तं भैक्षचरणमिति ॥४॥ याज्ञवल्क्येनचोक्तं * दण्डाजिनोपवीतानि * मेखलाञ्चैव धारयेत्। ब्राह्मणेषु चरेद्भैक्ष * मनिन्द्येष्वात्मवृत्तये ॥५॥ आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥६॥ अङ्गिरसापरमेवोक्तं * आदिमध्यावसानेषु भवच्छब्दोपलक्षितम्। भैक्षस्याचरणं प्रोक्तं वर्णानामनुपूर्व्वशः ॥ ७ ॥ भैक्षचर्य्यां तथा कुर्य्याद्ब्राह्मणेषु यथाविधि। गुरुणा चाभ्यनुज्ञातः प्राश्नीयात्प्राङ्मुखः शुचिः ॥ ८ ॥ व्यासेनचोक्तं स्वसंहितायां यथा * ईषच्चलितमध्याह्ने ऽनुज्ञातो गुरुणा स्वयम्। अलोलुपश्चरेद्भैक्षं व्रतिषूत्तमवृत्तिषु। सद्योभिक्षान्नमादाय वित्तवत्तदुपस्पृशेत्। कृतमाध्याह्निकोऽश्नीयादनुज्ञातो यथाविधि। नाद्यादेकान्नमुच्छिष्टं भुक्त्वा चाचामितामियात्। नान्यभिक्षितमादद्यादापद्योद्ब्रिणादिकम्। अनिन्द्यामन्त्रितः श्राद्धे पैत्रेऽद्याद्गुरुचोदितः। एकान्नमप्यविरोधे व्रतानां प्रथमाश्रमी। इति ॥ हारीतेन स्वसंहितायामुक्तं * अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम्। धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः। सायं प्रातश्चरेद्भैक्षं भोज्यार्थं संयतेन्द्रियः। आचम्य प्रयतो नित्यं न कुर्य्याद्दन्तधावनम् इति ॥ ५० ॥ ० ॥

**समाहृतन्तु तद्भैक्षं यावदन्नममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥५१॥**

समाहृत्येत्यादि ५१ यावदन्नं स्वस्य च ग्निवृत्तियोग्यं*तावदाहृत्यामायया*छलं विना तद्भैक्षं तु*गुरवे निवेदयित्वाचाम्य*शुचिः प्राङ्मुखः सन्नश्नीयादिति ॥ १ ० ॥ ५१ ॥ ० ॥ नन्वथ प्राङ्मुखः किं न भुञ्जीते *तत्राह आयुष्यमित्यादि ॥ १ ॥ ० ॥ ५२ ॥ ०

**आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ५२ ॥**

आयुष्यमित्यादिपदं *क्रियाविशेषणं द्रष्टव्यं*विशेषणं वाऽन्नस्य ततम् ॥ १ ॥ ० ॥ ५२ ॥ यथाभुङ्क्ते*तदाहोप*स्पृश्येत्यादि*श्लोकमेकम् ॥ ॥ १ ॥ ० ५३ ॥

**उपस्पृश्य द्विजो नित्यमन्नमद्यात्समाहितः । भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च संस्पृशेत् । ५३ ।**

द्विज इति ब्रह्मचारी*गृहस्थो वानप्रस्थो यति*राचम्य समाहितश्च * नित्यमन्नमद्यादश्य ॥ १ ॥ भुक्त्वा चान्नमद्भिः सम्यगाचम्य*खानि प्राणचक्षुर्नासा*छिद्राण्यद्भिः स्पृशेदिति ॥ २ ॥ ० ॥ ५३ ॥ ० ॥

**पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् । दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ५४ ॥**

पूजयेदित्यादि ॥ ५४ ॥ अशनमेतदन्नन्तु*द्विजो दृष्ट्वाऽकुत्सयन*पूजयेत्सत्कारं कुर्यात्*हृष्येत्प्रसीदेत्सर्व्वशः*प्रतिनन्द्य नित्यमद्याच्च ॥ १ ॥ ० ॥ ५४ ॥ ० ॥ तथाकृतान्नकर्म्मानयाह*पूजितमि*त्यादिश्लोकम् १ ॥ ० ॥ ५५ ॥

**पूजितं ह्यशनं नित्यं बलमूर्ज्जञ्च यच्छति । अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥**

ऊर्ज्जं तेजः*उभयं बल*मूर्ज्जञ्चे*त्येतद्द्वयं ॥ १ ॥ ० ॥ ५५ ॥ नोच्छिष्टमित्यादि ॥ ५६ ॥

**नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा । न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् । ५६ ।**

द्विज उच्छिष्टं स्वभुक्तान्नशेषं *न कस्यचिद्दद्यान्न च*द्वयोर्भोजनयोरन्तरा*मध्ये पुनरन्नमद्यात् ॥ १ ॥ एतेन ब्रह्मचारिणा*मपि द्विरशनमनुज्ञापितम्*न चातिमात्रमश्नीया*दुच्छिष्टः सन्न क्वचिद्व्रजेत् ॥ २ ॥ ० ॥ ५६ ॥ ० ॥

**अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥५७॥**

अतिभोजने दोषमाहानारोग्य*मित्यादिश्लोकः स्पष्टार्थः ॥ १ ॥ ० ॥ ५७ ॥ ० अथोपस्पृशेद्यथा तथा पुनराह*ब्राह्मेण विप्रस्तीर्थेनेत्यादि ॥ १ ॥ ० ॥ ५८ ॥ ० ॥

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥ ५८॥**

वक्ष्यमाणेन ब्राह्मेण तीर्थेन नाथ* काकायेन तीर्थेन नाथ* वा त्रैदशिकेन दैवेन तीर्थेन* विप्रादिर्नित्यमुपस्पृशेत् ॥ १ ॥ ॥ ० ॥ पित्र्येण तीर्थेन वक्ष्यमाणेन* विप्रादिः कदाचिदपि* नोपस्पृशेन्नाचामेदिति ॥२॥० ५८ ॥ ० ॥ अथ तद्ब्राह्मादितीर्थमुच्यते, अङ्गुष्ठमूलस्येत्यादि १ ॥ ० ॥ ५६ ॥

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः॥ ५९॥**

अङ्गुष्ठाङ्गुलिमूलस्य तले ब्राह्मं तीर्थं प्राहुः* कनिष्ठाङ्गुलिमूले तु *कायं प्राजापत्यं तीर्थम् ॥ १॥ चतसृणामङ्गुलीना* मग्रे दैवं तीर्थं तयोः* कायदैवयोरधस्तात्* कनिष्ठाङ्गुली* मूलादवस्तर्जनीमूल * पर्यन्तं करतलं पित्र्यं ॥ २ ॥ सामन्येनोक्तस्य विशेषेणाग्रहो * विष्णुयाज्ञवल्क्यवचन * दर्शनादिस्येयथा ॥ ३ ॥ तत्र विष्णुनाभिहित* मथ द्विजातीनां कनीनिकामूले* प्राजापत्यं नाम तीर्थं* मङ्गुष्ठमूले ब्राह्मम् ॥ ४ ॥ अङ्गुल्यग्रे दैवं* तर्जनीमूले पित्र्य* मिति याज्ञवल्क्येन* नापि वमेवोक्तं ॥५॥ कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् इति ॥ ६ ॥ शङ्खेनाप्युक्तमेवञ्च * कायं कनिष्ठिकामूले *तीर्थमुक्तं करस्य तु ॥ अङ्गुष्ठमूले च तथा* ब्राह्मं तीर्थं प्रकीर्त्तितम् ॥ ७ ॥ अङ्गुल्यग्रे स्मृतं दैवं पित्र्यं तर्जनिमूलकम् ॥ ७ ॥ ० ॥ ० ॥ ५६ ॥ ० ॥ अथाचमनक्रममुच्यते यथा* त्रिराचामेदित्यादि ॥ ६० ॥

**त्रिराचामेदपः पूर्व्वं द्विःप्रमृज्यात्ततो मुखम्। खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥ ६०॥**

ब्राह्मेण कायेन दैवेन वा * तीर्थेन ब्राह्मणः क्षत्रियो वा * वैश्यो वा प्राङ्मुख उदङ्मुखो वा समासीत ॥ १ ॥ पादौ प्रक्षाल्य पाणी च * मणिबन्धनात् प्रक्षाल्य * पूर्व्वं वक्ष्यमाणविधाय अपस्त्रिरा * चामेद् हृद्गतादि* यथा स्यात्तथा त्रिः पिबेत् ॥ २ ॥ ततो मुखमङ्गुष्ठेन * द्विःप्रमृज्यात् ततः पर , मद्भिः खानीन्द्रियाणि संस्पृशेत् ॥ ३ ॥ संहताभिस्तर्जनी * मध्यमानामिकाभि * स्त्वाङ्गुलीभिर्मुखमा * च्छिद्रं यदतः स्पृशेत् ॥ ४ ॥ अङ्गुष्ठतर्जनीभ्यां संहताभ्यान्तु * नासिकाच्छिद्रे द्वे स्पृशेत् * अङ्गुष्ठानामिकाभ्यां द्वे * चक्षुश्छिद्रे श्रोत्रच्छिद्रे * पुनःपुनश्च संस्पृशेत् ॥५॥ अङ्गुष्ठकनिष्ठाभ्यान्तु* नाभिच्छिद्रमात्मानमात्मस्थानं *हृदयं करस्य तलेन संस्पृशेच्छिरश्च सर्व्वाङ्गुलिभिः ॥६॥ चकारेणानुक्तं वाहुद्वयमपि* सर्व्वाङ्गुलीनामग्रेण* संस्पृशेत् कात्यायनोक्ति* दर्शनात्तद् यथोच्यते ॥७॥ त्रिःप्राश्यापो द्विरुन्मृज्य मुखमेतानुपस्पृशेत् ॥ आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंऽसकम् ॥ ८ ॥ संहताभिस्त्र्यङ्गुलीभिरास्यमेवमुपस्पृशेत्। अङ्गुष्ठेन प्रदेशिन्या घ्राणञ्चैवमुपस्पृशेत् ॥ ९ ॥ अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रं पुनःपुनः। कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै ॥ १० ॥ सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं तदुच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारकः करः ॥ ११ ॥ इति ॥ हारितेनाप्येवमेवोक्तं यथा* दक्षिणन्तु करं कृत्वा* * गोकर्णाकृतिवत्पुनः। त्रिः पिबेदीक्षितं तोय* मास्यं द्विःपरिमार्ज्जयेत्

॥ १२ ॥ ०॥ पादौ शिरस्ततोऽभ्युक्ष्य त्रिभिरास्यमुपस्पृशेत्। अङ्गुष्ठानामिकाभ्यां तु नासिके च ततः श्रुती ॥ १३ ॥ ०॥ तलेन हृदयं मूर्ध्नि पश्चाच्छिरसि तोऽसकौ ॥ अनेन विधिनाचम्य ब्राह्मणः शुद्धमानसः ॥ इत्यादि ॥ १४॥ एवमेव शङ्खयाज्ञवल्क्यादिभिः*सामान्येनोक्तं विशेषेणवाख्येय*तत्तद्यथोक्तं दर्श्यते १५॥० ब्राह्मेण चैव तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः। द्विः प्रमृज्य मुखं पश्चादद्भिः खं समुपस्पृशेत् इति शङ्खवचनं १६। ०।विष्णुनाप्येवमेवोक्तं* ब्राह्मेण तीर्थेन त्रिराचामेन्मुखं*द्विः प्रमृज्यात् खानि चाद्भिः*मूर्द्धानं हृदयं स्पृशेत्। १७ । ०। इति याज्ञवल्क्येनाभिहितं*त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्। इति। १८ ।०।०।६०। अथाचमनजलं यथा स्यात्तथा*चाहानुष्णाभिरित्यादि। १ ।०। ६१ ।०।

**अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्म्मवित्। शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१ ॥**

धर्म्मविद्द्विजः शौचेप्सुः*प्राङ्मुख उदङ्मुखो वा*एकान्ते वसंस्तीर्थेन। १। ब्राह्मेण कायेन दैवेन वाऽद्भिः* रनुष्णाभि*रफेनाभिः*सर्व्वदा खल्वाचामेत्। २। विष्णुनाऽनन्युष्णाभिरद्भिरित्युक्तं * तेनातपोष्णा अपीन* प्रतिषिद्धा इति तद्यथा। ३। अनग्न्युष्णाभिरफेनिलाभि*रशूद्रैकरवर्जिताभि* रक्षाराभिरद्भिः। १। शुचौदेशे त्वासीनोऽन्तर्जानुः प्रा*ङ्मुख उदङ्मुखो वा*तन्मनाः सुमना आचामेत्। इति। याज्ञवल्क्योक्तदर्शना*द्विफेन परित्यजु*बुद्बुदस्याऽपि ग्रहणम्। २। तद्यथा। अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः। इति। ०। ६१ ।०। आचमनं प्रवृत्ता*द्विजायावन्मिता अपः*पिबेयुस्तदाह हृद्गाभिरित्यादि। १।०। ६२।०।

**हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः। वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः। ६२।**

विप्रो निरुक्ताभिरद्भिः*पीताभिर्हृद्गाभिः पूयते भूमिपः*कण्ठगाभिर्वैश्यः प्राशिताभिस्तालु *गाभिः पूयते विप्रः। १। शूद्रो जिह्वोष्ठस्पृष्टाभि*रद्भिः पूयते स्त्री च सर्व्वा * विष्णुवचनदर्शनात्। २।। तद्यथा। हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः। शुद्ध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः। इति। ३। वचनमिदं याज्ञवल्क्येनाप्युक्तं*शङ्खेनाभिहितं यथा। ४ ।हृद्गाभिः पूयते विप्रः*कण्ठगाभिस्तु भूमिपः। तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः। इति। अद्भिरिति पूर्व्वतोऽनुवर्त्तते ॥ ४ ॥ ०॥ ६२ ० ॥

**उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीन आवीती निवीती कण्ठलम्बने ॥ ६३॥**

द्विजो दक्षिणे पाणा*वुद्धृते सत्युपवीतं*वामस्कन्धेनाभौ च य*स्तिष्ठति तदुपवीत* मुच्यते तद्वानुपवीतीत्युच्यते ॥१॥ वामे पाणावुद्धृते सत्युपवीतं प्राचीनावीतमुच्यते *तद्वान् प्राचीनावीतीत्युक्तः ॥ २ ॥ मालावत्कण्ठलम्बने*

तूपवीतं निवीतञ्चात्रेतद्वान् * निवीतीत्युच्यते द्विजः ॥२॥६३॥ अथमेखलादीनां विनाशेयथा*पुनर्ग्रहणं कर्त्तव्यं तदाहमेखलेत्यादि ॥ ६४॥

**मेखलामजिनंदण्डमुपवीतं कमण्डलुम् । अप्सुप्रास्यविनष्टानिगृह्णीतान्यानिमन्त्रवित् ॥ ६४ ॥**

मेखलामित्यादिपृथक्‌पदं वा सर्वं मेखलादि*यद्विनश्यतितत्पुन* एवं मन्त्रविन्मन्त्रेण*गृह्णीयात्समस्तानिच विनष्टानि ॥१॥६४॥ अथ वरुपनीतस्य, व्रतादिष्टस्यारब्धवेदाध्ययनस्य*ब्राह्मणस्यक्षत्रियस्यवैश्यस्यच*प्राक्समावर्त्तनादेव ॥ १ ॥ ब्रह्मचर्याश्रमान्तर्गतसंस्कार * विशेषस्यकेशान्तस्य * कालविशेषउच्यते * केशान्तःषोडशेत्यादि ॥६५॥

**केशान्तःषोडशे वर्षे ब्राह्मणस्यविधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्यद्व्यधिकेततः ॥६५॥**

ब्राह्मणस्योपनीतस्य क्रियमाण*व्रतस्यारब्धवेदाध्ययनस्य*जातोत्तरं षोड़शेवर्षे वयसि*केशान्तोनामसंस्कारो विधीयते ॥ १ ॥ नगर्भात्षोड़शे वर्षे *तस्योपनयनकालस्यनोक्ते*रेवं चाक्षियवैश्ययोः ॥ २ ॥ कश्चिद्व्याचष्टे बौधायनवचना*द् गर्भात्षोड़शादिष्विति*तद्वचनमदृष्टं दित्याह ॥ ३ ॥ यस्माद्विषोड़शादिषु*भवत्युपनयनं तस्याकदाचित्*केशान्तइत्यनुपपत्त स्तदसत् ॥४॥ द्व्यधिकेद्वाविंशे चतुर्विंशेवर्षे वैश्यस्य केशान्तःकार्यः ॥ ४ ॥ ॥ ६५ ॥ ब्राह्मणक्षत्रियवैश्यानां पुंसां * गर्भाधानादिसंस्कारो *उक्ताःस्त्रीणां संस्कारा * नाह्यामन्त्रिकान्वितयादि ॥ ६६॥

**अमन्त्रिकातुकार्य्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्ययथाकालं यथाक्रमम् ॥६६॥**

प्रकरणाद्ब्राह्मण क्षत्रियवैश्यानामेत* स्त्रीणां शरीरस्य संस्कारार्थमियं *मावृत्पुंसामुपनय* नान्तानां यावत्पूर्वोक्ता १ अशेषतःशेषभूपनयनं * विहायान्यजातकर्म्मादिङ्क्लाक्रियो*यथाकालं यथाक्रम*समन्त्रिकाकार्या स्यात् ॥२॥ एतदेवमर्थमत्रात्वाव्याचष्टे *इयमावृदयं जात*कर्म्मादिक्रियाकलापः* समग्रइतितदसाधु*व्यासादिवचनदर्शनात् ॥३॥ तद्यथा । नवैताः कर्णवेधान्तामन्त्रवर्जंक्रियाःस्त्रियाः । विवाहोमन्त्रतस्तस्याःशूद्रस्यामन्त्रतोदश ॥ इतिव्यासः ॥ ४ ॥ याज्ञवल्क्योनचोक्तं गर्भाधान*स्ततावित्यादाभिधाय* चूड़ाकार्य्यायथाकुलम ॥ एवमेनःशमंयाति बीजगर्भसमुद्भवम् । तूष्णीमेताःक्रियाःस्त्रीणां विवाहस्तुसमन्त्रकः । इति ॥ २ ॥ विष्णुना प्रोक्तं गर्भस्यास्पष्टता*ज्ञाने निषिक कर्म्मेत्यादि ॥१॥ तृतीयेऽब्दे चूड़ाकरण*मेताएतक्रियाःस्त्रीणाममन्त्रिकाः* स्तासां समन्त्रकोविवाहः । इति ॥२॥६६॥ ननुतर्हिद्विजस्त्रीणां* उपनयनविधानाभावात्कथं * द्विजत्वंभवतीत्यत*आहवैवाहिक इत्यादि ॥६७॥

**वैवाहिकोविधिःस्त्रीणांसंस्कारोवैदिकःस्मृतः।पतिसेवागुरौवासोगृहार्थोऽग्निपरिक्रिया ६७**

ब्राह्मणक्षत्रियवैश्यानां स्त्रीणां *वैवाहिकोविधिर्वैदिकोमन्त्रेण* संस्कारोद्वितीयजन्मस्मृतम्*पुंसामुपनयनवत् ॥ १ ॥ यथापुंसामुपनीतानां गुरु*कुले सावित्र्यां द्वितीयं जन्मतथा * स्त्रीणां विवाहात् श्वशुरकुले जन्म ॥ २ ॥ यथापुंसां गुरुसेवा*तथास्त्रीणां पतिसेवा*यथापुंसां गुरौवास*स्तथास्त्रीणां गुरौपत्यौ ॥३॥ यथापुंसामध्ययना*र्थ स्तथास्त्रीणां गृहार्थौ*यथापुंसामग्निचर्या * तथाविवाहाग्निपरिक्रियास्त्रीणाम् * स्त्रियोऽप्येवं विवाहाद्द्विजाभवन्ति ॥४॥ इतोऽग्रमनिहा सा ब्राह्मणक्षत्रिय*वैश्यस्त्रीणां शूद्रावद्भावं वदन्तः*शूद्रावत्स्त्रीगर्भ जातानां पारस्य*वाद्विद्भावेऽस्यान्तन्नीदृधान्ते ॥ ५ ॥ ६७ ॥ एपद्वृत्तादिनोपसंहरति ॥ ६८ ॥

**एषप्रोक्तोद्विजातीनांसौपनायनिकोविधिः। उत्पत्तिव्यञ्जकःपुण्यःकर्मयोगंनिबोधत॥६८॥**

द्विजातीनामेषसौपनायनिकः*पुंसामुपनयनविधिसहितः*स्त्रीणां वैदिकःसंस्कारो*वैवाहिकोविधिःप्रोक्तः॥१ सखलुतेषांद्विजातीनां *पुण्यउत्पत्ति*व्यञ्जकःप्रोक्तः॥२॥अत्रेदं जिज्ञास्यं किन्नु*खल्वयएषद्विजातीनां स्त्रीणां*वैवाहिकोवैदिकोविधिः*पुंसामौपनायनिकोविधिःप्रोक्तः ॥३॥ सकथं तेषामुत्पत्ति*व्यञ्जकउपपद्यते *कार्याणां कार्यत्पत्तिःसम*वायिकारणसमवायः ॥४॥ यानि विक्रियमाणानि*यत्कार्यत्वमापद्यन्ते *तानितत्कार्यस्यसम *वायिकारणानिभवन्ति ॥५॥ तद्यथा ॥ यदिहप्रेतापरलोकं गत्वा*ततभोगं भुक्त्वापुनः*कर्मवशादिहलोके ॥६॥पुंसःस्त्रीसंयोगे *रेतःप्रच्युतं गर्भाशयगत*मार्त्तवसंयुक्तमभेरति ॥७॥ सतदार्त्तवरेतोऽन्तः*सन्निविष्टोमातुराहार*जातरसेनप्रपुष्टः । ८ । क्रमेणतदन्नमय *शरीरवानेवजायते*इत्येवं जन्मभवति ॥९॥ नचतथोपनीतोऽस्यतेनवा*स्त्रीचोढातथाजाताऽस्यतेकथ* मुत्पत्तिव्यञ्जकौविवाहोपनयौ ॥ १० ॥ ब्राह्मणादिजातयोत्पत्तिव्यञ्जकौस्यातां मन्त्राः मन्त्राभ्यां पुंस्त्रियो * जातकर्मादिभिर्द्विज * सामान्यतउत्पत्तिः । ११ । अथोचान्तिदिने नाम * करणेन ब्राह्मणादि * विशेषत उत्पत्तिस * वञ्जातेव्यर्थमने नतद्वचनम् ॥ १२ ॥ इति ॥ सत्यमेतदेवमेव * प्रथमं जन्मतथैव*जातस्यपुंसःपुनर्वैदेजन्म*चोपनयनात्स्त्रियास्तु* मन्त्रेणविवाहाद्भवति ॥ १३ ॥ नत्वसदुत्पद्यते *नचसद्विनश्यति*सतोह्यवस्थान्तर*प्राप्तिस्वजन्मोच्यते ॥१४॥ भावःखलु * प्रतिक्षण * मुत्पद्यते *निरुध्यते च ॥१५॥ तत्रप्रतिक्षणमुत्पत्तौकारण*मस्तिमनिरोधे हेतु* रस्तीतयाऽऽक्षःसर्वप्रयः ॥१६॥ तद्यथा । नितरां गण्डकादि सप्ताताये *कारणं नोपलभ्यते *तथाभावानां प्रतिक्षणं निरोधे *कारणं नोपलभ्यते ॥१७॥ प्रतिक्षणमुत्पत्तौतु*बालानां पोषकमाहाररसादि*कारणमुपलभ्यते ॥१८॥ यदेषबालोगर्भेपि*मातुराहारजरसेनाविरतं *पोष्यमाणःक्रमात्सर्वाङ्गसम्पूर्णो*यथाकालमजायत ॥१९॥ सोऽयं जातोबालोयद*भ्यवहरतितदाहार*रसेन युक्तानितस्य*तच्छरीरारम्भकाणि*द्रव्यगुणकर्माणितु *समवायिकारणानि ॥ २० ॥ तत्रद्रव्येषुस्वस्वकर्मभिःपर*

स्वरं संयुज्याविभज्य * पुनःपुनरावर्त्तमानेषु तत्स्थ* गुणकर्म्माणिचावर्त्तन्ते ॥२१॥ आवर्त्तमानैस्तैर्द्रव्य*गुण
कर्म्मभिर्निताग स्वभावैः * र्दृष्टोत्तरोत्तराव *स्थायामारभमाणाया ॥२२॥ द्रव्याणिसजातीयं द्रव्यान्तर*
मारभन्ते गुणाअपि *सजातीयं गुणान्तरं *कर्म्माणितु सजातीय* विजातीयं कर्म्मान्तरम् ॥ २३ ॥ इत्येवं तेषां
समवायि*कारणानां तत्रतत्र*कार्ये समवायात्सर्व्वा*णा कौकरोतियः समम* वायःस्वउत्पत्तिर्जन्म ॥२४॥ एवमे
वोत्तरोत्तरावस्थोत्पत्तौ*पूर्व्व पूर्व्वावस्थास्वयमकारणं *प्रतिक्षणं निरुध्यते *इत्याहकणादो यः ॥२५॥ इत्येवं प्रति
क्षणोत्पत्तिभङ्ग*प्रवन्धोदानन्त्ये जन्मनांशास्त्रे*ऽस्मिन्व्यवहारप्राप्त्याप्तौआश्रित्य ॥ २६ ॥ द्वे जन्मनीअभिहिते भ
वतः*प्रागुपनयनात्पुंसां *द्विजानामप्राप्तत्वात्*हारत्वादेकं जन्मोक्तं *स्त्रीणां प्राग्विवाहादेकम् ।२७॥ उपनयनात्तु
पुंसां *द्वितीयं जन्मस्त्रीणान्तु* मन्त्रेणविवाहादेव ॥२८॥ शेषाणां जन्मनामत्रै * वान्तर्भावादुच्यते ऽत्र* स्वय
मेवस्वायम्भुवः ॥२९॥ मातुरग्रे ऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजानां श्रुतिचोदनात् ।
इति ॥३०॥ व्यासेनचोक्तं स्वसंहितायां यथा* एवं द्विजातिमापन्नोविमुक्तोवान्यदोषतः । श्रुतिस्मृतिपुराणानां
भवेदध्ययनक्षमः ॥ इति ॥३१॥ शङ्खेनाप्युक्तं तद्यथा*ब्राह्मणाःक्षत्रियावैश्या*स्त्रयोवर्णाद्विजातयः । तेषां
जन्मद्वितीयन्तु विज्ञेयं मौञ्जिबन्धनं ॥ ३२ ॥ आचार्य्यस्तुपिताप्रोक्तःसावित्रीजननीतथा । ब्रह्मक्षत्रविशाञ्चैव
मौञ्जीबन्धनजन्मनि ॥ ३३ ॥ विप्राःशूद्रसमास्तावद्विज्ञेयास्तुविचक्षणैः । यावद्वेदेनजायन्ते द्विजाज्ञेयास्ततः
परम ॥ इति ॥ ३४ ॥ इत्येवंप्राप्तद्विजत्व * रक्षणहेतवइह * क्रमेणवक्ष्यन्ते यथाविधिब्रह्म * चर्य्य
वेदाध्ययनस * मावर्त्तनविवाहाः । ३५ । अग्निग्रहणपञ्चमहायज्ञादि कर्म्माचरणञ्चेति * यदियथाविधु
पनीताःप्राप्तद्विजातित्वाअपि * नवेदमधियते ॥ ३६ ॥ तदापुनःशूद्रवद्भाव * मापद्यन्ते वक्ष्यते हि * योऽ
नधीत्यद्विजोवेदमन्यत्रकुरुते श्रमं । सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः ॥ इति ॥ ३७ ॥ यथा विधिचाधी
त्यवेद * मविप्लुतब्रह्मचर्य्याः * समावृत्तादारान्गृहीत्वा * ग्निग्रहणाधिकारिणा * स्तेदग्निंनगृह्णन्ति ॥ ३८ ॥
तदापुनःशूद्रवद्भाव*मापद्यन्ते वशिष्ठेनोक्तं*ह्यनग्नयःशूद्रसमानधर्म्माणः इति ॥ ३९ ॥ वैवाहिकाग्निंगृहीत्वापिय
दि*पञ्चमहायज्ञादिकर्म्माणिन*कुर्व्वन्तितदास्वधर्मत्यागिनःस्युः ॥ ४० ॥ तेयान्यपत्यानिजनयन्तितेतु*वर्णसङ्करा
भवन्तिवक्ष्यतेहि*स्वकर्म्मणांचत्यागेनजायन्तेवर्णसङ्कराः ॥ इति ॥ ४१ ॥ उपनयनेनखलु *शूद्रवद्भावापगमा*द्
व्याभिवादादिषु * योग्यत्वगुणआधीयते ॥ ४२ ॥ तदामन्त्रैराधीयमानतद्गुणैः * शरीरारम्भकैस्तैस्तै*र्द्रव्यगुण
कर्म्मभिरारभ्यतेयदवस्थान्तरम् ॥ ४३ ॥ उपनीतस्यायातदवस्थान्तर * प्राप्तिःसावेदेद्वितीया *जातिर्जन्मतोद्विजः
स्यात् ॥ ४४ ॥ उक्तञ्चवशिष्ठेनस्वसंहितायां *चत्वारोवर्णाब्राह्मण*क्षत्रियवैश्यशूद्राः ॥ त्रयोवर्णाद्विजातयो*ब्राह्मण
क्षत्रियवैश्याः ॥४५॥ तेषांमातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ॥ तत्रास्यमातासावित्रीपितात्वाचार्य्यउच्यते ॥
वेदप्रदानात्पितेत्*याचार्य्यमाचक्षते *अथाप्युदाहरन्ति ४७ इयमिद्वैपुरुषस्य*रेतोब्राह्मणस्योर्द्धं नाभे*रर्व्वाची
नंमन्येत ४८ तद्यदूर्द्धं नाभेस्तेनास्यौरसी*प्रजाजायतेयदुप * नयतियत्साधुकरोति ॥ ४९॥ अथयदर्व्वाचीनं *
नाभेस्तेनास्यौरसी*प्रजाजायतेजनन्याम् ॥ ५० ॥ इतिस्त्रीद्विजातिमन्त्रेणविवाहात्पत्यु*रेकात्मीभूयजायते*द्विज
वर्णस्यैकैकस्य*ब्रह्मणाद्विधापाटित*स्यार्द्धं पुमानर्द्धं चस्त्री ॥ ५१॥ विवाहमन्त्रैरभिस्तु*मार्णैस्तैःप्राणान्सन्दधा*
म्यस्थिभिरस्थीनिमांसै* र्मांसं त्वचात्वचमित्या *दिभिःपुमानर्द्धभूतां स्त्रियं सन्धत्ते ॥ ५२ ॥ तेनस्त्रीचार्द्धभ तार्द्ध

भूतेन*पतासहैकीभूयसम्पूर्णवर्णा*जायतेपुमांश्चसम्पूर्णवर्णःस्यात् ॥ ५३ ॥ गोत्रकारिणोयस्यर्षे* पौत्रप्रभृति
प्रपत्येषु*यत्पुमपत्यंपतिस्त*स्यर्षेस्तत्स्वापत्यंस्त्रीसा* दितिपतिगोत्रापत्नीभवतीति ॥५४॥ अपत्यंपौत्रप्रभृति
गोत्रमिति*पाणिनिनासूत्रंकृतम् ५५ तेनानुलोमवर्णजापिनारी*मन्त्रेणविवाहात्पत्येकीभावात्*पतिवर्णगोत्रा
द्यापन्नाभवति ५६ अतउक्तंबृहस्पतिना*पाणिग्रहणिकामन्त्राः*पितृगोत्रापहारकाः।पतिगोत्रेणकर्त्तव्यास्तस्याः
पिण्डोदकक्रियाः इति ५७ लिखितेनाप्यभिहितं*विवाहेचैववनिर्वृत्ते*चतुर्थेऽहनिरात्रिषु। एकत्वंसागताभर्त्तुर्गो
त्रेपिण्डेचसूतके ५८ स्वगोत्राद्भ्रश्यतेनारीविवाहात्सप्तमेपदे॥भर्तृगोत्रेणकर्त्तव्यास्तस्याःपिण्डोदकक्रियादिति ॥५९॥
उपनयनाद्द्वितीयेजन्मनि*पुंसस्तुमातासावित्री*पितात्वाचार्यउक्तोयथा ॥ ६० ॥ नतथास्त्रीणांमन्त्रेण* विवाहा
द्द्वितीयेजन्मनि*मातापितामात्रेषुस्ति*पतिस्त्वात्मसात्करणात्स्त्रियागुरुः ६१ ॥ श्वश्रूश्वशुरौतुपितरौ*लौकिके
मातापितृवत्*नवैदिकमातापितरौभवतः ॥६२ ॥ इत्यस्वपुंसांनारीभिः*सहसावर्ण्यंत्रिविधं*मातृतोजन्मनासाव
र्ण्यंमन्त्रेण*विवाहात्सावर्ण्यमेव*तुभयतश्चसावर्ण्यमिति ॥ ६३ यथाचतुर्णांवर्णानांपुरुषाणां*स्वस्ववर्णस्त्रीभि
रनूढाभिःक्रमात्*सवर्णपरोढाभिश्च*सहसावर्ण्यंजन्मना ॥ ६४ ॥ ब्राह्मणस्यमन्त्रेणस्वोढयाचाक्षत्रियकन्ययावैश्य
कन्यया*सवर्णपरोढयाच*सहसावर्ण्यंविवाहात् ॥ ६५ ॥ क्षत्रियस्यमन्त्रेणस्वोढयावैश्यकन्ययासवर्णपरो*ढया
चसहसावर्ण्यं*विवाहादेवभवति ॥ ६६ ॥ स्वोढयासवर्णयासहोभयतः*सावर्ण्यंपुंसांभवति ॥ ६७ ॥ इतोत्रवंव्या
ख्यानमविदांमोभ्रान्त्या*व्याचक्षतेद्विजातीनां*मेषश्चौपनायनिको*विधिरुत्पत्तिव्यञ्जकः*पुण्योमयाप्रोक्तइति ६८
तन्नयदिह्येवमभिप्रायोस्तुने*रमविष्यत्तदाखलु*मन्त्रिस्त्रातुकार्यय * मितादिश्लोकद्वयात्पूर्व*मेतच्छ्लोकमपि
रवक्ष्यात् ॥ ६९ ॥ नचावक्ष्यदैवाहिको*विधिःस्त्रीणामित्यादिक*श्लोकादुत्तरमेतच्छ्लोकमिति ७० इतोत्रवउपनीतानां*
द्विजत्वरक्षणार्थंकर्म*योगंमत्तोनिवोधत ॥ * ॥ ७१ ॥ ० ॥ ७२ ॥ ० ॥ अथोपनीतानांद्विजत्वरक्षणे*हेतुकर्म
योगंवक्तव्येप्रथम*माचारमाहोपनीयगुरु रित्यादि ॥ १ ॥ ० ॥ ६९ ॥ ० ॥

**उपनीयगुरुःशिष्यंशिक्षयेच्छौचमादितः। आचारमग्निकार्यंचसन्ध्योपासनमेवच ॥६९॥**

गुरुरित्यसमानादिकुलजात * शिष्यमुपनीयादितः * शौचंशिक्षयेत्तच्चैका * लिङ्गेगुदेतिसृतस्रा * द्विभि
रुत्तरंवक्ष्यते ॥ १ ॥ आचारंस्नानाचमनादि अग्निकार्यंसायंप्रात * र्होमविधानंसन्ध्योपा * सनञ्चशिक्षये
दिति ॥ २ ॥ नपित्रादिःपुत्रादीनुपनयेत्*श्राद्धभोजिपङ्क्तिदूषकत्वादि* दोषात्तदुक्तंपूर्व्वंविस्तरेण ॥ ३ ॥
एवंसतिगुरुःशिष्य*मुपनीयादितःशौचा* चाराग्निकार्यसन्ध्योपासनानि*शिक्षयित्वावेदाध्यय*नारम्भंविधिनाका
रयेत् ॥ ४ ॥ एतदुक्तंव्यासेनस्वसंहितायां*उपनीतोगुरुकुले*वसेन्नित्यंसमाहितः। बिभृयाद्दण्डकौपीनोपवीता
जिनमेखलाः ५ पुण्येऽह्निगुर्व्वनुज्ञातःकृतमन्त्राहुतिक्रियः। स्मृत्वोङ्कारञ्चगायत्रीमारभेद्वेदमादितः ॥ ६ ॥ ६९
इति ॥ ततोवेदमभ्यसमाणःशिष्यो*यथागुरुणाधापस्त*दाहाध्यसमाणइत्यादि । १ । ० । ७० । ० ।

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः। ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासाजितेन्द्रियः ॥ ७० ॥**

वेदस्याध्ययनं करिष्यन् *लघुवासाजितेन्द्रियः* सन् उदङ्मुख आसीनः * आचान्तः प्राग् गुरोः पादौ * गृहीत्वा ब्रह्माञ्जलिकृत् * शिष्यो गुरुणाऽध्याप्यः । १ । ० । ७० ।

**ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥७१॥**

ब्रह्मेत्यादि । ब्रह्म वेदः * तस्याध्ययनारम्भे च * अध्ययनावसाने च * गुरोः पादौ सदा ग्राह्यौ । १। हस्तौ संहत्य संयुतौ * करपुटं कृत्वाऽध्येयं शास्त्रं * स हस्तसंहतीभावो * ब्रह्माञ्जलिः स्मृत इति । २ । ० । ७१ । ० केन प्रकारेण खलु गुरोः पादौ * ग्राह्यौ भवत इत्यत * आह व्यत्यस्तेत्यादिश्लोकम् । १ । ० । ७२ । ० ।

**व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥७२॥**

व्यत्यस्तौ पाणी यस्य तेन * प्रणमता जनेन गुरोः पादयोरुपसंग्रहणं कार्यं स्यात् । १ । तथा च प्रणमता जनेन गुरोः सव्यः पादः सव्येन स्वपाणिना * स्प्रष्टव्यः दक्षिणः पादो * दक्षिणेन स्वेन पाणिना । २ । ० ७२ ।

**अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः । अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ७३**

अध्येष्यमाणमित्यादि । ७३ । उदङ्मुखमासीनं गुरोः पादा* वुपसंगृह्य ब्रह्माञ्जलिं कुर्वन्तं * मध्येष्यमाणं शिष्यं भो * अधीष्वेति गुरुर्ब्रूयात् ।१। अध्ययनस्यावसाने * चरमे तत्काले तु * विरामोऽस्त्विति गुरुर्ब्रूयात् ।२।।०।।७३।

**ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति ॥७४॥**

ब्राह्मण इत्यादि ॥ ७४ ॥ ब्रह्ममन्त्रं ब्राह्मणाख्यं वेदं * मधीते यः स ब्राह्मणो * ब्राह्मणः क्षत्रियो वैश्यः ॥ १ ॥ मन्त्रब्राह्मणाध्ययनस्यादावन्ते च * सर्वदा प्रणवं कुर्यात् * पूर्वमनोङ्कृतं मन्त्रं * ब्राह्मणं वाधीतं स्रवति * परस्तादनोङ्कृतं शीर्यते ॥ २ ॥ इति सर्वमेवमन्त्रं * प्रणवपुटितं जपे * दन्यथा स्रवति शीर्यते च यथा * स तु हीनो भवतीन्यदो ॥ ३ ॥ ॥ ० ॥ ७४ ॥ ०॥ ननु कदाऽध्ययनस्यादावन्ते चोङ्कारं * कुर्यादित्यत आह प्रा * क्कूलानित्यादिश्लोकम् ॥ १ ॥ ० ॥ ७५॥

**प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः । प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥७५॥**

यदा भो अधीष्वेति गुरुर्ब्रूया * त्तदा शिष्यः प्राक्कूलान् प्रा * गग्रकुशान् परिसर्य्य त * आस्तीर्य पर्युपासीनः सन् ॥ १ ॥ पवित्रैः पवित्रसंज्ञकुशैः * कराभ्यां गृहीतैः पावितः पवित्री * कृतः सन् त्रिभिः प्राणायामैः * पूतः सन्नोमिति ब्रूयात् ॥ २ ॥ ० ॥ ७५ ॥ ॥ ० ॥ इत्यध्ययनस्य पूर्व्वं * तिकर्त्तव्यता * भूःपूर्वकजपमाह अकार * ञ्चाप्युकारञ्चेत्यादि ॥ १ ॥ ० ॥ ७६ ॥ ० ॥

**अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च ॥ ७६ ॥**

प्रजापतिर्नारायणोऽसौ ब्रह्मा * वेदत्रयादृग्वेदा * दकारं यजुर्वेदादुकारं साम * वेदान्मकारं निरदुहत् ॥ १ ॥ निःसृतमकरोद्य * थयमेतदक्षरं सम्भार्य कर्मो * नित्यक्षरमकरोदिति ॥ २॥ एवं वेदत्रयादृग्वेदाद्भूरिति * यजुर्वेदाद्भुवरिति * सामवेदात्स्वरिति च * प्रजापतिर्निरदुहत ॥ ३ ॥ ० ॥ ७६ ॥

**त्रिभ्य एव तु वेदेभ्यः पादं पादमथादूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ७७ ॥**

त्रिभ्य एवेत्यादि ॥ ७७ ॥ अथ त्रिभ्य एव वेदेभ्यस्तदित्यृचस्तत्सवितुः * इत्यादात्मिकाया अस्याः * सावित्र्याः सावित्रीमन्त्रस्य पादं पादमदूदुहत् ॥ १ ॥ परमेष्ठी प्रजापतिः परमेष्ठीनारायणो ब्रह्मा * ऋग्वेदात् सावित्र्याश्च तत्स वितुर्वरेण्यमित्याद्यं पादमदूदुहत् ॥ २ ॥ यजुर्वेदाद्भर्गो देवस्य धीमही * ति द्वितीयं पादमदूदुहत् * सामवेदाद्धियो यो नः प्रचोदयादिति तृतीयं पादमदूदुहदिति ॥ ३ ॥ ० ॥ ७७ ॥ ० ॥ एतन्मन्त्रस्य जपफलमाह * एतदक्षरमि त्यादि ॥ १ ॥ ० ॥ ७८ ॥ ० ॥

**एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् । सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥**

एतदोमित्यक्षरं * व्याहृतिपूर्विकामिति * भूर्भुवः स्वरिति महा * व्याहृतिपूर्विकामेतां * तदित्यादि त्रिपदाञ्च सावित्रीम् ॥ १ सन्ध्ययोर्द्वयोर्वेदविद्विप्र इति * ब्राह्मणः क्षत्रियो वैश्यो * जपन् वेदाध्ययनज * पुण्येन युज्यत इति ॥ २ ॥ वेदविदिति विशेषणेनात्र तूपनीतमात्रस्यान * धीतवेदस्य गायत्री * जपमात्रेण न वेद पुण्येन योगः स्यादित्युक्तं ॥ ३ ॥ विप्रशब्दो योगरूढ्या त्रिषु द्विज * वर्णेष्विति च स्मापितम ॥ ४ ॥ यत उक्तं जातमात्रः शूद्रसमः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं वेदविद् ब्राह्मणः स्मृतः ॥ ५ ॥ इति योगरूढ्या त्रिषु * वर्णेषु द्विजो विप्रो ब्राह्मणश्च * शब्दः कुमुदादिषु च ** पङ्कजशब्दवज्ज्ञेयः ॥ ६ ॥ रूढितस्तु विप्रशब्दो * ब्राह्मणशब्दः सपूर्व * वर्णे वर्त्तते पद्मवत् ॥ ७ ॥ अत्रिणाप्युक्तं तद्यथा * जन्मना ब्राह्मणो ज्ञेयः * संस्कारैर्द्विज उच्यते * विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥ ८ ॥ इति ॥ ० ॥ ७८ ॥ प्रातः सायं सन्ध्योपासनावसाने * जपफलमुक्त्वान्यत्र * जपाधिक्यमाह सहस्र * कृत्वस्त्वभ्यस्येत्यादि कम् ॥ १ ॥ ० ॥ ७९ ॥ ० ॥

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः । महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ ७९ ॥**

बहिरिति ग्रामादेस्त्रिकमिति * प्रणवमहाव्याहृतितदित्यृचं * द्विजो ब्राह्मणः क्षत्रियो वैश्य इति ॥ १ ॥ ० ॥ ७९ ॥ ० ॥ सन्ध्ययोरेतत्त्रयजपत्यागे * दोषमाहैतयेत्यादि ॥ १ ॥ ० ॥ ८० ॥

**एतयर्चा विसंयुक्तः काले च क्रियया स्वया । ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥**

एतयेति प्रणवपूर्व * व्याहृतिपूर्विकया तदित्यादृचा * ब्रह्मक्षत्रियविड्योनि * रिति स्वजातिजानन्तरजाः षट् ॥ १ ॥ ० ॥ ८० ॥ नन्वक्षरादीनि त्रीण्यक्षराणि * पृथगुक्तानि किं पृथगेव * जप्यानीत्यत उच्यते * ओङ्कारपूर्विका इत्यादि ॥ १ ॥ ० ॥ ८१ ॥ ० ॥

**ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ८१ ॥**

येषाञ्चयज्ञायज्ञानां *नित्यहोमपितृयज्ञ * बलदानञ्चेत्युक्तेदाः ॥ १ ॥ तेविधियज्ञदर्शपौर्णमासादिसमन्विताः सर्व्वेयज्ञाः*जपयज्ञस्यषोडशीं *कलां नार्हन्तीतिश्लोकार्थः ॥ २ ॥ ० ॥ ८६ ॥ ० ॥ वक्ष्यमाणदिता*तदुच्यते*जप्येनैव*त्विन्तादिकम् ॥ १ ॥ ० ॥ ८७ ॥ ० ॥ ० ॥

जप्येनैवतुसंसिध्येद्ब्राह्मणोनात्रसंशयः। कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥८७

ब्राह्मणोब्राह्मणादिद्विजोजप्येन*सावित्रीमन्त्रेणैवतु * समाक्सिद्धोनसंशयः ॥ १ ॥ ब्राह्मणोजपादन्यत् कर्म*कुर्यादथवानकुर्यात्*कस्माद्यतोजपःसावित्रीमन्त्र*ब्राह्मणामैत्रउच्यते*ब्रह्ममन्त्रयोस्तुल्यनाम ॥ २ ॥ ०॥ ॥ ८७ ॥ ० ॥ यथाजप्यंजपनसिद्धो*तदुपायमाहेन्द्रियाणामित्यादिश्लोकं ॥ १ ॥ ० ॥ ८८ ॥ ० ॥

इन्द्रियाणांविचरतांविषयेष्वपहारिषु। संयमेयत्नमातिष्ठेद्विद्वान्यन्तेववाजिनाम ॥८८

विचरतामिन्द्रियाणा*मपहारिषुविषयेषु*संयमेतेषामिन्द्रियाणांनिवृत्तौ* विद्वान्वाजिनांयन्तेव * सर्व्वदा यत्नमातिष्ठेत् ॥ १ ॥ ० ॥ ८८ ॥ ० ॥ कानीन्द्रियाणीत्यतआह*एकादशे*न्द्रियाणीत्यादि । १ । ० । ८८ ।

एकादशेन्द्रियाण्याहुर्यानिपूर्व्वेमनीषिणः। तानिसम्यक्प्रवक्ष्यामियथावदनुपूर्व्वशः ८९

सर्वार्थोऽयंश्लोकः*तानिनिर्दिशतिश्रोत्रमित्यादिभि*स्त्रिभिरेवश्लोकैः । १ ० । ९० । ९१ ।

श्रोत्रंत्वक्चक्षुषीजिह्वानासिकाचैवपञ्चमी। पायूपस्थंहस्तपादंवाक्चैवदशमीस्मृता ॥९०

बुद्धीन्द्रियाणिपञ्चैषांश्रोत्रादीन्यनुपूर्व्वशः। कर्म्मेन्द्रियाणिपञ्चैषांपाय्वादीनिप्रचक्षते ॥९१

एकादशंमनोज्ञेयंस्वगुणेनोभयात्मकम्। यस्मिन्जितेजितावेतौभवतःपञ्चकौगणौ ॥ ९२ ॥

एकादशमित्यादि । ९२ । स्वगुणेनसत्त्वरज*स्तमोगुणेनोभयात्मकमिति*सत्त्वगुणेनबुद्धि*हेतुत्वाद्बुद्धीन्द्रियंभवति । १ । रजसागुणेनप्रवृत्तिहेतुत्वात्*कर्म्मेन्द्रियञ्चभवति । २ । यस्मिन्मनसिबुद्धीन्द्रिय * कर्म्मेन्द्रिययोर्जके हि*जितेसतिताविमौपञ्चकौगणौ*बुद्धीन्द्रियपञ्चकक * र्मेन्द्रियपञ्चकौजितौस्तः । २ । ० । ९२ । ० । तस्मान्मनोजयंपूर्व्वंकर्यात्ततः*परमिन्द्रियजयंच*वक्ष्यमाणहितातआहेन्द्रि*याणांप्रसङ्गेनेत्यादि । ० । ९२ । ० ।

इन्द्रियाणांप्रसङ्गेनदोषमृच्छत्यसंशयम्। संनियम्यतुतान्येवततःसिद्धिंप्रयच्छति ॥९३ ॥

एकादशेन्द्रियाणां *कर्म्मसुप्रसङ्गेन*समासक्त्याऽसंशयं *बन्धदोषमृच्छति।१। तस्मात्तान्येकादशेन्द्रियाणिसंनियम्यैवतुकृतोजपः*जपःसिद्धिंप्रयच्छति। २ । ० । ९३ । ० । ननुकस्मादिन्द्रियाणां * प्रसङ्गेनदोषमृच्छतीत्यत आहनजात्वित्यादिश्लोकम् । १ । ० । ९४ ।

**नजातुकामःकामानामुपभोगेनशाम्यति। हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते ॥ ९४ ॥**

जातुकदाचिदपिकामानांनित्य* उपभोगेनापिशेषो * नभवतीत्यतःकामो * नखलुतथाशाम्यति ॥ १ ॥ यथाहविषा कृष्णवर्त्माग्निरेष*नशाम्यतिभूयएव*वाहुल्येनाभिवर्त्तते ॥२॥९४॥ ननुयदिकश्चित्सर्व्वान्* कामान्प्राप्नोति किमर्थं*तान्नोपभुञ्जीत्यत*आह यश्चैतानित्यादि ॥१॥९५॥

**यश्चैतान्प्राप्नुयात्सर्व्वान्यश्चैतान्केवलांस्त्यजेत्। प्राप्नोतिसर्व्वकामानांपरित्यागोविशि-
ष्यते ॥ ९५ ॥**

यश्चसर्व्वानेतानकामान्*प्राप्नुयाद्यश्चैतान्केवलान्सर्व्वान्*त्यजेत्तयोर्द्वयोर्मध्ये ॥१॥ सर्व्वकामानांप्रापणात्*सर्व्वकामानां परित्यागः*विशिष्यते वन्द्यःश्रेष्ठ इत्यर्थः ॥२॥ ९५ ॥ तर्हिकिं कामान्सेवमानएव*सर्व्वेन्द्रियाणि नियन्तुं*शक्नोतीत्यतआह*नतथैतानीत्यादि ॥१॥९६॥

**नतथैतानिशक्यन्तेसंनियन्तुमसेवया। विषयेषुप्रजुष्टानियथाज्ञानेननित्यशः ॥ ९६ ॥**

विषयेषुप्रजुष्टानि*खल्वेतानिसर्व्वेन्द्रियाणिपुंसा*कामानामसेवयाम*नियन्तुंशक्यान्तएव ॥ १ ॥ नित्यशोज्ञानेनैतानि*संनियन्तुंयथाशक्यान्ते*तथैतानिसंनियन्तुं*कामानामसेवयानशक्यन्ते ॥२॥ ९६ ॥ ननुकस्मात्सिद्धिर्भवे*दित्यतआह*वेदास्त्वित्यादि ॥१॥९७॥

**वेदास्त्यागश्चयज्ञाश्चनियमाश्चतपांसिच। नविप्रदुष्टभावस्यसिद्धिंगच्छन्तिकर्हिचित् ॥ ९७ ॥**

ज्ञानंविनाहिपुंसां*विशेषेणप्रदुष्ट*भावोमनसिभवेत् ॥१ ॥ विप्रदुष्टभावस्यतु*पुंसोवेदादयोनैव*कर्हिचित् सिद्धिंगच्छन्ति ॥२॥९७ ॥ ननुजितेन्द्रियःपुमान्*कथंज्ञायतइत्यत*आहश्रुत्वेत्यादिश्लोकम् ॥१॥९८॥

**श्रुत्वास्पृष्ट्वाचदृष्ट्वाचभुक्त्वाघ्रात्वाचयोनरः। नहृष्यतिग्लायतिवासविज्ञेयोजितेन्द्रियः॥९८**

स्पष्टार्थोऽयंश्लोकः ॥ ९८ ॥ तर्हिचैकेन्द्रियजये * किंजितेन्द्रियो नस्यादि * त्यतआहे न्द्रियाणान्त्वि-
त्यादि ॥१॥९९॥

**इन्द्रियाणान्तुसर्व्वेषां यद्येकंचरतीन्द्रियम्। तेनास्यचरतिप्रज्ञादृतेः पात्रादिवोद-
कम् ॥ ९९ ॥**

सर्व्वेषामिन्द्रियाणांमध्येयद्येक *मिन्द्रियंचरतितेन*प्रज्ञाचास्यचरति*दृतेःपात्राद्उदकमिवेति ॥१॥ ९९ ॥ तर्हिकिंकुर्या*दित्यतआह*वशेकृत्वे*त्यादिश्लोकम ॥१॥१००॥

शास्त्रार्थं धर्म्मेणार्थोऽर्हि* अद्वयासमितपाणिः स * न्यूनपदार्थाभिमतं पृच्छेदिति ॥ १ ॥ ११० ॥ अपृष्टोऽन्यायेन वा पृष्टो यदि* ब्रूयात्तत्र दोषमाह* अधर्म्मेणेत्यादि ॥ १ ॥ १११ ॥

**अधर्म्मेण च यः प्राह यश्चाधर्म्मेण पृच्छति। तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति। १११।**

अधर्म्मेणेत्यादि खलु पृष्टो यो ब्रूयात् * यश्चान्यायेन वा यः पृच्छति* तयोस्तयोरन्यतरः* प्रैति म्रियते ऽथवा लोके* विद्वेषमधिगच्छति। १। १११। तर्हि यदि न्यायेन यः कश्चिच्छास्त्रं* पृच्छति स एवाध्याप्यः* किं भवतीत्यत आह* धर्म्मार्थावित्यादि ॥ १ ॥ ११२ ॥

**धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे ॥ ११२ ॥**

धर्म्मार्थावित्यन्वाचये* द्वन्द्वः तेन यत्र धर्म्मो* न स्यादर्थो वा न स्यात् यत्र वा यत्र* शुश्रूषापि तद्विधा स्व* स्वाभिमतानभ्युदिति ॥ १ ॥ तत्र जने विद्योषरे* भूप्रदेशे शुभं बीजं* यथा न वप्तव्यं तथा न वप्तव्या ॥ २ ॥ ११२ ॥ ननु यदि तादृशोऽपि शिष्यो नायाति* तर्हि किं यावज्जीवं नाध्यापयेदित्यत आह विद्ययैवेत्यादि। १। ११२।

**विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना। आपद्यपि हि घोरायां नत्वेनामिरिणे वपेत्। ११३।**

ब्रह्मवादिना वेदाध्यापकेन* योग्यशिष्यानवाप्तौ* स्याध्याप्यविद्ययैव* सह कामं मर्त्तव्यं ॥ १ ॥ घोरायामापद्यपि न* त्वेनां* विद्यामिरिणे तत्परभूता* विवादयोग्ये जने वपेत् ॥ २ ॥ ११३ ॥ कस्मादित्यत * तदुच्यते *विद्या ब्राह्मण*मित्यादि ॥ १ ॥ ११४ ॥

**विद्या ब्राह्मणमेत्याह सेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मां मादास्तथा स्यां वीर्यवत्तमा॥ ११४**

ब्राह्मणं वेदविद्यं स* मेत्य विद्या ब्रवीति* तव सेवधिर्निधि* रहमस्मि मां रक्ष ॥१ ॥ असूयकाय जनाय* मां त्वं मादास्तथा सति* वीर्यवत्तमा त्वहं स्याम् ॥२॥११४ कस्मै त्वं देया भवसीत्यत आह* यमेव तु शुचिमित्यादि ॥१॥११५॥

**यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम्। तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने। ११५।**

त्वं यमेव शुचिं नियतब्रह्म*चारिणं विद्यास्तस्मै निधिपाय* विप्रायाप्रमादिने मां ब्रूहीति ॥ १ ॥ विष्णुसंहितायाञ्चोक्तं* विद्या ह वै ब्राह्मणमाजगाम गोपाय मां सेवधिरस्मि तेऽहम्। असूयकायानृजवेऽयतायनमां ब्रूयाद्वीर्यवतीतथास्याम् ॥ २ ॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नं। यस्ते न द्रुह्यात्कतमाच्च नत्वं तस्मै मां ब्रूयान्निधिपाय ब्रह्मन् ॥२॥११५॥ अथ गुरुणाननुज्ञातं शास्त्र * मन्यानधीयमानायो* ऽभ्यस्यतितत्र पापमाह* ब्रह्म यस्त्वित्यादिना ॥१॥११६॥

**ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुया। । स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ ११६ ॥**

यस्तु व्यापकेनानम्नातं वेद*मधीयानाद्परस्मा*दाप्नुयात्सब्रह्मस्तेय*संयुक्तःसन्नरकं प्रतिपद्यते ॥१॥११६॥

लौकिकमित्यादि ॥११७॥

**लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च । आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत् । ११७॥**

योऽन्नो लौकिकं ज्ञानं शिल्पविद्यादिषु ज्ञानं*वैदिकं यज्ञादिज्ञानं * माध्यात्मिकं तत्त्वज्ञानं * यतस्मादद्दीत सतं*पूर्व्वमभिवादयेदिति ॥१॥११७॥

**सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः । नायन्त्रितस्त्रिवेदोऽपि सर्व्वाशी सर्व्वविक्रयी । ११८**

सावित्रीत्यादि ॥११८॥ यो विप्रादिः सावित्रीमात्रसारः*सावित्रीमात्रं सारं यस्य नान्या विद्याविता * सुयन्त्रितस्तपसाक्लिष्ट*स्वेतर्स पिवरं भवति ॥१॥ योऽन्न तपसायन्त्रितः * स त्रिवेदोऽपि नवरं *यतः सर्व्वाशी सर्व्वविक्रयीसमात्*सर्व्वफलमर्व्वत्यागी ॥२॥११८॥

**शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् । शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ।११९।**

शय्येत्यादि ॥११९॥ श्रेयसा जनेन शय्या*सनेऽध्याचरिते न समाविशेत्*स्वयञ्च शय्यासनस्थो*वर्त्तते तदेमं श्रेयांसं*प्रत्युत्थायाभिवादयेत् ॥१॥११९॥ कस्मात्प्रत्युत्थायाभिवादयेदिति*तत्कारणमुच्यते * ऊर्द्ध्वं प्राणा इत्यादि ॥१॥१२०॥

**ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते १२०**

स्थविरे वृद्धतने आगच्छति*सति यूनः प्राणाः स्वभावादूर्द्ध्वमुत्*क्रामन्ति उत्क्रमाइवाचरन्ति ॥१॥ युवा प्रत्युत्थानाभिवादाभ्यां पुन*स्तान्प्राणान्प्रतिपद्यते *तस्माच्छय्यासनस्थोयुवा*प्रत्युत्थायश्रेयांसमभिवादयेत् ॥ २॥१२०

अभिवादनफलमाह । अभिवादनेत्यादि ॥१॥१२१॥

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि संप्रवर्द्धन्ते आयुर्विद्यायशोबलम् ॥१२१।**

स्पष्टार्थोऽयं श्लोकः ॥१२१॥ तत्राभिवादने प्रत्यभिवादार्थ*माह्वाभिवादादित्यादि ॥१॥१२२॥

**अभिवादात्परं विप्रो ज्यायांसमभिवादयेत् । असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयन् १२२**

युवा विप्रादिरभिवादात्परं *ज्यायांसमभिवाद्य*नामाहमसावस्मीति*स्वं नाम परिकीर्त्तयन्*तं प्रत्यभिवादयेदिति ॥१॥ युगपत्स्वनामकीर्त्तन*मभिवादनञ्चकुर्य्या*दभिवादितस्तु सौत*न्नामश्रवणात्प्रत्यभि*वादनं कुर्य्यादिनाया*दोषः श्रूयते तद्यथा ॥२॥ अभिवादितस्तु यो विप्रो नाशिषं कुरुते यदि । श्मशाने जायते वृक्षो गृध्रकङ्कसमावृतः ॥ इति ॥१॥१२२॥

**नामधेयस्य ये केचिदभिवादं न जानते । तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्व्वास्तथैव च　१२३**

नामधेयस्येत्यादि ॥१२०॥ ये केचिज्जनानामधेयस्याभिवादं नजानते तस्य* प्रत्यभिवादं यथा*कर्त्तव्यं तन्नजानन्ति ॥१॥ प्राज्ञस्तानज्ञायमोजना*नभिवादयन्नहमिति*ब्रूयान्नस्वनामब्रूयात्*स्त्रीणामभिवादने च* तथैवस्वनामनब्रूया*दहमितिमात्रंब्रूयात् ॥२॥ नसंस्कृतानभिज्ञानभिवाद्या*नहमितिब्रूयादिति * यतःसंस्कृतमेवाहमिति ॥३॥१२७। तर्हिकथमहमितिमात्रंब्रूया*दित्यतआहभोइत्याति ॥१॥११४॥

भोःशब्दंकीर्त्तयेदन्ते स्वस्यनाम्नोऽभिवादने। नाम्नांस्वरूपभावोहि भोभावऋषिभिः स्मृतः ॥ १२४ ॥

नाम्नाभिवादने स्वस्य *नाम्नोऽन्तेभोइतिशब्दंकीर्त्तयेत * कस्मादियस्मान्नाम्नांस्व * रूपभावंभोभावऋषिभिः स्मृतः ॥१॥१२४॥ अभिवादिताऋषयो*भोअन्तनामस्वत्वात्*तंप्रत्यभिवादयन्ति*तद्यथातद्दर्शयति* आयुष्मान् भवेत्यादि ॥१॥११५॥१२५॥

आयुष्मान्भवसौम्येति वाच्योविप्रोभिवादने। अकारश्चास्यनाम्नोऽन्ते वाच्यःपूर्व्वाक्षरःप्लुतः ॥ १२५ ॥

अभिवादितोज्यायोभि*र्युवाविप्रःप्रत्यभिवादने सौम्या*युष्मान्भवेतिवाच्यःस्यात् ॥ १॥ तत्प्रत्य[illegible]नामोऽन्ते* यश्चाकारोवर्त्तते ऽयान्तेवाञ्जनात् *पूर्व्वाक्षरोऽचकारोवर्त्तते सतुप्लुतःकर्त्तव्य इति ॥ २ ॥ तद्यथा ॥ अभिवादयेऽहंदेवदत्तोभोः* इत्यभिवादितोज्यायांस्तं ब्रूयात्*आयुष्मान्भवसौम्यदेवदत्त३ इति ॥ १ ॥ अभिवादयेऽहंमनुजिद्भोइति सतेनवाच्यआयुष्मान् * भवसौम्यमनुजि३दिति*नैवमनाम्नाभिवादने*तस्मात्सामिति ब्रूयात् ॥४॥१२५॥

योनवेत्त्यभिवादस्यविप्रःप्रत्यभिवादनम्। नाभिवाद्यःसविदुषायथाशूद्रस्तथैवसः ॥१२६॥

योनवेत्तीत्यादि ॥१२६॥ स्पष्टार्थोऽयंश्लोकः ॥ १२७ ॥

ब्राह्मणंकुशलंपृच्छेत्क्षत्रबन्धुमनामयम। वैश्यंक्षेमंसमागम्यशूद्रमारोग्यमेवच ॥१२७॥

ब्राह्मणमित्यादि ॥१ ॥ १२७ ॥ समागम्याभिवादयन्तं*ब्राह्मणंप्रत्यभिवाद्य*ब्राह्मणःकुशलंपृच्छेत् ॥ १ ॥ क्षत्रियमनामयंपृच्छे*द्वैश्यंक्षेमंपृच्छे*च्छूद्र*मारोग्यंपृच्छेदिति ॥ २ ॥ १२७ ॥

अवाच्योदीक्षितोनाम्नायवीयानपियोभवेत्। भोभवत्पूर्व्वकन्त्वेनमभिभाषेतधर्म्मवित्१२८

अवाच्यइत्यादि ॥१२८॥ यश्चदीक्षितोयःसमवया*यवीयानपियदिभवेत्*धर्म्मविदेनंदीक्षितं * भोभवत् पूर्व्वकंमभिभाषेत ॥१॥१२८॥ अभिभाषणप्रसङ्गादच्यते *परपत्नीत्येत्यादि ॥१॥१२९॥

परपत्नीतुयास्त्रीस्यादसम्बन्धाचयोनितः। तांब्रूयाद्भवतीत्येवंसुभगेभगिनीतिच ॥ १२९॥

याज्ञोपरपत्नीनतु सृगभार्या* स्वयं निसम्बन्धा चन स्या* तां भवतीति ब्रूयादेवं* सुभगे इत्यथवा तां* भगिनीति ब्रूयात् ॥१॥ विष्णुसंहितायामप्युक्तं* मसंस्तुतापि परपत्नी* भगिनीति वाच्या गुर्वीति* तथा मातृ इति वा ॥१२९॥

**मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्। असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ १३० ॥**

मातुलांश्चेत्यादि ॥१३०॥ यवीयसो मातुलादीन्* गुरून् समागतान् ज्यायान्* प्रत्युत्थाय असौ नामाहम्* इति स्वनाम ब्रूयात्* न त्वभिवादयेदिति ॥१॥ विष्णुसंहितायामप्युक्तं* राजत्विक्श्रोत्रियाधर्म* प्रतिषेधुरुपाध्याय मा* तुलमातामहपितृ* व्यश्वशुरज्येष्ठभ्रातृ* सम्बन्धिनश्चाचार्यवत् ॥२॥ पत्न्यश्चैतेषां सवर्णा मातृस्वसा पितृस्वसा ज्येष्ठा स्वसा ॥३॥ श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम् ॥४॥ हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं* न पादोपसंस्पर्शनम् ॥५॥१३०॥

**मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा। सम्पूज्या गुरुपत्नीवत् समास्ता गुरुभार्यया ॥ १३१ ॥**

मातृष्वसेत्यादि ॥ १३१ ॥ यवीयःप्रकरणाद् यवीयसी* कनिष्ठा मातृस्वसादि* गुरुपत्नीवत् सम्पूज्या* प्रत्युत्थानासनादिभि* र्नत्वभिवादनेन च ॥ १ ॥ अतज्ज्येष्ठा पितुर्भगिन्या* मित्यत्र न ज्येष्ठायां मातृवद् वृत्तिर्वक्ष्यते ॥२॥ १३१

**भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि। विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ १३२ ॥**

भ्रातुरित्यादि १३२ भ्रातुर्ज्येष्ठस्य स्वकनिष्ठा सवर्णा* भार्या भिन्नत्वे विवाहात्* ब्राह्मणस्य विप्रकन्या* क्षत्रियस्य क्षत्रियकन्या ॥१॥ क्षत्रियस्य क्षत्रियकन्या वैश्यः* कन्या चैव वैश्यस्य वैश्या* कानैव तत्परा शूद्रा* भार्या सवर्णा भवति ॥२॥ अहन्यहनि प्रत्यहं* सुपसंग्राह्याभिवाद्या* स्यादनावापाभिहितम् ॥ ३ ॥ पितुर्भ्रातुः कनीयांसं नन मेदवयसा धिकः। प्रणमेच्च गुरोः पत्नीं भ्रातृजायां विमातरम् ॥ इति ॥ ४ ॥ विप्रोष्य तु समागतः* कनीयान् ज्ञातिसम्बन्धि* योषित उपसंग्राह्या* अभिवाद्या नाहन्यहनि ॥ ५ ॥ १३२ ॥

**पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि। मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ १३३ ॥**

पितुरित्यादि ॥ १३३ ॥ पितुर्भगिन्यां स्वज्यायस्यां* मातुश्च भगिन्यां स्वस्य* ज्यायस्यां स्वज्यायस्यां च* स्वसरि मातृवद्वृत्तिमातिष्ठेत् ॥ १ ॥ ताभ्यः पितुर्भगिन्यादिभ्यो हि गरी* यसी माता मन्तव्येति ॥ २ ॥ १३३ ॥ दशाब्दाख्या* मित्यादिना* सख्यं च* तेन तद् यथा ॥ १ ॥ १३४ ॥

**दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम्। त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥ १३४ ॥**

पौरैर्जनैः सह सख्यं* दशाब्दाख्यं दशभिरब्दै* र्निष्पाद्यमानं* तथा गीतादि* कलाभृतां सख्यं पञ्चा* ब्दाख्यं पञ्चवर्षनिष्पाद्यमानमेव ॥ १ ॥ श्रोत्रियाणां सख्यं त्र्यब्द* पूर्वं स्वयोनिषु सख्यं* स्वल्पेन कालेन भवति ॥ १३४ ॥

**ब्राह्मणं दशवर्षन्तु शतवर्षन्तु भूमिपम्। पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १३५ ॥**

ब्राह्मणमित्यादि ॥ १३५ ॥ दशवर्षवयो ब्राह्मणं शतवर्षवयःक्षत्रियश्च पितापुत्रौ जानीयात् तयोर्मध्ये ब्राह्मणः पितेव क्षत्रियः पुत्रवद् वर्त्तेयः ॥ १ ॥ १३५

**वित्तं बन्धुर्वयः कर्म्म विद्या भवति पंचमी। एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् १३६**

वित्तमित्यादि ॥ १३६ ॥ वित्तादीनि पञ्च मान्यस्थानानि भवन्ति * तत्र पुनरुत्तरोत्तरं गरीयः ॥ १ ॥ वित्तवतो गरीयान् बन्धुः बान्धवेभ्यो वयस्तो गरीयान् वयोऽधिकात् कर्म्मी गरीयान् कर्म्मिणो गरीयान् विद्वान् ॥ २ ॥ १३६ ॥ तत्र त्रिषु वर्णेषु मानार्हत्वमाह पञ्चानामित्यादि ॥ १ ॥ १३७ ॥

**पंचानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च। यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः। १३७।**

त्रिषु वर्णेषु मध्ये यत्र वित्तादीनां पञ्चानान्तु गुणवन्ति भूयांसि स तत्र मानार्हो भवति ॥ १ ॥ शूद्रोऽपि दशमीमवस्थां गतो मानार्हो भवतीति सर्व्वेषां सामान्यतः हि शतवर्षमतः स्मृतं नवत्यधिकादशमी ॥ २ ॥ १३७

**चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः। स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च।१३८।**

चक्रिण इत्यादि ॥ १३८ ॥ पथि गच्छद्भिर्जनैः एतस्मिन् पथि गच्छतश्च चक्रिणः शकटस्य * स्वस्य पन्था गन्तुं देयः। १। तत्र दशमीस्थो वृद्धो यदि गच्छति तदा तस्मै वपन्थाः इतरजनचक्रभिर्देयः। २। तत्र यदि रोगी गच्छति तदा तस्मै वर्त्मत्रिभिः पन्थाः देयः स्यात् तत्र यदि स्त्री गच्छति तदा स्त्रिया एव तस्याः त्रिभिः पन्था देयः।३। तत्र यदि स्नातको ब्राह्मणो याति तदा पञ्चभिः स्नातकस्यैव पन्था गन्तुं देयो नतोऽग्रे गच्छेयुः। ४। तत्र यदि राजा गच्छेत् तदा तैः षड्भिस्तस्यैव राज्ञः वर्त्तुं पन्था देयः। ५। तत्र यदि विवाहार्थ वरो गच्छति तदा तस्य वरस्य गन्तुं पन्थास्तैः सप्तभिर्देयो भवतीति शास्त्रम्। ६। १३८। तत्र यदा तेषु सर्व्वेषु युगपदेव गच्छत्सु कस्मिन् पथि तदा तत्र कोऽग्रे गच्छेदिति तत्राह तेषामित्यादिकं श्लोकम्। १। १३९।

**तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ। राजस्नातकयोश्चैव स्नातको नृपमानभाक्। १३९।**

समागतानां चक्रिप्रभृतीनां मध्ये मान्यौ स्नातकपार्थिवौ तयोर्मध्ये स्नातकस्तु नृपमानभाक् नृपमान्यः ।१।१३९. आचार्यादिसंज्ञामाह उपनीयेत्यादिकं। १। १४०।

**उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ १४० ॥**

योऽन्तेवासिनमुपनीय वेदं सकल्पं सरहस्यं अध्यापयेत् तमाचार्यं वदन्ति गुरुवद्बुधः सर्व्व एव मानाजन बुवन्ति। १। कल्परहस्यमन्तरेणापि विष्णु * नोक्तं यस्तु पतीपव्रतादेशं * कृत्वा वेदमध्यापयेत् * तमाचार्यं विद्यादिति ॥ १४० ॥

अतीपनयनस्येत्यादि ॥१७३॥ ब्रह्मणो वेदस्य ग्रहणं *वेदाध्ययनारम्भणं ॥१॥१७३॥

यद्यस्य विहितं चर्म यत्सूत्रं या च मेखला । यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ १७४॥

यद्यस्येत्यादि ॥ १७४ ॥ स्पष्टार्थश्चायं श्लोकः ॥१७४॥ व्रतादेशनमित्यतः *इति यदुक्तं तदुपनीतस्य* व्रतमादिश्यतिसेवेतेत्यादिभिर्वक्ष्यते ॥१॥१७५॥

सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् । सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥१७५॥

नियमान्वक्ष्यमाणान्नदर्मविधान्*नियमश्चकारादिह ॥ १ ॥ १७५ ॥ तान्वक्ष्यमाणान्* नित्यं स्नात्वेत्यादि* यावत्स्वधर्मः*परः स्मृतादिति ॥ १ ॥ १७६ ॥

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनञ्चैव समिदाधानमेव च ॥१७६॥

समिदाधानं प्रातःसायंहोमं *कुर्यादित्येव योजना ॥ १ ॥ १७६ ॥

वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः । शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥ १७७ ॥

वर्जयेदित्यादि मांसं *मत्स्यस्यापि मांसं वोक्तं *माल्यं पुष्पादिनिर्मितं *रसानिक्षुरसादिसम्भूतान्* शुक्तानि प यानि कालात् अम्लानि* ॥ १ ॥ १७७ ॥

अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् । कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम् ॥१७८

अभ्यङ्गमित्यादि वर्जयेदित्यन्ते *नान्यते वा नर्त्तनं गीतवादनं *स्वयं कर्त्तुं श्रोतुञ्च वर्जयेदिति ॥ १ ॥ १७८

द्यूतं च जनवादं च परिवादं तथानृतम् । स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९

द्यूतं चेत्यादीनामपि *वर्जयेदित्यन्ते नान्वयः* स्त्रीणां मैथुनेच्छया *प्रेक्षणालम्भं वर्जयेत् ॥ १ ॥ १७९

एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् । कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ॥१८०

एक इत्यादि ॥१८०॥ रेतः स्वेच्छया न क्वचित्* स्कन्दयेद्धि यस्मात्कामात्* रेतः स्कन्दयन्ब्रह्मचारी * स्वव्रतं हिनस्तीति ॥ १ ॥ १८० ॥

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् १८१

स्वप्न इत्यादि ॥ १८१ ॥ ब्रह्मचारी द्विजः स्वप्ने *शुक्रमकामतः सिक्त्वा *स्नात्वार्कमर्चयित्वा मा *मेत्विन्द्रियमित्यृचं जपेत् ॥ १ ॥ १८१ ॥

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् । आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥१८२

उदकुम्भमित्यादि ॥ १८२ ॥ यावदर्थानियावन्तोऽर्थाः* उदकुम्भं कुसुमं पुष्पाणि* गोमयमृत्तिकाकुशान्* सर्वानुस्वयमाहरेत्*भैक्षं चाहरहश्चरेत् ॥ १ ॥ १८२ ॥ यत्रभैक्षं चरेत्तदाह*वेदयज्ञै*रित्यादिकम् ॥ १ ॥ १८२

वेदयज्ञैरहीनानांप्रशस्तानांस्वकर्मसु । ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यःप्रयतोऽन्वहम ॥१८३

ये गृहस्था ब्राह्मणा वेदेन*यज्ञेनचनहीनास्तथाये*स्वकर्मसुप्रशस्ताये*वद्यामीणाप्रभोज्यान्न ॥ * श्राद्धे च कृतौ च स्ते भोज्यान्ना*येतेषामेव गृहेभ्यः ॥ १ ॥ ब्रह्मचारीप्रयतःसन्*प्रत्यहं भैक्षं दिकाल*माहरेत्नत्तु क्षत्रियवैश्याद्धात् ॥ २ ॥ आपस्तम्बेनोक्तं यतः*ब्राह्मणान्नं सदाभक्ष्यं*क्षत्रियमात्रपर्व्वणि ॥ वैश्यायश्चदीक्षाया शूद्रान्नकदाचन ॥ ३ ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियस्यापयःस्मृतं ॥ वैश्यस्यान्नमेवान्नं शूद्रस्यरुधिरं स्मृतम ॥ ४ ॥ इति ॥ एतद्वचनमविज्ञायोक्तापुना*राजान्नं हरते तेजःशूद्रान्नं ब्रह्मवर्च्चसम्॥५॥ इत्युक्तं व्यासेनचोक्तं *अमृतं ब्राह्मणान्नं नदारिद्र्यं क्षत्रियस्य च । वैश्यान्नेनतु शूद्रत्वं शूद्रान्नान्नरकं व्रजेतइति॥ ६ ॥एतेनोक्तं वेदयज्ञाभ्यामहीनानां *स्वकर्मसुप्रशस्तानां*गृहेभ्योनभैक्षमाहरेत् ॥ इति ॥२ ॥ १८३ ॥ एवं यत्रगृहे भिक्षां*नकुर्यात्तदुच्यते*गुरोःकुलेनेत्यादिकम ॥ १ ॥ १८४ ॥

गुरोःकुलेनभिक्षेतनज्ञातिकुलबन्धुषु । अलाभेत्वन्यगेहानांपूर्व्वंपूर्व्वंविवर्ज्जयेत्॥१८४

प्रथमभिक्षामात्रादिक्रमेण विधाना*द्गुरोःकुलेचभिक्षा* प्रतिषेधार्थ इत्यापितम ॥१ ॥ नैपितापुत्रमुपनीयाध्यापयेत्*नज्ञातिरज्ञातिबन्धु*र्बन्धुरुपनीयाध्यापयेत् ॥ २ ॥ ज्ञातिकुलेषुसपिण्डेषुनभैक्षं* भिक्षेतनबन्धुषुमातुलादिषु*तेभ्योऽन्यगृहाणामलाभे * पूर्व्वंपूर्व्वंविवर्जयेत् ॥३ ॥ एतेनगुरोःकुलेतुनकदापिभिक्षेतेतिज्ञापितं स्यात् ॥ ४ ॥ तथाचोक्तं विष्णुनापि*गुरुकुलवर्ज्जं गुणवत्सु भैक्षाचरणमिति ॥ ५ ॥ यदिगुरुकुलज्ञातिकुलबन्धुव्यतिरिक्तं गेहं भिक्षार्थं*नैवमाप्नोतिकिंकर्या*दित्यतआहसर्व्वमिति ॥ १ ॥ १८४ ॥

सर्व्वंवापिचरेद्ग्रामंपूर्व्वोक्तानामसम्भवे । नियम्यप्रयतोवाचमभिशस्तांस्तुवर्ज्जयेत॥१८५

पूर्व्वोक्तानां गुरुकुलज्ञातिकुलबन्धुव्यतिरिक्तानां वेदयज्ञाभ्यामहीनानां स्वकर्मसुप्रशस्तानामसम्भवे *सर्व्वं वापिग्रामं चरेत्॥ १ ॥तत्रवाचं नियम्यमौनीभूय*प्रयतःसन्भिक्षां चरे *दभिशस्तान्पापकारि*गृहान्भिक्षार्थं वर्जयेत् ॥ २ ॥ १८५ ॥

दूरादाहृत्यसमिधःसन्निदध्याद्विहायसि । सायंप्रातश्चजुहुयात्ताभिरग्निमतन्द्रितः॥१८६

दूरादित्यादि ॥१८६ दूरादतिसन्निकृष्ट*भिन्नस्थानात्क्रम्य एत*समिधआहृत्यभूमौ *स्थाने विहायसिसन्निदध्यात् ॥ १ ॥ अतन्द्रितःसन्ताम्भित*ताभिःसमिद्भिःसमीद्ध*मग्निं सायंप्रातश्चजुहुयादिति ॥ २ ॥ १८६ ॥ इतद्रकरणे प्रायश्चित्तमाह*अकृत्वाभैक्षचरणमित्यादि ॥ १ ॥ १८७ ॥

नित्यं साधाचारः संयतश्चसा* इव्रतपाणिः सन्गुरु*चस्य वीक्षमाणस्तिष्ठेत्॥ १ ॥गुरुणाज्ञातासतामितोक्तः सन् गुरो*रभिमुखमेवासीत ॥ २ ॥ १९३ ॥

हीनान्नवस्त्रवेशः स्यात्सर्व्वदा गुरुसन्निधौ। उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् १९४

हीनान्नेत्यादि॥ १९४ ॥गुरुसन्निधौ सर्व्वदा*हीनान्नद्रव्यहीनवस्त्रद्रव्यश्च * हीनवेशश्चशिष्यःस्यात् ॥ १ ॥ सप्रथा चास्य गुरोः प्रथममग्र*उत्तिष्ठेच्चरमं पश्चात् *तत्तरकालं संविशेत्* ॥ २ ॥ १९४ ॥

प्रतिश्रवणसंभाषे शयानो न समाचरेत्। नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥

प्रतिश्रवणेत्यादि ॥ १९५ ॥ गुरोः प्रतिश्रवणं वाक्यं श्रुत्वो* तत्रकालं संभाषां च*परस्परं चकथनं ॥ १ ॥ शिष्यः शयानश्चासीनो*भुञ्जानस्तिष्ठन् परा*ङ्मुखोवा न समाचरेत् ॥ २ ॥ १९५ ॥ तर्हि कथं तद्वे कुर्य्या*दित्यत आह आसीनेत्यादि ॥ १ ॥

आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः। प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः १९६

आसीनस्य गुरोः प्रति*श्रवणसंभाषे शिष्यः स्थितः कुर्य्यात्*तिष्ठतस्तु गुरोः प्रति*श्रवणसंभाषेऽभिमुखं धावन् ॥ १ आव्रजतश्च गुरोः प्रतिश्रवण*संभाषे शिष्यः प्रत्युद्गम्य कुर्य्यात्*धावतस्तु गुरोः पश्चा*द्धावन्नेव शिष्यः कुर्य्यात् ॥ २ ॥ ॥ १९६ ॥ अपरं च पराङ्मुखस्येत्यादि ॥ १९७ ॥

पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम्। प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥

पराङ्मुखस्य गुरोः प्रतिश्रवण*संभाषे शिष्योऽभिमुखः* सन् कुर्य्यात् दूरस्थस्य तु*गुरोरन्तिकमेत्य कुर्य्यात् ॥ १ ॥ शयानस्य गुरोः प्रति* श्रवणसंभाषे शिष्यः * प्रणम्य गुरुं कुर्य्यादथ निदेशे * आज्ञाकरणे तिष्ठतो * गुरोः सप्रणामं कुर्य्यात् ॥ २ ॥ १९७ ॥

नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ। गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत्। १९८ ॥

नीचमित्यादि ॥ १९८ ॥ गुरुसन्निधौ सर्व्वदा*शिष्यस्य शय्यासनं नीचं कार्य्यं *गुरोस्तु चक्षुर्विषये* यथेष्टासनो न भवेत् ॥ १ ॥ १९८ ॥

नोदाहरेदस्य नाम परोक्षमपि केवलम्। न चैवास्यानुकुर्व्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥

नोदाहरेदित्यादि ॥ १९९ ॥ शिष्यः प्रत्यक्षं परोक्षमपि अस्य*गुरोः केवलं नाम नोदाहरेदिति* भगवच्छब्दपूर्व्वकं* तूदाहरेदिति ख्यापितम् ॥ १ ॥ तथास्य गुरोर्गतिभाषितचेष्टि* तानुरूपं गतिभाषितचेष्टितं*शिष्यो न कुर्य्यात्परोक्षेऽपि ॥ २ ॥ १९९ ॥

गुरोर्यत्रपरीवादोनिन्दावापिप्रवर्त्तते। कर्णौतत्रपिधातव्यौगन्तव्यंवाततोऽन्यतः ॥ २०० ॥

गुरोरित्यादि। २००। यत्रस्थाने गुरोःपरीवादोनिन्दा* वाक्रतश्चिक्ष नात प्रवर्त्तते तत्र*कर्णौपाणिभ्यां पिधातव्यौ*ततोऽन्यत्रवागन्तव्यं। १। २००। नतुशिष्योयदिगुरोः*परीवादादीन्करोति*तदाकिंस्यादित्यतआहपरीवादीत्यादिश्लोकम्। १। २०१।

परीवादीखरोभवतिश्वावैभवतिनिन्दकः। परिभोक्ताकृमिर्भवेत्कीटोभवतिमत्सरी २०१

गुरोःपरीवादीशिष्यो*मृत्वाखरोभवत्येव*निन्दकस्तुश्वाभवति। १। गुरोः परिभोक्तागुरुधनेनोपजीवीकृमिर्भवत्यत्र* गुरोर्मात्सर्यान्वितःशिष्यः* प्रेत्यापुनःकीटोभवति। २। २०१।

दूरस्थोनार्च्चयेदेनंनक्रुद्धोनान्तिकेस्त्रियाः। यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

दूरस्थइत्यादि। २०२। दूरस्थःशिष्यःप्रेषिण्या* वस्त्रादिकंप्रेरयन्नचेनंगुरु*मर्च्चयेन्नप्रेषयेत्क्रुद्धान्न*क्रुद्धःसन् गुरुमर्च्चयेत। १। स्त्रियाःअन्तिकेस्थितःसन्*नगुरुमर्च्चयेदित्य* यदिशिष्योयानासनस्थोवर्त्तते*तदागुरुरेतितर्हि*ततोऽवरुह्याभिवादयेत्। १। २०२।

प्रतिवातेऽनुवातेवानासीतगुरुणासह। असंश्रवेचैवगुरोर्नकिंचिदपिकीर्त्तयेत् ॥ २०३ ॥

प्रतिवातइत्यादि ॥२०३॥ यस्यांदिशिगुरुस्तत*आगतोवातः प्रतिवातउच्यते *यस्यांदिशिशिष्यस्ततो*गतोवातोऽनुवातः ॥ १ ॥ तत्रगुरुणासहन * शिष्यआसीतायगुरोरसंश्रवे * यत्रगुरुर्नशृणोति * तत्रकिञ्चिन्नकीर्त्तयेत् ॥२॥२०३॥

गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषुकटेषुच। आसीतगुरुणासार्द्धंशिलाफलकनौषुच ॥ २०४ ॥

गोऽश्वेत्यादि ॥ २०४॥ गोयानेऽश्वयानेचोष्ट्र*यानेचप्रासादेचैवं *उविस्तीर्णासनेकटेषु*शिलायांफलकेदारु*निर्मितासनेनौकायां*चगुरुणासहासीत ॥१॥२४॥

गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत्। नचानिसृष्टोगुरुणास्वान्गुरूनभिवादयेत् ॥२०५

गुरोर्गुरावित्यादि ॥ २०५ ॥ गुरोर्गुरौगुरोःसन्निहितेसति*गुरुवद्वृत्तिमभिवादनादिका*माचरेत्गुरुकुलेच* वसन्गुरुणाऽनिसृष्टः ॥१॥ आचार्येणाननुमतः*शिष्यःस्वान्मातापित्रादीन्*गुरून्नाभिवादयेत ॥ २ ॥ विष्णुनाप्युक्तंतद्यथा*अनिर्दिष्टोगुरुणा*स्वान्गुरून्नाभिवादयेत् ॥ इति ॥२०५॥

विद्यागुरुष्वेतदेवनित्यावृत्तिःस्वयोनिषु। प्रतिषेधत्सुचाधर्म्माद्धितंचोपदिशत्स्वपि२०६

विद्येत्यादि ॥२०६ ॥ गुरौवसन्ब्रह्मचारी*यथाचार्येणाननुमतःस्वान्गुरून्नाभिवादयेत्तथैव*गृहीविद्या.गुरु

गुरुपत्न्याश्च मान्यत्वादीनि विधाय * न कार्याणि दोषसम्भवात् ॥ १ ॥ २१२ ॥

**गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः। पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २२१ ॥**

गुरुपत्नीतमर्दि ॥२१२॥ सवर्णा जासवर्णा जाय युवतिः * गुरुपत्नीपादयोः * शिष्येणनाभिवाद्या सात् * पूर्णविंशतिवर्षेण * गुणदोषौ विजानता ॥ १ ॥ युवतिवचनं वृद्धानां पादयोस्तु * भिवादनं * नप्रतिषिध्यते ॥ ४ ॥ विष्णुना भिहितं च स्वसंहितायां * हीनाद्धीनवर्णानां गुरुपत्नीनां * दूरादभिवादनं युवतीनां * नपादोपसंस्पर्शनं ॥ २ गुरुपत्नीनां गात्रोत्सादनाभ्यञ्जन * केशसंयमनपाद * प्रक्षालनानि न कुर्यात् ॥ इति ॥ ४ ॥ अत्र पत्नीनामित्युक्त्या * हीनवर्णजानामित्युक्तं * यस्य संयोगे हि पत्युः * स्त्रियां नकारोऽभवति ङीपि ॥ ५ ॥ तेनब्राह्मणस्यपत्नी * ब्राह्मणकन्याक्षत्रिय * कन्या वैश्यकन्या चेति । ६ ॥ क्षत्रियस्यपत्नी क्षत्रियदुहिता * वैश्यदुहिता च वैश्यस्य तु पत्नी * वैश्यदुहितैव मन्त्रैः * त्रिवाद्धामते शूद्रा ॥ ७ ॥ २१२ ॥

**स्वभाव एष नारीणां नराणामिह दूषणम्। अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥**

स्वभावएवेत्यादि ॥ २१३ ॥ इहलोकेषु नारीणां नराणां च * एषपरस्परं दूषणस्वभाव * इत्यतोऽर्थाद्धि पश्चितः * प्रमदासु न प्रमाद्यन्ति ॥ १ ॥ २१३ ॥

**अविद्वांसमलं लोके विद्वांसमपि वा पुनः। प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४॥**

अविद्वांसमित्यादि * ॥ ११४ ॥ अविद्वांसं विद्वांसं वापि * पुरुषं यतः कामक्रोध * वशानुगं तस्मादुत्पथं * नेतुं प्रमदाखलु अलं स्यात् १ ॥ २१४ ॥ तस्मादिदमुच्यते मात्रेत्यादि ॥ २१५ ॥

**मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत्। बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ २१५॥**

मात्रासह स्वस्रासह * दुहित्रावासह पुमान् * विविक्तासनो न भवेत् ॥ १॥ कस्मादित्यत उच्यते * इन्द्रियग्रामो हि बलवान् * विद्वांसमपि योषित्कर्षतीति ॥ २१५ ॥

**कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि। विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ २१६ ॥**

कामन्त्वित्यादि ॥ २१६ ॥ युवा शिष्यः कामं यदीच्छति तदा * युवतीनां गुरुपत्नीनां ब्राह्मणक्षत्रियवैश्य * कन्यानां तु भुवि पत * न्नसावहमिति ब्रुवन् ॥ १ ॥ विधिवद्वन्दनं कुर्यात् * नतु पादोपसंस्पर्शनं * कलावन्दनं कुर्यात् ॥ २१७ ॥

**विप्रोष्य पादग्रहणमन्वहं चाभिवादनम्। गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन् ॥ २१७॥**

विप्रोष्येत्यादि ॥ २१७ ॥ स्वस्थो द्विजो विप्रोष्य * प्रवासाद्विगत्यागतः * युवतीवर्ज्जं गुरु * दारेषु पादग्रहणं * मभिवादनमन्वहं कुर्वीत ॥ १ ॥ २१७ ॥

त्वीत ॥ १ ॥ स्नास्यन्नपभृतस्नानं *करिष्यन्नुब्रह्मचारी * गुरुणाभ्यनुज्ञयं*त * सर्व्वाद्दात्तं शक्त्याह रेत् ॥ २ ॥ २४८ ॥ किं किमाहरेदित्यत आह क्षेत्रं *हिरण्यं गामित्यादि ॥ १ ॥ २४९ ॥

**क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम। धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत ॥२४९**

**इतिमानवे धर्म्मशास्त्रे *भृगुप्रोक्तायां संहितायां *द्वितीयोऽध्यायः ॥ २ ॥**

स्पष्टार्थोऽयं श्लोकः ॥ २४९ ॥ इतिमानवे धर्म्मशास्त्रे *भृगुप्रोक्तायां संहितायां *द्वितीयाध्यायस्य ॥ १ ॥ वैद्य गङ्गाधरकृतायां *प्रमादभञ्जन्यां वृत्तौ *द्वितीयाध्यायस्य प्रमादभञ्जनी ॥ २१ ॥

---

ननु तर्हि ब्रह्मचारी *सदा ब्रह्मचर्य्याश्रममावसेदथवा *किं गृहाश्रममावसे *दित्यतस्तृतीयाध्यायमारभते ॥ १ ॥ तत्रादौ यावत्कालं ब्रह्मचर्य्यं *कुर्य्यात्तावन्तं कालमुपदिशति षट्त्रिंशदित्यादि ॥ २ ॥ १ ॥

**षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्। तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥ १ ॥**

यो ब्रह्मचारी समर्थः *त्रीन् वेदानधीते न त्रैवेदिकं व्रतं *षट्त्रिंशदाब्दिकं चर्य्यम् ॥१॥ यस्ततोऽधिकमधीते *तेन त्रैवेदिकं व्रतं *तदर्द्धिकमष्टादशाब्दिकं चर्य्यम् ॥ २ ॥ यः समग्रमधीते स पादिकं *नवाब्दिकं त्रैवेदिकं *व्रतं चर्य्यमित्यत्र *विकल्पो नियमार्थः ॥ ३ ॥ अथवा नियमार्थमाह *ग्रहणान्तिकमेवेति *यावता कालेन त्रिवेदाध्ययनं *समाप्तं भवति तावत्कालं व्रतं चर्य्यम् ॥४॥ षट्त्रिंशदब्दादधिक*कालेन नववर्षादा*न्यूनकालेन त्रिवेद*ग्रहणं स्यात्तावन्तं वा * कालं त्रैवेदिकं व्रतं चर्य्यं भवेत् ॥ ५ ॥ ननु तर्हि त्रिवेदाध्ययनं विना*किं न ब्रह्मचर्य्यव्रतं *समाप्तं भवतीत्यत*आह वेदानधीत्येत्यादि ॥ १ ॥ ॥ २ ॥

**वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममावसेत् ॥ २ ॥**

यदि समर्थो भवति * तदा त्रीन् वेदान् वाधीत्य * यदि वा तत्राशक्तः स्यात् *तदा वेदौ द्वावधीत्य ॥ १ ॥ तत्रापि यद्यशक्तः स्यात् *तदा वेदमेकं पूर्णं *वा यद्वा व्यवस्थया तु*सामवेदं ज्येष्ठसाम वा ॥ २॥ यजुःशाखां वैकां पूर्णां *पूर्णामृग्वेदस्य मन्त्र*ब्राह्मणात्मिकां वा शाखां *मथायर्व्ववेदस्यैकां वा शाखां। ३ यथाक्रमं यथाविधि*ब्रह्मचर्य्यं चरन्नधीत्य। अविप्लुतब्रह्मचर्य्यो*भूत्वा गृहस्थाश्रममावसेदिति ॥४॥ गृहस्थाश्रमो यथाविधि दारान्नि*ग्रहणपूर्व्वकमग्न्या*यत्नादिक्रियाचरण*गृहवासव्यापारः ५।पराशरेणोक्तं चैक*शाखाध्ययनं तद्यथा*तस्मादार्षलाभीते न ब्राह्मणो न विप्र इतः॥ अधीत्यशाप्येकशाखां यदि सर्व्वां न शक्नुते ॥इति ।६। तत्र शाखाविशेषोऽपि तः स्वयं *श्रान्तेः पङ्क्तिपावनेषु*सामवेद ज्येष्ठसामादिरिति।७।अत्रावसेदितिप्राप्त*काले लिङ्गृहस्थाश्रमावासस्तु स्य*प्राप्तकालीनत्व विधौ।८॥तेनेयमनियमे नोक्ति*यंदीच्छति गृहाश्रम*वा यत्तदात्ममावसे*द्यदि नेच्छति तदा तु*नैष्ठिकब्रह्मचारी स्यात्।९।सतिचा शक्तदारे ज्ये

ज्येष्ठभ्रातरि*कनिष्ठस्त्वविप्लुतब्रह्मचर्यो*दाराग्निग्रहणपूर्व्वं*प्राप्तकालगृहवासोपि।१०।नदारान्गृह्णीयादन्यस्त्वग्रज*
वामनखञ्जादिभ्योज्येष्ठभ्रातृभ्यो*गृह्णीयादनुज्ञयात् ११। कृतदारे ज्येष्ठभ्रातरि निरग्नौ*सति नाग्निं गृह्णीयान्न*पित
रि पितामहे वा जीवति॥१२॥एतदविपरीतार्थ*कातत्यानादिभिरुक्तं *तदग्निग्रहणे वक्तव्ये *प्रदर्शयिष्यते सर्व्वं ।१३।
विधार्थलिङ्गे नैवमर्थो भवति*अविप्लुतब्रह्मचर्य्यस्य गृहस्था*श्रमाकरणे विधुरत्वं नैष स्यात्।१४॥कृतदारे ज्येष्ठे च
*सति कनिष्ठस्य दार*ग्रहणविधिर्भवति ।१५॥ अविप्लुतब्रह्मचर्या*इति किमर्थं विप्लुत*ब्रह्मचर्य्यस्य द्विजाते*र्गृहाश्र
मावासप्रतिषेधार्थं ।।१६। योद्विजब्राह्मणःक्षत्रियो*वैश्योवायथोक्तविधिनोपनीतो*वेदारम्भसंस्कारेणसंस्कृतो
पि*यदि वेदं नाधीते॥१७॥स्नात्वासमावृत्ताभासः*सन्दारान् गृह्णाति स तु*मूढ वाद्वृषीभवति ।।१८।। योऽनधीत
द्विजोवेदमन्यत्रकुरुतेश्रमं।सजीवन्नेवशूद्रत्वमाशुगच्छति सान्वयः।इत्युक्तेः।१९।अनधीतवेदस्य च*कृतदारस्यापिवैवा
हि*काग्निग्रहणानधिकारो*ब्रह्मयज्ञवेदपाठासामर्थ्यात्२०साग्निकस्य पुत्रो ज्येष्ठोऽवरजो वा*निरग्निकस्यावरजो वा*प्य
विप्लुतब्रह्मचर्य्यः॥२१॥दारग्रहणपूर्व्वक*गृहावासस्य त्वप्राप्त*कालत्वादग्निग्रहणाधिकारा*भावाद्दारान् गृह्णीयान्न*
वैवाहिकाग्निं गृह्णीयादिति ।।२२।। साग्निकस्यावरजस्तु*अविप्लुतब्रह्मचर्य्यः*प्राप्तकालगृहस्थाश्रमोवासः ॥ २३ ॥
दारान्गृहीत्वाग्निमाधायगृहस्था*श्रमोक्तकर्म्मसु योग्य*इत्यर्थोऽनेनस्थापितः ॥२४॥२॥ ननु किमर्थमविप्लुतब्रह्म*
चर्य्यस्यैव गृहस्थाश्रम*मावसेदित्यत आह*तं प्रतीतमित्यादि ॥१॥२॥

**तं प्रतीतं स्वधर्म्मेण ब्रह्मदायहरं पितुः। स्रग्विणं तल्पमासीनमर्हयेत् प्रथमं गवा ॥ ३ ॥**

तमविप्लुतब्रह्मचर्य्यं तेनैव*लोके प्रतीतं विख्यातं*स्रग्विणं सुवर्णादिमालाधारिणं ।।१।। स्वधर्म्मेण पितुस्त
ल्प*मासनमासीनं ब्रह्म*दायहरं पितुर्ब्रह्म* स्वात्मकस्य दायस्य हरणशीलं भ्रातृभिः सह पितुर्दायविभाग*काले वि
भागकृतसर्व्वे*जनः प्रथमं ज्येष्ठोद्धारेण गवा*खल्वर्हयेद् योग्यं कुर्य्यात्॥२॥विप्लुतब्रह्मचर्य्ये तु*शूद्रवद्वाच्यः ज्येष्ठो
द्धारेण गवा*प्रथमं दायहरत्वेन नार्हयेत् ३वक्ष्यते हि दायभागे *ज्येष्ठस्तु जातो ज्येष्ठायां *हरेद्वृषभषोडशाः ।।५।।
तथा । पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्व्वजः।कथं तत्र विभागः स्यादिति चेत्संशयो भवेत्।६।। एकं वृषभमुद्धारं
संहरेत स पूर्व्वजः।ततोऽपरे ज्येष्ठवृषास्तदूनानां स्वमातृतः ॥७। इति इत्येवं व्याख्यानमविद्वान्*प्रमादीव्याचष्ट
ब्रह्मैव*दायस्तं हरतीति ब्रह्मदाय*हरः पितृतोऽधीत*वेदं पुत्रमित्युच्यते ।।८।। पितृतोऽध्यायनं खल्वपितु*र
भावेऽन्यतोऽध्ययन*मिति प्रमादिव्याख्यान*मसाधु पितरपाङ्क्तेयत्वादिदोषात् ॥९॥२॥ अथैवं प्राप्तकालगृहस्था
श्रमा*वासः कथं गृहस्थाश्र*मावासं कुर्य्यादित्यत*आह गुरुणानुमत इत्यादि ॥१॥४॥

**गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ॥ ४ ॥**

योद्विजो ब्राह्मणः क्षत्रियो वैश्यो वा*यथावदुपनीतः सन्*यथावद्ब्रह्मचर्य्यं च*चरन् वेदान् वेदौ वेदं*मेकमेकां शाखां
वाधीता ॥१॥अविप्लुतब्रह्मचर्य्यः*प्राप्तकालगृहस्थाश्रमावासः*साग्निकनिरग्न्यातरपिब्रमाम्*ज्येष्ठः पुत्रो भवति॥२

योवापितृहीनःसाग्निनिरग्नान्*तरज्येष्ठभ्रातृमान् स्यात्*पितृज्येष्ठभ्रातृभ्यांवा*हीनोयःस्यात् यदि* गृहस्था
श्रमावासमिच्छेत् ॥३॥ तदागुरुणानुमतः*सन् यथाविध्यभृत*स्नानंकृत्वासमावृत्तो*गुरुकुलात्पितृकुलंपुनःप्राप्तः
॥४॥ सवर्णांलक्षणान्वितां*भार्य्यांभार्य्यासंज्ञांनारीं*यथाविधिउद्वहेत॥५॥ नतुसमावृत्तैरवाचार्य्यकुलात्*पितृ
कुले पुनरागमनंस्यात् * तेनगृहवासोभवेत् ॥ ६ ॥ किमर्थमुद्वहेतेत्युक्तमितिचे* त्तत्रोच्यते नखलुगृहेवासो*
गृहस्थाश्रमावासोऽभिधीयते ॥७॥ गृहिणीतु गृहं तया*सहाश्रमे समावासो*गृहस्थाश्रमावासइति*ज्ञापनार्थ
मुद्वहेतेति ॥८॥ एतच्चान्यत्राप्युक्तं*नगृहं गृहमित्याहुर्गृहिणीगृहमुच्यते । तयाहिसहितःसर्व्वान्पुरुषार्थान्
समश्नुते । इति ॥८॥ तथादक्षेणाप्युक्तं*पत्नीमूलंगृहंपुंसांयदिच्छन्दोऽनुवर्त्तिनी । गृहाश्रमसमंनास्ति यदिभा
र्य्यावशानुगा ॥ इति ॥ १०॥ ननुतर्हि समावर्त्तदिनात्पर * दिनमेवकिमुद्वहेत् * दक्षेणापिह्यभिहितं ॥ ११ ॥
अनाश्रमीनतिष्ठेत्तु*दिनमेकमपिद्विजः । आश्रमेणविनातिष्ठन्*प्रायश्चित्तीयतेहिसः ॥१२॥ जपेहोमेतथादाने
स्वाध्यायेचरतस्तु यः । नासौतत्फलमाप्नोतिकुर्व्वाणोप्याश्रमाच्युतः ॥ इति ॥ १३ ॥ इतिचेत्तत्रोच्यतेकन्याप्राप्ति *
कालपर्य्यन्तंप्रतीक्षणेदोषा * भावउक्तो व्यासेनस्वसंहितायां * ॥ १४ ॥ तद्यथा ॥ एवंस्नातकतांप्रा
प्तोद्वितीयाश्रमकाङ्क्षया ॥ प्रतीक्षेतविवाहार्थमनिन्द्यान् यसम्भवाम ॥ इति ॥ १५ ॥ कश्चित्संवत्सर
कालप्रतीक्षा * कर्त्तव्येत्याहततःपरंप्रायश्चित्तं * कुर्त्तव मित्युवाचयथा ॥ १६ ॥ अनाश्रमीसंवत्सरं *
प्राजापत्यंकृच्छ्रंचरि * त्वाश्रमसुपे याद्वितीयेऽतिकृच्छ्रं * तृतीये कृच्छ्रातिकृच्छ्रं * मतऊर्द्ध्वंचान्द्रायणम् ॥
इति ॥ १७ ॥ तत्रचेदाग्दत्ताभार्य्या*पाणिग्रहाग्निर्यतेऽथ* यत्कर्त्तव्यं तदुक्तं कात्यायनेन ॥ १८॥ यस्यदत्ता
भवेत्कन्यावाचासत्येनकेनचित् । सोऽन्त्यांसमिधमाधास्यन्नादधीतैवनान्यथा ॥१९॥अनूढैवतुसाकन्यापञ्चत्वंयदिग
च्छति ॥ नतयाव्रतलोपोऽस्यतेनैवान्यांसमुद्वहेत् ॥२०॥अथचेन्नलभेतान्यांयाचमानोपिकन्यकाम् । तमग्निमात्मसा
त्कृत्वाक्षिप्रंस्यादुत्तराश्रमीति ॥२१॥ ननु प्रविवाहकालविधिर्गृह*स्थाश्रमीक्तकर्माधिकारिणामुक्तः॥ नासौत
त्फलमाप्नोतिकुर्व्वाणोप्याश्रमाच्युतः । इति ॥२२॥ यस्तुद्विजोनिरग्निसाग्निकान्य*तरपितृमानथवा*पितृहीनःकृत
दारः*ज्येष्ठभ्रातृमानविप्नुतब्रह्मचर्य्यः ॥२३॥ गुरुणानुमतःस्नात्वा*यथाविधिसमावृत्तो*गृहस्थाश्रमीक्तकर्मानधिका
री*सकिमुद्वहेन्नवाऽथ*कदावापुद्वहेतेतिचेत् ॥२४॥ तत्रोच्यतेपृथग्धर्म्मविवृद्धये *इतिवक्ष्यतेतेनैकान्नभुजो*भ्रा
तरोज्येष्ठस्यभ्रातुः*क्रियायाक्रियावन्तोह्यः ॥ २५ ॥ तेषानधिप्नुतब्रह्म*चर्य्याणांसमावृत्तानां * विवाहेकाल
नियमोनास्तिज्येष्ठ*श्चेदपुत्रकोभवति*तदाशुपुत्रायोद्वहेत ॥ २६ ॥ वक्ष्यतेहिभ्रातृणामेकजातानामेकश्चेत्
पुत्रवान्भवेत् ॥ सर्व्वांस्तांस्तेनपुत्रेणपुत्रिणोमनुरब्रवीत् ॥ इति ॥ २७ ॥ पृथगन्नास्तुस्वधर्म्म*करणार्थंपूर्व्वोक्त
कालेविवहेत्*पितृमांस्तुपितुःक्रिययाक्रियावान्*यथाकाममुद्वहेत् ॥२८॥ पितुरनन्तफलदपुत्रोत्पाद*नार्थं वशिष्ठे
नोक्तंहि ।२९। पुत्रेणलोकाञ्जयतिपौत्रेणानन्त्यमश्नुते । अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपम् । इति।३०। नतुवि
वाहेनकथ*मेवंगृहस्थाश्रमोक्त*धर्म्माधिकारीभवति*कोऽयमस्यविवाहइति*चेत्तत्रोच्यतेश्रूयतां ॥३१॥ उद्वहतेरर्थोलो
के*वेदेचप्रसिद्धोवाम*कर्म्मचतुष्टयात्मक*आग्नेयपुराणेऽग्निना*ऽभिहितस्तद्यथादृश्यते।३२।कन्यादानंशचीयागोविवा
होऽथचतुर्थिका । विवाहमेतत्कथितंनामकर्म्मचतुष्टयः ॥ इति ।३३। द्विजातीनांपुंसामाश्रमारम्भेतु*प्रथमोब्रह्म
चर्य्याश्रमोदक्षिणः*कायवाङ्मनोभिर्मैथुनवर्जनात् ।३४ तद्विपर्य्ययात्तुगृहाश्रमोवाम*स्तत्रतत्कन्यादानादि*

मेधातिथिना प्रतिलोमजानां स्त्रीणां भार्यात्वं शास्त्रप्रतिषिद्धम् । १६७ ॥ एतदभिप्रायेण नारदोऽब्रवीत् आनुलोम्येन
वर्णानां यज्जन्म सविधिः स्मृतः । प्रातिलोम्येन यज्जन्म स ज्ञेयो वर्णसङ्करः । इति । १६८ । नन्वेवमेतत्सर्वं युगेषु
वर्णा*सवर्णाभार्याविवाहः*सर्वसम्मतस्तत्कथं*बृहन्नारदीयपुराणे यदुक्तं ॥१६९॥ कलावसवर्णाकन्याविवाहव
र्जनं*तत्कथमुपपद्यते*तद्यथोक्तमुदस्यते ॥ १७० ॥ समुद्रयात्रास्वीकारः*कमण्डलुविधारणं । द्विजानामसव
र्णासुकन्यासूपयमस्तथा ॥ १७१ ॥ देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमः
स्तथा॥१७२॥दत्तायाश्चैव कन्यायाःपुनर्दानं परस्य च। दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ॥१७३॥ महाप्रस्थानग
मनं गोमेधश्च तथा मखम् । इमान् सर्वान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ १७४ ॥ इतिसत्यमेतत्सर्वं कला*
विदानीं द्विजा ये ब्राह्मणा वेदं *नाधीयते मन्त्रविदो न भवन्ति ॥ १७५ ॥ तएवान्यान्ब्राह्मणादीन्*यत्संस्कुर्वन्ति
यथोक्त*स्वरवर्णान्यतरविहीनैर्मन्त्रैः*कृतास्ते संस्कारा असिद्धा भवन्ति॥ १७६॥संस्कृताभासास्ते ब्राह्मणादयो*
भवन्त्यब्राह्मणा क्षत्रिया एव*मन्यवर्णा अपि। ते यद्यसवर्णामनु*लोमजां कन्यामुद्वहेयुः।१७७। स्वरवर्णहीनमन्त्रैः*कृता
सा कन्या फलतो* नपत्नीकार्यक्षमता पत्नी भवेत् ॥ १७८ ॥ लोके तु ब्राह्मणो नोढेति कृत्वा *ब्राह्मणीति तां मन्येरन्*
व्यवहरेयुश्च ब्राह्मणीतयेति ॥ १७९ ॥ तस्यां जातश्च फलतो*न ब्राह्मणोऽनुलोमज एव खलु * ब्राह्मणतया लोके ख्या
तो भवेत् ॥ १८० ॥ इत्येवं बहुदोषानवीक्ष्य कलौ*असवर्णाविवाहवर्जनमुक्तं * ये तु यथोक्तविधिना*स्वरवर्णाद्युष्ट
मन्त्रैः ॥ १८१ ॥ असवर्णामुद्वहेयुस्तेषां कलावपि न प्रतिषेध इति*मन्वादीनामभिप्रायः ॥ १८२ ॥ अथलक्षणा
न्विताम्*इत्यलक्षणविवर्जिता*मलक्षणानि च क्षतयोनित्वादीनि । १८३ । तथा चाक्षतयोनिं*भार्यामुद्वहेन्नानु*
ज्येष्ठस्वसृमतीमनग्निकामनाप्तानात्॥१७५॥नान्यपूर्व्वां नप्राप्तेपि*सद्भवर्त्वदत्तां *जातरजस्कामुद्वहेत्॥१८४ ॥नमात
न.मृ. नज्येष्ठां *नमातृस्वस्रीयां नपितृस्वस्रीयां * नमातृसस्त्रीयामातृस्वस्रीययोः*सुतां पौत्रीं प्रपौत्रीञ्च १८५
एवं पितृस्वस्रीयापितृस्वस्रीययोः * सुतां पौत्रीं प्रपौत्रीञ्च ॥ १७८ ॥ एवं मातामह प्रमातामहवृद्ध * प्रमातामह
पितामहप्रपिता*महवृद्ध प्रपितामहानामपि * सुतां पौत्रं प्रपौत्रीञ्च वान्धवत्वात् ॥ १७९ ॥ इति ॥ नक्षत
योनिं भार्यामुद्वहेदिति*विवाहमन्त्राःप्रवृत्ताः * विवाहसंस्कारासिद्धेः ॥ १७७ ॥ पाणिग्रहणिकामन्त्राःकन्या
स्वेव प्रतिष्ठिताः । नाकन्यासु क्वचिन्नृणां* मितासामत्वनाबद्धामाणत्वात् । इति । १७८ । नानूढज्येष्ठस्वसृमतीमु
द्वहे *दत्तावाश्रमानादिति ॥ १७९ ॥ ज्येष्ठायां द्विभगिन्यामनूढायां*सत्यामूढाकनिष्ठाग्रे *दिधिषूःस्याज्ज्येष्ठातु
दिधिषुश्च स्यात् ॥ १८० ॥ तयोर्वोढारौ प्रायश्चित्तमर्हतः*प्रायश्चित्तमपि तयो * रुक्तं वसिष्ठेन यथा ॥ १८१ ॥ अग्रेदि
धिषूपतिःकृच्छ्रं द्वादश*रात्रं चरित्वा निर्विशे*त्तां चैवोपगच्छेदेवं * दिधिषूपतिःकृच्छ्रातिकृच्छ्रौ चरित्वा निर्वि
शेत् ॥ इति ॥ १८२ ॥ ज्येष्ठभ्रातृमानवश्रयायथामा* गृह्णीत्तथाज्येष्ठायां * अनूढायां कनिष्ठामप्युद्वहेत । इति ।
॥ १८०॥ तयोर्लक्षणमुक्तं देवलेनच*ज्येष्ठायां विद्यमानायां *कन्यायामुह्यते ऽनुजा । सा चाग्रे दिधिषूर्ज्ञेया*पूर्व्वा च
दिधिषूः स्मृता॥इति॥१८४॥ यत्तु प्रमादीचान्दृषिभाषिते *पुनर्भूर्दिधिषूरूढा* द्विस्तस्या दिधिषूपति*रितितदसाधु
देव*महर्षिवचनविरोधात्॥ १८५॥ भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः।धर्मेणापि नियुक्तायां स ज्ञेयो दिधि
षूपतिः ॥ १८६ ॥ इति मनूक्तदिधिषु*पतिलक्षणविरोधाच्च । नान्यपूर्व्वामुद्वहेदिति*काश्यपेनचोक्तं यथा ॥ १८७
सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचादत्तामनोदत्ताकृतकौतुकमङ्गला ॥ १७९ ॥ उदकस्पर्शिता या च*

स्यावसा याविन्नद्योतिका। अग्निं परिगततायाचपुनर्भूं प्रसवोत्थया॥ १८८ ॥इतो ताः कायमेनोक्तादृष्टमिक्रमर्माणिवत्॥ तस्मादिवाहयन्ते तावन्नैनीयाः प्रकीर्त्तिताः ॥ १८० ॥ नप्राप्तेपिण्डदूष वरेत्वदत्तां * जातंरज स्कात्वदहेदिति * इषली पतिवद्भावात्॥ १८१ ॥ तद्यथायमसंहितायां यथा*इन्प्राप्ते द्वादशेवर्षे यःकन्यां न प्रयच्छति। मासिमासि रजस्तस्याः पिता पिबति शोणितम॥ १८२॥ माताचैव पिताचैव ज्येष्ठ भ्रातातथैवच। त्रयस्तेनरकं यान्ति दृष्ट्वाकन्यां रजस्वलाम ॥१८३ ॥ यस्तांविवहते कन्यां ब्राह्म णो मदमोहितः। असम्भाष्योह्यपाङ्क्तेयः सविप्रोवृषलीपतिः॥ १८४ ॥ वस्मात्‌ज्ञात्वोपेया वृषलीत्वमृतप्रजा। शूद्रीचवृषलीप्रोक्ता कुमारीचरजस्वला॥ १८५ ॥ खत्वं यापरिताजायन्यत्र प्रेष्य वृषसाति। वृषलीसापिनैवका शूद्रीतु वृषलीभवेत्। इत्यादि॥ १८६ ॥ अवसम्प्राप्ते द्वादशेवर्षे यः * कन्यांनप्रयच्छतीति*प्रशब्देन प्रकष्टदान*उक्तं तच्चयोगावरे * कन्यादानाद्भवतीति॥ १८७ ॥ नतुनिकृष्टवरे कन्यादानं *प्रकष्टदानं भवति*सदृश वरालाभेतु॥ १८८ ॥ कन्यायामदत्तायां रजस्वलायां* नदोषोभवतीति ज्ञापितमेव * मेवचमतनावच्यते तद्यथा॥१८८॥ उत्कृष्टायाभिरूपाय*वरायसदृशायच। अप्राप्तकालाञ्च तस्मैकन्यां दद्याद्यथाविधि॥२००॥ काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि। नचैवैनां प्रयच्छेत्तुगुणहीनायकर्हिचित्॥ २०१ ॥ त्रीणिवर्षाण्युदी क्षेत कुमार्य्यृतुमतीसती। ऊर्द्ध्वन्तुकालादेतस्माद्विन्देतसदृशंपतिम् ॥ इति॥ २०२ ॥ * ॥ नन्वेतावल्लक्षण मात्रमेवकिं*कन्यायाश्चलक्षणम*थानग्रदस्तीतापरञ्च*कन्यायाश्चविवाह्यत्वमलक्षणमतोच्यते ॥ १ ॥

**असपिण्डाचयामातुरसगोत्राचयापितुः। साप्रशस्ताद्विजातीनांदारकर्म्मणिमैथुने ॥५॥**

तत्राचार्य्याणामियंरीतिःशास्त्र*स्योपदेशे त्रिधावाक्यंप्रयुज्यते *विध्यर्थवादानुवादवचन*विनियोगादितिगौतम न्यायेऽतत्रोद्वहेतद्विजोभार्य्यां *सवर्णांलक्षणान्वितां*मितिविधिविनियोग*वचनंसामान्यतोनियोक्त्राकृतं॥३॥तद्वि धार्थस्याविशेषज्ञानार्थं*मर्थवादवचनमनुवाद*वचनञ्चनियोक्त्राप्रयुज्यते ॥ ४ ॥ तत्रार्थवादस्वरूपं विधउक्तो*गौतमेन न्यायशास्त्रे*स्तुतिर्निन्दापरकृतिः*पुराकल्पइत्यर्थवाद*इतितन्न्यायसूत्रंच ॥ ५ ॥ विध्यर्थस्यग्राह्यार्थग्रहणार्थं * स्तुतिःप्रशंसावचनं*वर्जनार्थंनिन्दावचनं ॥ ६ ॥ मतान्तरानुमत्यर्थं*स्वमतदार्ढ्यार्थंचपरकृतिःपुराकल्पः॥७॥ संशयच्छेदनार्थं स्फुटार्थंयत्*पुनरुक्तं सोऽनुवादः*इत्येवंक्रमोदृश्यते ॥ ८ ॥ तत्रयदविशुतन्प्रश्नचर्य्यां*गुरुणा नुमतःस्नात्वा*यथाविधिसमावृत्तो*द्विजः सवर्णांलक्षणा* न्वितांभार्य्यामुद्वहेत ॥ ८ ॥ इतिसामान्यतोविधि* रुक्तस्तत्किंसर्व्वांसवर्णामुत*लोमासवर्णद्विज*कन्यामुद्वहेदिति॥ १० ॥ तत्रस्तुतिनिन्दाभ्यांविवाह्याविवाह्यो * उच्येते असपिण्डाच*यामातुर्वित्यादिश्लोकैः॥ ११ ॥ * ॥ ५ ॥ उद्वहेतद्विजोभार्य्यां*सवर्णामित्यनेन*विवाह्या याविहिता॥ १ ॥ ब्राह्मणस्यभार्य्याब्राह्मणकन्या*क्षत्रियकन्यावैश्यकन्याचतथा*क्षत्रियस्यभार्य्याक्षत्रियकन्या* वैश्यकन्याचवैश्यस्यवैश्यकन्या॥२॥ यायामातुरसपिण्डाचपितु*रसगोत्राचभवति*साद्विजातीनांदारकर्म्मणिच* मैथुनेचप्रशस्तास्यात्॥ ३ ॥ दारकर्म्मखलुयथोक्तविधिना*विवाहेमव्दीलाम्हाअमोक्त*कर्म्मतत्प्रशस्ताधर्म्या भवति॥ ४ ॥ मैथुनेचपुत्रादापत्योत्पादने*प्रशस्ताभवतिनतु*मातृसपिण्डावापितृ*सगोत्रावाप्रशस्तास्यात् ५॥ इतितस्यामातुरसपिण्डापितु* रसगोत्राविवाह्यास्यात*निन्द्यामातुःसपिण्डा * पितुःसगोत्राविवाह्यवर्ज्या

स्यः ॥ ६ ॥ मैथुने प्रशस्ताऽऽद्यैवं स्याद्ब्राह्मणेनस्वोढायां ब्राह्मण्यां * जनितःपुत्रोब्राह्मणोभवति ॥ ७ ॥ क्षत्रिय कन्यायाँ क्षकन्यायामन्यं * ब्राह्मणेनोढापत्यांसहैकाली * भूताब्राह्मणीभवति ॥८॥ तस्यां ब्राह्मण्यांतेनब्राह्मणेन* जनितःपुत्रोब्राह्मण*एवभवतिमतु सवर्णाहीनः*स्यादेवं क्षत्रियस्यापि ॥ ९ ॥ एवमेवगसेनोक्तं स्वसंहितायां तद्यथा*असवर्णान्तुसवर्णायामन्यां वाकामतउद्वहेत् । तस्यामुत्पादितःपुत्रोनसवर्णात्प्रहीयते ॥१०॥ उद्वहेत् क्षत्रियांविप्रोवैश्यांचक्षत्रियोविशम। नतुशूद्रां द्विजःकश्चिन्नाधमःपूर्ववर्णजामिति ॥ ११ ॥ अत्रवाशब्दकाम शब्दाभ्यामय*मर्थोज्ञापितोभवति*पूर्वं जन्मतःसवर्णां *द्विजउद्वहेदूढायान्तु* सवर्णायामन्यां वोद्वहेत् ॥ १२ ॥ तर्हि किमसवर्णां पूर्वं नोद्वहे*दित्यतउक्तं काममिति* कामं यथास्यात्तथासवर्णां वा * पश्चात्पूर्वं वद्वहेत् ॥ १३ ॥ कस्मात्क्षतभावात्कथं *नक्षतिर्भवतीत्यत*उच्यते ॥१४॥ तस्यां जन्मतः*सवर्णायामन्यस्यां *स्वोढायां स्वेनोत्पा दितःपुत्रः*सवर्णान्नप्रहीयतेऽपितु*सवर्ण एवभवति ॥१५॥ मन्त्रेणद्विविवाहादनुलोमजा*स्वोत्सीभूतासवर्णाभूत्वास्व येनिर्भवतितस्यां स्वयोन्यां * स्वोत्पादितःसवर्णःस्यात् ॥ १६ ॥ कस्कस्यां कामनयोद्वहेदित्यत*उच्यते उद्वहे दित्यादि*विप्रःक्षत्रियांवैश्यांचोद्वहेत ॥ १७ ॥क्षत्रियोवैश्यामुद्वहे *न्नतुकश्चिद्द्विजःशूद्रां*मुद्वहेदधमस्सवर्णः*पूर्वं जांकन्यांनोद्वहेत् ॥ १८ ॥ तेनशूद्रोनवैश्यक्षत्रियविप्र*कन्याउद्वहेन्नवैश्यः* क्षत्रियब्राह्मणकन्ये*उद्वहेन्नक्षत्रियो ब्राह्मणकन्याम् ॥ इति ॥ १९ ॥ दारकर्म्मणिप्राशस्त्यं वच्यते *कश्चित्प्रमादीसवर्णां*उद्वहेतेतिजन्मतः * सवर्णां वदन्नवोचत् ॥ २० ॥ दारकर्म्मणीतिदारत्व * सम्पादके विवाहे इतितच्चकर्म्मकन्याग्रहणरूपमिति ॥ २१ ॥ मैथुनइतिस्त्रीपुरुषसाधारकर्म्मण्यग्न्याधाने पुत्रोत्पादने *चेतितद्व्याख्यानमसाधुश्चेयम् ॥ २२ ॥ सवर्णाग्रे द्विजा तीनां *प्रशस्तादारकर्म्मणीति*वच्यमाणेनपौनरुक्त्य * दोषापत्तेर्धीरैस्तद्धेयम ॥ २३ ॥ यद्यत्रसवर्णाशब्देन* ब्राह्मणस्यासवर्णास्त्रियो*ब्राह्मणादिकन्याःक्षत्रिय*वैश्यकन्ये क्षत्रियस्य ॥ २४ ॥ वैश्यस्यैकावैश्यकन्येति * स्वी कृत्यपुनरिदं वदेत्*दारकर्म्मणीतिविवाहे *प्रशस्तेतियदुक्तं तत्र ॥ २५ ॥ विशेषेणोच्यते *सवर्णेतिब्राह्मणस्य* सवर्णाब्राह्मणकन्या * दारकर्म्मण्यग्रे प्रशस्ता ॥ २६ ॥ क्षत्रियस्यक्षत्रियकन्या * दारकर्म्मण्यग्रे प्रशस्ता* कामतस्तिच्छयाविवाहे* प्रवृत्तानां द्विजानामेव ॥ २७ ॥ इमावच्यमाणाःक्रमशोवराः * ब्राह्मणस्यक्षत्रियातद भावेवैश्याक्षत्रियस्यवैश्या ॥ २७ ॥ तर्हि चमैथुनइति*यद्व्याख्यातमग्न्याधान* इतितदग्न्याधानं ब्राह्मणस्यतु* क्रमशस्तिसृभिःसह्प्रसज्यते ॥१५पुत्रोत्पादनं चक्रमशएव* तिसृषुस्यान्नतुव्यतिक्रमेणेति*प्रसज्यते तस्मात्तद्व्याख्या नमसत् १६ तत्रजिज्ञासायमेवेदं *यायस्याद्विजस्यमाता* सामन्त्रैर्विवाहात्पति*गोत्रापतिसवर्णाचपतिसपिण्डाच स्यात् ॥ १९ ॥ उक्तं चकूर्मपुराणे "अप्रत्तानां पितुःस्त्रीणां सापिण्ड्यं साप्तपौरुषम् । प्रत्तानां भर्तृसापिण्ड्यं प्राहदेवः प्रजापतिःइति ॥ २० ॥ तेममातुःसपिण्डास्तिस्रः * पितामह्यादयस्तिस्रश्च * पुत्रवध्वादयः ॥ २१ ॥ ताःसर्वाः पितुःसगोत्रा*स्तासामनूढाःकन्याश्च * पितुःसगोत्राःव्यस्तेन*वृथाभातुःसपिण्डावर्जनमिति ॥ २२ ॥ अनूढाश्च पितृस्वसा*पितामह*स्वसाप्रपितामह*स्वसाचेतितिस्रएवं *स्वसाभ्रातुःकन्यापौत्रीप्रपौत्रीच॥२३सर्वाएताःपितुः सगोत्राभवन्तिवृथाभातुःसपिण्डायाः*विवाहे वर्जनमिति ॥२४॥तत्रोच्यते पितुःसगोत्रावर्जना*तासां वर्जने सि द्वे यन्मातुःसपिण्डावर्जनं *तत्प्राङ्मातुर्विवाहादितिज्ञापितं ॥ २५॥ आचार्याणामियं रीति*र्यद्यदावश्यकध र्मेण*नविशेषज्ञापनं भवेत् ॥ २६ ॥ तत्रपौर्वापर्यावश्यकधर्म्मेनैव*विशेषं विज्ञापयति*यथाचुर्वेदे चरकसंहितायां*

मातुलगोत्रैर्यथाध्याये ॥ २७ ॥ अतुल्यगोत्रस्य रजः पयान्ते रक्तो विसृष्टं मिथुनीकृतस्य । किं स्याच्चतुष्यात्प्रभवं च
षड्भागीयत्स्त्रीषु गभलक्षणैतिपुंसः ॥ इति ॥ २८ ॥ अतस्त्रीषु इति पत्नीषु* अतुल्यगोत्रस्य पुंस *इत्यर्थं स्तूपपन्नो*
मन्त्रैर्हि विवाहे पत्नी*पतिसगोत्राभवति ॥ २९ ॥ तत्पौष्णोर्द्धस्थिकात्तद्वाहधर्म्मे*मातुलगोत्रस्येतिज्ञापनम् ३०
एवमस्मिन्स्मृतिशास्त्रे पि विष्णुना* स्वसंहितायामप्युक्तं ॥ ३१ ॥ बहुभार्य्याश्चमिश्राश्चसमान*वर्णा याकनिष्ठयापि
सहधर्मकार्यं कुर्यात् ॥ ३२ ॥ समानवर्णाभा * वेत्वनन्तरये * वापद्यपिचनत्वेवद्विजःशूद्रया ॥ ३३ ॥ इति ॥ अत्र
मन्त्रैर्विवाहेतु *सवर्णासवर्णा कन्या*पतिवर्णासतीसवर्णाभवति ३४ तत्र गौर्वस्थिकवर्णोपदेशेन*विशेषज्ञापनं
नस्यात्*तदर्थं मनुरावस्थिकसावर्ण्य * धर्म्मज्ञापनमिति ॥ ३५ ॥ तथैवात्र मातुः विवाहात्पूर्व्वी*वस्थयैवावि
ज्ञापनं *मातुर्विवाहात्पूर्व्वं यायासपिण्डा* कन्यासासाविवाहे वर्ज्या ॥ ३६ ॥ स्वयमेवचाह तेच*सपिण्डता
तु पुरुषेसप्तमे विनिवर्त्तते ॥ इति ॥ ३७ ॥ त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थःसम्प्रदातैषां प
ञ्चमोनोपपद्यते । इतिच । ३८ ॥ अत्रिपराशराभ्यां च*प्रसिद्धत्वादेकविध*वचनं चात्राभिहितम् ॥ ३९ ॥ सपिण्डता
तु सर्व्वेषां गोत्रजे साप्तपौरुषी । पिण्डाश्चोदकदानं चशौचाशौचं धनानुगम ॥ ४० ॥ दायादिच्छेदमाप्नोति पञ्चमो
व्यात्मवंशजः । प्राप्नोतिसूतकं गोत्रे चतुर्थं पुरुषोपुमान् ॥ ४१ ॥ चतुर्थे दशरात्रं स्यात्* षण्णिशाःपुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिःसप्तमे तु दिनत्रयम् ॥ ४२ ॥ तथाचमातुलोद्भ*प्रमातामहस्यचतुर्थः * स्तदादीनां त्रयाणां
पिण्डदएवं*मातुलादीनां त्रयाणां * पिण्डदस्तस्यप्रपौत्रः ॥ ४३ ॥ वेदेत्रिपिण्डाधिकपिण्डदान * विधानाभावात्
पञ्चमः*पिण्डदोनोपपद्यते ॥ ४४ ॥ तस्मात्पञ्चमःपुरुषः* प्रथमपुरुषस्यैव*दायादिच्छेदमाप्नोति*नद्वितीयादि
पुरुषस्य ॥ ४५ ॥ पूर्व्वपूर्व्वैकैकपुरुषत्यागा*दुत्तरोत्तरैकैकपुरुषस्यहि*धारावाहिपिण्डदत्वं ॥ ४६ ॥ तथाच
सप्तमःपुरुषोयेषां*त्रयाणांपिण्डान्नददाति*तेषांमपिण्डःपूर्णाशौचभागीच * दायहरश्चभवति ॥ पञ्चमोनपिण्ड
दायी*नचपूर्णाशौचभागी*नापिदायहरःस्यात् ॥ ४८ ॥ चतुर्थस्तुयेषां त्रयाणां पिण्डान् * ददातितत्पिण्डले
पं *स्ततऊर्द्धास्त्रयोभुञ्जते ॥ ४९ ॥ तेनसप्तमस्यापिण्डलेपभोजित्वसम्बन्धःसाप्तपौरुष* स्तत्रयःप्रथमश्चतुर्थपुरु
ष*स्तस्योर्द्धाधस्त्रिभिस्त्रिभिःसापिण्ड्यम ।५०। इत्येवंसपिण्डतातु*गोत्रजे सप्तमे वर्त्तते*चतुर्थादिपुरुषाणां *नतू
र्द्धानां त्रयाणाम ॥ तथाचपूर्व्वपूर्व्वैकैकपुरुष * त्यागादुत्तरोत्तरैकैकपुरुष*ग्रहणाद्धाराग्राहिसापिण्ड्यं पिण्ड
दायिमञ्चलर्थस्यसाप्तपौरुषम् । ५२ । मार्कण्डेयपुराणोचोक्तं यथा*सपिण्डीकरणादूर्द्ध्वं पितुर्यःप्रपितामहः ।
सलेपभाजितां यातिप्रलुप्तःपितृपिण्डतः । ५३ । तेषामन्यश्चतुर्थोयःपिण्डलेपभुजोनुभूक् । सोपिसम्बन्धतोनू
नत्सम्भोगंप्रपद्यते । ५४ । पितापितामहश्चैवतथैवप्रपितामहः । पिण्डसम्बन्धिनोह्येते विज्ञेयाःपुरुषास्त्रयः
। ५५। लेपसम्बन्धिनश्चान्ये पितामहपितामहात् । प्रभृत्युर्द्धास्त्रयस्तेषां यजमानस्सप्तमः । ५६ । इत्येषमुनिभिः
प्रोक्तःसम्बन्धःसाप्तपौरुषः । ततश्चसप्तमादूर्द्ध्वमनुलेपभुजस्तथा । ५७ । इति । एवमत्स्यपुराणेपिप्रोक्तं *लेप
भुजश्चतुर्थाद्याःपित्राद्याःपिण्डभागिनः । पिण्डदःसप्तमस्तेषां सम्बन्धःसाप्तपौरुषः । इति । ५८ । मार्कण्डेय
पुराणस्थं दृष्ट्वा*प्रमादीसापिण्ड्यंसाप्तपौरुष*मितिपठतितदसत्*पञ्चमे पिण्डदत्वाभावात् । ५९ । चतुर्थस्यापिसा
प्तपौरुषं *सापिण्ड्यःत्रिभिरूर्द्ध्वैस्त्रिभिरधस्त्वात् * इत्येवं व्याख्यानमविद्वान्प्रमादी * षडूर्द्ध्वाःषडधस्तादितिव्या
चष्टे ।६०। तदसाधुत्रयोदशपौरुषेय*प्रसङ्गात्सापिण्ड्यस्येति ।६१। यथाचप्राङ्मातुर्विवाहात्मातरूर्द्धा*स्त्रयो

यथा ॥ १८ ॥ सप्तपौनर्भवाः कन्यावर्जनीयाविशेषतः। वाचादत्तामनोदत्ता कृतकौतुकमङ्गला ॥ १९ ॥ उदकस्पर्शितायाचया चपाणिगृहीतिका। अग्निंपरिगतायाच पुनर्भूः प्रभवाचया ॥ २० ॥ इत्येताःसप्त चेदूढादहन्तिकुलमग्निवत्। वार्हस्पत्ये च यथोक्तं * एकोदरप्रसूतानामेकस्मिन्नपिवासरे। विवाहोनैवकर्त्तव्यो गर्गस्यवचनंयथा। इति। एकोदरप्रसूतानांभगिनीनां भ्रातृणांच। मत्स्यसूक्ते यथोक्तं। एकस्मिन्दिवसेचैवसोदराणां तथैवच। युगमौद्वाहिकंवर्ज्यं कन्यादानद्वयंतथा ॥ २२ ॥ इति ॥ अन्यत्रि वत्सरदर्शनात्पूर्व्वं * वचनेवांसरस्थाने * वत्सरपाठोनसाधुः। इति ॥ २३॥ ॥ ११ ॥ नचदारकर्म्मणि मैथुनेचक्रिं *सर्व्वैवसवर्णाभार्य्याप्रशस्तास्या*दित्याशङ्कायामनूद्यतेतदर्थः ॥ १ ॥ सवर्णाग्रे द्विजातीनां* मित्यादिश्लोकेवाक्यम् ॥ १२ ॥

**सवर्णाग्रे द्विजातीनांप्रशस्तादारकर्म्मणि। कामतस्तुप्रवृत्तानामिमाःस्युःक्रमशोवराः ॥ १२॥**

त्रिधासवर्णापुंसांनारीभवति * जन्मतःसवर्णाग्रमन्त्रेण * विवाहाद्वाउभयतश्च ॥ १ ॥ तत्रद्विजातीनां ब्राह्मणक्षत्रिय * वैश्यानांसवर्णानांभार्य्याणांया*स्वप्रथमंविवाहाज्जन्मतःसवर्णा ॥ २ ॥ साप्रथमंविवाहेनप्रथमकुले*जाताजेष्ठास्यात्पश्चाद्वा*विवाहेनकनिष्ठास्यात् ॥ ३ ॥ सैवदारकर्म्मणिपञ्चयज्ञादि * सदारकर्म्मणिप्रशस्ताभवति*नत्वन्यायाउविवाहेसवर्णास्यात् ॥ ४ ॥ मैथुनेतुसर्व्वाएव*प्रशस्ताःस्युरुक्तंहियाज्ञिकैः*तस्यासुतत्पादितःपुत्रो*नसवर्णात्प्रहीयते। इति। ४। तथाचब्राह्मणस्यब्राह्मणकन्या*बह्वीस्वभार्य्यास्ताखग्रे*विवाहाद्वाउभयतोया*सवर्णासादारकर्म्मणिप्रशस्ता ॥ ५ ॥ एवंक्षत्रियस्यापिविवाहाज्ज्येष्ठा* क्षत्रियदुहिताभार्य्या*वैश्यस्यापिविवाहाज्ज्येष्ठावैश्य*कन्याभार्य्याप्रशस्तास्यात् ॥ ६ ॥ एतावयःकनिष्ठाश्च*पाग्रेविवाहात्प्रथम*कुलेजाताज्येष्ठाएव ॥ ७॥ पश्चाद्विवाहेनप्रथमकुले*जातात्रयोज्येष्ठापिसा*कनिष्ठैवाभिधीयते॥८॥तेनसवर्णास्वबह्वीषुपत्नीषु*ज्येष्ठैवदारकर्म्मणि*प्रशस्तासवर्णाजासवर्णाजाउ*बह्वीषुपत्नीषुमध्ये ॥ ९ ॥ सवर्णजाकनिष्ठापि*दारकर्म्मणिप्रशस्ता*स्यादितिपर्य्यवसितम् ॥ १० ॥ कामतस्त्वितितुशब्दोभिन्नक्रमे * तेनकामतइतीच्छयाकृत*सवर्णानुलोमानेकदाराणाम् ॥ ११ ॥ द्विजातीनांदारकर्म्मणिधर्म्मार्थं* सदारकर्म्मकरणेप्रवृत्तानां*मिमाअन्यामाणायायायस्यभार्य्या। १२। तासांमध्येक्रमशो *यायावरासासातस्य*दारकर्म्मणिप्रशस्ता ॥ १३ ॥ पूर्व्वाखलुवरावर्ज्या*द्वितीयादिस्तुक्रमशः*श्रेष्ठाभवन्तितद्यथा ॥ १४ ॥ वैश्यस्यशूद्रामपेक्ष्यवैश्यकन्या * वरास्तेनवैश्यस्यदारकर्म्मणि * वैश्यैवभार्य्या प्रशस्ता * नतुशूद्राभार्य्यावरा ॥ १४ ॥ क्षत्रियस्यवैश्याकन्या * भार्य्याशूद्रामपेक्ष्यवरातदपेक्षा * क्षत्रियकन्याभार्य्या वरेतिक्रमात् * सासादारकर्म्मणि प्रशस्तोक्ता ॥ १५ ॥ ब्राह्मणस्य शूद्रापेक्षा * वैश्यकन्याभार्य्यावरा * तदपेक्षाक्षत्रियकन्या * तदपेक्षाब्राह्मणकन्या * वरेतिक्रमाद्दारकर्म्मणि प्रशस्ता ॥ १६ ॥ अपिच सर्व्वासामनुलोमजा * क्रमशोदारकर्म्मणि प्रशस्तइतयपितुशब्देनोक्तम् ॥ १७ ॥ विष्णुनाच * भगवता * स्वसंहितायां * मिदमुक्तं ॥ १८ ॥ सवर्णासुबहुभार्य्यासु * विद्यमानासुज्येष्ठयासह * धर्म्मंकार्य्यं कुर्य्यात् ॥ १९ ॥ मिश्रासुच कनिष्ठयापिसमान * वर्णयायसमानवर्णाभावेत्व * नन्तरयैवापदिच * नत्वेवद्विजःशूद्रया ॥ १० ॥ इति ॥ व्यासेनाप्युक्तंतद्यथा*। नानावर्णासुभार्य्यासु सवर्णासहचारिणी। धर्म्म्या

धर्म्म्याश्च धर्म्मिष्ठा जातास्स्वजातिषु ॥ २१ ॥ मैथुने सवर्णासवर्णा द्विज* दुहितृषु भार्यास्वत्*पुत्रोत्पादने तुल्यत्वं *पितृवर्णत्वाच्चाषां पुत्राणामिति ॥ २२ ॥ २१ ॥ नन्वकाकस्य भार्या इत्यत आह*शूद्रैव शूद्रस्ये त्यादि ॥ १ ॥

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते। ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ १३ ॥

शूद्रैव शूद्रस्य भार्या इत्संज्ञा स्यात्*सा च स्वा चेति द्वे शूद्रा वैश्या तु* वैश्यस्य भार्या इत्संज्ञिके भवतः ॥ १ ॥ ते च स्वा चेति ते शूद्रा वैश्ये *स्वा चेति क्षत्रियेत्येव*शूद्रा वैश्या क्षत्रियास्तिस्रो* राज्ञो भार्या इत्संज्ञास्युः॥२॥ ताश्च स्वा ब्राह्मणी चेति चतस्रो*ब्राह्मणस्य भार्या इत्संज्ञास्युः ॥ ३ ॥ १३ ॥ ननु तर्हि शूद्राभार्या*विवाह्या द्विजानां कथं *नोक्ता इत्यत आह*न ब्राह्मणे त्यादि श्लोकं ॥ ३ ॥ १

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥१४॥

आपद्यपि तिष्ठतोरेव ब्राह्मण*क्षत्रिययोः कस्मिंश्चिदपि वृत्तान्ते *धर्म्मकर्म्मणि मैथुनेवा न शूद्रा*भार्योपदिश्यते केनापि॥१ तद्यथा विष्णुनोक्तं हि*अथ ब्राह्मणस्य वर्णानुक्रमेण*चतस्रो भार्या भवन्ति तिस्रः क्षत्रियस्य द्वे *वैश्यस्यैका शूद्रस्य॥२ द्विजस्य भार्या शूद्रा तु धर्म्मार्थे न भवेत् क्वचित्। रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता ॥ ३ ॥ हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ ४ ॥ दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ५ ॥ याज्ञवल्क्येनाप्युक्तं तत्*यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः। न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ ६ ॥ तिस्रो वर्णानुपूर्व्व्येण द्वे तथैका यथाक्रमम्। ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥ ७ ॥ इति ॥ व्यासेनोक्तञ्च। न तु शूद्रां द्विजः कश्चिन्नाधमः पूर्व्ववर्णजाम् ॥

इति ॥ ८ ॥ १४ ॥ ननु किमर्थं ब्राह्मण * क्षत्रिययोः शूद्राभार्या नोपदिश्यते तर्हि किं * वैश्यस्योपदिश्यते इ *त्यत आह हीने त्यादि ॥ १ ॥ १५ ॥

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥१५॥

द्विजातयो ब्राह्मणक्षत्रियवैश्याः*हीनजातेः शूद्रस्य स्त्रीं *मोहात्सौन्दर्य्यादिगुणै* श्चित्तवैकल्यादुद्वहन्तः* ससन्तानानि कुलानि ॥ १ ॥ आशु शूद्रतां नयन्ति*तस्माद्द्विजातीनां शूद्रा*भार्या नोपदिश्यत इति ॥ २ ॥ प्रमादिनोऽपाच्यवते सवर्णाम*परिणीय हीनजा*तिस्त्रियं शूद्रां परिणयन्त इति। ३। तन्न सवर्णापरिणयाद्उत्तरं*तद्दनाविधिमात्रैः ॥ ४ ॥ १५ ॥ नन्वाशु शूद्रतां नयन्तीति यदुक्तं * कतिकालेनेत्यत आह * शूद्रावेदी पतती त्यादि ॥ १ ॥ १६ ॥

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ १६ ॥

शूद्रामविन्दद्यः स शूद्रावेदी* शूद्रावेदनमात्रमेव*अत्रेर्मते द्विजः पतति ॥ १ ॥ शौनकस्योतथ्यस्य मते*

पुत्रोत्पत्त्यापतति*भगोम ते पौत्रापत्यत्वात् पतति ॥ २ ॥ महनायदेतत्परमतत्त्वय * मप्रतिषेध्यात्वमतं*तदभिप्रायभेदेन*यथार्थमितिकल्प्यं ॥ ३ ॥ तत्रायमत्रे रभिप्रायो* द्विजकन्यामनूढ्वा*शूद्रावेदी शूद्रावेद*समात्रमेव पतति ॥ ४ ॥ शौनकस्त्वाह द्विजःसवर्णां साध्वीं*अनूढ्वा शूद्रावेदी सुतोत्पत्त्यात् *पततिन वेदनमात्रं ॥ ५ ॥ भृगुस्त्वाह सवर्णं तत्त्रीमजीवे *अनूढ्वान्ते शूद्रावेदी*पौत्रोत्पत्त्यापततीति ॥ ६ ॥ १६ ॥ नवत पां ततः किं पापं भवतीत्यतआह शूद्रामित्यादि १ ॥ १७ ॥

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम। जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥१७॥

शूद्रां शयनमारोप्य*ब्राह्मणोऽधोगतिं याति*तस्यां शूद्रायां स्त्रोढायां *सुतं जनयित्वा ब्राह्मण्यादेव हीयते ॥ १ ॥ अत्रापिप्रमादीत्याचष्टे*सवर्णामपरिणीयेति*तच्चासाधुसवर्णापरिणया*दुत्तरं शूद्रापरिणयापत्तेः ॥२ ॥ ॥ १७ ॥ अपरश्चदोषमाह दैवेत्यादि ॥ १८ ॥

दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु। नाश्नन्ति पितृदेवास्तन्न च स्वर्गं स गच्छति ॥ १८ ॥

दैवं कर्म पित्र्यं कर्मातिथेयञ्च*कर्म तद्दैवपित्र्यातिथेयकर्म* यस्य शूद्रावेदिनो देवाः * पितरश्चतन्नाश्नन्ति ॥ १ ॥ १८ ॥ नन्वेषां कोनिष्कृतिर्भवतीत्यतआह वृषलीत्यादि ॥ १ ॥ १९ ॥

वृषलीफेनपीतस्य निःश्वासोपहतस्य च। तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ १९ ॥

वृषलीमुखस्य फेनं *चुम्बनादिना पिबत*स्तस्या निःश्वासोपहतस्य*तस्यां पुत्रोत्पादकस्य* निष्कृतिर्न विधीयते ॥ १ ॥ १९ ॥ ननूढ्वैतद्द्विजो भार्यामित्यादिभिर्द्विजानां पुंसां*विवाहउक्तःशूद्रैव*भार्येत्यशूद्रस्येत्यनेन शूद्रस्योक्तः ॥ १ ॥ स्त्रीणां विवाहास्तु तेषां * चतुर्णां वर्णानां कथं * स्यादित्यतआह चतुर्णामित्यादि ॥ २ ॥ २० ॥

चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥१०॥

वर्णानां चतुर्णामपि*प्रेत्य च इहलोके हितानहिता* नपि स्त्रीणामष्टौ विवाहान्*समासेन निबोधत ॥ १ ॥ अत्रापिकश्चित्प्रमादी*व्याचष्टे स्त्रीविवाहानिति*भार्याप्राप्तिहेतून्विवाहान्शृणुतेति ॥ २॥तदसत् किं हि येस्त्रीलाभ*हेतवउपायास्ते पतिलाभहेतवो न भवन्ति ॥ ३ ॥ पुंसां स्त्रीलाभेन हि स्त्रीणाञ्च पति*लाभो भवति व्यर्थं च स्त्रीपदोपादनं विवाहो*ह्यन्योन्यापेक्षः स्त्रीपुंसयोः ॥ ४ ॥ २ ॥ तानष्टौ विवाहान्निर्दिशति ब्राह्म*इत्यादि न श्लोकेन ॥ १ ॥ २१ ॥

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ २१ ॥

स्पष्टार्थोऽयं श्लोकः ॥२१॥ नन्वष्टधास्त्रीविवाहे *किं*विशेषोस्तिनवेत्यत*आह्योयस्येत्यादि ॥ १ ॥ २२ ॥

योयस्यधर्म्मोवर्णस्ययगुणदोषौचयस्ययौ। तद्वःसर्व्वंप्रवक्ष्यामिप्रसवेचगुणागुणान् ॥ २२ ॥

स्पष्टार्थोऽयं ॥ २२ ॥ तत्रादौब्राह्मणादिषुयं४*स्त्रीविवाहोधर्म्म्यःस्यात्*चातत्सडानुपूर्व्येत्यादि ॥ १ ॥ २३ ॥

षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोऽवरान्। विट्शूद्रयोस्तुतानेवविद्याद्धर्म्म्यानराक्षसान् ॥२३

विप्रस्यपुंसआनुपूर्व्या*ब्राह्मादिषट्प्राजापत्य*वरगान्धर्व्वादयः तानुष*स्त्रीविवाहानधर्म्म्यानवविद्यात् ॥ १॥ क्षत्रस्यावरानासुरगान्धर्व्व*राक्षसपैशाचानिति*चतुरःस्त्रीविवाहान्धर्म्म्यानविद्यात् ॥ २ ॥ विट्शूद्रयोस्तुराक्षसान्वासुरगान्धर्व्व*पैशाचान्विवाहानधर्म्म्यान्विद्यादिति ॥ ३ ॥ २३॥ तत्रप्रशस्ताप्रशस्तभावानाह* चतुरोब्राह्मणस्येत्यादि ॥ १ ॥

चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः। राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥ २४ ॥

तत्राद्यान्चतुरोब्राह्मार्षदैव*प्राजापत्यान्स्त्रीविवाहान्*ब्राह्मणस्यप्रशस्तान्कवयोविदुः*चप्रशस्तौसावासुरान्त्यौ २ क्षत्रियस्यराक्षसमेकं*स्त्रीविवाहंप्रशस्तंविदुः*रासुरगान्धर्व्वपैशाचान्*पुनरप्रशस्तान्विदुः ॥ ३ ॥ वैश्यशूद्रयो आसुर*मेकंस्त्रीविवाहंप्रशस्तंकवयो*विदुर्गान्धर्व्वपैशाचौ*पुनरप्रशस्तौविदुः ॥ ४ ॥ ॥ २४ ॥ तर्हिकिमप्रशस्तान्स्त्री * विवाहान्नकुर्य्यात्किमर्थं * तेषां चविधानमुक्त* मित्यतआहपञ्चानामित्यादि ॥ १ ॥ २५॥

पञ्चानान्तुत्रयोधर्म्म्याद्वावधर्म्म्यौस्मृताविह। पैशाचश्चासुरश्चैवनकर्त्तव्यौकदाचन ॥ २५॥

पञ्चानांप्राजापत्यासुरगान्धर्व्व*राक्षसपैशाचानान्तु*मध्येत्रयःस्त्रीविवाहाः* प्राजापत्यगान्धर्व्व*राक्षसाधर्म्म्या उक्ताः ॥ १ ॥ तत्रब्राह्मणस्यप्राजापत्यः*प्रशस्तोधर्म्मोगान्धर्व्व * स्त्वप्रशस्तोधर्म्म्यएव *क्षत्रियधर्म्मोऽयं ब्राह्मणस्य राक्षसःप्रशस्तोधर्म्म्यः ॥ २ ॥ द्वौचाधर्म्मौब्राह्मणस्य * प्रशस्तोधर्म्म्यावप्यासुरौ*नकर्त्तव्यौपैशाचश्चविहितत्वाद कर्त्तव्यएव ॥ ३ ॥ २५ ॥ क्षत्रियस्यविहितेषु * चतुर्ष्वासुरादिषुतु * कार्य्याकार्य्यविवाहानाह * पृथक्पृथगि त्यादि ॥ १ ॥ २६ ॥

पृथक्पृथग्वामिश्रौवाविवाहौपूर्व्वचोदितौ। गान्धर्व्वोराक्षसश्चैवधर्म्म्यौक्षत्रस्यतौस्मृतौ॥२६

यौगान्धर्व्वराक्षसौद्वौ * विवाहौक्षत्रियस्यतु * चोदितौतौपृथक्पृथग्वामिश्रौवा। १। पूर्व्वंगान्धर्व्वस्य*परिणेयराक्षसेनधर्म्म्यौक्तौ*पैशाचासुरौनधर्म्म्यौ ॥ १ ॥ वैश्यशूद्रयोस्तुपूर्व्व*मेवोक्ताराक्षसवर्ज्जं * त्रयःस्त्रीविवाहा आसुरगान्धर्व्व * पैशाचास्तत्रत्वासुरो* धर्म्म्यःशेषौत्वधर्म्म्यौ ॥ २ ॥ २६ ॥ ननूक्ताधर्म्माधर्म्म्याविवाहास्ते च * ब्राह्मादयःकिंलक्षणा*इत्यतआहाच्छाद्येत्यादि ॥ १ ॥ २७ ॥

आच्छाद्यचार्च्चयित्वाचश्रुतशीलवतेस्वयम्। आहूयदानंकन्यायाब्राह्मोधर्म्मःप्रकीर्त्तितः॥२७

कन्यायादाता पित्रादिना कन्या वस्त्रालङ्कारैः राभ्च्य * दत्त्वा अर्चयित्वा च श्रुतशील * वन्तं वरं स्वयमाहूय ॥ १ ॥ अर्च यित्वा तस्मै श्रुत* शीलवते कन्याया * दानं तत्कन्याया ब्राह्मो * धर्मो विवाहः प्रकीर्त्तितः ॥ २ ॥ एषकन्याया एव विवाहो मत * कन्यावरयोरुभयो* र्विवाहः कन्याया दानम् । ३ । वरस्यापि विवाहस्तु * दीयमानकन्याग्रहणा दिरूप * पत्नीगमनान्ता क्रिया । ४ । स्वतन्त्रः कर्त्ता धात्वर्थ * फलानुकूल स्वातन्त्र्या * व्यापारवानुच्यते ॥ ५ ॥ कन्यागतवरस्वत्वा * नुकूल स्वातन्त्र्य व्यापारवान् कन्या * दाने कर्त्ता पित्रादिः न * विवाह क्रियायां कर्त्ता ॥ ६ ॥ कन्याया विवाहो हि दातुः * स्वकर्त्तृकस्वत्वत्यागादि व्यापार * सहितवरस्वत्वोत्पादनं दानं * तादृशदानाश्रित्व त्वात्* स्वीकारादिमान् दाता ॥ ७ ॥ ततः कथं दातु र्विवाहापत्तिः स्या * दत्रत्वे याकरणः * प्रमादोत्पादवा चक्ले ॥८॥ दातुर्विवाहोपि त्ते दीयते यस्मै * स्वत्वाय तद्दानं कन्यापि ग्रहणमिति ॥ ९ ॥ एतत्प्रमादि वचनं * यत्प्रोदर्या वाच्यत्वप्रत्ययं च * विदधाति कतालुरटो* वकुलमितिसूत्रेण ॥१०॥ उद्वहेत द्विजो भार्यामित्यत्रैतत्* सर्वं विस्तरेण व्याख्यातं ॥ ११ ॥ २७ ॥

**यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते। अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते ॥ २८ ॥**

यज्ञे त्वित्यादि ॥ २८ ॥ कर्म्म कुर्व्वते ऋत्विजे * सुतादानं तस्माद्दैवं * धर्म्मं विवाहं प्रचक्षते * नत्वन्यस्यैदान मिति ॥ १ ॥ २८ ॥

**एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः। कन्याप्रदानं विधिवदार्षो धर्म्मः स उच्यते ॥ २९ ॥**

एकमित्यादि ॥ २९ ॥ एकं गोमिथुनं स्त्रीगवीपुङ्गव * श्चेति द्वयं द्वे वा गोमिथुने द्वौत * पुङ्गवौ द्वे स्त्रीगव्यौ चे * ति चतुर्गव मेवेति ॥ १ ॥ २९ ॥ क्रमिकत्वात्प्राजापत्यं * स्त्रीविवाहं लक्षयति * सहोभावितादि श्लोकम् ॥ १ ॥ ३० ॥

**सहोभौ चरतां धर्म्ममिति वाचानुभाष्य च। कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥३०॥**

कन्यादाता वरमभ्यर्च्य तस्मै *कन्यां दत्त्वा भवन्तावुभौ धर्म्मं *सहचरतामित्यनुभाष्य च ॥ १ ॥ कन्यादानं प्राजा पत्यो*विधिः स्मृतो*महर्षिभिः ॥ २ ॥ ३० ॥

**ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते ॥ ३१**

ज्ञातिभ्य इत्यादि ॥ ३१ ॥ कन्यादाता ज्ञातिभ्यो यथा*शक्तितः कन्यायै च द्रविणं धनं *दत्त्वा वराय स्वाच्छन्द्यात् स्वेच्छया ॥ १ ॥ कन्यादान*मासुरो धर्म्मः*स्त्रीविवाह*एवोच्यते ॥ २ ॥ ३१ ॥

**इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्व्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥ ३२ ॥**

इच्छये तादि ॥ ३१ ॥ कन्यायाश्चवरस्यचे*च्छामयोरिच्छया वय*स्सम्बन्धो मैथुनसाध्यो गान्धर्वो*धर्म्मः*कामसम्भवोविज्ञेयः ॥ १ ॥ ३२ ॥

हत्वाछित्वाचभित्वाचक्रोशन्तीं रुदतीं गृहात् । प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ ३३

हत्वे त्यादि ॥ ३३ ॥ स्वाभीष्टांकन्यां हत्वाछित्वाच*भित्वाच* क्रोशन्तीश्च न दन्ती रुदतीं च स्वगृहादिति च्छे नि ब्बलप्रसह्य ॥ १ ॥ वरेणकन्याहरणं*राक्षसोविधिर्नामस्त्री*विवाहोबुधैरुच्यते ॥ २ ॥ ३३ ॥

सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति । सपापिष्ठोविवाहानांपैशाचश्चाष्टमोऽधमः ॥ ३४

सुप्तामित्यादि ॥ ३४ ॥ सुप्तां कन्यामथवामत्तांमद्यादि*पानादिनाप्रमत्तां वा*प्रमादेनस्खलितां यत्र*पुरुषउपगच्छति ॥ १ ॥ एतेनअष्टमेनधनस्तस्या*विवाहःपैशाचोनाम*धर्म्मोविवाहानां मध्ये*पापिष्ठोऽधमश्चाष्टमः ॥ २ ॥ कन्यादाताचोक्तोविष्णुना*पितापितामहोभ्राता * सकुल्योमातामहोमाता * चेतिकन्याप्रदाःपूर्व्वाभावे*प्रकृतिस्थःपरःपरः । इति ॥ ३ ॥ याज्ञवल्क्येनाप्युक्तं*पितापितामहोभ्रातासकुल्योजननीतथा । कन्याप्रदःपूर्व्वनाशेप्रकृतिस्थःपरःपरः । इति ॥ ४ ॥ ३४ ॥ नन्वकथं कन्या प्रदद्या*दितात्याहाद्भिरित्यादि ॥ ३५ ॥

अद्भिरेवद्विजाग्र्याणांकन्यादानंविशिष्यते । इतरेषान्तुवर्णानामितरेतरकामयया ॥ ३५ ॥

द्विजाग्र्याणांब्राह्मणानां*कन्यादानमद्भिरेव*जलं सङ्कल्पं गृहीत्वा* तुभ्यमेतां कन्यां दास्या * मीत्युदकस्पर्शनकन्या*दानं विशिष्यते शास्त्रे ॥ १ ॥ इतरेषां क्षत्रियादीनां *वर्णानामितरेतरकामयया * कन्यादानं विधीयते ॥ २ ॥ ३५ ॥ अथयस्यविवाहस्य*योगुणदोषोप्रोतत्वाह * योयस्यैषामित्यादि ।१।।३६।

योयस्यैषांविवाहानांमनुनाकीर्त्तितोगुणः । सर्व्वं शृणुतत विप्राःसम्यक्कीर्त्तयतोमम ॥ ३६

स्पष्टार्थोऽयं श्लोकोश्च यः॥ १ ॥ ३६ ॥

दशपूर्व्वान्परान्वंश्यानात्मानंचैकविंशकम् । ब्राह्मीपुत्रःसुकृतकृन्मोचयतेएनसःपितॄन् ॥ ३७

तद्यथादशेत्यादि ॥ ३७ ॥ ब्राह्मीपुत्रोब्राह्मधर्म्मेणोढायां जातःपुत्रःसुकृतकृद्भवतीति ॥ १ ॥ सस्माात् पूर्व्वान्वंश्यान्दश*परान्दशेतिविंशति *पितॄनात्मानञ्चैकविंश *मेनसोमोचयतीति ॥ १ ॥ ३७॥

दैवोढाजःसुतश्चैवसप्तसप्तपरावरान् । आर्षोढाजःसुतस्त्रींस्त्रीन् षट् षट्कायोढाजःसुतः॥३८

दैवोढाजइत्यादि * परान्सप्तवंश्यान्सप्त * चावरान्वंश्यान्पुरुषान् * आर्षोढाजस्त्रीन्परास्त्री* नवरान्वंश्यान् कायोढाजः*प्राजापत्योढाजःस्तथा* षट् षडेनसोमोचयति ॥ १ ॥ ३८ ॥ एषां विधिप्रशंसात्मका* सामान्यगुणमाहब्राह्मा*दिष्वित्यादिश्लोको ॥ १ ॥ ३८ ॥

ब्राह्मादिषुविवाहेषुचतुर्ष्वेवानुपूर्व्वशः । ब्रह्मवर्च्चस्विनःपुत्राजायन्तेशिष्टसम्मताः ॥ ३९

ब्राह्मादैवार्षप्राजा*पत्येषुचतुर्षुब्रा*ह्मणानांविवाहेषु ॥ १ ॥ ३९ ॥

रूपसत्त्वगुणोपेताधनवन्तोयशस्विनः । पर्य्याप्तभोगाधर्म्मिष्ठाजीवन्तिचशतंसमाः ॥ ४० ॥

स्पष्टार्थोऽयं ॥ ४० ॥ गुणांतरमुक्त्वादोषामाह*इतरेषु*त्यादिश्लोकम् ॥ १ ॥ ४१ ॥

इतरेषुतुशिष्टेषुनृशंसाऽनृतवादिनः । जायन्तेदुर्विवाहेषुब्रह्मधर्म्मद्विषःसुताः ॥ ४१॥

ब्राह्मणानामितरेषुतु*गान्धर्व्वराक्षसासुरेषु*दुर्व्विवाहेषुब्रह्मधर्म्म*द्विषश्चतास्ताश्चजायन्ते ॥ १ ॥ शिष्टेषुप्रजनेषुच*नृशंसावादिनस्त्वानृत*वादिनश्चसुताजायन्ते ॥ २ ॥ ४१ ॥ क्षत्रियादीनांतथाविध * विवाहे*कीदृशोगुण*दोषोभवतइत्यत*आहानिन्दितैरित्यादि ॥ १ ॥ ४ ॥

अनिन्दितैःस्त्रीविवाहैरनिन्द्याभवतिप्रजा । निन्दितैर्निन्दितानॄणांतस्मान्निन्द्यान्विवर्जयेत ॥ ४२ ॥

अनिन्दितैःस्त्रीविवाहै* रितिक्षत्रियस्यगान्धर्व्वराक्षसौ * वैश्यशूद्रयोरासुरः ॥ १ ॥ एतैरनिन्दितैःस्त्रीविवाहै*रनिन्द्याप्रजाभवति ॥ २ ॥ नृणांक्षत्रियस्यासुर*पैशाचौवैश्यशूद्रयो * गान्धर्व्वपैशाचाविति *निन्दितैःस्त्रीविवाहै*र्निन्दिताप्रजाभवति ॥ ३ ॥ तस्माद्ब्राह्मणादिःसर्व्व* एववर्णोनिन्द्यांस्तान् * विवाहान्वर्ज्जयेत् ॥ ४ ॥ नन्वेषविवाहविधिः * किंसवर्णास्वथकिमसवर्णासु * सवर्णासवर्णास्विति ॥ ५ ॥ उत्तमेतेनैवद्विजानांसवर्णा * सवर्णासुद्विजासु*विवाहविधिरेषइति ॥ ६ ॥ ब्राह्मणायब्राह्मणःक्षत्रियोवैश्यो*ब्राह्म्यादिधर्म्मैःकन्यांदद्यात्*ब्राह्मणस्तेषांकन्यांन*पैशाचराक्षसासुरै*धर्म्मैर्गृह्णीयादिति ।७। क्षत्रियःक्षत्रियवैश्य*कन्याराक्षसगान्धर्व्वाभ्यांगृह्णीया * न्नासुरपैशाचाभ्यामिति ॥ ८ ॥ वैश्योवैश्यकन्यामासुरधर्म्मेण*गृह्णीयान्नगान्धर्व्व * राक्षसपैशाचैर्धर्म्मैरिति ॥ ९ ॥ एषतुप्रशस्त विवाहविधिः * रप्रशस्तस्तुब्राह्मण*स्यासुरधर्म्मेणराक्षसधर्म्मेणच ॥ १० ॥ क्षत्रियस्यासुरधर्म्मेण*वैश्यस्यगान्धर्व्वधर्म्मेण * शूद्रस्यचतेनसर्व्वेतो * ह्यप्रशस्तःपैशाचेनेति ॥ ११ ॥ ४२ ॥ ननुतर्हिकथंसवर्णामुद्वहेत्*कथञ्चासवर्णामित्यत*आहपाणिग्रहणेत्यादि ॥ १ ॥ ४२ ॥

पाणिग्रहणसंस्कारःसवर्णासूपदिश्यते । असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्म्मणि ॥ ४३ ॥

सवर्णासुकन्यासुपाणिग्रहण*संस्कारःकन्यावरयोः*परस्परंपाणिंगृह्णतोःसंस्कार *कार्यउपदिश्यते ।१॥ असवर्णासुतूद्वाहकर्म्मणि*वक्ष्यमाणोऽयंविधिर्ज्ञेयः ॥ २ ॥ ४३ ॥

शरःक्षत्रिययाग्राह्यःप्रतोदोवैश्यकन्यया । वसनस्यदशाग्राह्याशूद्रयोत्कृष्टवेदने ॥ ४४ ॥

तद्यथाग्रदूत्यादि ॥ ४४ ॥ ब्राह्मणेनोढ ब्राह्मण्या पाणौ * गृहीतया क्षत्रियया * शरो वाणोऽग्रा हीनतु * वरस्य पाणिग्राह्यः स्यात् ॥ १ ॥ ब्राह्मणेन क्षत्रियेण * वोढव्या न्याय्यपाणौ * गृहीतया वैश्या कन्यया प्रतोदः * परस्पर दण्डोपाह्यो * न वरस्य पाणिग्राह्यः ॥ २ ॥ ब्राह्मणेन क्षत्रियेण * वैश्येन वोढव्या मानया पाणौ गृहीतया शूद्र * कन्यया वरस्य वस * नस्य दशोपाह्या न वरस्य पाणिः ॥ ३ ॥ विष्णुनाप्येवमेवोक्तं *तासां सवर्णा विदने पाणिर्ग्राह्यो*ऽसवर्णा विदने शरः * क्षत्रियकन्यया प्रतोदो* वैश्यकन्यया वसन * दशान्तः शूद्रकन्यया ॥ इति ॥ ४ ॥ याज्ञवल्क्येनाप्युक्तं । पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रियाशरम् । वैश्या प्रतोदमादद्यात् वेदने त्वग्रजन्मनः । इति । ५ ॥ अग्रजन्मन इति पूर्व्वपूर्व्व जन्मवर्णस्य वरस्य * एवमेव सर्व्वे दर्णा *मुनिभिश्चोक्तं द्रष्टव्यम् ॥ ६ ॥ यच्चोक्तं नारदीयपुराणे * समुद्रयातुः स्वीकारः कमण्डलु विधारणम् । द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ ७ ॥ देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ ८ ॥ दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च । दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥ ९ ॥ महाप्रस्थानगमनं गोमेधश्च तथा मखः । इमान्धर्म्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ १० ॥ इति ॥ एवमप्यादित्यपुराणे यदुक्तं * दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः । देवरेण सुतोत्पत्तिर्दत्तकन्याप्रदानकम् ॥ ११ ॥ कन्यानामसवर्णानां विवाहश्च द्विजातिभिः । आततायिद्विजाग्र्याणां धर्म्मयुद्धेऽपि हिंसनम् ॥ १२ ॥ वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशतः । वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥ १२ ॥ प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकं । संसर्गदोषः पापेषु मधुपर्के पशोर्वधः ॥ १३ ॥ दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः । शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ॥ १४ ॥ भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः । ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च ॥ १५ ॥ भृग्वग्निमरणं चैव वृद्धादिमरणं तथा । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥ १७ ॥ निवर्त्तितानि कर्म्माणि व्यवस्थापूर्व्वकं बुधैः । समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ॥ १७ ॥ इति ॥ एतत्सर्व्वं यच्छास्त्रे विहितं तत्* प्रतिषेधस्तु मुनिभिः कलौ न्यूनत्वा*असमार्थदर्शनात्*कृतो न तु समर्थानां ॥ १८ ॥ श्रूयते हि भारते व्यासेनैव* प्रचोदितो धृतराष्ट्रो वानप्रस्थो*बभूव विधवा च कुन्ती*शूद्रश्च विदुर इति ॥ १९ ॥ युधिष्ठिरश्चाश्वमेधेनायजत्*जनमेजयश्च व्यासादीनामेव*व्यवस्थयाश्वमेध* जनमेजयेन व्यासः ॥ २० ॥ कलौ कश्चिदश्वमेधेन यक्ष्यति*नवेति पृष्टो व्यासः कलौ*गौतमवंशजः कश्चिदश्वमेधेन यक्ष्यति*कश्चिच्च राजसूयेनेति ॥ २० ॥ कलिधर्म्मवक्ता पराशरोऽपि* ब्रह्महत्याप्रायश्चित्तमुवाच*स्वसंहितायां तदपि दृश्यते ॥ २१ ॥ रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् । सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति । यजेत वाजिमेधेन राजा तु पृथिवीपतिः ॥ २२ ॥ महाप्रस्थानं च युधिष्ठिरः सह*भ्रातृभिः भार्यया च कृतवान् ॥ २३ ॥ इत्येवं समर्थस्यानतेषां प्रति*षेधस्तथा च सतां सवर्णानां च* विवाहप्रतिषेधपरोऽभिप्रायः ॥ २४ ॥ यस्तु क्रियावानग्निमान्वेदेऽधीती*कृतब्रह्मचर्य्यश्च*एवन्निर्व्वेदाग्निपञ्चयज्ञादि*हीनस्यासवर्णा स ॥ २५ ॥ कन्या नोढव्येति यौ तु न तु तौ*साग्निवेदौ सक्रियौ* तयोर्द्वयोरसवर्णयोः*पत्रकन्ययोर्विवाहः प्रतिषेध एव कृतः ॥ २६ ॥ न वा सवेदयोः सक्रिययोर्द्वयोः*स्वसमानसर्व्वगोऽसवर्णाविवाह* प्रतिषेधस्तैः कृत इति मन्तव्यम् ॥ २७ ॥ एवं चेन्मन्यते तदा*स्मृतिवक्तॄणां सर्व्वेषां*मतविरुद्धत्वात्पुराणवचन* मप्रमाणं व्यासवचनात् ॥ २८ ॥ श्रुतिस्मृतिपुराणानां विरोधो यत्र वर्त्तते । तत्र श्रौतं प्रमाणं स्यात् द्वयोर्द्वैधे स्मृतिर्वरा ॥ इति ॥ २९ ॥ विवाहार्थ

मोक्षमाप्नोति *कन्यां वर्जयेदित्युक्तं *तद् यथाप्रदर्श्यते ॥१०॥ मातुर्यस्यामन्वहं सा तत्प्रभृति मयापिवा। तस्मान्नैवाभवे तु कन्यामाप्नोति सोच्यते ॥ ११ ॥ प्रमादाद् यदिच्छ्रीयात्प्रायश्चित्तं तदाचरेत्। ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्जयेत्। इति। १२। राजमार्त्तण्डे पुराणेषु *मातुर्नाम्नीतु याकन्या विवाहे कुलजाहिसा। कुलानामान्तरं ग्राह्यास्तयाः पित्रोरन्यया। इति। १३। ४४। एवं कृतदारोयथा* वर्त्तेत तत्प्रवक्तव्यं * सोप्रशस्ता द्विजातीनां *दारकर्मणि मैथुने। १। इतियदुक्तं तन्मतु *प्रतिलोमतः स्त्रयुक्ता *मैथुनविधि प्रागाह *ऋतुकाला भीतादि। २।

## ऋतुकालाभिगामीस्यात्स्वदारनिरतः सदा। पर्व्ववर्ज्जं व्रजेच्चैनां तद्व्रतोरतिकामयया॥४५॥

स्वदारनिरतोयःस * स्वदारेषु ऋतुकालाभि * गामीपर्ववर्ज्जं सदास्यादितिरेवं * नियमेन विधिरन्यथा *भ्रूणहत्यापातकं स्यात्। ३। उक्तं हि पराशरेण *ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः। इति। ५॥ व्यासेनाप्युक्तं तद् यथा *ऋतुकालेऽभिगमो वै ब्रह्मचर्यं व्यवस्थितः। गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत्। ६। भ्रूणहत्यामवाप्नोति ऋतौ भार्यापराङ्मुखः। सा लब्ध्वा पराऽन्यतो गर्भं त्याज्या भवति पापिनी। इति। ७। सदेतिवचनं नप्रत्यहकाले * भार्याभिगमने नियमएवोक्तः* स्तेन गर्भाधानं भवति वानवा ॥ ८ ॥ नभ्रूणहत्यापापभाग् भवतीति* पितृणामृणाद् मोक्षः *नान्तरेण पुत्रोत्पत्तिं *भवतिनगर्भाधानं* प्रथमकृतावेवस्यात् ॥ ६ ॥ यावत्पुत्रोनोत्पद्यते *तावत्पितृणामृणोवर्त्ततएव * प्रत्यहभार्याभिगामिनोपिपुंसः ॥ १० ॥ तस्मात्पितृणामृणाद्दोषान्न*प्रत्यहं भार्याभिगमनोक्तिः* यएवं नवेदसर्वे *तथाव्याख्यष्टे प्रमादात् ॥११॥ नतुतर्हि किंस्त्रीभार्याग्रपेया * दितुरुक्तैर्तावेवेतिनियमःस्यात्* दितायतआह व्रजेच्चैनामितादि ॥ १२ ॥ तद्व्रतः स्वदाराभिगमनमेव*व्रतं यस्य सतद्व्रतः * एनां भार्यां रतिकाम्ययान्तु तौच * व्रजे न्नतत्रनियमः ॥ १३ ॥ ॥ ४५ ॥ ननुकः पुनः स्त्रीणामृतुकालःस्यात्*दितायतआहर्त्तुरित्यादि ॥ १ ॥ ४६ ॥

## ऋतुःस्वाभाविकःस्त्रीणांरात्रयःषोडशस्मृताः। चतुर्भिरितरैःसार्द्धं माहोभिःसद्विगर्हितैः॥४६

स्त्रीणां प्रत्यृतु यस्मिन्काले खलु* स्त्रवयोणितं प्रवर्त्तते तद्दिन *मारभ्याभिगमादिनेभ्यइतरैः॥ १ ॥ सद्विगर्हितैश्चतुर्भिरहोभिः*सार्द्धं षोडशरात्रयः*स्त्रीणां स्वाभाविकऋतु *रतोऽन्याथावैकारिकः ॥ २ ॥ ४६ ॥ नतुसद्विगर्हितानि*चत्वार्यहानियानि किं * तान्याद्यानिमध्यानिवा * किमन्त्यानिवानान्यानी*दितायतआहतासामि-त्यादि ॥ १ ॥ ४७ ॥

## तासामाद्याश्चतस्त्रस्तुनिन्द्याएकादशीचया। त्रयोदशीचशेषास्तुप्रशस्तादशरात्रयः॥ ४७ ॥

तासां षोडशानां रात्रीणां*माद्यायाश्चतस्त्रोरात्रयो*निन्द्यास्तवादात्तिसृस्तु धर्म्मतोऽपत्यदोषाच्च * चतुर्थी त्वपत्यार्थं निन्द्यानधर्मे ॥ १ ॥एकादशीत्रयोदशी*चापत्यदोषान्निन्द्याऽतः*शेषादशप्रशस्ताःरात्रयः॥ २ ॥तत्राद्यदोषो व्यासेन * योषितोनित्यकर्म्मोक्तंनै मित्तिकमथोच्यते। रजोदर्शनतोदोषात् सर्व्वमेवपरित्यजेत् ॥ ३ ॥ सर्व्वं

रजस्विताशौचं लञ्जितान्तर्गृहे वसेत्। एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता॥ ४ ॥मौनिनाधोमुखी चक्षुःपाणिपद्भिरचञ्चला। अश्नीयात् केवलं भक्तं नक्तं मृण्मयभाजने॥ ५ ॥ स्वप्याद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम्। स्नायीत सा त्रिरात्रान्ते सचैलमुदिते रवौ। विलोक्य भर्त्तृवदनं शुद्धा भवति धर्म्मतः। कृतशौचा पुनः कर्म्म पूर्व्ववच्च समाचरेत् ॥७॥ रजोदर्शनतो याः स्यु रात्रयः षोडशर्त्तवः। तत्र पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति॥ ८ ॥ चतस्रश्चादिमा रात्रीः पर्व्ववच्च विवर्ज्जयेत्। गच्छेद्युग्मासु रात्रीषु पौष्णापित्र्यर्क्षराक्षसैः॥ ९ ॥ प्रच्छादिताऽदितापथ्ये पुमान् गच्छेत् स्त्रियो षितः। क्षामालङ्कृत्यचारोति पुत्रं पूजितलक्षणम्॥ १० ॥ इति॥ आपस्तम्बेनचोक्तं यथा*स्नानं रजस्वलायाश्चतुर्थेऽहनि प्रशस्यते। स्नातरजसि गमनं स्त्रीनाम् निवर्त्तेत कथञ्चन॥ ११ ॥ रोगोत्पाद्गर्भजं स्त्रीणामतार्थं हि प्रवर्त्तते। अशुद्धात् न तेनेह तासां वैकारिकं स्थितम्॥ १२॥ साध्वाचारात सा तावदशुद्धा यावत् प्रवर्त्तते। वृत्ते रजसि साध्वी स्याद्गृहकर्म्मणि चेन्द्रिये॥ १३ ॥ प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥ इति॥ १४ ॥ चरकेनोक्तं हि यथा * ततश्चतुर्थेऽहनैनां * उत्सादा समिरस्कां स्नां * पयित्वाऽक्लानिवाससी * स्याच्छादयेत् पुरुषञ्च॥ १८ ॥ ततः शुक्लवाससौ * स्रग्विणौ सुमनसा*वन्योऽन्यमभिकामौ * संवसेतामितिब्रूयात्॥ १९ ॥ इति॥ सुश्रुतेनचयथोक्तं * तत्र प्रथमे दिवसे * ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति॥ २० ॥ यश्चतत्राधीयते*गर्भः सप्रसवमा * त्वं प्राणैर्विमुच्यते॥ २१ ॥ द्वितीयेप्येवं सूतिकागृहे वा*तृतीयेप्येवमसंपूर्णाङ्गोऽल्पायुर्भवति*चतुर्थे तु सम्पूर्णाङ्गो*दीर्घायुश्च भवतीति॥ २२ ॥ ४७ ॥ तत्र युग्मरात्रिषु*भार्यापगमने फलं*विशेषमाह युग्मास्वित्यादि श्लोकं॥ १ ॥ ४८ ॥

**युग्मासु पुत्राः जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ ४८ ॥**

निन्दिताभ्योऽन्यासु युग्मासु रात्रिषु*षष्ठ्यादिषु तौ भार्योपगमनात्*पुत्रा जायन्ते ऽयुग्मासु*रात्रिषु स्त्रियो जायन्ते॥१ तस्मात् पुत्रार्थी पुरुष*आर्त्तवे युग्मासु रात्रिषु*षष्ठ्यादिषु स्वां स्त्रियं संवसेदिति॥२॥ चरकेणाप्युक्तमेवं*स्नानात् प्रभृति युग्मे*ष्वहःसु संवसेतां*पुत्रकामौ विषमेषु*दुहितृकामौ॥ इति॥ ३ ॥ सुश्रुतेनाप्युक्तमेवमविकल्पेन चतुर्थी*षष्ठीमष्टमीं दशमीं * द्वादशीञ्चोपेयादिति पुत्रकामः॥ ४ ॥ एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च। प्रजासौभाग्यमैश्वर्यं बलञ्च दिवसेषु वै॥ ५ ॥ अतः परं पञ्चम्यां*सप्तम्यां नवम्यां मे * कादश्याञ्च स्त्रीकाम*स्त्रयोदश्यादयो निन्द्याः॥ ६॥४८॥एतेन चतुर्थ्यां रात्रौ* मध्यमपुत्रोत्पत्तिमभि*प्रेतावनिन्द्यलक्षणं॥४९॥ कथमेवमेव विदिनविशेषेकि*पुत्रकन्या जायन्ते इ*त्यत आह पुमानित्यादि॥ ४९ ॥

**पुमान्पुंसोऽधिके बीजे स्त्री भवत्यधिके स्त्रियाः। समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः॥ ४९ ॥**

पुंसो बीजेऽधिके पुमान्*स्त्रिया बीजेऽधिके स्त्री भवति समे*पुंस्त्रियो र्बीजे ऽपुमान्*नपुंसकं भवतीति॥ १॥ क्षीणेऽल्पे च पुंस्त्रियो र्बीजे*विपर्य्ययो गर्भोत्पत्ति र्न*भवतीति शेषं॥ २॥ ४९॥ स्त्रीत्याश्रमेऽपि पुरुषो*वसन्नत्रापि फलं यथा*लभेत तदाह निन्द्यास्वित्यादि॥ १ ॥ ५० ॥

निन्द्यास्वष्टासुचान्यासुस्त्रियोरात्रिषुवर्जयन्। ब्रह्मचार्येवभवतियत्रतत्राश्रमेवसन् ॥ ५० ॥

ऋतोर्निन्द्यासुषट्सुरात्रिषु*ताभ्योऽन्यासुनिन्द्यासुदशसु *रात्रिषुमध्येऽष्टासुच * यासुकासुचिद्रात्रिषु ॥ १ ॥ पर्व युग्मायुग्मासुस्त्रियोवर्जयन्*ह्यर्थोक्तं तु रात्र्योःस्त्रियं*गच्छन्नाश्रमे प्रकरणाद्गृहस्था*श्रमे वसन्नेवपुमान् ॥ २॥ यत्रतत्रस्ववासे वा*प्रवासे वास्थितोब्रह्मचारीभव*तीत्युच्यते धर्मवित्भिः ॥ ३ ॥ भ्रान्तास्तुयत्रतत्राश्रये वस*मि तियोजनां कृत्वास*भार्या वनाश्रमगम * नाभिमायें नेदमितरा*इदानें कथाप्रलपन्ति ॥ ४ ॥ ५० ॥ अथकन्याशुल्क ग्रहणे दोष*माहनकन्याया इत्यादि ॥ १ ॥ ५१ ॥

नकन्यायाःपिताविद्वान् गृह्णीयाच्छुल्कमण्वपि। गृह्णन्शुल्कंहिलोभेनस्यान्नरोऽपत्य विक्रयी। ५१।

विद्वान्शास्त्रज्ञ:कन्यायाः*शुल्कग्रहणदोषज्ञः*खल्वण्वपिस्वल्पमपि*कन्यायाःशुल्कं पितानगृह्णीयात् ॥१॥ हियस्मात्कन्यायाःशुल्कं*लोभेनगृह्णन्नरोऽपत्यविक्रयी*स्यात्तच्छुल्कंकन्याधनं ॥ २ ॥ ५१ ॥ स्त्रीधनग्रहणे दोषमाहस्त्री* धनानित्वित्यादिश्लोकम् ॥ १ ॥ ५२ ॥

स्त्रीधनानितुयेमोहादुपजीवन्तिबान्धवाः। नारीयानानिवस्त्रंवातेपापीयान्त्यधोगतिम्।५२।

ये बान्धवाःस्त्रीधनानि * मोहादुपजीवन्तितथा*नारीणां यानानिवस्त्रं* वोपजीवन्तिते बान्धवाः *पापाअ धोगतिंयान्ति ॥ ३ ॥ ५२ ॥ ननुतर्हि चार्षे यज्ञोग्रहणं तत् * कस्माद्विधीयते इत्या*तत्राहार्ष इत्यादि ॥ १ ॥ ५३॥

आर्षेगोमिथुनंशुल्कंकेचिदाहुर्मृषैवतत्। अल्पोप्येवंमहान्वापिविक्रयस्तावदेवसः ॥ ५३

आर्षे विवाहे यद्गोमिथुन* ग्रहणं विहितं तच्छुल्कं*मृषैवेतिकेचिदाहु*स्तदसाधुवचःकस्मात् ॥१॥ एवं प्रकारेणाल्पोपि*महान्वापियःसखलु* तावद्विक्रयएवस्यात् ॥ २ ॥ तर्हि किमार्षविवाहे * लक्षणं यद्गोमिथु न*ग्रहणमुक्तं तदसाधु ॥ ३ ॥ नैवं यस्माद्धियत्प्रसिद्धं लक्षणं*शास्त्रे तदुपदिश्यते * गुणदोषौचोपदिश्येते यथार्षे श्चाचविवाहः ॥ ४ ॥ तत्रकश्चिदाहमनोस्तुमतं*नेदंगोमिथुनग्रह*णमत्रकोचरूपंशुल्कं ॥ ५ ॥ यत्तुशास्त्रनिय मित*जातिसङ्ख्याकंग्रहणं*तन्नशुल्करूपंभवति ॥ ६ ॥ यस्माद्धिवस्तुनोयन्मूल्यंभवति * तदेवतस्यशुल्कं स्यात्* नतथाकन्यामूल्यंगोमिथुनंभवतीत्यत*उक्तमादायधर्मतइति ॥ ७ ॥ तेननलोभेनगोमिथुन *ग्रहणं लोभेनहि सःशुल्क*ग्राहीस्यात्सएवापत्य* विक्रयीभवतीत्याह ॥ ८ ॥ ५३ ॥ ननुतर्हि कन्याया भूषणानियानि*पत्यादिभि र्विवाहकाले दीयन्ते तैरपिकिं* मपत्यविक्रयीस्यादि * तत्राहयासामित्यादि ॥ १ ॥ ५४ ॥

यासांनाददतेशुल्कंज्ञातयोनसविक्रयः। अर्हणंतत्कुमारीणामानृशंस्यञ्चकेवलम् ॥ ५४ ॥

याचां कन्यानां च लकं न * ज्ञातयञ्चाददते ता* वरे भोदद्दतिमच * तासां विक्रयःस्यात् ॥ १ ॥ कुमारीणां तत्वयदत्त यांपतरा*दिभिर्भ वणादिकं दीयते तत्तु* सर्व्वं मानुषं भवति ॥ २ ॥ ५४ ॥ कन्यादानधर्मसंगतत्सर्व्वं भव* तीतग्रतच्चाह पितृभि*रित्यादिश्लोकपञ्चक ॥ १ ॥ १ ॥ ५५ ॥

पितृभिर्भ्रातृभिश्चैताःपतिभिर्देवरैस्तथा। पूज्याभूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥५५॥
यत्रनार्य्यस्तुपूज्यन्तेरमन्तेतत्रदेवताः। यत्रैतास्तुनपूज्यन्ते सर्व्वास्तत्राफलाःक्रियाः ॥ ५६ ॥
शोचन्तिजामयोयत्रविनश्यन्त्याशुतत्कुलम। नशोचन्तितुयत्रैतावर्द्धते तद्धिसर्व्वदा ॥ ५७ ॥
जामयोयानिगेहानिशपन्त्यप्रतिपूजिताः। तानिकृत्याहतानीवविनश्यन्तिसमन्ततः ॥ ५८ ॥
तस्मादेताःसदापूज्याभूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषुच ॥५९

तथाभव्द्वे नभूषणादिभिरिति * पूजाः सत्कार्य्या एवेति ॥ १ ॥ ५५ ॥ यत्रैतादि ॥ ५६ ॥ रमन्तेक्रीडन्तितेषां *स्त्रीजनासत्कारिणां *क्रियाअफलाःस्युः ॥ १ ॥ ५६ ॥ शोचन्तीत्यादि ॥ ५७ ॥ जामिःस्वसाकुलस्त्री वा * यत्रस्वसारःकुलस्त्रियोवासत्* काराभावेनशोचन्ति* तत्कुलमाशुनश्यति ॥ १ ॥ यत्रैताजामयोनैव*शोचन्तिसत्कारांतस्य*तत्कुलं हिसर्व्वदावर्द्धते इति ॥ २ ॥ ५७ ॥ जामयइत्यादि ॥ ५८ ॥ जामयोयानिगृहाणियेषु*रप्रतिपूजिताःसत्यः* शपन्तिशापं कुर्व्वन्ति * तानिसमन्ततःकृत्या * दोषेणाहतानीवनश्यन्ति ॥ १ ॥ ५८ ॥ तस्मादित्यादि ॥ ५९ ॥ तस्माद्धेतोरेभिर्नरैरेताजामयोभूषणा * दिभिःसदापूज्याभूतिकामैर्नरैः*उत्सवेषुचसत्कारे*नित्यं पूज्याभवन्तीति । १ । ५९ । अथभार्य्यासन्तोषासन्तोषगुणा * दोषौचाहसन्तुष्टइत्यादिश्लोकत्रयन् । १ । ६ ।

सन्तुष्टोभार्य्ययाभर्त्ताभर्त्राभार्य्यातथैवच। यस्मिन्नेवकुलेनित्यंकल्याणंतत्रवैध्रुवम् ॥६०
यदिहिस्त्रीनरोचेतपुमांसंनप्रमोदयेत्। अप्रमोदात्पुनःपुंसःप्रजनंनप्रवर्त्तते ॥ ६१ ॥
स्त्रियान्तुरोचमानायांसर्व्वंतद्रोचतेकुलं। तस्यान्त्वरोचमानायांसर्व्वमेवनरोचते ॥ ६२ ॥

यस्मिन्कुलेभार्य्ययासहभर्त्ता * सन्तुष्टोभर्त्रा सहभार्य्यासन्तुष्टा * तत्रकुलेनित्यं कल्याणंध्रुवंस्यात् ॥ १ । ६ । यदिहीत्यादि । ६१ । हियस्मात्स्त्रीभार्य्यापतिं * नरोचेतपुमांसंच * पतिंसास्त्रीनप्रमोदयेत्* तदापुंसोऽप्रमोदाञ्च*प्रजननमपत्योत्पादनंप्रवर्त्तते । १ । ६१ । स्त्रियामित्यादि । ६२ । स्त्रियांभार्य्यायांपत्यौ रोचमानायां * सर्व्वंकुलंतद्रोचते * ततोऽन्यथानरोचते । १ । ६२ ।

कुविवाहैःक्रियालोपैर्वेदानध्ययनेनच। कुलान्यकुलतांयान्तिब्राह्मणातिक्रमेणच ॥ ६३॥

तदाग्रयेऽग्निप्रादधाद्‌ग्निमानग्रजोयदि ॥ १०१३ ॥ दाराधिगमनाधानेयःकुर्य्यादग्रजामतः। परिवेत्तासवि
ज्ञेयःपरिवित्तिस्तुपूर्व्वजः ॥ १०२४ ॥ परिवित्तिःपरिवेत्तागच्छतोनरकंध्रुवम्। अपिचीर्णप्रायश्चित्तौपादोनफल
भागिनौ ॥ १०२५ ॥ देशान्तरस्थक्लीवैककृषणानसहोदरान्। वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः ॥१०२६
जड़मूकान्धवधिरकुब्जवामनकुण्ठकान्। अतिवृद्धानभार्य्यांश्चकृषिसक्तान्नृपस्यच ॥ १०२७ ॥ धनवृद्धिप्रसक्तांश्चकाम
तःकारिणस्तथा। कुलटोन्मत्तचौरांश्चपरिविन्दन्नदूष्यति ॥ १०२८ ॥ धनवार्द्धुषिकंराजसेवकंकार्मुकंतथा
प्रोषितञ्चप्रतीक्षेतवर्षत्रयमपित्वरन् ॥ १०२९ ॥ प्रोषितंयद्यशृण्वानमब्दादूर्द्ध्वंसमाचरेत्। आगतेतुपुनस्त
स्मिन्पादंतच्छुद्धयेसमाचरेत् ॥ १०३० ॥ इति ॥ अत्रासतिपितरिपितामहेच * यदिज्येष्ठोभ्राताऽप्रय*
गन्नोऽग्निमान्भवति ॥ १०३१ ॥ तदाधानकालोऽयं * सन्नग्नियोनाम्नायस्य * सन्नग्निमादधादिति ॥ १०३२
अग्नियोनयस्तुखलुरणि*स्व न्नं विद्यादृदाधादिरितितत्र*कात्यायनेनोक्तंयथा ॥१०३३ ॥यद्यग्निरग्निनानोनम
भवेदाहितःक्वचित्। अग्नये विविचयइतिजुहुयाद्वाहुताङ्कतिम् ॥ १०३४ ॥ अग्नयेऽप्सुमतेचैवजुहुयाद्विदुतेन
चेत्। अग्नयेशुचयेचैवजुहुयात्स्वदवाग्निना ॥ १०३५ ॥ यद्दाहाग्निनाग्निस्तुमृष्टःग्रामजोहिजैः। द
वाग्निनाचसंसर्गेहृदयंयदितपाते ॥ १०३६ ॥ नखेऽग्नावनाहोमःस्यान्मुक्त्वैकांसमिदाहुतिम्। सगर्भसत्
क्रियार्थांश्चयावन्नासौप्रजायते ॥ १०३७ ॥ अग्निस्तुनामधेयादौहोमेसर्व्वत्रलौकिकः। नहिपित्रासमानीतःपु
त्रस्यभवतिक्वचित् ॥ १०३८ ॥ इति ॥ अग्निश्चयथागृह्णीया*त्तदत्रांगोभिलेनत * यथातत्प्रदर्श्यते ॥ १०३९।
तथातिथिनक्षत्रपर्व्वसमवाये*दर्शेवापौर्णमासेवा* ऽग्निसमाधानंकुर्व्वीत ॥ १०४० ॥ वैश्यकुलाद्वाम्बरीषाद्वा*ऽ
ग्निमाहृत्याभ्याद्ध्यात्*दपिवावहुयाजिन* एवागाराद्वाह्मणस्यवा ॥ १०४१ ॥ राजन्यस्यवावैश्यस्यवाऽपिवा*ऽ
रणिंमथित्वाभ्यादध्यात् * पुण्यस्त्वेतावानाहुकोभवतीति ॥ १०४२ ॥ तत्रवैश्यकुलाद्वाम्बरीषादिति*वैश्यानां
लाजादिभर्ज्जनपात्रात्*साग्निकस्यवहुयाजिब्राह्मणस्य* साग्निकस्यराजन्यस्यवैश्यस्यवा ॥ १०४३ ॥ अरणिंम
थित्वायथाग्निंगृह्णीया*त्तदुक्तंकात्यायनेन*स्वसंहितायांतद्यथा ॥ १०४४ ॥अश्वत्थोयःशमीगर्भःप्रशस्तोर्व्वीस
मुद्भवः। तस्ययाप्राङ्मुखीशाखावोदीचीवोर्द्ध्वगापिवा ॥ १०४५ ॥ अरणिस्तन्मयीप्रोक्तातन्मयीवोत्तरारणिः।
सारवद्दावरंचत्रमोविलीचप्रशस्यते ॥ १०४६ ॥ संसक्तमूलोयःशम्याःसशमीगर्भउच्यते। अलाभेत्वशमीगर्भ
दुद्धरेदविलम्बितः ॥ १०४७ ॥ चतुर्विंशतिरङ्गुष्ठैर्दैर्घ्यंषडपिपार्थवम्। चत्वारउच्छ्रयेमानमरण्योःपरिकी
र्त्तितम् ॥ १०४८ ॥ अष्टाङ्गुलप्रमन्थःस्याच्चत्रंस्याद्द्वादशाङ्गुलम्। त्तविलीद्वादशैवस्यादेतन्मन्थनयन्त्रकम्
॥ १०४९ ॥ अङ्गुष्ठाङ्गुलिमानन्तुयत्रयत्रोपदिश्यते। तत्रतत्रवृहत्पर्व्वग्रन्थिभिर्मिनुयात्सदा ॥ १०५० ॥ गो
वालैःशणसंमिश्रैस्त्रिवृत्तममलात्मकम्। व्यामप्रमाणंनेत्रंस्यात्प्रमथ्यस्तेनपावकः ॥ १०५१ ॥ मूर्द्धाक्षिकर्ण
वक्त्राणिकन्धराचापिपञ्चमी। अङ्गुष्ठमात्राण्येतानिद्व्यङ्गुलंवक्तुच्यते ॥ १०५२ ॥ अङ्गुष्ठमात्रंहृदयंत्र्यङ्गुष्ठ
मुदरंस्मृतम्। एकाङ्गुष्ठाकटिर्ज्ञेयाद्वौवस्तिर्द्वौचगुह्यकम् ॥ १०५३ ॥ ऊरूजङ्घेचपादौचचतुस्त्र्येकैर्यथाक्रमम्
अरण्यवयवाह्येतेयाज्ञिकैःपरिकीर्त्तिताः ॥ १०५४ ॥ यत्तद्गुह्यमितिप्रोक्तंदेवयोनिस्तुसोच्यते। तस्यांयोजाय
तेवह्निःसकल्याणकृदुच्यते ॥ १०५५ ॥ अन्येषुयेतुमथ्नन्तितेरोगभयमाप्नुयुः। प्रथमेमन्थनेत्वेषनियमोनोत्तरे
षुच ॥ १०५६ ॥ उत्तरारणिनिष्पन्नःप्रमन्थःसर्व्वदाभवेत्। योनिसङ्करदोषेणयुज्यतेह्यन्यमन्थकृत् ॥१०५७॥

पितृभ्य उदकप्रदानम् । १५ । होमोऽग्निहोत्रं सायंप्रातः*र्यज्ञ होति मदैवयज्ञः*बलिर्भौतीयज्ञो नृयज्ञः*पञ्चमोऽतिथिपूजनम् । १६ । ७० । एतत्पञ्चयज्ञकरणफल*माह पंचैतानित्यादि । १ । ७१ ।

**पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ ७१॥**

शक्तितो व्याधिपीडाद्यापद्दोऽन्यत्र*यएतान् पंचमहायज्ञान्नित्यं न जहात्यपद्यपि जं वा*न कदापि हापयति॥२ स खलु गृहे विवसन्*तीर्थादिक्रमगत्स्य सूनादोषैर्विलिप्यते । १ । ७१ । एषामकरणे निन्दामाह देव*तातिथिभृत्यानामित्यादि । १ । ७२ ।

**देवतातिथिभृत्यानां पितॄणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ७२ ॥**

योदेवतादीनामात्मनश्चान्नानि*न निर्वपति स श्वासोच्छ्वासाभ्यां* प्राणापानाभ्यां श्वस* न्नपि न जीवति मृतवत् । १ । ७२ । कस्मादित्यत आहाहुतं चेत्यादि । ७२ ।

**अहुतं च हुतं चैव तथा प्रहुतमेव च। ब्राह्म्यं हुतं प्राशितं च पंच यज्ञान् प्रचक्षते ॥ ७३ ॥**

यस्माद् ब्रह्मयज्ञादीन् पंचयज्ञा * नहुतादीन् प्रचक्षते । १ । ७२ । कं यज्ञं कं प्रचक्षत* इत्यत आह जपो*ऽहुतदहुतादिकं । १ । ७४ ।

**जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः। ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥ ८४ ॥**

वेदानां जपस्त्रिविधः*पूर्वमुक्तः स तु ब्रह्म*यज्ञो न हुतदहुतं हुतं च प्रोक्तो*मेवतद्यजनं तृप्ति* कृतस्यातेपञ्चभावहारात् ॥ १ ॥ हुतो होमो देवानामभ्यवहार्यत्वात् * भौतिको बलिर्भूतदेवानां * बलिरभ्यवहार्यत्वात् *प्रहुतो द्विजाग्र्यार्चन*मातिथ्यं ब्राह्म्यं हुतं स्यात् ॥ २ ॥ प्राशितं तसाचाच्छ्राद्धि * ब्राह्मणभोजनं पितृतर्पणं*तृप्तिकरत्वात् पितॄणाम् ॥ ३ ॥ ७४ ॥ स्वाध्यायहोमयोर्गुणमाह*स्वाध्यायेत्यादि ॥ १ ॥ ७५ ॥

**स्वाध्याये नित्ययुक्तः स्यादैवे चैवेह कर्म्मणि। दैवकर्म्मणि युक्तो हि बिभर्त्तीदं चराचरम् ॥ ७५**

स्वाध्यायः स्वसाविद्याध्ययन*मध्यापनेनापि स्वस्य चा*ध्ययनं भवति ॥ १ ॥ तेनाध्ययनाध्यापनान्यतरस्मिन्*नित्ययुक्तः स्यादिह च*दैवेकर्म्मण्यग्निहोत्र* होमे नित्ययुक्तश्च स्यात् ॥ २ ॥ कस्मादित्यत आह दैवकर्म्मणी*त्यादि हि यस्माद्दैव * कर्म्मणि युक्तः पुरुष* इदं चराचरं विभर्त्ति ॥ २ ॥ ७५ ॥ कथं चराचरं बिभर्त्ती *त्यत आहाग्नावित्यादि ॥ १ ॥ ७६ ॥

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ७६**

अग्निहोत्रे याग्नौप्रक्षिप्ता*याहुतिःसाखल्वादित्य*मुपतिष्ठतितस्यास्तु * सोपस्थितौसत्यामादित्या*द्वृष्टिर्भवतिततस्तु*वृष्टेःप्रजाभ्नताभवन्ति ॥ १ ॥ ततसाग्र प्रातर्होमकालउक्तः*कात्यायनेनतद्यथा ॥ २ ॥ सूर्य्योऽस्तमसमप्राप्तेषट्त्रिंशद्भिःस्वराङ्गुलैः। प्रादुष्करणमग्नीनां प्रातर्भासोऽपिदर्शनात् ॥ ३ ॥ हस्तादूर्ध्वं रविर्यावद्गिरिंहित्वानगच्छति। तावद्धोमविधिःपुण्योनात्येत्युदितहोमिनाम् ॥ ४ ॥ यावत्सम्यग्नभाव्यन्ते नभस्यर्क्षाणिसर्वतः। नचलोहितिमापैतितावत्सायञ्चहूयते ॥ ५ ॥ रजोनीहारधूमाद्यच्छायाप्यन्तरिते रवौ। सन्ध्यामुद्दिश्यजुहुयाद्धुतमस्यनलुप्यते ॥ ६ ॥ नकुर्य्यात्क्षिप्रहोमेषुद्विजःपरिसमूहनम् ॥ ७६ ॥ ततःश्रेष्ठात्तमाहयथेत्यादि ॥ ७७ ॥

**यथावायुंसमाश्रित्यवर्त्तन्तेसर्व्वजन्तवः। तथागृहस्थमाश्रित्यवर्त्तन्तेसर्व्व आश्रमाः ॥७७**

सर्व्व आश्रमाश्चत्वार*एवाश्रमागृहस्थमे*वाश्रित्यवर्त्तन्तेयथा*वायुंसमाश्रित्यसर्व्व*जन्तवोजीवन्तोवर्त्तन्ते ॥ १ ॥ ॥ ७७ ॥ ननुगृहस्थोगृहस्थनाश्रित्य* जीवतिकथमनेनेत्यतआह*यस्मादित्यादिश्लोकं ॥ १ ॥ ७८ ॥

**यस्मात्त्रयोप्याश्रमिणोज्ञानेनान्नेनचान्वहम्। गृहस्थेनैवधार्य्यन्तेतस्माज्ज्येष्ठाश्रमोगृही॥७८**

त्रयोपानेब्रह्मचार्य्या * दयश्राश्रमिणोऽन्वहं * गृहस्थेनैवज्ञानेन* वेदाध्यापनेनज्ञानं * दत्वान्नेनच धार्य्यन्ते ॥ १॥ तस्मादुगृहीगृहस्थएवाश्रमो*ज्येष्ठाश्रमोऽभिधीयते*नतुज्येष्ठाश्रमोयस्येति* परत्रसंधार्य्य इत्याहः ॥ २ ॥ ७८ ॥

**ससन्धार्य्यःप्रयत्नेनस्वर्गमक्षयमिच्छता। सुखंचेहेच्छतानित्यंयोऽधार्य्योदुर्व्वलेन्द्रियैः॥७९**

ससंधार्य्य इत्यादिः ॥ ७९ ॥इहयोज्येष्ठोगृहस्थाश्रमो*दुर्व्वलेन्द्रियैरजितेन्द्रियैर्जनै*रधार्य्योधारयितुमशक्यएव ॥ १ ॥ सखलुज्येष्ठगृहस्थाश्रमः*प्रेत्याक्षयंस्वर्गमिच्छतानिता*मिहचसुखमिच्छता*जनेनप्रयत्नेधार्य्यः ॥ २ ॥ ७९ ॥ अपरञ्चऋषयइत्यादि ॥ ८० ॥

**ऋषयःपितरोदेवाभूतान्यतिथयस्तथा। आशासतेकुटुम्बिभ्यस्तेभ्यःकार्य्यंविजानता ॥ ८०**

तेभ्यःकुटुम्बिभ्योगृहस्थाश्रमिभ्यः* पञ्चभिर्व्वक्ष्यमाणादिभिरिष्टा*ऋष्यादयःपञ्चयतआशासते ॥ १ ॥ तस्माज्जानताशास्त्रमिनापञ्चयज्ञ * विधानंकार्य्यमनुष्ठेयं ॥ २ ॥ ८० ॥ ननुकेनकेनइज्यन्तेतत्राह * स्वाध्यायेनेत्यादिश्लोकं ॥ १ ॥ ८१ ॥

**स्वाध्यायेनार्च्चयेतर्षीन्होमैर्देवान्यथाविधि। पितॄन्श्राद्धैश्चनॄनन्नैर्भूतानिबलिकर्म्मणा॥८१**

स्वाध्यायेनवेदाध्यापनजपा*भ्यामृषीनर्च्चयेत्*होमैरग्निहोत्रहोमै*र्देवान्यथाविध्यर्च्चयेत ॥ १ ॥ पितॄन्श्राद्धैस्तर्पणश्राद्धादिना*नॄन्मनुष्यानन्नैरतिथीनन्नैर्व लि*कर्म्मणाभूतानार्च्चयेत्गृहस्थः ॥ २ ॥ ८१ ॥ तत्रश्राद्धयथाकुर्य्यात्तदाह*कुर्य्यादहरित्यादि ॥ १ ॥ ८२ ॥

कुर्य्यादहरहःश्राद्धमन्नाद्येनोदकेनवा। पयोमूलफलैर्वापिपितृभ्यःप्रीतिमावहन्॥ ८२॥

अहरहःप्रत्यहमन्नादीन*श्राद्धंकुर्य्यादुदकेन* वातर्पणंश्राद्धंकुर्य्यात्॥ १॥ पितृभ्यःपितृनुद्दिश्य*पयोमूलफलैर्वापि*प्रीतिमावहन्श्राद्धंकुर्य्यात्॥ २॥ ८२॥

एकमप्याशयेद्विप्रंपित्रर्थेपाञ्चयज्ञिके। नचैवात्राशयेत्किंचिद्वैश्वदेवंप्रतिद्विजम्॥ ८३॥

एकमपीत्यादि॥ ८३॥ श्राद्धेपञ्चयज्ञिकेयद्यासक्तःस्यात्तदा*ब्राह्मणभोजने*तदैकमपिब्राह्मण*माशयेन्नत्तु ब्राह्मण*भोजनाच्छ्राद्धं भवति॥ १॥ अत्रपाञ्चयज्ञिकेवैश्वदेवंप्रति*भूतयज्ञेतुकञ्चिदपि * द्विजंनैवाशयेदिति॥ २॥ ८३॥ ननुतर्हि कथंवैश्वदेवंकुर्य्या*दित्यतआहवैश्वेत्यादि॥ १॥ ८४॥

वैश्वदेवस्यसिद्धस्यगृह्येऽग्नौविधिपूर्व्वकम्। आभ्यःकुर्य्याद्देवताभ्योब्राह्मणोहोममन्वहम्॥ ८४॥

विश्वदेवानामिदंसिद्धमन्न * मितिवैश्वदेवंसिद्धम्॥ १॥ यथाविधिर्वैवाहिकेऽग्नौसिद्धस्यपक्वस्यवैश्वदेवस्यान्नस्य*होममन्वहंब्राह्मण*आभ्योदेवताभ्योगृह्ये*वैवाहिकेऽग्नौकुर्य्यादिति॥ २॥ ८४॥ ननुकाभ्योदेवताभ्यो* होमंकुर्य्यादित्यतआ*हाग्नेरित्यादीद्वौश्लोकौ॥ १॥ ८५॥

अग्नेःसोमस्यचैवादौतयोश्चैवसमस्तयोः। विश्वेभ्यश्चैवदेवेभ्योधन्वन्तरयएवच॥ ८५॥
कुह्वैचैवानुमत्यैचप्रजापतयएवच। सहद्यावापृथिव्योश्चतथास्विष्टकृतेऽन्ततः॥ ८६॥

स्वाहान्तेनादावग्नेर्होमंकुर्य्यात् *इदमग्नयेस्वाहेति*ततःसोमस्यहोमंकुर्य्यात्* इदंसोमायस्वाहेति * ।१। ततस्तयोःसमस्तयोर्होमंकुर्य्या*दिदमग्नीषोमाभ्यांस्वाहेति।॥ २॥ ततोविश्वेभ्योदेवेभ्यः*स्वाहेत्याथ*धन्वन्तरयेस्वाहेति*॥ ३॥ ८५॥ ततःकुह्वैस्वाहाततो*ऽनुमत्यैस्वाहेति*ततः*प्रजापतयेस्वाहेति* ततःसहैवद्यावा*वापृथिवीर्होमंकुर्य्यात्॥ १॥ द्यावापृथिवीभ्यांस्वाहा*ततःस्विष्टकृतेस्वाहेति*होमंकुर्य्यादितिक्रमः॥ २॥ ८६॥

एवंसम्यग्घविर्हुत्वासर्व्वदिक्षुप्रदक्षिणम्। इन्द्रान्तकाप्पतीन्दुभ्यःसानुगेभ्योबलिंहरेत्॥ ८७

एवमित्यादि॥ ८७॥ एवमनेनप्रकारेणसम्यगग्न्यादिभ्योहविर्हुत्वा * सर्व्वदिक्षुप्रदक्षिणं*दक्षिणावर्त्तेन. सानुगेभ्यइन्द्रादिभ्योबलिंहरेत्॥ १॥ तद्यथाप्राच्यामिन्द्राय*नमइन्द्रानुगेभ्योनमो*दक्षिणस्यांयमायनमो*यमानुगेभ्योनमः॥ २॥ प्रतीच्यांवरुणायनमो*वरुणानुगेभ्योनमः*उत्तरस्यांसोमायनमः * सोमानुगेभ्योनमः॥ ३॥ ८७॥

मरुद्भ्यइतितुद्वारिक्षिपेदप्स्वद्भ्यइत्यपि । वनस्पतिभ्यइत्येवंमुषलोलूखलेहरेत् ॥ ८८ ॥

मरुद्भ्यइत्यादि ॥ ८८ ॥ मरुद्भ्योनमइतिद्वारेबलिं*हरेदद्भ्योनमइत्यप्सु*क्षिपेन्मुषलोलूखले*वनस्पतिभ्योनमइति ॥ १ ॥ ८८ ॥

उच्छीर्षकेश्रियैकुर्य्याद्भद्रकाल्यैचपादतः । ब्रह्मवास्तोष्पतिभ्यांचवास्तुमध्येबलिंहरेत् ॥ ८९

उच्छीर्षकइत्यादि ॥ ८९ ॥ वास्तुपुरुषस्यशिर*उच्छीर्षकंतत्पूर्व्वोत्तरस्या*मैशान्यान्दिशिश्रियै* नमइतिबलिंहरेत् ॥ १ ॥ वास्तुपुरुषस्यपादतस्तु*दक्षिणपश्चिमस्यांनैरृत्यां* दिशिभद्रकाल्यैनम * इतिबलिंहरेदिति ॥ २ ॥ केचित्तूच्छीर्षके*गृहिपुरुषस्यशयनस्थानेतु*शिरस्यूर्द्धदेशेश्रियै*नमइतिबलिंहरेत् ॥ ३ ॥ पादतइतियस्यांदिशितस्य*पादौवर्त्तेतेतस्यांदिशि*भद्रकाल्यैनम इतिबलिंहरेत् ॥ ४ ॥ वास्तुमध्येब्रह्मणेनमोवास्तोष्पतये*नमइतिबलिंहरेत् ॥ ५ ॥ ८९ ॥

विश्वेभ्यश्चैवदेवेभ्योबलिमाकाशउत्क्षिपेत् । दिवाचरेभ्योभूतेभ्योनक्तंचारिभ्यएवच ॥९०

विश्वेभ्यइत्यादि ॥ ९० ॥ विश्वेभ्योदेवेभ्योनम*इत्याकाशेबलिमुत्क्षिपेत्*दिवाचरेभ्योभूतेभ्यो*नमइतिचाकाशे*नक्तञ्चरेभ्योभूतेभ्य*इतिचाकाशेबलिंहरेत् ॥ १ ॥ ९० ॥

पृष्ठवास्तुनिकुर्व्वीतबलिंसर्व्वात्मभूतये । पितृभ्योबलिशेषन्तुसर्व्वंदक्षिणतोहरेत् ॥ ९१॥

पृष्ठवास्तुनीत्यादि ॥ ९१ ॥ पृष्ठवास्तुनीतिवास्तु*पृष्ठेसर्व्वात्मभूतये*नमइतिबलिंकुर्व्वीत ॥ १ ॥ सर्व्वंबलिशेषंस्वस्य * दक्षिणाभिमुखःप्राचीनावीतीच * सन्दक्षिणस्यांदिशि* पितृभ्यःस्वधेतिबलिंहरेत् ॥ २ ॥

शुनाञ्चपतितानाञ्चश्वपचांपापरोगिणाम् । वायसानांकृमीणाञ्चशनकैर्निर्वपेद्भुवि ॥ ९२ ॥

शुनामित्यादि ॥ ९२ ॥ अथान्नादन्नंपात्रेसमुद्धृत्य*शनकैःक्रमेणश्वभ्यो*नमःपतितेभ्योनमः* श्वपग्भ्योनमःपापरोगिभ्योनमः ॥ १ ॥ वायसेभ्योनमःकृमिभ्योनम*इतिभुविधूलिहीन*भूभागेबलिंनिर्व्वपेत् ॥ २ ॥ ॥ * ॥ ९२ ॥

एवंयःसर्व्वभूतानिब्राह्मणोनित्यमर्च्चति । सगच्छतिपरंस्थानंतेजोमूर्त्तिःपथर्जुना ॥ ९३॥

एवंयइत्यादिनास्यफलमाह ॥ ९३ ॥ योब्राह्मणोब्रह्मवेदमधीतेय * इतिब्राह्मणःक्षत्रियो * वैश्यश्चयएवंसर्व्वं * भूतानिनित्यमर्च्चति * ॥ १ ॥ सतेजोमूर्त्तिःसन्नृजुनापथा * परंस्थानंब्रह्मलोकं* गच्छतीतिवेदितव्यम् ॥ २ ॥ * ॥ ९३ ॥ अथनृयज्ञविधानमाहकृत्वै*तद्बलिकर्म्मेत्यादि ॥ १ ॥ ९४ ॥

कृत्वैतद्बलिकर्म्मैवमतिथिंपूर्व्वमाशयेत् । भिक्षांचभिक्षवेदद्याद्विधिवद्ब्रह्मचारिणे ॥ ९४॥

एवमनेनप्रकारेण *पश्चिमकर्मोत्वा*पूर्वमतिथिमाशयेत् ॥ १ ॥ वक्ष्यतेऽत्रातिथिलक्षणं*उक्तं विष्णुना* एकरात्रिं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते । इति ॥ २ ॥ ६१ ॥ भिक्षवे पञ्चविधाय*ब्रह्मचारिणेऽपि भैक्षार्थं*प्रथमवनादिभिक्षं * दद्यात् यद्वाऽस्मिन्धर्मस्ति*तस्मैतेनविधिनाभिक्षांदद्यात् ॥ ३ ॥ भिक्षुःषड्विध उक्तोऽत्रिणा * ब्रह्मचारीयतिश्चैवविद्यार्थीगुरुपोषकः । अध्वगःक्षीणवृत्तिश्चषडेतेभिक्षुकाःस्मृताः । इति ॥ ७ ॥ ॥ ६४ ॥ भिक्षुब्रह्मचारिभ्यां*भिक्षादानफलमाह*यत्पुण्यफलमित्यादि ॥ १ ॥ ६५ ॥

**यत्पुण्यफलमाप्नोतिगांदत्वाविधिवद्गुरोः । तत्पुण्यफलमाप्नोतिभिक्षांदत्वाद्विजोगृही९५**

स्पष्टार्थोऽयंश्लोकः ॥ ६५ ॥

**भिक्षामप्युदपात्रंवासत्कृत्यविधिपूर्वकम् । वेदतत्त्वार्थविदुषेब्राह्मणायोपपादयेत् ॥९६**

भिक्षामपीत्यादि ॥ ६६ ॥ वेदतत्त्वार्थविदुषे * चतुर्थाश्रमिणे ब्रह्म * चारिणे वाब्राह्मणाय*भिक्षामुदकपात्रं वा*विधिवच्च सत्कृत्योपपादयेत् ॥ ६६ ॥ दानमसत्पात्रेऽनर्थं दाना*दानमाह*नश्यन्तीत्यादिकश्लोकं ॥ १ ॥ ६७ ॥

**नश्यन्तिहव्यकव्यानिनराणामविजानताम् । भस्मीभूतेषुविप्रेषुमोहाद्दत्तानिदातृभिः ॥९७**

भस्मीभूतेषुविप्रेषु*वेदाध्ययनतदर्थतत्त्वज्ञाना *ग्निशून्येषुब्राह्मणेषु*हव्यकव्यादानफलमजानतां ॥ १ ॥ नराणां मध्ये दातृभिर्मोहात्*भस्मीभूतेषुब्राह्मणेषु*दैवपित्र्ये हव्यकव्यानिदत्तानितेषां नश्यन्तीति ॥ २ एतेनैतदुक्तं भवति * नातिथिभोजनं देवो *द्देशेननवापित्र्ये देशेनतेन * भस्मीभूतातिथिविप्र*भोजनेदोषोनास्तीति ॥ २ ॥ ६७ ॥ विद्वद्ब्राह्मणभोजन*फलमाहविद्येत्यादि ॥ १ ॥ ६८ ॥

**विद्यातपःसमृद्धेषुहुतंविप्रमुखाग्निषु । निस्तारयतिदुर्गाच्चमहतश्चैवकिल्बिषात् ॥ ९८ ॥**

विप्रमुखानामग्निवत्*तेषुविद्यातपःसमृद्धेषुहुतं * हुतमिवदत्तमन्नं * महादुर्गकिल्बिषाच्चिस्तारयति ॥ १ ॥ ॥ ६८ ॥ अतिथिपूजायथाकर्त्तव्यातत्*दाहसंप्राप्तायेत्यादि ॥ १ ॥ ६६ ॥

**संप्राप्तायत्वतिथयेप्रदद्यादासनोदके । अन्नंचैवयथाशक्तिसत्कृत्यविधिपूर्वकम् ॥ ९९॥**

स्वगृहं प्राप्तायातिथये प्रथम*मासनोदके उपवेशनार्थ*मासनं पादधौतार्थं* उदकं प्रदद्यादिय ॥ १ ॥ विधिपूर्वकं सत्कृत्य*यथाशक्तिभोजनार्थं*मन्नञ्चैवप्रदद्यादिति ॥ २ ॥ ६६ ॥ गृहेऽतिथ्युपवासे * दोषमाहशिलानित्यादि ॥ १ ॥ १०० ॥

**शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन्॥ १००**

यो निर्धनतया शिलाञ्छवृत्तौ* क्षेत्रपतितं यदवशिष्टं *धान्यं शिलमित्युच्यते *तारश्चैव ब्राह्मणस्य ॥ १ ॥ पञ्चाग्नीनपि जुह्वतो* गृहमागतो ब्राह्मणोऽतिथिरेव* यद्यासनोदकाद्यैरनर्चितः सन् वसति ॥ २ ॥ तदा तस्मा*द्गृहस्थात्स*र्वं सुकृ*तमादत्ते ॥ ३ ॥ १०० ॥ अतिथेरागतस्यार्चनहेतो*र्वस्तुनोऽभावः कस्यापि गृहिणो* स्तीत्यत आह तृणानि भूमिरित्यादि ॥ १ ॥ १०१ ॥

**तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥ १०१ ॥**

सतां सज्जनानां दरिद्राणामपि* गृहे आसनार्थं तृणानि वर्त्तन्ते *तदभावेऽपि भूमिर्वर्त्तत एव ॥ १ ॥ पादधौतार्थं पानार्थञ्चोदकं *वर्त्तत एव चतुर्थी तु सूनृता* समादरपूर्व्वकप्रियवाक्चास्त्येव* ॥ २ ॥ एतानि चत्वारि कदापि सतां वर्त्तमानानां तृणा*दीनि गृहे नोच्छिद्यन्ते सर्व्वदा सन्त्येव ॥ ३ ॥ सर्व्वाभावेऽप्येतैरेव चतुर्भिरतिथिपूजा* समग्रैव निष्पद्यते ॥ ४ ॥ १०१ ॥ ननु कः पुनरतिथि*रुच्यत इत्यत आह* एकरात्रमित्यादि ॥ १ ॥ १०२ ॥

**एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते॥ १०२**

यो ब्राह्मणो गृहमागत* एकरात्रं निवसति* स ब्राह्मणोऽतिथिः स्मृतः ॥ १ ॥ तस्यातिथि*शब्दस्यार्थ* माह अनित्य*मित्यादिकम् ॥ २ ॥ नित्यं न स्थितिर्यस्य ब्राह्मणस्य स * ब्राह्मण एवातिथिरुच्यत इति * स्थः किमन्यस्य तु ...गोणादिकस्तिथिः ॥ ३ ॥ १०२ ॥ स चातिथिर्यादृशो ब्राह्मणो नाचार्यते त*दाह नैकेत्यादिकम् ॥ १ ॥ १०३

**नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा। उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा॥ १०३**

यस्मिन् गृहे भार्या वर्त्तते पञ्च वा* पञ्चाग्नयो वैतानिकाग्निर्वैवाहिकाग्निर्गृह्याग्नि* रावसथ्याग्निः सभ्याग्नि*श्चेति पञ्चाग्नय इत्याहाग्नीन् विद्वान् ॥ १ ॥ तत्र पञ्चाग्नयो हि वैतानिकाग्नि* र्वैवाहिकाग्नि*र्वैदुरताग्निर्गृह्याग्निर्दावाग्निश्चेति ॥ २ ॥ तस्मिन् गृहे वैश्वदेव * काले उपस्थितमेक * ग्रामीणं विप्रं गृहीनातिथिं विद्यात् ॥ ३ ॥ भिन्न ग्रामादागतञ्च* साङ्गतिकं धनवन्तं *विप्रमतिथिं न विद्यात् ॥ ४ ॥ गृहस्थस्य परगृहे *वासदोषमाह उपा* सत इत्यादिकं श्लोकम् ॥ १ ॥ १०४ ॥

**उपासते ये गृहस्थाः परपाकमबुद्धयः। तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम्॥ १०४ ॥**

ये गृहस्थाः सन्तोऽप्यबुद्धयः खलु * परपाकमुपासते* ते प्रेत्य पुनर्जन्मनि ॥ १ ॥ तेन परपाकोपासनेन तेषा*मन्नादिदायिनां गृहे *पशुतां श्वमार्जारादि* पशुतां व्रजन्तीति ॥ २ ॥ १०४ ॥ ननु तर्ह्येवं वैश्वदेवकाले किं मतिथिसेवनं नान्यकाल इत्यत * तत्राह अप्रणोद्य इत्यादि ॥ १ ॥ १०५ ॥

**अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ॥ १०५ ॥**

गृहमेधिना सायं सूर्योढः * सूर्येणास्तं गतेन गृहं * प्रापितोऽतिथिः कथञ्चिदप्यप्रणोद्यो भवति ॥ १ ॥ केनापि प्रकारेण * तमतिथिं प्रणुदेत् स * चातिथिः क्षुधाकालेऽथ * वाक्षुधायामकालेऽस्य * गृहस्थस्य गृहं प्राप्तोऽनश्नन्नास्य गृहे वसेत् ॥ २ ॥ अवश्यमेव किञ्चिद्*पायित्वा तस्य गृहे *वसेदिति शेषः ॥ ३ ॥ १०५ ॥

**न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् ॥१०६**

न वा घृतादियद्द्रव्यं गृही गृहागत*मतिथिं न भोजयेत्त*द्द्रव्यं स्वयं नैवाश्नीयात् ॥ १ ॥ इत्येवमतिथिपूजनं * धन्यं यशस्यमायुष्यञ्च* स्वर्ग्यञ्च भवति ॥ २ ॥ १०६ ॥

**आसनावसथौ शय्यामनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥१०७॥**

आसनेत्यादि ॥ १०७ ॥ गृहस्थः स्वगृहमागते * तिथावुत्तमे खलु आस* नावसथशय्यानुव्रज्योपासन * मुत्तमं कुर्यात् स्वसमेषु*हीने हीनं समे समं ॥ १ ॥ १०७ ॥

**वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥१०८**

वैश्वदेवेत्यादि ॥ १०८ ॥ वैश्वदेवे तस्योदनमन्नादिकं भोज्यं * यत्किञ्च भूतबलिनृयज्ञपरि * वारादिभोजनार्थं तत्*सर्व्वं वैश्वदेवमाह ॥ १ ॥ तस्मिन्नन्ने सर्व्वेषां तेषां भोजनसमाप्त्या निवृत्ते *सत्यवशेषे चासति य*द्यन्योऽतिथिराव्रजेत् ॥ २ ॥ तदा तस्याप्यतिथेरर्थं *यथाशक्ति पुनरन्नाद*मन्नं पक्त्वा प्रदद्यात् ॥ ३ ॥ तेनान्नेन* पुनर्बलिं पूर्व्ववन्न हरेदिति ॥ ४ ॥ १०८ ॥ ननु यदि कश्चिद्विप्रो भिन्नग्राम*वासी चासङ्गतिकश्च* कस्मैचिदर्थायागच्छन् *स्वस्य कुलं गोत्रं वा कि*मतिथिः सन्न ब्रूयात् ॥१॥ तत्राह न*भोजनार्थं *स्वे विप्र इत्यादिश्लोकं ॥१॥१०९॥

**न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् । भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः ॥१०९**

स्वस्य भोजनार्थं विप्रः* स्वं कुलं गोत्रं वा नैव* निवेदयेत् ते स्वे कुल*गोत्रे स्वस्य भोजनार्थं * शंसन् विप्रो * वान्ताशीत्युच्यते बुधैः ॥१॥ ननु ब्राह्मण एव किमतिथि*रुच्यते नान्य इत्यत*आह न ब्राह्मणेत्यादि ॥१॥११०॥

**न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते । वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥ ११० ॥**

ब्राह्मणस्य गृहे उपस्थितो यदि* क्षत्रियो भवति सोऽतिथिर्नोच्यते*तथा वैश्यशूद्रश्च*नातिथिरुच्यते इति ॥ १ ॥ यदि ब्राह्मणस्य गृहे *तस्य सखा ब्राह्मणश्चे * दुपस्थितो ज्ञातयो वा * गुरुर्वा न चातिथिरुच्यते ॥ २ ॥ नैषां पूजनेनातिथिपूजनं * सिद्ध्यतीति वेदितव्यं ॥ ३ ॥ ११० ॥ ननु तर्हि किं गृहागतांस्तान् विप्रो * न भोजयेदित्यत आह* यदि त्वतिथीत्यादि ॥ १ ॥ १११ ॥

**यदित्वतिथिधर्म्मेणक्षत्रियोगृहमाव्रजेत्। भुक्तवत्सुचविप्रेषुकामंतमपिभोजयेत् ॥ १११ ॥**

अतिथिधर्म्मेणयदि*क्षत्रियोगृहमागच्छेत् *तदाविप्रेषुभुक्तवत्सुसतत्स्वथ*काममिच्छातस्तमपि*क्षत्रियंभोजयेदिति ॥ १ ॥ १११ ॥ वैश्यशूद्रौकिन्तर्हि न*भोजयेदित्यतआह*वैश्यशूद्रावपीत्यादि ॥ १ ॥ ११२ ॥

**वैश्यशूद्रावपिप्राप्तौकुटुम्बेऽतिथिधर्म्मिणौ। भोजयेत्सहभृत्यैस्तावानृशंस्यंप्रयोजयन् ११२॥**

यदिवैश्यशूद्रौकुटुम्बे * ब्राह्मणगृहे ऽतिथि * धर्म्ममाश्रित्यप्राप्तौस्त * स्तदाभृत्यैःस्वसापोष्यै * भृत्यादिभिःसहसमकालं भोजयेत् ॥ १ ॥ तथाचाग्रे ऽतिथिंविप्रं * भोजयित्वाऽतिथिधर्म्माणंक्षत्रियं * भोजयित्वास्वजनभोजनकाले * वैश्यशूद्रौचभोजयेत् ॥ २ ॥ अत्यशब्दार्थानभिज्ञस्य * दासभोजनकालेप्रा * गृहस्पतिभोजनादत* कस्यामाशृयन्वैश्य*शूद्रौभोजयेदित्याह ॥ ३ ॥ तदसाधुनहिवैश्योऽभ्यागतस्य* शूद्रो दासवद्भवति ॥ ४ ॥ ११२ ॥

**इतरानपिसख्यादीन्सम्प्रीत्यागृहमागतान्। सत्कृत्यान्नंयथाशक्तिभोजयेत्सहभार्य्यया११३**

इतरानित्यादि॥११३॥ सम्प्रीत्यागृहमागता*नुक्तेभ्यइतरान्जनान्*सखीप्रभृतीन्स्वी*लोकानपिसत्कृत्यभार्य्यया*सहसमकाले*यथाशक्तिभोजयेत्॥१॥ भृत्यस्वसखिसहाधायिप्रभृतीन्*सख्यादीनाहतदसत्*भृत्यशब्देनैवतेषां*पूर्व्वमेवतत्संग्रहात् । २ । नहितत्प्रमादागतदासभोजनात्*पश्चात्सहाधायिमित्रादेर्भोजनं*साधूपपद्यतेलोके ॥ ३ ॥ यएवभार्य्यायाभोजनकालः * सएवस्वस्यापितर्हि * किमर्थंभार्य्ययासह* इत्युक्तमत्रात्मनेति ॥ ४ ॥ तस्मात्स्वीलोकभोजन*कालोभार्य्याभोजनकाल*एवेतिज्ञापनार्थंभार्य्ययेत्युक्तं ॥ ५ ॥ ११३ ॥

**सुवासिनीःकुमारांश्चरोगिणोगर्भिणींस्तथा। अतिथिभ्योऽग्रएवैतान्भोजयेदविचारयन्११४**

सुवासिनीरित्यादि ॥ ११४ ॥ सुवासिनीर्नववधूः*कुमारान्*नुपनीतान् ॥ १ ॥ ११४ ॥

**अदत्वातुयएतेभ्यःपूर्व्वंभुङ्क्तेऽविचक्षणः। सभुञ्जानोनजानातिश्वगृध्रैर्जग्धिमात्मनः ११५॥**

अदत्त्वेत्यादि ॥११५॥ श्वगृध्रैरात्मनोजग्धिं*परत्रभक्षणंस*नजानातीति ॥ १ ११५ ॥ अथगृहस्थस्यात्मनो*भोजनकालउच्यते*भुक्तवत्स्वथेत्यादि ॥ १ ॥ ११६ ॥

**भुक्तवत्स्वथविप्रेषुस्वेषुभृत्येषुचैवहि। भुञ्जीयातांततःपश्चादवशिष्टन्तुदम्पती ॥ ११६ ॥**

भुक्तवत्स्वविप्रेष्वतिथिभिक्षुक* प्रभृतिषुसतस्वथक्षत्रियादिषु*स्वेषुज्ञात्यैयेषुचसखी * सहाधायिभ्रात्रादिषु* भृत्येषुपोष्यवर्गेषु । १ । भुक्तवत्सुसत्सुततः* पश्चादवशिष्टमन्नं*यच्चदम्पतीभुञ्जीयातामिति ॥ २ ॥ अत्रकश्चिद्भ्रान्तःप्रमादीचभृत्य*शब्देनदासान्व्याचष्टे*स्वशब्देनज्ञातीनाह ॥ ३॥ सतुप्रमादीपूर्व्वेण*ज्ञातिभोजनकालंव्याख्यातवान्*कथमिहतदुपसं*हारजपपद्यतेततस्तदसत् ॥ ४ ॥ ११६॥ नन्वेषदम्पतिभोजनस्यकाल*

उक्तास्तर्हि किं सखीप्रभृतीनां च * भार्य्यायासह भोजन*विधानं तत् ॥ १ ॥ भार्य्याभोजनसमकालमेव*सख्यादि स्त्रीलोकं भोजयेदिति*तत्राह देवानित्यादिश्लोकम् ॥ २ ॥ ११७ ॥

देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत्॥११७॥

गृहस्थः शेषभुग्भवे * दितानेन हि ख्यापितं *पूर्व्वं सख्यादीन् भोजयित्वा दम्पती *पश्चात् भुञ्जीयाता मिति ॥२॥११७॥ एतद्व्यतिक्रमेणभोजने दोषं *तथाक्रमेणभोजने *गुणमाहाघं स इत्यादि ॥ १ ॥ ११८ ॥

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते॥११८॥

एवमुक्तरूपेणभोजनार्थं योनान्नं पचति केवलमात्मकारणात्*पचनिसखलुघं पाप*जनकं तदन्नं भुङ्क्ते ॥ १ ॥ एतद्युक्तरूपेणपञ्च* यज्ञशिष्टाशनं सतां*मन्नं भोजनं विधीयते ॥ २ ॥ ११८ ॥ एवं गृहमागतानां *राजादीनां मर्च्चने च*विशेषयोग्यतामाह*राजर्त्विक्स्नातकेत्यादि ॥ १ ॥ ११९ ॥

राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरात्पुनः ११९

संवत्सरात्परं राजादीनगृह्यस्थः* स्वगृहमागतान् मधुपर्केण च*सम्पूज्यितुमर्हयेत्* चार्व्वाक्संवत्सरात् पुनः ॥१॥ व्यासेनाप्येवमेवोक्तं *विवाहस्नातकक्ष्माभृदाचार्य्यसुहृदृत्विजः । अर्घ्या भवन्ति धर्म्मेण प्रतिवर्षं गृहागताः ॥ इति ॥११९ ॥ अर्व्वागपि संवत्सरा*न्मधुपर्केणपूजार्हौ*वाश्राजाचेत्यादि ॥ १ ॥ १२० ॥

राजा च श्रोत्रियश्चैव यज्ञकर्म्मण्युपस्थितौ । मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः ॥ १२० ॥

राजा मूर्द्धाभिषिक्तः क्षत्रियो नृपः*श्रोत्रियश्छन्दोऽधीते यः ॥ १ ॥ एतौ द्वौ यज्ञकर्म्मणि *क्रियमाणे यदि संवत्सरादर्व्वाक्*पुनरुपस्थितौ स्यातां *॥२॥ तदा मधुपर्केणतौ*सम्पूज्यौ भवतो न त्वयज्ञे पुनः*सम्पूज्यौ मधुपर्केण॥३॥ पूर्व्वं राजर्त्विगित्यादिना यदुक्तं *तस्यायं विशेषजक्तः*ऋत्विगादिषु राजश्रोत्रियौ ॥ ४ ॥ सस संवत्सरादर्व्वागयज्ञकर्म्मणि*पुनरागतोपि मधु * पर्केण संपूज्याविति*स्थितिर्व्यवस्था विज्ञेया ॥ ५ ॥ १२० ॥ ननु यदि सायमतिथिरागच्छे*त्तदा किं कुर्य्यात् यदि नागच्छेत्तदा*शास्त्राहारार्थं । किं कुर्य्यादि*त्यत आह सायन्त्वित्यादि ॥१॥१२१॥

सायन्त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥१२१॥

सायन्तु रात्रावर्व्वाक् प्रहरात्*पत्नी वैवाहिकेऽग्नौ*सिद्धस्य पक्वस्यान्नस्य*बलिं पागृहमन्त्रं हरेत ॥१॥ हि यस्मात् सायं प्रातर्वैश्वदेवनाम*मेतद्दीदृशं विधीयते* विष्णुनाप्येवमेवोक्तं ॥ २ ॥ सायं प्रातस्त्वतिथयेऽप्रदद्यादासनोदकम् ॥ अन्नञ्चैव यथाशक्त्या*सत्कृत्य विधिपूर्व्वकम् ॥ ३ ॥ प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम् । प्रत्येकदानेनाप्रीतिगोप्रदानसमं फलम् ॥ इति ॥ ४॥ नन्वेवं विधमतिथिपूजनं *ब्राह्मणस्यैव नित्यमुपपद्यते* नित्यभोज्यान्नवान्नत्वात् *क्षत्रियवैश्ययोर्नित्य*भोज्यान्नलाभावादिति ॥१॥ यत उक्तमङ्गिरसा*ब्राह्मणस्य सदा भुङ्क्ते *क्षत्रियस्य च

पर्व्वणि । वैश्यस्यापत्सु भुञ्जीत न शूद्रस्य कदाचन ॥ २ ॥ ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुर्भवेत । वैश्या
न्ने न च शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् ॥३॥ दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति। यो यस्यान्नं समश्नाति स तस्याश्ना
ति किल्बिषम ॥ ४ ॥ इति । व्यासेनाप्युक्तमेवमेव *अमृतं ब्राह्मणान्नेन *दारिद्र्यं क्षत्रियस्य च । वैश्यान्ने न च शू
द्रत्वं शूद्रान्नान्नरकं व्रजेदिति ॥ ५ ॥ आपस्तम्बेनाप्युक्तञ्च *ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्व्वणि । वैश्य
स्य यज्ञदीक्षायां शूद्रस्य न कदाचन ॥ ५ ॥ राजान्नं तेज आदत्ते *शूद्रान्नं ब्रह्मवर्चसम् ॥ असंस्कृतन्तु यो भुङ्क्ते स
भुङ्क्ते पृथिवीमलम् ॥ इति ॥ ५ ॥ सत्यमेव तदप्युक्तं *तद्वै वैश्वदेवादिभ्योऽनावृतस्य* दन्नस्य भोजने फलं ॥ ६ ॥
उक्तमङ्गिरसैव तत्र *अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् । वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् ।
॥ ७ ॥ एतदन्नादिकथनं * वैश्वदेवाद्यभिप्रायेण*तदुक्तमत्रिणा॥ ८॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः समम् ॥
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्रवम् ॥ ९ ॥ एतत्सर्व्वं समाख्यातं याुक्काले समर्थिते । वैश्वदेवे च होमे च दे
वताभ्यर्च्चने जपे ॥ १० ॥ अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् । व्यवहारानुपूर्व्व्येण धर्म्मेणाविभिर्जि
तम् । क्षत्रियान्नं पयस्तेन वैश्यान्नं यत्र पालने ॥ ११ ॥ अतश्च हुक्कालेनित्य*म पिच गृह्य विहितं * तेन तप
नेपिपित*यज्ञ कृते वैश्वदेवादिकरणात् ॥ १२ ॥ ब्राह्मणक्षत्रियवैश्यानामन्नं *नित्यममृतं पयोऽन्नं भवति*न ते
षां दुष्कृतमाश्रयतीति ॥ १३ ॥ इति ॥ अथैवं गृहस्थानां दिनकृत्यानि * विष्णुनाप्युक्तानि यथा* ॥ १ ॥
गृहाश्रमी वैवाहिकाग्नौ* पाकयज्ञान् कुर्य्यात् सायं * प्रातश्चाग्निहोत्रम् ॥ १ ॥ चन्द्रार्कसन्निकर्ष *विप्रकर्ष
योर्दर्श *पौर्णमासाभ्यां यजेत*प्रत्ययनं पशुना ॥ २ ॥ शरद्ग्रीष्मयोश्चाग्रयणेन*व्रीहियवयोर्वा पाके वार्षिका*भा
धिकान्नं प्रत्यब्दं सोमेन*वित्ताभावे इष्ट्या वैश्वानर्या ॥ ३ ॥ शूद्रान्नं यत्नेपरिहरेत्* यज्ञार्थं भिक्षितमवाप्त
मर्थं सकलमेव वितरेत् ॥ ४ ॥ सायं प्रातर्वैश्वदेवं जुहुया * त्क्षिप्रान्नभिक्षवे दद्या*दर्च्चित भिक्षादानेगो*दा
नफलमवाप्नोति ॥ ५ ॥ भिक्षाभावे तस्मात् गवां दद्यात् * वह्नौ वा प्रक्षिपेदुक्तं * पात्रे विद्यमाने तु न*
भिक्षुकं प्रत्याचक्षीत ॥ ६ ॥ कण्डनी पेषणी चुल्ली*कुम्भ उपस्कर इति*पञ्च सूना गृहस्य स्युः ॥ ७ ॥ तन्निष्कृत्यर्थञ्च
ब्रह्मदेवभूत*पितृनरयज्ञान् कुर्य्यात् ॥ ८ ॥ स्वाध्यायो ब्रह्मयज्ञो*होमो दैवो बलिर्भौत *पितृतर्पणं पित्र्यं*यज्ञश्चा
तिथिपूजनम् ॥ ९ ॥ देवतातिथिभृत्यानां पितृणामात्मनस्तथा ॥ न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति
॥ १० ॥ ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात् । तस्मादभ्यागतानेतान् गृहस्थो नावमानयेत् ॥ ११ ॥ गृह
स्थ एव यजते गृहस्थस्तप्यते तपः ॥ ददाति च गृहस्थस्तु तस्माज्ज्येष्ठो गृहाश्रमी ॥ १२ ॥ ऋषयः पितरो देवा भूता
न्यतिथयस्तथा । आशासते कुटुम्बिभ्यस्तस्माज्ज्येष्ठो गृहाश्रमी ॥ १३ ॥ त्रिवर्गसेवां सततान्नदानं सुरार्च्चनं ब्राह्म
णपूजनञ्च । स्वाध्यायसेवां पितृतर्पणञ्च कृत्वा गृही शक्रपदं प्रयाति ॥ १४ ॥ इति ॥ एवमेव वशिष्ठादिभिः सर्व्वैः
*पञ्चयज्ञविधानादि *दिनकृत्यानि प्रायेण*तुल्यानि सर्व्वाण्युक्तानि ॥ १५ ॥ यद्यपीह दिवसस्य*कालनियमो मनु
ना*नोक्तस्तथापि दक्षादि*भाषितकालोऽत्रोच्यते ॥ १६ ॥ तद्यथा दक्षसंहितायां तेनोक्तं* दिवसस्याद्यभागे तु*
कृत्यं तस्योपदिश्यते । द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥ ४ ॥ षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ।
विभागेषु यत्कर्म्म*तत्प्रवक्ष्याम्यशेषत ॥ ५ ॥ उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्व्वीत
दन्तधावनपूर्व्वकम् ॥ ६ ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥

॥ ७ ॥ क्लिश्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च । अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ॥ ८ ॥ नाना
कुत्ससमाकीर्णः शयनादुत्थितः पुमान् । अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन ॥ ९ ॥ प्रातरुत्थाय यो विप्रः प्रा
तःस्नायी भवेत् सदा । समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ १० ॥ उषस्युषसि यत् स्नानं सन्ध्यायामुदितेऽर
वौ । प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥ ११ ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम् । सर्व्वमर्हति पूता
त्मा प्रातःस्नायी जपादिकम ॥ १२ ॥ स्नानादनन्तरं तावदुपस्पर्शनमुच्यते । अनेन तु विधानेन आचान्तः शुचितामियात्
॥ १३ ॥ प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् । इत्यादिभिराचमनमुक्तम् ॥ १४ ॥ सन्ध्यायाञ्च प्रभाते
च मध्याह्ने च ततः पुनः ॥ सन्ध्यामुपासीत यो न ब्राह्मणस्तु विशेषतः ॥ १५ ॥ स जीवन्नेव शूद्रः स्यात् मृतः श्वा चैव
जायते । सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ॥ १६ ॥ यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते । सन्ध्या
कर्म्मावसाने तु स्वयं होमो विधीयते ॥१७॥ स्वयं होमे फलं यत्तु तदन्येन न जायते । ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयो
ऽथ विट्पतिः ॥ १८ ॥ एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि । देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ॥ १९ ॥
देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे । पितॄणामपराह्णे च कार्य्याण्येतानि यत्नतः ॥ २० ॥ पौर्व्वाह्णिकन्तु
यत् कर्म्म यदि तत् सायमाचरेत् । न तस्य फलमाप्नोति वन्ध्यास्त्रीमैथुनं यथा ॥ २१ ॥ एतेन तद्विज्ञापितं *यत्
पौर्व्वाह्णिकं कर्म्म तत्*खल्वामध्याह्नात् कर्त्तुमर्हतीति ॥ २२ ॥ दिवसस्याद्यभागे तु सर्व्वमेतद्विधीयते । द्वितीये च
तथा भागे वेदाभ्यासो विधीयते ॥ २३ ॥ वेदाभ्यासो हि विप्राणां परमं तप उच्यते । ब्रह्मयज्ञः स विज्ञेयः षडङ्ग
सहितस्तु सः ॥ २४ ॥ वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः । ततो दानञ्च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।
२५ । तत्र पूर्व्वं प्रथमाश्रमे *वेदस्वीकरणादित्रिधा*गृहाश्रमे तु जपो वेदस्य*शिष्येभ्यः प्रदानञ्चेति द्विधा ॥ २६ ॥
समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥ तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम् ॥ २७ ॥ पिता माता गुरु
र्भार्य्या प्रजा दीनाः समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ २८ ॥ ज्ञातिर्बन्धुजनः क्षीण
स्तथानाथः समाश्रितः । अन्योऽप्यधनयुक्तश्च पोष्यवर्ग उदाहृतः २९ ॥ भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् । ३० । सार्व्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः । ज्ञानवद्भ्यः प्रदात
व्यमन्यथा नरकं व्रजेत् ॥ ३१ ॥ स जीवति य एवैको बहुभिश्चोपजीव्यते । जीवन्तो मृतकास्त्वन्ये य आत्मम्भरयो
नराः ॥३२॥ बह्वर्थे जीव्यते कैश्चित् कुटुम्बार्थे तथापरैः । आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः ॥३३
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता । अदत्तदाना जायन्ते परभाग्योपजीविनः ॥ ३४ ॥ यद्ददाति वि
शिष्टेभ्यो यज्जुहोति दिने दिने । तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥ ३५ ॥ चतुर्थे च तथा भागे स्नानार्थं
मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥ ३६ ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा ॥ ३७ ॥ मलापकर्षणं पश्चात् मन्त्रवत्तु जले स्मृतम् । सन्ध्यास्नानमुभा
भ्याञ्च स्नानभेदाः प्रकीर्त्तिताः ॥ ३८ ॥ मार्ज्जनं जलमध्ये तु प्राणायामो यतस्ततः । उपस्थानं ततः पश्चात् सावित्र्या
जप उच्यते ॥ ३९ ॥ सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः ॥ विश्वामित्रऋषिश्छन्दो गायत्री सा विशिष्यते ॥४०॥
पञ्चमे च तथा भागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥ ४१ ॥ देवैश्चैव मनुष्यै
श्च तिर्य्यग्भिश्चोपजीव्यते । गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही ॥ ४२ ॥ त्रयाणामाश्रमाणान्तु गृहस्थो

योनिरुच्यते। तेन विसीदमानेन सीदन्तीह तरे त्रयः ॥ ४३ ॥ मूलं प्राणो भवेत् स्कन्दः स्कन्दाच्छाखाः सपल्लवाः।
मूलेन विविनष्टेन सर्व्वमेतद्विनश्यति ॥ ४४ ॥ तस्मात् सर्व्वप्रयत्नेन रक्षितव्यो गृहाश्रमी। राज्ञा चान्यैस्त्रिभिः
पूज्यो माननीयश्च सर्व्वदा ॥४५॥ गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी। न चैव पुत्रदारेण स्वकर्म्मपरिवर्जितः ॥४६॥
अस्नात्वा चाप्यहुत्वा चाजप्त्वा दत्त्वा च मानवः। देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ॥ ४७ ॥ एक एव हि भुङ्क्ते
ऽन्नमपरान्नैव भोजयेत्। न भुज्यते स एवैको यो भुङ्क्तेऽन्नं ससात्त्विकः॥४८॥ विभागशीलो यो नित्यं क्षमायुक्तो दयापरः।
देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः ॥ ४९ ॥ दयालज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता। एते यस्य गुणाः सन्ति
स गृही मुख्य उच्यते ॥ ५० ॥ संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥ भुक्त्वा तु सुखमास्थाय तदन्नं परिणा
मयेत् ॥ ५१ ॥ इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् ॥ अष्टमे लोकयात्रा तु वहिः सन्ध्या ततः पुनः ॥ ५२ ॥
होमो भोजनकं चैव यच्चान्यद् गृहकृत्यकम्। कृत्वा चैव ततः पश्चात् स्वाध्यायं किञ्चिदाचरेत् ॥ ५३ ॥ प्रदोषपश्चि
मौ यामौ वेदाभ्यासेन तौ नयेत्। यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥ ५४ ॥ सर्व्वत्र मध्यमौ यामौ हुतशेषं
हविश्च यत्। भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥५५॥ इति विप्राणां प्रातःकालमारभ्य *सार्द्धप्रहरद्वयाभ्यन्त
रेऽहनि *प्रथमभोजनं सर्व्वैरभिहितम् ॥ ५६ ॥ पुनस्तदवधि सार्द्धप्रहरद्व*याभ्यन्तरे रात्रौ प्रथमप्रहरा*भ्यन्तरए
व द्वितीयभोजनम्। इति ॥ ५७ ॥ एतदुक्तं कात्यायनेनापि यथा*मुनिभिर्द्विरशनमुक्तं *विप्राणां मर्त्यवासिनां
नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥ इति ॥ ५८ ॥ अत्र भ्रान्तैर्व्याख्यायते *सार्द्धप्रहरया
मान्त*रिति सार्द्धप्रहरश्च यामश्चेति*तयोरन्तरिति सार्द्धयाम*द्वयाभ्यन्तरेऽहनि कम् ॥५९॥ तमस्विन्यां पुनः सार्द्ध*
प्रहरयामान्तरिति*अर्द्धप्रहरेण सह यामद्वति ॥ ६० ॥ सार्द्धप्रहरयामस्तस्यान्तरिति*सार्द्धप्रहरराज्यभ्यन्तरे
च*द्वितीयमशनमित्यसद्व्याख्याय ॥ ६१ ॥ प्रहररात्रेरूर्द्धं महानिशायां* द्वितीयाशनं विधाय*नरान्पापे योज
यन्ति ॥६२ ॥ तदसाधुरुक्तवचन*विरुद्धत्वान्महानिशात्वा* च्चेत्यवमन्तव्यम् ॥ ६३ ॥ प्रयोगासाधुत्वापत्तेश्च*
रात्रिभोजनपक्षे पक्ष*द्वयेऽपि तुल्यार्थवारणा*प्रकालाच्चतदसदेव ॥ ६४ ॥ तथा चैवं रात्रौ यामा*भ्यन्तरे पुनर्भु
क्त्वा धीता*मध्यमप्रहरद्वयं *सुप्त्वा पश्चिमे यामे तूत्तिष्ठे*दित्युक्तव्याख्यैव यथा ॥ ६५ ॥ नित्यं नैमित्तिकं काम्यमिति
कर्म्म त्रिविधमतम्। त्रिविधं तच्च वक्ष्यामि गृहस्थस्यावधार्य्यताम् ॥ ६६ ॥ यामिन्याः पश्चिमे यामे त्यक्तनिद्रो
हरिं स्मरेत्। आलोक्य मङ्गलद्रव्यं कर्म्मावश्यकमाचरेत् ॥६७। कृतशौचो निषेव्याग्निं दन्तान्प्रक्षाल्य वारिणा।
स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत् ॥ ६८॥ वेदवेदाङ्गशास्त्राणि*सेतिहासानि चाभ्यसेत्। अध्या
पयेच्च सच्छिष्यान् सद्विप्रांश्च द्विजोत्तमः ॥ ६९ ॥ अलब्धं प्रापयेल्लब्ध्वा क्षणमात्रं समापयेत्। समर्थो हि समर्थेन
नाविज्ञातः क्वचिद्वसेत् ॥ ७० ॥ सरित्सरःसु वापीषु गर्त्तप्रस्रवणादिषु। स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारि
णा ॥ ७१ ॥ तीर्थाभावे प्यशक्त्या वा स्नायात्तोयैः समाहृतैः। गृहाङ्गनगतस्तत्र यावदम्बरपीडनम् ॥७२ ॥ स्नान
मब्दैवतैः कुर्य्यात् पावनैश्चापि मार्जनम्। मन्त्रैः प्राणांश्च रायम्य सौरैश्चार्कं विलोकयेत् ॥ ७३ ॥ तिष्ठन्
स्मृत्वा च गायत्रीं ततः स्वाध्यायमारभेत्। ऋचाश्च यजुषां साम्नामथर्व्वाङ्गिरसामपि ॥ ७४ ॥ इतिहासपुराणानां
वेदोपनिषदां द्विजः। शक्त्या सम्यक् पठेन्नित्यमल्पमप्यासमापनात् ॥ ७५ ॥ सयज्ञदानतपसामखिलं
फलमाप्नुयात्। तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः ॥ ७६ ॥ धर्म्मशास्त्रेतिहासादि सर्व्वेषां शक्तितः

पठेत् । कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः ॥ ७७ ॥ जानुं कृत्वा दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः । एकै-
काञ्जलिदानेन प्रकृतिस्थोपवीतिकः ॥ ७८ ॥ समजानुद्वयो ब्रह्मसूत्रहारवदुङ्मुखः । तिर्यग्दर्भेषु वामाग्रेषु यवै-
स्तिलविमिश्रितैः ॥ ७९ ॥ अम्भोभिरुत्तरमुखः कनिष्ठामूलनिर्गतैः । द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्प-
येत्ततः ॥ ८० ॥ दक्षिणाभिमुखः सव्यं जानुं कृत्वा द्विगुणैः कुशैः । तिलैर्जलैश्च देशिनामूलदर्भैर्द्विनिःसृतैः ॥ ८१ ॥
दक्षिणांसोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः । सन्तर्पयेद्दिव्यपितॄन् तत्परांश्च पितॄन् स्वकान् ॥ ८२ ॥ पिता-
पितामहादींश्च मौनेनैव हविर्भिस्त्रिभिः । मातामहादीन् येऽपरा गोत्रिणो दाहवर्जिताः ॥ ८३ ॥ तानेका-
ञ्जलिदानेन तर्पयेच्च पृथक् पृथक् । असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः ॥ ८४ ॥ वस्त्रनिष्पीडनाम्भोभि-
स्तेषामाप्यायनं भवेत् । अतर्पितेषु पितृषु वस्त्रं निष्पीडयेन्न यः ॥ ८५ ॥ निराशाः पितरस्तस्य भवन्ति सुरमा-
नुषैः । पयो दर्भस्वधाकारगोत्रनामतिलैर्भवेत् ॥ ८६ ॥ सुदत्तं तत्पुनस्तेषामेकेनापि वृथा विना ॥ अन्यचि-
त्तेन यद्दत्तं यद्दत्तं विधिवर्जितम् । अनासनस्थितेनापि तज्जलं रुधिरायते ॥ ८७ ॥ एवं सन्तर्पिताः कामैस्त-
र्पकांस्तर्पयन्ति ते ॥ ८८ ॥ ब्रह्मविष्णुशिवादित्यमित्रावरुणनामभिः । पूजयेल्लक्षितैर्मन्त्रैर्जलमन्त्रोक्तदे-
वताः ॥ ८९ ॥ उपस्थाय रविं काष्ठां पूजयित्वाथ देवताः । ब्रह्माग्नीन्द्रौषधीजीवविष्णूनामरुतां स्वयम् ॥ ९० ॥
अर्पायत्वेति सत्कारं नमस्कारैः स्वनामभिः । कृत्वा मुखं समालभ्य स्नानमेवं समाचरेत् इति ॥ ९१ ॥ इति मध्या-
ह्नस्नानविधिमुक्त्वोवाच* ततः प्रविश्य भवनमावसथ्ये हुताशने । पाकयज्ञांश्चतुरो विदध्याद्विधिवद्द्विजः ॥ ९२ ॥
अनाहिताग्निः सभ्याग्निरादायान्नं घृतप्लुतम् । शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ॥ ९३ ॥ व्यस्ताभि-
र्व्याहृतिभिश्च समस्ताभिस्ततः परम् ॥ षड्भिर्देवकृतस्येति मन्त्रविद्भिर्यथाक्रमम् ॥ ९४ ॥ प्राजापत्यं स्विष्टकृतं
हुत्वैवं द्वादशाहुतीः । ओंकारपूर्वैः स्वाहान्तैस्त्यागः स्विष्टविधानतः ॥ ९५ ॥ भूमिदर्भान् समास्तीर्य बलिकर्म
समाचरेत् । विश्वेभ्यो देवेभ्य इति सर्वेभ्यो भूतेभ्य एव च ॥ ९६ ॥ भूतानां पतये चेति नमस्कारेण
शास्त्रवित् । दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः ॥ ९७ ॥ पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ॥
उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम् ॥ ९८ ॥ इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् । गोत्रनामस्वधाका-
रैः पितृभ्यश्चापि शक्तितः ॥ ९९ ॥ षड्भ्योऽन्नमन्वहं दद्यात्पितृयज्ञविधानतः । वेदादीनां पठेत्किञ्चिदल्पं
ब्रह्ममखान्तरे ॥ १०० ॥ ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः । काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च
१०१ ॥ उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्त्तकम् । अप्रमत्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः ॥ १०२ ॥
आगतं दूरतः श्रान्तं भोक्तुकाममकिञ्चनम् । दृष्ट्वा सम्मुखमभ्येत्य सत्कृत्य प्रश्रयार्चनैः ॥ १०३ ॥ पादधावनस-
म्मानाभ्यञ्जनादिभिरर्चितः । त्रिदिवं प्रापयेत्सद्यो यज्ञस्याभ्यधिकोऽतिथिः ॥ १०४ ॥ कालागतोऽतिथिर्दृष्ट-
वेदपारो गृहागतः । द्वावेतौ पूजितौ स्वर्गं नयतोऽधस्त्वपूजितौ ॥ १०५ ॥ गृहागताय सत्कृत्य श्रोत्रियाय यथाविधि ।
भक्त्योपकल्पयेदेकं महाभागं विसर्जयेत् ॥ १०६ ॥ विसर्जयेदनुव्रज्य तृप्तो विप्रातिथीन् । मित्रमातुलस-
म्बन्धिश्वशुरान् समुपागतान् ॥ १०७ ॥ भोजयेद्गृहिणी भिक्षां सत्कृतां भिक्षुकोऽर्हति । स्वादन्नमप्यन्नस्वादु
ददद्गच्छत्यधोगतिम् ॥ १०८ ॥ गर्भिणीआतुरभृत्येषु बालवृद्धातुरादिषु । बुभुक्षितेषु भुञ्जानो गृहस्थो-
ऽश्नाति किल्बिषम् ॥ १०९ ॥ इति ॥ एवं हारीतेनापि*लघुहारीतधर्म्मोक्ता*स्तद्यथा तद्दर्श्यते ॥ ११० ॥ अप-

कालेसन्ध्यायकृतशौचोयथाविधि । मुखे पर्युषिते नित्यं भवत्यप्रयतोनरः ।१११। तस्माच्छुष्कमथार्द्रं वा भक्षयेद्द
न्तकाष्ठकम् । कारञ्जं खदिरं वापि कादम्बं कौरवं तथा ॥११२॥ सप्तपर्णं पृश्निपर्णी जम्बूं निम्बं तथैव च । अपामार्गं
च बिल्वञ्च अर्कं औडुम्बरमेव च ॥ ११३ ॥ एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि । सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च
यशस्विनः ॥११४॥ दन्तकाष्ठस्यभक्ष्यश्च समासेन प्रकीर्त्तितः । अष्टाङ्गुलेन मानेन दन्तकाष्ठमिहोच्यते ॥११५॥ प्रादे
शमात्रमथवा तेन दन्तान् विशोधयेत् । प्रतिपत्पर्व्व षष्ठीषु नवम्याञ्चैव सत्तमाः ॥ ११६ । दन्तानां काष्ठसंयोगो दहत्या
सप्तमं कुलं । अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेषु च ॥११७॥ अपां द्वादशगण्डूषै र्मुखशुद्धिं समाचरेत् । स्नात्वा मन्त्रवदाच
म्य पुनराचमनं चरेत् ॥ ११८ ॥ मन्त्रवत्प्रोक्ष्य चात्मानं प्रक्षिपेदुदकाञ्जलिं । आदित्येन सह प्रातर्मन्देहा नाम
राक्षसाः ॥११९॥ युध्यन्ति वरदानेन ब्रह्मणोऽव्यक्तजन्मनः । उदकाञ्जलिनिक्षेपा गायत्र्या चाभिमन्त्रिताः । १२० ।
निघ्नन्ति राक्षसान् सर्व्वान् मन्देहाख्यान् द्विजेरिताः ॥ ततः प्रयाति सविता ब्राह्मणै रभिरक्षितः ॥ १२१ ॥
मरीच्याद्यै र्महाभागैः सनकाद्यैश्च योगिभिः । तस्मान्नलङ्घयेत् सन्ध्यां सायं प्रातः समाहितः । १२२ ॥ उल्लङ्घयति
यो मोहात् सयाति नरकं ध्रुवम् । सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्य्यस्य चाञ्जलिं । १२३ ॥ दत्वा प्रदक्षिणं कुर्य्याज्जलं
स्पृष्ट्वा विशुध्यति । पूर्व्वां सन्ध्यां सनक्षत्रां उपासीत यथाविधि । १२४ ॥ गायत्रीमभ्यसेत्तावद् यावदादित्यद
र्शनात् । उपास्य पश्चिमां सन्ध्यामादित्यञ्च यथाविधि । १२५ । गायत्रीमभ्यसेत्तावद् यावत्ताराणि पश्यति ।
ततश्चावसथं प्राप्य कृत्वा होमं स्वयं बुधः । १२६ । सञ्चिन्त्य पोष्यवर्गस्य भरणार्थं विचक्षणः । ततः शिष्यहितार्थाय
स्वाध्यायं किञ्चिदाचरेत् । १२७ । ईश्वरञ्चैव कार्य्यार्थमभिगच्छेद् द्विजोत्तमः । कुशपुष्पेन्धनादीनि गत्वा दूरं समा
हरेत् ।१२८। ततो माध्याह्निकं कुर्य्याच्छुचौ देशे मनोरमे । विधिं तस्य प्रवक्ष्यामि समासात् पापनाशनम् । १२९ ।
स्नात्वा तेन विधानेन मुच्यते सर्व्वकिल्बिषात् । स्नानार्थं मृदमानीय शुद्धाक्षततिलैः सह ॥ १३० । सुमनाश्च ततो गच्छेन्न
दीं शुद्धजलाधिकाम् । नद्यान्तु विद्यमानायां न स्नायादन्यवारिणि । १३१। न स्नायादल्पतोयेषु विद्यमाने बहूदके
सरिद्वरं नदीं स्नानं प्रतिस्रोतः स्थितश्चरेत् । १३२ । तडागादिषु तोयेषु स्नायाच्च तदभावतः । शुचिदेशं समभ्युक्ष्य
स्थापयेत् सकलाम्बरम् । १३३ । मृत्तोयेन स्वकं देहं लिम्पेत् प्रक्षाल्य यत्नतः । स्नानादिकञ्च सम्प्राप्य कुर्य्यादाचमनं
बुधः । १३४ । सोऽन्तर्जलं प्रविश्याथ वाग्यतो नियमेन हि । हरिं संस्मृत्य मनसा मज्जयेच्चोरुमज्जने । १३५ ।
ततस्तीरं समासाद्य आचम्यापः समन्ततः । प्रोक्षयेद्वारुणैर्मन्त्रैः पावमानीभिरेव च । १३६ । कुशाग्रकृततोयेन
प्रोक्ष्यात्मानं प्रयत्नतः । स्योना पृथिवीति मृद्गात्रे इदं विष्णुरिति द्विजाः । १३७ । ततो नारायणं देवं संस्मरेत् प्रति
मज्जने । निमज्ज्यान्तर्जले सम्यक् क्रियते चाघमर्षणम् । १३८ । स्नात्वा क्षततिलैस्तद्वत् देवर्षिपितृभिः सह । तर्प
यित्वा जलं तस्मान्निष्पीड्य च समाहितः । १३९ । जलात्तटं समासाद्य तत्र शुक्ले च वाससी । परिधायोत्तरीयञ्च कुर्य्यात्
केशान्न धूनयेत् । १४० । न रक्तमुल्बणं वासो न नीलञ्च प्रशस्यते । मलाक्तं गन्धहीनञ्च वर्ज्जयेदम्बरं बुधः ॥ १४१
ततः प्रक्षालयेत् पादौ मृत्तोयेन विचक्षणः । दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः ॥ १४२ ॥ त्र्यादिभिराचमन
क्रमः पूर्व्वं *हारीतोक्तः प्रदर्शित *स्त्रिविधश्च जपविधिः ॥ १४३ ॥ छन्दऋष्यादि विज्ञाय जपेन्मन्त्रमतन्द्रितः । जपे
दहरहर्ज्ञात्वा गायत्रीं मनसा द्विजः ॥ १४४ ॥ सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं यो जपेन्नित्यं
न स पापेन लिप्यते । १४५ । अथ पुष्पाञ्जलिं कृत्वा भानवे चोर्द्धबाहुकः । उदुत्यञ्च जपेत् सूक्तं तच्चक्षुरिति चापरम् ।

मपि*मनागङ्गन्त्रा ग्रवोङ्काश्रव्रह्म*णाङ्गोतेषामपि ॥ १७९ ॥ रत्नोजनेभाइतिमर्व्वेषां *दच्छिणतःपित्भा
इति*चतुर्द्दश्यनिताग्राग्रस्ग्रभृतयःकामाः ॥ १८० ॥ सर्व्वेषामभयतः*परिषेकःपिण्डश्च*पश्चिमाप्रतिपत्तिः
॥ १८१ ॥ नगातांकामास्तमासांजुहोतिबलिकर्म्मणो। पूर्व्वनिताविधेषोक्तं जुहोतिबलिकर्म्मनेः ॥१८२॥
अथकातायनेनोक्तं*प्रातःसन्ध्योपासनायां*गायत्रीजपानन्तरं ॥ १८३ ॥ वेदमादितआरभ्यशक्तितोऽह
रहर्जपेत्। उपतिष्ठेत्ततोरुद्रमर्व्वागान्तेदिकाञ्जपात् ॥ १८४ ॥ अथाद्भिस्तर्पयेद्देवान्सतिलाभिःपितॄनपि।
नमोऽन्तेतर्पयामीतिआदावोमितिचब्रुवन् ॥ १८५ ॥ ब्रह्माणंविष्णुंरुद्रंप्रजापतिं*वेदान्देवांश्छन्दांस्यृषीन्
पुराण*नाचार्यान्गन्धर्व्वानितरान्मासं ॥ १८६ ॥ संवत्सरंसावयवं*देवीरप्सरसोदेवानुगान्नागान्*साग
रान्पर्व्वतान्सरितोदिव्यान्म*नुष्यानितरान्मनुष्यान् ॥ १८७ ॥ यक्षान्रक्षांसिपिशाचान्*पिशाचानृषीन्यक्षीसो
ष*धीश्पशून्वनस्पतीन्*भूतग्रामं चतुर्विध*मिनापवीतायप्राचीनावीती ॥ १८८ ॥ यमंयमपुरुषान्*कव्य
वाड*नलंसोमंयममर्य्यमाणमग्नि*ष्वात्तान्सोमपीथान्वर्हिषदोऽथ १८९ ॥ स्वान्पितॄन्सकृत्सक*मातामहां
श्चेतितिरुद्रसमभ्यसेत् ॥ १९० ॥ ज्ञातृवानृष्वराय* पितृव्यमातुलांश्च*पितृव्यमातृब्यंशौ* येचान्ये मत्त उ
दक*मर्हन्तितांस्तर्पयामी * तायमवसानाञ्जलिः ॥ १९१ ॥ अथश्लोकाः ॥ छायांयथेच्छेच्छरदातप
पार्त्तःपयःपिपासुःक्षुधितोऽलमन्नम्। बालोजनित्रीं जननीचबालं योषित्पुमांसं पुरुषश्चयोषाम् ॥ १९२ ॥
तथासर्व्वाणिभूतानिस्थावराणिचराणिच। विप्रादुदकमिच्छन्तिसर्व्वाभ्युदयकृद्धिसः ॥ १९३ ॥ तस्मात्सदैव
कर्तव्यमकुर्व्वन्महतैनसा। युज्यतेब्राह्मणःकुर्व्वन्विश्वमेतद्विभर्त्तिहि ॥ १९४ । अल्पत्वाद्धोमकालस्यवहुत्वात्स्नान
कर्म्मणः। प्रातर्नतनुयात्स्नानंहोमलोपोहिगर्हितः ॥ १९५ ॥ इति ॥ अथविष्णुनावैश्वदेवविधानं*यदुक्तंतत्प्रद
र्श्यते ॥१९६॥अथाग्निंपरिसमुह्य*पर्युक्ष्यपरिस्तीर्य्य*परिषिच्यसर्व्वतःपाका*दग्रमुद्धृत्यजुहुयात् ॥१९७ ॥ वासु
देवायसङ्कर्षणायप्रद्युम्ना*यानिरुद्धायपुरु*षायसत्यायाच्युताय ॥१९८॥अथाग्नये सोमायमित्राय*वरुणायेन्द्राये
न्द्राग्निभ्यां*विश्वेभ्योदेवेभ्यः ॥१९९॥प्रजापतयेऽनुमत्यै* धन्वन्तरये वास्तोष्पत*येऽग्नये स्विष्टिकृतेच ॥२००।
ततोऽन्नशेषेणबलिमुपहरे*त्तत्राभ्याभ्यामभितःपूर्व्वेणाग्नेः॥ अरानामासीतिललानामासीति ॥ २०१ ॥ नितन्त्री
नामासीति प्रपर्णिका*नामासीतिसर्व्वासाम ॥२०२। नन्दिनिसुभगेसुमङ्गलिभद्र*कालीतिस्वस्थि*षुभिप्रदक्षिणाम ॥
२०३ ॥ स्थूणायांध्रुवायांश्रियै*हिरण्यकेश्यैवनस्पतिभ्योधर्म्मा*धर्म्मयोर्द्वारेमृत्यवे च ॥ २०४॥ उदपानेवरुणा
य*विष्णावद्दूखलेमूखले*मरुद्भ्यइतिदृषदि ॥ २०५ ॥ उपरिशरणेवैश्र*वणायराज्ञेभूतेभ्य*श्चेन्द्रायेन्द्रपुरुषेभ्यः ॥
२०६ ॥इतिपूर्व्वाङ्गे।यमाययमपुरुषेभ्यइतिदक्षिणाङ्गे।वरुणायवरुणपुरुषेभ्यइतिपश्चाङ्गे सोमायसोमपुरुषेभ्यइ
त्युत्तराङ्गे ॥ ब्रह्मणेब्रह्मपुरुषेभ्यइतिमध्ये। ऊर्द्ध्वमाकाशायदिवाचरेभ्योभूतेभ्यइतिस्थण्डिले। नक्तञ्चरेभ्यइति
नक्तं ॥ २०८ ॥ ततोदक्षिणाग्रेषुदर्भेषु*पित्रेपितामहायप्रपितामहाय*मात्रेपितामह्यैप्रपितामह्यै। २०९ ॥
स्वनामगोत्राभ्यांच*पिण्डनिर्व्वपणंकुर्य्यात्*पिण्डानाञ्चानुलेपन*पुष्पधूप नैवेद्यादिदद्यादिति ॥२१० ॥उदककल
समुपनिधाय*स्वस्तिवचनंवाचयेत् ॥ श्वकाकश्वपचानांबलिंभुविनिर्व्वपेत् ॥ २११ ॥ भिक्षाञ्चभिक्षवेदद्या*
दतिथिपूजनेच*परंकालमधितिष्ठेत् ॥ २१२ ॥ सायमतिथिंप्राप्तं*प्रयत्नेनार्चये*दनश्नन्तमतिथिं*गृहेनैवा
सयेत् ॥ २१३ ॥ यथावर्णानांब्राह्मणः*प्रभुर्यथास्त्रीणांभर्ता*तथागृहस्थस्यातिथि*स्तत्पूजायास्वर्गमाप्नोति

॥ २१४ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते । तस्मात्सुकृतमादाय दुष्कृतं तु प्रयच्छति ॥ २१५ ॥ एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥ अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥ २१६ ॥ नैकग्रामीणमतिथि* मित्यादिकानि मनूक्तवचनानि* सर्व्वाणि विष्णुनापुराणानि ॥ २१७ ॥ ॥ * ॥ इतोऽत्र तपार्थे च* देवादिपूजावानप्रकारविशेष * ऋषिभिश्च तस्तावान् वै *धर्म्मस्य प्रकारविशेषोऽज्ञातव्यः ॥ २१८ ॥ स्मृतिद्वैधं हि यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ । यथास्वर्गोपासनाया विशेषाविद्भेदतः ॥ २१९ ॥ कात्यायनेनचोक्तं *विरोधोयत्रवाक्यानां प्रामाण्यं तत्र भूयसाम् । तुल्यप्रमाणकत्वे तु न्यायएषप्रकीर्त्तितः । इति ॥ २२० ॥ ० ॥ २२१ ॥ अथयत्पूर्व्वमुद्दिष्टं * महायज्ञविधानञ्च * श्राद्धकल्पञ्च शाश्वत* मितितन्महायज्ञविधानोत्परम् । शाश्वतं नित्यं श्राद्धकल्पमाह* पितृयज्ञन्त्वित्यादि ॥ १ ॥ १२२ ॥

पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ १२२ ॥

अग्निमानित्यधिकारो* यानत्पञ्चमाध्यायसमापयं स्यात* पितुःसपिण्डीकरणा*दूर्द्धं गृहीतवैवाहिकाग्निर्गृही ॥ १ ॥ विप्रादिश्चन्द्रक्षयेऽमावास्यानाम* यातिथिर्भवतितस्यां * पितृयज्ञं पञ्चमहा*यज्ञ मध्ये यन्नित्यं *श्राद्धं तत्पिण्डदानान्तं ॥ २ ॥ निर्व्वर्त्यानिष्पाद्यप्रागुक्तरेवा*मासानुमासिकं मासि* इतमासे भवं प्रतिमासं पिण्डान्वाहार्यकं श्राद्धं कुर्यात् ॥ ३ ॥ उक्तञ्चकात्यायनेन * पितुःसपिण्डनं कृत्वा* कुर्यान्मासानुमासिकमितितेन * पितुःसपिण्डीकरणश्राद्धादूर्द्धं ॥ ४ ॥ वैवाहिकाग्निं गृहीत्वामासानु*मासिकं कुर्यादित्येतच्छ्राद्ध*मग्निमतैवकर्त्तव्यमुक्तं ॥ ५ ॥ ० ॥ १२२ ॥ ननुकथमिदं श्राद्धं * पिण्डान्वाहार्यकमित्याख्यातेइति* तत्राह पितॄणामित्यादि ॥ १ ॥ ० ॥ १२२ ॥ ० ॥

पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः । तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः । १२३ ॥

पुतस्य मनुष्यमासस्त्विं श * तिथ्यात्मकस्तत्रभवं मासिकं *पितॄणामह्निकृष्णपक्षे स्वतिथौ ॥ १ ॥ नित्यश्राद्धपिण्डादनु* पितृभिराहार्यं भोज्यं * यत्तत्पिण्डादन्वाहार्यं श्राद्धं विदुः ॥ २ ॥ तच्चमासिमासमोत्रामशस्या तिथौ* प्रशस्तेनामिषेण वक्ष्यमाण* हरिणादिमांसेननिवाहाग्नौ * पक्वेनाग्निमताप्रयत्नात्कर्त्तव्यं ॥ ३ ॥ ननु बृहन्नारदीये *मांसदानं तथाश्राद्धे *इत्यादिनाकलियुगे* मांसश्राद्धं वर्ज्यमुक्तं *कथमिदं श्राद्धं कलौकर्त्तव्यं स्यात् ॥ ४ ॥ तत्राहप्रमादीमेदं *कलौकर्त्तव्यान्यथामनुनोक्तं *कृतेतु मानवोधर्म्म* इतिपराशरवचनात् ॥ ५ ॥ तत्प्रायेणाग्निकलौनिरग्नयो* द्विजास्तन्निरग्निकर्त्तव्यतया* वर्जनमुक्तं नाग्निमतइति ॥ ६ ॥ ० ॥ १२२ ॥ ० ॥ तत्रविधि* माहतत्र* ये भोजनी*यादृत्यादि ॥ १ ॥ ० ॥ १२४ ॥

तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः । यावन्तश्चैव यैश्चान्नैस्तान्प्रवक्ष्याम्यशेषतः । १२४ ।

तत्रश्राद्धे ये द्विजोत्तमाब्राह्मणाः*पात्राण्नं भोजनीयाःस्युः*ये चवर्ज्जनीयास्तथा *॥ १ ॥ यावन्तोब्राह्मणा यैश्चान्नैःश्राद्धे*ऽर्च्चनीयाभवन्तितांस्तु*सर्व्वानशेषतो युष्मा*नहं प्रवक्ष्यामीति ॥ २ । ० ॥ १२४ ॥ यावन्तस्तिथ्यद्वा तदपेम*वक्तिद्वौदैवइत्यादि । १ । ० ।१२५ । ० ।

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ १२५ ॥

सुसमृद्धोपीतिवचने* न तद्दर्शममावास्यायां* श्राद्धे दैवे देवार्थे* द्वौ ब्राह्मणौ वह्निमान् भोजयेत् ॥ १ ॥ पितृकार्ये त्री न्भोजये* देकं हि पितुरर्थे* पितामहस्यैकं प्रपितामहस्य* चैकमित्येवं त्रीनिति* पञ्च ब्राह्मणान् भोजयेत् ॥ २ ॥ अग्निमताकर्त्तव्योऽस्मिन् मातामह * पक्षे श्राद्धं न विधेय * मिति ज्ञापयन्नाहैकै * कमुभयत्र वेति॥ ३ ॥ उभ यत्र दैवे पित्र * कार्ये चैकैकं वाग्निमान् * ब्राह्मणं भोजयेत्तथा च ब्राह्मण * मेकं दैवे पित्रादिषु * त्रिषु कं ब्राह्मणं भोजयेत् ॥ ४ ॥ श्राद्धे वर्जनीयं यद्यद्द्रव्यं तत्तत्* सर्वं वर्ज्जयित्वा वैश्वदेविकाग्नौ* पक्वान्नमग्निमान् ब्राह्मणान् भोजये *न्नचाभोज्यमन्नं ब्राह्मणान् भोजयेत् ॥ ५ ॥ दैवार्थं स्वाहुता* देवालये स्थापयेद्वा* पित्र्ये ब्राह्मणमेकं भोजयेदिति* वशिष्ठेनाप्युक्तं स्वसंहितायां ॥ ६ ॥ द्वौ दैवे पितृकार्ये त्री* नेकैकमुभयत्र वा*भो जयेत्सुसमृद्धोपि*न प्रसज्जेत विस्तरे ॥ ७ ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः । पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ ८ ॥ अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् । शुभशीलोपसम्पन्नं सर्वलक्षणलक्षितम् ॥ ९ ॥ यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥ १० ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् । प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥ ११ ॥ इति वशिष्ठोक्तं वेद*पारगशुभ शीलोप*पन्नसर्वलक्षणयुक्तैकब्राह्मण*भोजनविधानं पितृ*कार्य एव न तु दैवे ॥ १२ ॥ दैवपक्षस्यान्नं पात्र* उद्धृत्य देवतायतने* नीत्वा स्थापयित्वा तमेकं ब्राह्मणं* श्राद्धविधिना भोजयित्वा* तदन्नं वह्नौ क्षिपेदिति ॥ १३ ॥ एवं वेदपारगैक*ब्राह्मणभोजनश्राद्ध* विधिः श्रेयस्तः पूर्व *द्वौ दैवेत्युक्तमेव ॥ १४ ॥ वेदपारगब्राह्मण*उक्तो व्यासेनतद्यथा* मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद्वेदपारगः इति ॥ १५ ॥ एवं याज्ञवल्क्येन*युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च । परिश्रिते शुचौ देशे दक्षिणाप्लवने तथा ॥ १६ ॥ इत्याग्निमता कर्त्तव्ये*पार्वणश्राद्धे विधिरुक्तस्तः*परस्तोकेन द्वौ दैवे* प्राक् त्रयः पित्र्ये इत्यनेन ॥ १७ ॥ योवि धिरुक्तः स निरग्निकर्त्तव्ये * विधिर्लिखितर्षिवाक्ये नैकार्थत्वा * दन्यथा पुनरुक्तिदोषो भवति ॥ १८ ॥ अन ग्निकप्रकरणे * तद्वचनदर्शयिष्यते* गोभिलेनाप्येवमुक्तं ॥ १९ ॥ अथ श्राद्धममावास्यायां पितृभ्यो * दद्यात्पञ्च मीप्रभृति * वापरपक्षस्य यदहः * रुपपद्येतदहः ॥ २० ॥ इति ॥ अत्राग्निमानित्यधिकारो दृश्य* इत्तं श्राद्धं तेन पितृभ्य इति * पितृपितामहप्रपितामहेभ्य २१ ॥ न तु पितृपितामहप्रपितामहमातामहप्रमाता * महवृद्धप्रमातामहे भ्य एकं * कमुभयत्रेत्युक्तः ॥ २२ ॥ एतत्साग्निककर्त्तव्यमभिप्रेत्य * मत्स्येनाप्युक्तं यथा ॥ २३ ॥ द्वौ दैवे प्रा ङ्मुखौ त्रीं स*पित्र्ये चोदङ्मुखांस्तथा । भोजयेद्विविधान्विप्रा* नेकैकमुभयत्र वा ॥ २४ ॥ भोजयेदथवाप्येकं ब्राह्मणं वेदपारगम् ॥ देवेकृत्वा चनैवेद्यं पश्चाद्वह्नौ तत्क्षिपेत् ॥ इति ॥ २५ ॥ अत्र देशे देवायतने देशे * वाशिष्ठ वचनदर्शनात्* तेनोभयोस्तुल्याकारता भवतीति ॥ २६ ॥ गौतमेनाप्युक्तं यथा* अथ श्राद्धममावास्यायां पितृभ्यो* दद्यात्पञ्चमीप्रभृति* वाऽपरपक्षस्य यथाश्रद्धं ॥ २७ ॥ नवावरान्भोजयेदयुजो यथोत्*साहं वा ब्राह्मणानृश्रो त्रियानिति ॥ २८ ॥ अत्र नवावरानिति* द्वौ दैवे पित्रादिषु त्रि*ष्वेकैकस्मिन्स्त्रीनित्येवं *नव ब्राह्मणान् पित्र्ये भोज येत् ॥ २९ ॥ अयुजो वा दैवएकं पित्रादिषु त्रिष्वेकैकं ब्राह्मणम् ॥ ३० ॥ ० ॥ विष्णुनाप्येवमेवोक्तं *द्वौ दैवे प्राङ्मु

ोश्च * पित्रो कार्य्य उदङ्मुखान्*एकैकमुभयत्र वा ॥ इति ॥ ३१ ॥ आश्वलायनगृह्ये च * दैवएकं पित्रादि
गाच्चैकै * कर्म्मैकैकमेकं वा * नत्वेवैकं सर्व्वेषाम् ॥ इति ॥ ३२ ॥ अत्रपित्रादिएयस्यैकैकस्येति*
पितरेकं पिता*महस्यैकं प्रपितामह * शेत्येवं पित्रादित्रयस्यैकैकम् ॥ ३३ ॥ दैवएकं पित्रादित्रयस्यैकं
नत्वेकं सर्व्वेषां दैव*पित्रादित्रयाणामिति ॥ ३४ ॥ सर्व्वेषामितिवचनात्*दैवपित्र्याणामेकं.* ब्राह्म
णंभोजयेदिति ॥ ३५ ॥ तेनदैवार्थं द्रव्यमुद्धृत्यदेवे*स्थापयित्वा पित्रादिषु *कब्राह्मणोनप्रतिषिद्धः ॥ ३६ ॥
वशिष्ठोक्तं नविरुध्यते*दैवद्रव्यमात्रतन्त्रौ*प्रक्षेपणवचनात् ॥ ३७ ॥ इत्याग्निमताकर्त्तव्यं * पार्व्वणविधिमुक्त्वान*
कर्तव्यमुक्तं लिखितेनयथा ॥ ३८ ॥ अनग्निकोयदाविप्रः श्राद्धं करोतिपार्व्वणम् । तत्रमातामहानाञ्चकर्त्तव्य
यं सदा इति ॥ ३९ ॥ एवमेवाश्वलायनोक्तं यथा*होदैवप्राक्त्रयःपित्रो उदगेकैकमेवच । मातामहा
नपोवंतन्त्रं वावैश्वदेविकमिति ॥ ४० ॥ गोभिलेनापानग्निनाक्रियमाणे * पार्व्वणं वाक्यमुक्तं ॥ ४१ ॥ पितृ
पितामहेभ्यः*प्रपितामहेभ्योमाता*महेभ्यःप्रमातामहेभ्यो* वृद्धप्रमातामहेभ्यःस्वधोच्यतामिति ॥ ४२ ॥
याज्ञवल्क्येनोक्तं *पितरोयत्रपूज्यन्ते *तत्रमातामहादयः । अविशेषेणपूज्याःस्युरविशेषात्नरकं व्रजेत् ॥ इति
।३ ॥ मार्कण्डेयपुराणे च * पितॄणामयुजःकाम युग्मान्दैवेद्विजोत्तमान् । एकैकं वापितॄणां चदेवानाञ्च
तः ॥ ४४ ॥ तथामातामहादीनां तुल्यं वावैश्वदेविकम् । पृथक्तयोस्तथाचान्येकेचिदिच्छन्तिमानवाः १४५ ॥
ङ्मुखौदैवसङ्कल्पौपित्र्यान्कुर्यादुदङ्मुखान् ॥ तथामातामहादीनां विधिरुक्तोमणीषिभिः ॥ इति ॥४६॥
नपुराणे चप्रोक्तं * स्नातान्शुचीन्ब्राह्मणान्द्वौ * प्राङ्मुखौदैवकर्म्मणि । उपवेश्यत्रीन्पित्र्यांश्च एकैकमुभयत्र
॥ ४७ ॥ एवमातामहादीनां श्राद्धं रपिचकारयेत् ॥ इति ॥ एतेनानग्निकोपिश्राद्धे भोजामे * वान्नं ब्राह्म
न्भोजयेत् *नत्वभक्ष्यमन्नं भोजयत् ॥ ४८ ॥ अभोज्यं ह्यन्नमग्नौ वाहिकाग्नौ * पक्कं तेनान्नेनपञ्चयज्ञादि*गृह्य
विधानस्य* भावेनयथापाकत्वात् ॥ ४९ ॥ तदुक्तमत्रिणायथा*योऽगृह्योत्वाविवाहाग्निं गृहस्थइतिमन्यते ।
न्नं तस्यानभोक्तव्यं वृथापाकोहिसस्मृतः ॥ ५० ॥ स्वयम्भुवाभक्तं वद्यते * अनर्चितं वृथापाकमश्नीयाद्यो षित
त ॥ ५१ ॥ अङ्गिराअप्युवाच*दुष्कृतं हिमनुष्याणामन्नमाश्रित्यतिष्ठति । योयस्यान्नं समश्नातिसतस्याश्ना
ल्विषमिति ॥ ५२ ॥ तर्हिपङ्क्तिपावनिरग्निकस्यान्नं नभुङ्क्तेकथं * तेनश्राद्धं कर्त्तव्यं स्या * दितिचेत्त
क्तं प्रचेतसायथा ॥ ५३ ॥ आपद्यनग्नौतीर्थेषुचन्द्रसूर्यग्रहे तथा । आमश्राद्धं द्विजैःकार्य्यं शूद्रेणतुसदैव
ेति ॥ ५४ ॥ उशनसाप्युक्तं । निरग्निरध्वगोवापितर्थेवव्यसनान्वितः । आमश्राद्धंद्विजःकुर्याद्वृषलास्तुसदै
हि ॥ ५५ ॥ तत्रापिब्राह्मणाभावे *कुशमये ब्राह्मणे तु* श्राद्धमामान्नेनकुर्य्यात्*तद्दर्शितं प्राक् ॥ ५६॥ १२९ ।
तुकस्माद्ब्राह्मणानां *विस्तरेसुसम्भवेपि*नप्रसज्यतेतत्राह* सत्क्रियेत्यादिश्लोकम् ॥ १ ॥ ० ॥ १२६ ॥ ० ॥

## ।सत्क्रियादेशकालौचशौचंब्राह्मणसम्पदः । पञ्चैताविस्तरोहन्तितस्मान्नेहेतविस्तरम् ।१२६।

श्राद्धे ब्राह्मणस्यसम्पदो*वैगुण्याभावोहिसत्त्व*क्रियाचदेशस्कालश्च*शौचञ्चेत्येताःपञ्चयस्मात् ॥ १ ॥ब्राह्मणा
ां विस्तरोहन्ति*तस्माद्ब्राह्मणानां विस्तरं *सम्भवेपिनेहेत ॥ २ ॥ तत्रसत्भोजनं क्रियां* स्वजातिविहितं कर्म्म*
गोऽत्रैवव्यवस्थामाणः*कालःश्राद्धकालःशौचं शुचिभावः ॥ ३ ॥ सम्पदन्तिब्राह्मणानां * विस्तरश्चप्राप्तिश्चेच्छया *

श्राद्धकाले कष्टं भवति * क्वचित्स्यात्क्वचिन्न भवतीति ॥ ४ ॥ ० ॥ १२६ ॥ ० ॥ अमावास्यायां श्राद्धस्य फलमाह *
प्रथिता प्रेतकृत्येत्यादि ॥ १ ॥ ० ॥ १२७ ॥

प्रथिता प्रेतकृत्यैषा पित्र्यं नाम विधुक्षये । तस्मिन्युक्तस्यैति नित्यं प्रेतकृत्यैव लौकिकी ॥१२७।

प्रेतस्योपकारकत्वात् * क्रियाविधुक्षये ऽमावास्यायामेषा * पित्र्यं नाम प्रथितास्ति ॥ १ ॥ तस्मिन्पित्र्ये ऽमावास्याश्राद्धे * पारलौकिके कर्मणि व * युक्तस्य जनस्य ॥ २ ॥ लौकिकी प्रेतकृत्या तत् * प्रेतानां श्राद्धादिक्रिया * स तपुत्रादायतरोत्पादनाक्रियात् * नित्यमेवेतागच्छति ॥ ३ ॥ ० ॥ १२७ ॥ ननु तत्र कीदृशा ब्राह्मणा एव * भोजनीया इत्यत आह श्रोत्रियायेत्यादि ॥ १ ॥ ० ॥ १२८ ॥ ० ॥

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः । अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥१२८॥

यश्छन्दोऽधीते स श्रोत्रियो ब्राह्मणो * भवतार्हत्तमः श्राद्धे * भोजनाय योग्यतम * स्तस्मै श्राद्धे हव्यकव्या * द्रव्याणि दातव्यानि दातृभिः ॥१ ॥ कस्मादित्यत आह * तस्मै श्रोत्रियाय दानं * दातृभिर्दत्तं महाफलं भवति ॥ २ ॥ ० ॥ १२८ ॥ ननु समन्त्रज्ञो जनो * यदा बहुश्रोत्रियान्नष्टो * ब्राह्मणान्न प्राप्नोति * तर्हि कथं श्राद्धं कुर्यात् * इत्यत आह एकैकमित्यादि ॥ १ ॥ १२९ ॥

एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् । पुष्कलं फलमाप्नोति नामन्त्रज्ञान्बहूनपि ॥१२९ ।

समन्त्रज्ञोऽपि पुरुषः खलु बहूनां श्रोत्रियाणां * समप्राप्तौ प्राप्तौ वा दैवे * पित्र्ये चैकैकमपि * विद्वांसं श्रोत्रियमेव भोजयेत् ॥ १॥ तेन पुष्कलं मनोज्ञं * फलमाप्नोति तथा * ऽमन्त्रज्ञानश्रोत्रियान् * बहूनपि न भोजयेत् ॥ २ ॥ ० ॥ १२९ ॥ ननु कथं जानीयात्कः * श्रोत्रियः को वा नेत्यत * आह दूरादेवेत्यादि ॥ १ ॥ १३० ॥ ० ॥

दूरादेव परीक्षेत ब्राह्मणं वेदपारगम् । तीर्थं तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः ।१३०।

यत्र यो ब्राह्मणोऽस्ति स * कीदृशस्तदन्वयसन्धायपारगेव * दूरादेव वेदपारगं ब्राह्मणं * परीक्षेत परम्परया ॥ १ ॥ स हि हव्यकव्यानां * प्रदाने तीर्थमिव * सोऽतिथिरेव च * श्राद्धकारिणां स्मृतः ॥ २ ॥ ० ॥ १३० ॥ ननु कस्मादेतावच्छ्रोत्रिय एवं स्यात् * इत्यत आह सहस्रमित्यादि श्लोकद्वयम ॥ १ ॥ ० ॥ १३१ ॥ .

सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते । एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति धर्मतः ॥ १३१ ।

ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च । न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥१३२।

हि यस्मादनृचां ब्राह्मणानां * सहस्राणां सहस्रं ब्राह्मणा * यत्र श्राद्धे भुञ्जते * तत्र तेन स तत्फलं स्यात् ॥२॥ मन्त्रविदेको ब्राह्मणः * प्रीतः श्राद्धभोजनेन * स्तानसर्वान् अनृचः * सहस्रगुणितानेव * सहस्रब्राह्मणान् धर्म * तः सामर्थ्यं नैवार्हतीति ॥ ० ॥ १३१ ॥ ज्ञानोत्कृष्टायेत्यादि ॥ १३२ ॥ पितृश्राद्धे देयद्रव्याणि कव्यानि * दैवश्राद्धे देयद्रव्याणि हवींषि * तानि ज्ञानोत

कस्मायै वदेया नित्याः ॥ १ ॥ न तु ज्ञाननिष्ठाय * ब्राह्मणाय देया नित्याः * पापमोक्षार्थं कर्तव्यैः * कर्मभिश्चाभिकर्मस्यैव * पूजनात् नरः शुद्धाति * न त्वधार्म्मिकपूजनात् । २ ॥ तत्र दृष्टान्तमाह नहीत्यादि * हि यस्मात् असृग्दिग्धौ हस्तौ न * रु धिरेणाशुद्धौ धौताम् ॥ ३ । ० ॥ १२२ । ० । ननु ये ब्राह्मणाः किं न धार्म्मिकाः * इत्यत आह यावत * इत्यादिकमेकं श्लोकम् ॥ १ ॥ ० ॥ १२२ ॥

यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् ॥ १३३॥

अमन्त्रवित् ब्राह्मणो हव्यकव्येषु * यावतो ग्रासान् ग्रसते ॥ १ ॥ तममन्त्रविदं विप्रं * हव्यकव्यं भोजितवान् * प्रेत्य पर लोके दीप्त * शूलर्ष्टि नामकान्यस्त्रान् * सन्तप्तानयोगुडान् ग्रसतीति ॥ २ ॥ ० ॥ १२२ ॥ ० । ननु तर्हि किं ज्ञानोत्कृष्टाय व * ब्राह्मणाय हव्यकव्यानि देयानि * नानेनाभीब्राह्मणेभ्यः * तत्राह ज्ञानेत्यादि ॥ १ ॥ १२४ ॥

ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथापरे । तपः स्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथापरे ॥ १३४ ॥

बहुविधा ब्राह्मणाः सन्ति तत्र * ज्ञाननिष्ठादयश्चतुर्विधा * ब्राह्मणा हव्यकव्यार्हाः ॥ १ ॥ ० ॥ १२४ ॥ तत्र कस्य किं देयमित्यत आह * ज्ञाननिष्ठेष्वित्यादि ॥ १ ॥ ० ॥ १२५ ॥

ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि ॥ १३५ ॥

तेषां मध्ये ज्ञाननिष्ठेषु विप्रेषु । * । कव्यानि पितृद्देश्यद्रव्याणि * प्रतिष्ठाप्यानि भवन्ति * न तु तपोनिष्ठादिषु ॥ २ ॥ हव्यानि तु देवदेयानि द्रव्याणि * यथान्यायं समानरूपेणैव * चतुर्ष्वेतसर्व्वेषु प्रतिष्ठाप्यानि ॥ ३ ॥ ० ॥ २१ ॥ ० ॥ अत्र संशयस्तथापा * सिद्धान्तमाह श्लोकद्वय * येनाश्रोत्रिय इत्यादि ॥ १ ॥ ० ॥ १३६ ॥

अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः । अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥ १३६

ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता । मन्त्रसम्पूजनार्थं तु सत्कारमितरोऽर्हति । १३७ ।

यस्य पिता नश्रोत्रियो * वेदपारगो न भवति * पुत्रो वेदपारगः स्यात् ॥ १ ॥ यस्य पुत्रो नश्रोत्रियो * वेदपारगो न च स्यात् * तस्य पिता वेदपारगो भवति * तयोः कोहव्यकव्यार्ह * इति संशयस्तत्स्यात् ॥ १ ॥ ० ॥ १३६ ॥ ० ॥ तत्राह ज्यायांसमित्यादि ॥ १३७ ॥ अनयोरश्रोत्रियपितृकवेद * पारगवेदपारग * पितृकाश्रोत्रिययोस्तु * मध्ये तं ज्यायांसं वि द्यात् * यस्य पिता श्रोत्रियः स्यात् ॥ १ ॥ तर्हि किं स हव्यकव्यार्हो भवतीत्यत आह मन्त्रेत्यादि ॥ २ ॥ श्राद्धे मन्त्र णां संपूजनार्थं तु * तस्मादितरोऽश्रोत्रिय * पितृको वेदपारगः * सत्कारमर्हतीत्येवेति ॥ ३ ॥ तस्मात्तस्मै हव्यकव्यानि देयानि * न त्वश्रोत्रियायाश्रोत्रियपुत्राय * मन्त्रसम्पूजनार्हत्वाभावादिति । ४ ॥ ० ॥ १२७ ॥ ० ॥ ननु ज्ञाननिष्ठो मित्रं स्याच्चेत् * तर्हि तस्मै देयानि न * वेत्यत आह नेत्यादि ॥ १ ॥ ० १२८ ॥

न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः । नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ॥ १३८ ।

श्राद्धे श्रोत्रियं मित्रं न * भोजयेदितिवंशान्तरजातं *सुहृदं नभोजयेत् ॥ १ ॥ सचेदुपस्थितोवर्त्तते*तदा धनैरस्यतं ग्रहोमित्रतां * रक्षणीयाभवतीति ॥ १ ॥ तर्हि किं यःशत्रुःश्रोत्रियःस्तं भोजयेदितातआह *नारिं नमित्रमित्यादि ॥ २ ॥ यं श्रोत्रियं नारिं नच*मित्रं विद्यात्तं ब्राह्मणं * श्राद्धे भोजयेदितिशेषम् ॥ ३ ॥ ० ॥ १३८ ॥ ० ॥ ननुमित्रश्रोत्रियभोजनेश्राद्धे * कादोतिरितातआह *यस्यमित्रेत्यादिश्लोकेन । १ ॥ १७८ ॥

यस्यमित्रप्रधानानिश्राद्धानिचहवींषिच । तस्यप्रेत्यफलंनास्तिश्राद्धेषुचहविःषुच ॥१३९

यस्यश्राद्धानिकर्म्माणि * पित्र्देयानिद्रव्याणि*हवींषि देवदेयानि*मित्रप्रधानानिभवन्ति ॥ २ । इष्टब्राह्मणेष्वधिको*मित्रश्रोत्रियाअल्पोऽन्ये * त्रिषुवाब्राह्मणेषुद्वौ* मित्रश्रोत्रियौस्याताम् ॥ ७ ॥ तस्यप्रेत्यामृत्वापर*लोके तेषु*श्राद्धेषुकर्व्येषुहविःषुचफलंनभवति ॥ ४ ० ॥ १७९ ॥ तर्हि चोत्त्यमित्राणिकिं *कर्त्तव्यानिभवन्तीत्य * तत्राहयइत्यादि ॥ १ ॥ ० ॥ १४० ॥

यःसङ्गतानिकुरुतेमोहाच्छ्राद्धेनमानवः । सस्वर्गाच्च्यवतेलोकाच्छ्राद्धमित्रोद्विजाधमः ॥१४०।

यःश्राद्धकृन्मानवोमोहात्*श्राद्धेनकर्त्तानद्रव्येण * मित्रा णिसङ्गतानिकुरुते*सस्वर्गात्लोकात्तच्यवते ॥ १ ॥ सखलुश्राद्धमित्रो * द्विजाधमो भवति*यस्माच्छ्राद्धद्रव्यं मित्रार्थं यस्यस*श्राद्धमित्रइत्युच्यते*तस्मात्सद्विजानामधमः । २ ॥ ० ॥१४० ॥ ० ॥ ननुकस्माद्भेतोऽसद्विजाधमइ*तातआहसम्भोजनीत्यादि ॥ ১ ॥ १४१ ॥

सम्भोजनीसाभिहितापैशाचीदक्षिणाद्विजैः । इहैवास्तेतुसालोकेगौरन्धेवैकवेश्मनि।१४१।

श्राद्धे मित्रान्भोजयित्वा*यादक्षिणादीयतेसा*दक्षिणापैशाचीद्विजैः* रभिहिताकस्माद्यतः*सम्भोजनीभोजनेन*समंभुज्यतेतेनैव ॥ १ ॥ इहैवलोकेसादक्षिणानतु*परलोकेफलदा* यथैकवेश्मन्यन्धागौः ॥ २ ॥ ० ॥ १४१ ।नन्वनृचां सहस्राणा*सहस्रब्राह्मणभोजनसमानं *मन्त्रविदेकब्राह्मण*भोजनफलं भवति।१।तर्हि किमनृचां सहस्राणा*सहस्रब्राह्मणानां श्राद्धेतु * भोजनं विहितं भव* तीतातआहयथेत्यादि ॥ २ ॥ ० ॥ १४२ ॥ ० ॥

यथेरिणेबीजमुप्त्वानवप्तालभतेफलम् । तथानृचेहविर्दत्वानदातालभतेफलम् ॥ १४२ ॥

ईरिणे मूषरभूमि*स्तत्रवप्ताबीजमुप्त्वा*यथाफलंनलभते* तथानृचेब्राह्मणाय * दाताहविर्दत्वाफलंनलभते ॥ ১ ॥ ० ॥१४२ ॥ ० ॥ श्रोत्रियायश्राद्धेभोजयित्वादत्त * दक्षिणाफलमाह * दातृनित्यादिकश्लोकम् ॥ ১ ॥ ० ॥ १४३ ॥

दातृन्प्रतिग्रहीतॄंश्चकुरुतेफलभागिनः । विदुषेदक्षिणांदत्त्वाविधिवत्प्रेत्यचेहच ॥१४३॥

श्राद्धे भोजयित्वाविदुषेविधिव*द्दत्तादक्षिणादातॄन्*प्रतिग्रहीतॄंश्चप्रेत्य*परलोकेच इहलोके* फलभागिनःकुरुते। १ ॥ ० ॥ १४३ ॥ ननुरिं श्राद्धेभोजयित्वा किं फल*माप्नोतीतातआह*कामं श्राद्धइत्यादि ॥ १ ॥ ० ॥ १४४ ॥ ० ॥

कामंश्राद्धेऽर्च्चयेन्मित्रंनाभिरूपमपित्वरिम् । द्विषताहिहविर्भुक्तंभवतिप्रेत्यनिस्फलम्।१४४

जटिलमित्यादि ॥ १५१ ॥ जटिलो ब्रह्मचारिवेषधारी न च* वेदमधीते तं विप्रं *दुर्ब्बलं गमनशक्ति* भोजनशक्तिवि हीनं कितवो धूर्त्तः सम्य(क)* १ ये पूगान् बहून् याजयन्ति*पूगः क्रमुकवृन्दयोरि*त्यभिधानं लोके ॥ २ ॥ श्राद्धे दैवेपि वा चैव * तान् भोजयेदिति शेषं ॥ ३ । १५१ ॥

चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥ १५२

चिकित्सकानित्यादि ॥ १५२ ॥ देवलकसाहचर्यात्*देवं ज्ञापितं यथैव*धर्म्मार्थं ये देवान्नं लान्ति*ते देवलकाः सदोषाः । १ ॥ तथा धर्मार्थं ये ब्राह्मणाः*चिकित्सन्ति ते चधर्म्मार्था*चिकित्सा इत्यर्थः चिकित्सन्त * उपजीवन्ति ते चा दोषाः ॥ २ ॥ यथा च देवकार्योपजीविनः*वृत्त्यर्थिता देवलाः देवलकाः * ते दोषवन्तः कस्तथा*त्वधर्म्मार्थ चिकित्सकाः स दोषाः ॥ ३ ॥ धर्म्मार्थं विहितं चिकित्सा इति*अन्तरे ये ब्राह्मणाः* चिकित्सन्त उपजीवन्ति* ते श्राद्धभोजने वर्ज्याः ॥ ४ ॥ कृत्स्नतायैकेन देवलक इति*देवलमहर्षिणोक्तं * देवकार्योपजीवी च*नाम्ना देवलको भवेत् ॥ ५ ॥ उत्पन्न मात्रेन्तु ब्रह्मणि भिषं*गम्बष्ठ नाम्ना धर्म्मे नैव*चिकित्सा इत्यर्विहिता ॥ ६ ॥ तद्यथोशनःसंहितायामुक्तं * विधिना ब्राह्मणात्प्राप्य वैश्यायामम्बष्ठकः । जातः सुवर्णद्वितीयोऽनुलोमद्विजः स्मृतः ॥ ७ ॥ अथर्वणक्रियां कुर्व्वन्नित्यानि भिषक्क्रियां । अश्वं रथं हस्तिनं वा वाहयेद्वा नृपाज्ञया ॥ ८ ॥ सेनापत्यञ्च भैषज्यं कृत्वा जीवेत्तु इत्तिषु । नृपायां विप्रतश्चौर्यात्पुत्रो जातः स भिषक्स्मृतः ॥ ९ ॥ अभिषिक्तनृपस्याज्ञां परिपालयेत् वैद्यकम् । आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्म्ममाचरेत् ॥ १० ॥ ज्योतिषं गणितं वापि कायिकीं वृत्तिमाचरेत् । वैश्याया विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते ॥ ११ ॥ कृष्याजीवी भवेत्तस्य तथैवाग्नेयवृत्तिकः । ध्वजिनीजीविका चापि चिकित्साशास्त्रजीविनः ॥ १२ स्वयं अमनुनाप्युक्तं इतरे * सम्बष्ठे च चिकित्सितमिति ॥ १३ ॥ तथा च धर्म्मार्थं चिकित्सा इत्युक्तत्वात्* सवर्णकभि पतमम्बष्ठानां श्राद्धे *वर्ज्यानेवाधर्म्मार्थं चिकित्सकाः ॥ १४ ॥ यथा कण्वात्रेयपुनर्वसुस्तस्य*शिष्याग्निवेशभेल* जतूकर्णपराशर*हारीतक्षारपाणय*श्चरकादयश्च परे ॥ १५ ॥ ते सर्वे धर्म्मार्थं चिकित्सकास्तत्*चिकित्सोपजीविनां*तस्माच्छ्राद्धे न वर्ज्याः स्युः ॥ १६ ॥ एभ्योऽन्ये चिकित्साजीविनो ब्राह्मणाः*श्राद्धे वर्ज्या भवन्तीति ॥ १७ ॥ मांसविक्रयिणश्च ब्राह्मणाः श्राद्धे *वर्ज्या नतु धर्मार्थं ये *मांसोपार्जकाः यथा *गस्त्यादयो महर्षयः ॥ १८ ॥ हव्य कव्यार्थाविति दैवे पित्र्ये च*पात्रान्नभोजने वर्ज्याः ॥ १९ ॥ १५२ ॥

प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः । प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥ १५३

प्रेष्य इत्यादि ॥ १५३ ॥ ग्रामस्य राज्ञश्च प्रेष्यो*निन्द्यकर्मकृत्स्नः * सच श्राद्धे यो ब्राह्मणः*कुनखी कुनखाख्यरोगवान् यः ॥ १ ॥ श्याववर्णदन्तो यस्य*गुरोश्च प्रतिरोद्धा यो*गुरुप्रतिकूलाचरणकारी स्यात् ॥ २ ॥ त्यक्ताग्निर्निर्ग्निर्ब्राह्मणः सच*यश्च श्राद्धे पितृत्वमर्णः मन्दन*धनवृद्ध्युपजीवी स*श्राद्धे हव्यकव्ययोर्वर्ज्याः ॥ ३ ॥ १५३ ॥

यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः । ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥ १५४ ॥

यक्ष्मीत्यादि ॥ १५४ ॥ यक्ष्मी यक्ष्मरोगवान्*पशुपालो विक्रयी यः* जीविकार्थं छागमेषं * महिष्यादिपोषकः ॥ १ ॥ परिवेत्तापरिवित्ती द्वौ मतौ*वक्ष्यते निराकृतिस्तु* पञ्चमहायज्ञानुष्ठानत्यागेन * देवादीनां निराकर्त्ता ॥ २ ॥ छन्दोगपरिशिष्टे चोक्तं *निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः ॥ इति ॥ ३ ॥ ब्रह्मद्विट् ब्राह्मणद्वेष्टा*

**आगारदाहीगरदःकुण्डाशीसोमविक्रयी। समुद्रयायीवन्दीचतैलिकःकूटकारकः॥ १५८॥**

आगारेत्यादि॥ १५८॥ द्वेषेणयःपरस्यगृहदाहकृत्*गरदःप्रवृत्तयायः*भायानीयार्थंसंयोग*विषंभक्षणा यद्ददात्।१। कुण्डाशीपारिभाषिकोनयौगिक*उक्तंहिदेवलेनच।२। अमृतेजारजःकुण्डोमृतेभर्त्तरिगोलकः। यस्तयोरन्नमश्नातिसकुण्डाशीतिकथ्यते। इति।३। यस्सोमंविक्रीणाति* यःसमुद्रपथेनगच्छतिवन्दी* स्तुतिपाठकोयस्तैलिक*स्तिलादिस्नेहविक्रयी।४। यःकूटकारकःसाक्षी* साक्ष्यकथनेकूटस्य*मिथ्यावचनस्य कर्त्ता।५॥ १५८॥

**पित्राविवदमानश्चकितवोमद्यपस्तथा। पापरोगाभिशस्तश्चदाम्भिकोरसविक्रयी॥ १५९॥**

पित्रेत्यादि॥ १५९॥ पित्रासहधनाद्यर्थं*योविवदतेयोधूर्त्तो*योमद्यपोयःकुष्ठादिपापरोगी*यश्चाभिशस्तः सर्व्वाभि*शङ्कीयश्चापिदाम्भिकः॥ १॥ रसविक्रयीगोमहिषादिदुग्ध*विक्रयीचयोब्राह्मणः॥ २॥ १५९॥

**धनुःशराणांकर्त्ताचयश्चाप्यग्रेदिधिषूपतिः। मित्रध्रुक्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच॥ १६०॥**

धनुःशराणामित्यादि।१६०। योब्राह्मणोधनुःशराणांकर्त्ता*यश्चापिदिधिषूपति* रितिज्येष्ठायांभगिन्या मनूढायांसत्यांयदि।१। कनिष्ठाभगिनीपूर्व्वमूढास्यात्तस्या* पतिर्दिधिषूःकैश्चिदुक्ता।२। ज्येष्ठायांयद्यनूढा यांकन्यायामुह्यतेऽनुजा। साग्रेदिधिषूर्ज्ञेयापूर्व्वातुदिधिषूःस्मृता॥ ३॥ तन्नमनुनाहिस्वयं*वक्ष्यतेऽत्रो क्तदिधिषू*पतिलक्षणमन्यथा*तल्लक्षणाकथनेनास्तिसङ्गतिः।४। वक्ष्यतेहि। भ्रातुर्मृतस्यभार्यायां*योऽनु रज्येतकामतः। धर्म्मेणापिनियुक्तायांसज्ञेयोदिधिषूपतिरिति।५। तस्मात्ज्येष्ठकनिष्ठभ्रातु*भार्यायांयःकामतो ऽनुरज्यतेस*दिधिषूपतिर्विधवा*भ्रातृभार्याहिदिधिषूः।६। मित्रध्रुग्योमित्रद्रोही यो*द्यूतवृत्तिरक्षक्रीड़ा* लब्धार्थोपजीवीयःस्यात्।७। पुत्राचार्यःपुत्रस्ययो*गर्भाधानादिसंस्कारं* कर्म्मकरोतिसएको* गुरुराचार्य उच्यते।८। यउपनीयवेदमध्यापयति* सद्वितीयआचार्यइतिद्विविधा*नातत्रआचार्यौमोहाद्यःपुत्रस्य* भवतिसपुत्राचार्यइत्युच्यते।९। एतद्विद्वान्प्रमादी* धर्म्मव्यवस्थाव्यतिक्रमी* पितापुत्रस्यसंस्कारंकुर्या दिति*संस्कारकर्तृत्वंपितु* र्मुखमितिमत्वाभ्रान्तः।१०। पुत्रआचार्योऽध्यापको *यस्यसपुत्राचार्यः* पुत्रेणाध्यापितःपितेतिव्याचष्टे।११। पिताहिपुत्रस्यकर्त्ता* सर्व्वार्थकरणेसत*संस्कारमृत्विगादिना* कुर्या न्नत्वयंवक्तृदोषप्रदर्शनात्।१२। मातुःसकाशात्प्रथमभिक्षात* पपत्तोद्भावीयाबहवो*दोषाःपूर्व्वंप्रदर्शिता*आचा र्यशब्देनाध्यापकाभिधानाभावाच्च॥ १३॥ १६०॥

**भ्रामरीगण्डमालीचश्वित्र्यथोपिशुनस्तथा। उन्मत्तोऽन्धश्चवर्ज्याःस्युर्वेदनिन्दकएवच॥ १६१॥**

भ्रामरीत्यादि॥ १६१॥ भ्रामरीत्यपस्माररोगी*पिशुनःखलएतेसर्वे*ब्राह्मणावर्ज्याःस्युः॥ १॥ १६१॥

हस्तिगोऽश्वोष्ट्रदमकोनक्षत्रैर्यश्च जीवति। पक्षिणां पोषकोयश्च युद्धाचार्यस्तथैव च ॥ १६२ ॥

हस्तीत्यादि ॥ १६१ ॥ हस्त्यादीनां दमकः शासको * नक्षत्रजीवीजगौतिषमात्रो * पजीवीपक्षिपोषण * जीवी युद्धशिक्षाजीवी ॥ १ ॥ १६२ ॥ स्रोतसामित्यादि ॥ १६३ ॥

स्रोतसां भेदकोयश्च तेषां चावरणे रतः। गृहसंवेशकोदूतोवृक्षारोपकएव च ॥ १६३ ॥

स्रोतसामनन्यपथेन * नगनेप्रवर्त्तकोयः * सस्रोतसां भेदको * यस्तेषां स्रोतसामाव * रणे बोधे रतोभवति॥ १ ॥ यश्चगृहसंवेशकोवास्तुविद्योपजीवीस्यात् * दूतोदौत्यकर्म्मजीवी * यश्चवृक्षारोपणजीवी ॥ २ ॥ १६३ । श्वक्रीडीत्यादि ॥ १६४ ॥

श्वक्रीडीश्येनजीवीच कन्यादूषकएव च। हिंस्रोवृषलवृत्तिश्च गणानांचैवयाजकः ॥ १६४ ॥

शुनाक्रीडाशीलोयःस्यात् * श्येनपक्षिणाऽपरपक्षिघातेन * योजीविकां करोति ॥ १ ॥ कन्यादूषकोयस्त्वनूढाया * योनावङ्गुल्यादिप्रवेशनात् * कन्यात्वधर्म्मलोपकृत् * हिंस्रोऽप्रलवृत्तिश्च ॥ २ ॥ गणानां याजकोनव * ग्रहादीनां गणादीनां यागकृत् * सर्वएवैतेश्राद्धे वर्ज्याः ॥ ३ ॥ १६४ ॥ आचारहीनइत्यादि ॥ १६५ ॥

आचारहीनः क्लीवश्च नित्यं याचनकस्तथा। कृषिजीवीश्लीपदीच सद्भिर्निन्दितएवच ॥ १६५ ॥

यश्चाचारहीनोयश्च क्लीवश्चत्रिविधपुंस्त्व * हीनश्चरेतोवर्ज्जात * चत्वारिक्लीबानीतिवी * जोपघाताद्ध्वजभङ्गा * ज्जराया:ग्रक्षयाच ।१॥ इति ॥ नित्यं याच आकृत्श्लीपदी * कृषिजीवीसज्जनैर्योलोकेनिन्दितोभवति ॥ २ ॥ १६५ ॥

औरभ्रिकोमाहिषिकःपरपूर्व्वापतिस्तथा। प्रेतनिर्हारकश्चैववर्ज्जनीयाःप्रयत्नतः ॥ १६६ ॥

औरभ्रिकइत्यादि ॥ १६६ ॥ मेषजीवीयश्च महिषजीवीयश्च * परपूर्व्वायाश्चनन्यपूर्व्वायाःपतिः * यःप्रेतहारकतयोपजीवति ॥ १ ॥ १६६ ॥ उपसंहरतेऽनानित्यादि ॥ १६७ ॥

एतान्विगर्हिताचारान पाङ्क्तेयान्द्विजाधमान्। द्विजातिप्रवरोविद्वानुभयत्र विवर्ज्जयेत् ॥ १६७ ॥

अपाङ्क्तेयान्श्राद्धे भोजि * ब्राह्मणपङ्क्तिदूषकान् * द्विजातिप्रवरोब्राह्मणोयोविद्वान् * सश्राद्धे उभयत्र * दैवेपित्रे चवर्ज्जयेत् ॥ १ ॥ १६५ ॥ अत्रोक्तानन्यानपिमहर्षिभि * रुक्तान्श्राद्धे वर्ज्यान्ब्राह्मणानपि * वर्ज्जयेदित्याह मतमनिषेधात् ॥ २ ॥ तानिहविष्णुद्यक्तान्श्राद्धे विवर्ज्यान् * ब्राह्मणान्प्रदर्शयामि ॥ ३ ॥ तद्यथाविष्णुसंहितायाम् ॥ दैवेकर्म्मणिब्राह्मणं * नपरीक्षेतयत्नात् * पित्र्ये परीक्षेत ॥ १ ॥ हीनाधिकाङ्गान्विवर्ज्जयेत् * विकर्म्मस्थांश्च बैडालव्रतिकान्वृथालिङ्गिनो * नक्षत्रजीविनोदेवलकांश्च ॥ २ ॥ चिकित्सकानन्ढापुत्रांस्तत्पुत्रान् * बहुयाजिनोग्रामयाजिनः शूद्र * याजिनोऽयाज्ययाजिनो * व्रात्यांस्तद्याजिनश्च

॥ ८ ॥ इति ॥ अथशङ्खलिखितौ* ब्राह्मणान्नपरीक्षेत दैवे कर्मणि धर्मवित्। पित्र्ये कर्मणि सम्प्राप्ते यत्नमार्गेण
वीक्षणम् ॥१॥ ब्राह्मणा ये विकर्मस्था वैडालव्रतिकाः शठाः। हीनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥२॥
गुरूणां प्रतिकूलाश्च अनलोत्पातिनश्च ये। गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥ ३ ॥ अनध्यायेष्वधीयानाः
शौचाचारविवर्जिताः। शूद्रान्नरससम्पुष्टाश्च ब्राह्मणाः पङ्क्तिदूषकाः ॥४॥ षडङ्गवेदवेत्तारो बह्वृचश्च वसामगाः।
त्रिणाचिकेताः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः ॥ ५ ॥ ऋग्यजुःपारगो यश्च साम्नां यश्चापि पारगः। अथर्वाङ्गिरसा
धीता ब्राह्मणाः पङ्क्तिपावनाः ॥ ६ ॥ नित्यं योगरतो विद्वान् समलोष्टाश्मकाञ्चनः। ध्यानशीलो यतिर्विद्वान् ब्रा
ह्मणाः पङ्क्तिपावनाः ॥ ७ ॥ इति ॥ अथगौतमसंहितायां *न भोजयेत् स्तेनक्लीव* पतितनास्तिकतद्वृत्तिवीरहा*
ऽग्रेदिधिषूपतीन् ॥ १ ॥ स्त्रीग्रामयाजकाजपा*लोत्सृष्टाग्निमद्यपकुचरकूट*साक्षिप्रातिहारिकान् ॥ २ ॥ उप
पतिर्यस्य च स्याज्जारः सोम*विक्रय्यगारदाही च। ३। गरदावकीर्णिगण*प्रेष्यागम्यागामिहिंस्र* परिवित्तिपरि
वेत्तृ*पर्याहितपर्याधातृ*त्यक्तात्यक्तदुर्बालाः। ४। कुनखिश्यावदन्तश्वित्रि*पौनर्भवकितवराजप्रेष्य* प्राति
रूपक*शूद्रापतिनिराकृतिश्च। ५। किलासिकुसीदवणिक्*शिल्पोपजीविज्यावादित्र*तालनृत्यगीतशीलान्*पि
त्राचाकामेनविभक्तान् शिष्यांश्चैकेऽसगोत्रांश्च ॥ ६। अथवेदानधीयान * ब्राह्मणभोजनफल * माह ब्राह्मण
स्त्वित्यादि। १। १६८।

ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति। तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥ १६८ ॥

अनधीयानो ब्राह्मण*स्तृणाग्निरिव शाम्यति*यथा तृणाग्निर्हविषि * दत्ते शाम्यति निर्वाणं प्राप्नोति। १। त
स्मात्तस्मै वेदमनधीयानाय*ब्राह्मणाय हव्यं न दातव्यं कस्मात् हि यस्मात् भस्मनि न हूयते * तृणाग्निर्हि भस्मैव। २।
। १६८। ननूक्तभोक्तृवर्ज्जनीयेभ्यो हव्य*कव्यदाने किं भवती*त्यत आहापाङ्क्तेत्यादि। १। ६६।

अपाङ्क्तदाने यो दातुर्भवत्यूर्द्ध्वं फलोदयः। दैवे हविषि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः ॥ १६९

अपाङ्क्तब्राह्मणेभ्यो दानं यस्य*तत्रापाङ्क्तदाने दैवे*पित्र्ये वा हविषि दात्तु* रूर्द्ध्वं यः फलोदयो *भवति तं
प्रवक्ष्यामि। १। १६९। अव्रतैरित्यादि। १७०।

अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्रादिभिस्तथा। अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते ॥ १७०

उपनीतस्य वेदग्रहणादूर्द्ध्वं* यद्व्रतं विहितं तेन* व्रतेन हीनैर्ब्राह्मणैः * परिवेत्त्रादिभिश्च ब्राह्मणैः। अन्यै
श्चापाङ्क्तेयैर्ब्राह्मणैः* श्राद्धे यद्भुक्तं भवति * तद्रक्षांसि कव्यं चरांश्च सम्भुञ्जते * न तद्देवाः पितरश्च। २। । १७०।
ननु के परिवेत्त्रादयइत्यत*आह दाराग्निहोत्रेत्यादि। १। ०। १७१।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥ १७१

यस्तु अजे कुब्जवामनादिभिन्ने *भ्रातरिस्थितदूत्यक्रतदारे *दारसंयोगं विवाहं कुरुते ।१। अथवाकृतदारेभिर* नावग्निहोत्रसंयोगं कुरुते *सकनिष्ठोभ्रातापरि वैत्तोचाग्रतसापुर्व्व अग्रजभ्रातापरिवित्तिः २। अनावृतत्वाग्रजस्या भानुज्ञानात्*३ कुब्जवामनादिभिन्न*ज्येष्ठभ्रातुरनुज्ञया*कनिष्ठस्यदारसंयोगिदोषोन ३ कुब्जवामनादौज्येष्ठे *विवाह प्रचनदोष*उक्तं हिपराशरेण। ४।कुब्जवामनखञ्जेषु* गद्गदेषु जडेषु चा जातान्धे वधिरेमूकेनदोषःपरिवेदने। ५। क्लीवेदेशान्तरस्थे चपतितेव्रजितेपिवा। योगशास्त्राभियुक्ते चनदोषःपरिवेदने। ६। पितृव्यपुत्रे सापत्ने परनारी सुते तथा। दाराग्निहोत्रसंयोगेनदोषःपरिवेदने। इति॥ ७॥ उक्तंचानिसंहितायां* पितापितामहोयस्य अग्रजोवास्तिकस्यचित्। नाग्निहोत्राधिकारोऽस्तनदोषःपरिवेदने। २। नाग्नयःपरिविन्दन्तिनवेदानतपांसि च। नचश्राद्धं कनिष्ठंवै विनाचैवाभ्यनुज्ञया। ४। भार्यामरणपक्षे वादेशान्तरगते पिवा। अधिकारीभवेत् पुत्रस्तथापातकसंयुते। ५। ज्येष्ठोभ्रातायदातिष्ठेन्नितांयोगसमन्वितः। अनुज्ञातस्तुकुर्व्वीतशङ्खस्यवचनं यथा। ६। कुब्जवामनखञ्जेषु गद्गदेषुजडेषु च। जातान्धे बधिरेमूकेनदोषः परिवेदने। ७। क्लीबेदेशान्तरस्थे च पतितेव्रजितेपिवा। योगशास्त्राभियुक्ते चनदोष परिवेदने॥ ८॥ इति॥ तथाचपितरिजीवति*पितामहे च वर्त्तमाने *ज्येष्ठे चभ्रातरिजीवति॥ ९॥ अग्निहोत्रग्रहणेऽधिकारोनास्ति*पुत्रपौत्रकनिष्ठभ्रातृणां दार*ग्रहणे त्वधिकारोऽस्ति*गृहीतदारेत्वग्रजे॥ १०॥ योगयुक्तकुब्जादानान्यतमेत्वकृत*दारेऽग्रजेकनिष्ठस्तु * तस्यभ्रातुरनु ज्ञया*ग्रहणमर्हतिदोषाभावात्॥ ११॥ नत्वनुज्ञांविनाग्निहोत्रमर्हति*एवमग्रजेऽनुपनीता* गृहीतवेदेजीवति। १२। कनिष्ठोभ्रातातूपन*यनं वेदाध्ययन*मग्निं तपश्चनार्हति॥ १३॥ उपनीतेगृहीतवेदेकृत * दारे चाग्रजेजी वतिकनिष्ठोनग्राह्यकरणेऽधिकारीभवति॥ १४॥ एतद्व्याख्यानमविद्वा* ननग्निरग्निग्रहणा * विधानानभिज्ञोव्या चष्टे॥ १५॥ यःसहोदरोज्येष्ठे भ्रातरिस्थिते *दूत्यकृतदारे सति* दारसंयोगं कुरुते। १६। अथवाग्निहोत्रसं योगं कुरुते *सतुपरिवेत्तातस्य*ज्येष्ठश्चपरिवित्तिःस्यात्॥ इति॥ १७॥ तदसाधुयोगान्वित*कुब्जवामनाद्यग्रजा* नुज्ञयाकनिष्ठस्यो द्वाहविधानात्॥ १७॥ १७१॥

**परिवित्तिःपरिवेत्तायययाचपरिविद्यते। सर्व्वेतेनरकंयान्तिदातृयाजकपञ्चमाः॥ १७२॥**

तत्रदोषमाह। परिवित्तिरित्यादिकं॥ १॥ १७२॥ ययेतिकर्तृपदं॥ परिवेदनलाभःस्त्रियापिपुंस * उपपद्यते नोद्वाहः॥ १॥ १७२॥ नरकोऽसौदिधिषूपति*यस्तुदिधिषूपतिःश्राद्धे *वर्जनीयउक्तइत्यत* आह भ्रातुर्मृतस्येत्यादि॥ १॥ १७३॥

**भ्रातुर्मृतस्यभार्य्यायांयोऽनुरज्येतकामतः। धर्म्मेणापिनियुक्तायांसज्ञेयोदिधिषूपतिः॥ १७३**

भ्रातुरग्रजस्यावरजातस्यवा*मृतस्यभार्यायांधर्म्मे*णापिनियुक्तायामनियुक्तायां वा॥ १॥ याकामतोऽवरजोऽ त*सम्भोगं करोतिसदिधिषूपति*र्न योदिविधोज्येष्ठानु*जातभ्रातृभार्य्याभेदात्॥ २॥ तेनयाविधवाज्येष्ठभ्रा तृभार्या*कामतोदेवरेणोप*भुक्तासैकादिधिषूःस्यात्॥ ३॥ यात्ववरजभ्रातृभार्याविधवा * कामतोदेवरेणोप* भुक्तासापरादिधिषू*स्तयोस्तौदेवरौपतीदिधिषू*पतीअपाङ्क्तेयाविति॥ ४ यस्तुदेवकेनोक्तोयथा*ज्येष्ठायां

विद्यमानायां कन्यायां यस्याः प्राक् परिणीताऽनुजा । सा चाग्रे दिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृता इति ॥ ५ ॥ तयोः पती तत्प्रायश्चित्तानापन्नौ यौ स्यातां * नाम्ना दिधिषूपतिर्विर्वचितः * स्वयं दिधिषूपतिरेत * क्षत्रियास्योक्तत्वादिति । ६ । नवकौ पुनस्तौ कुण्डगोलकौ यौ * आह वर्ज्यब्राह्मणप्रकरणादित्यादि ॥ १ ॥ १७४ ॥

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः ॥१७४

पत्यौ जीवति परदारेषु जातः * पुत्रः कुण्डः स्यान्मृते भर्त्तरि तु * परदारेषु जातः पुत्रो गोलकः * ॥ १ ॥ तत्र ब्राह्मणपत्नीषु * परदारेषु ब्राह्मणात् * जातौ ब्राह्मणौ कुण्डगोलकौ वर्ज्यौ ॥ २ ॥ १७४ ॥ तत्र हव्यकव्यदाने * विशेषफलमुच्यते * तौ तु जातावित्यादि ॥ १ ॥ १७५ ॥

तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च । दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम् ॥१७५

तौ कुण्डगोलकौ हव्य * कव्यानि येभ्यस्तु दत्तानि * तेषां हव्यकव्यप्रदायिनां प्रेत्य * चेह च फलतो नाशयेते ॥ १७५ ॥ तर्हि चापाङ्क्त्यो भोज्यमानि * हव्यकव्यानि चेत् दाकिं स्यादित्यत * आह अपाङ्क्त्य इत्यादि ॥ १ ॥ १७६ ॥

अपाङ्क्त्यो यावतः पाङ्क्त्यान् भुञ्जानाननुपश्यति । तावतां न फलं तत्र दाता प्राप्नोति बालिशः ॥१७६

अपाङ्क्त्यो ब्राह्मणस्तत्र * भुञ्जीतो यद्वा न भुञ्जीत * यावतः पाङ्क्त्यान् भुञ्जानान् पश्यतोऽनुपश्यति ॥ १ ॥ तावतां पाङ्क्त्यानां तद्भोजनफलं * बालिशो मूर्खो दाता न * तत्र श्राद्धदानेनाप्नोति ॥ २ ॥ १७६ ॥ तत्रापाङ्क्त्यविशेषस्य * दर्शने फलमाह * वीक्ष्यान्ध इत्यादि श्लोकं ॥ १ ॥ १७७ ॥

वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु । पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥१७७

अपाङ्क्त्यो ह्यन्धो ब्राह्मणः पाङ्क्त्यानां श्राद्धे भुञ्जानानां नवतेः * फलं दातुर्नाशयते ॥ १ ॥ ईक्षणमन्धस्य दर्शनासम्भवात् * पारिभाषिको ज्ञापित * स्तत्साहचर्यात् काणस्य ॥ २ ॥ काणः पाङ्क्त्यानां भुञ्जानानां षष्टेः फलं दातुर्नाशयते इत्येवं कश्चिद्व्याचष्टे ॥ ३ ॥ श्रुतिस्मृतिहीनो ब्राह्मणोऽन्धः काण * स्त्वन्यतरहीन उक्तः * स्वसंहितायामत्रिणा ॥ ४ ॥ श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्त्तिते । काणः स्यादेकहीनस्तु द्वाभ्यामन्धः प्रकीर्त्तितः ॥ इति ॥ ५ ॥ श्वित्री पाङ्क्त्यानां भुञ्जानानां शतस्य * फलं दातुर्नाशयते ॥ ६ ॥ कुष्ठादिपापरोगी तु * पाङ्क्त्यानां सहस्रस्य तु * फलं दातुर्नाशयते ॥ * ॥ १७७ ॥ श्राद्धे पाङ्क्त्याभोज्यभोजनं * दानप्रसङ्गादपाङ्क्त्य * स्पृष्टब्राह्मणभोज्यदानफलमाह * यावत इत्यादि श्लोकम् ॥ १७८ ॥

यावतः संस्पृशेदङ्गैर्ब्राह्मणान् शूद्रयाजकः । तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम् ॥१७८

शूद्रयाजको ब्राह्मणो * पाङ्क्त्यान् यावतो ब्राह्मणा * नङ्गैः स्पृशेत्तावतां ब्राह्मणानां * पूर्त्तस्य दानस्य पौर्त्तिकं * फलं दातुर्न भवेत् ॥ १ ॥ पूर्त्तलक्षणमत्रिणा यथा * वापीकूपतडागादिदेवतायतनानि च * अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥ २ ॥ इति ॥ १७८ ॥ वेदविदित्यादि ॥ १७८ ॥

वेदविद्यापिविप्रोऽस्यलोभात्कृत्वाप्रतिग्रहम्। विनाशं व्रजतिक्षिप्रमामपात्रमिवाम्भसि॥१७९

अस्यांशूद्रयाजकस्य*प्रतिग्रहं कृत्वावेद*विद्यापिविप्रःक्षिप्रं विनाशं याति*यथामामपात्र*मम्भसिविनाशं याति॥१॥१७९॥ प्रसङ्गाच्छूद्रयाजकस्यदोष*मुक्त्वाप्रकृतार्थं पुन*राहसोमेत्यादिश्लोकम्॥१॥१८०॥

सोमविक्रयिणेविष्ठाभिषजेपूयशोणितम्। नष्टं देवलकेदत्तमप्रतिष्ठन्तुवार्द्धुषौ॥१८०॥

सोमविक्रयिणे दत्तं*हव्यकव्यं विष्ठेवस्यात्*भिषजेचायम्मांचिकित्सां कुर्व्वते*ब्राह्मणायदत्तं हव्य*कव्यं पूयशोणितमिवस्यात्॥१॥ देवलकेदत्तं हव्य* कव्यं नष्टं भवतिवार्द्धुषौदत्तं * हव्यकव्यमप्रतिष्ठं * मसम्पूर्णं भवति॥२॥१८०॥ यत्त्वित्यादि॥१८१॥

यत्तुवाणिजकेदत्तंनेहनामुत्रतद्भवेत्। भस्मनीव [illegible] द्विजे॥१८१॥

वाणिजकेवाणिजायकद्ब्राह्मणे*दत्तं हव्यकव्यं नेहन्तुर्यहुप्यक [illegible] भवति।१। पौनर्भवेद्विजे१॥ गेदत्तं*हव्यं कव्यं चभस्मनि*हुतंहव्यमिवभवतिनोपलभ्यते॥१८१॥ *इतरेष्वित्यादि॥१८२॥ ॥ मन्यतर्हि

इतरेषुत्वपाङ्क्त्येषु यथोद्दिष्टेष्वसाधुषु। मेदोऽसृङ्मांस मज्जास्थि वदन्त्यन्नं मनीषिणः॥१८२॥

उक्तेभ्यइतरेषु पाङ्क्तेषूद्दिष्टे*षुवाधुषुब्राह्मणेषु श्राद्धे दत्तमन्नं मेदोगाःपितरःपूर्वं देवताः॥१८२ ॥१॥१८२॥ ननुयदिश्राद्धे कश्चित्*पङ्क्तिदूषकोब्राह्मणो* भुङ्क्ते कश्चित्पङ्क्तिपावनेनसभुङ्क्ते * तर्हिकिं श्राद्धं विफलं*स्यादित्यतआहापाङ्क्त्येत्यादि।१।१८३।

अपाङ्क्त्योपहतापङ्क्तिःपाव्यतेयैर्द्विजोत्तमैः। तान्निबोधत्कार्त्स्न्येनद्विजाग्र्यान्पङ्क्तिपावनान्॥१८३॥

एकपङ्क्तौश्राद्धे ऽपाङ्क्त्येनासीनेन*भोज्यमानेनोपहता*पङ्क्तिर्यैर्ब्राह्मणैःपाव्यतेतान्द्विजा*ग्र्यान्कार्त्स्न्येन निबोधत।१।१८३। तान्पङ्क्तिपावनान्ब्राह्मणानाह*अग्र्याःसर्व्वेष्वित्यादि।१।१८४।

अग्र्याःसर्व्वेषुवेदेषुसर्व्वप्रवचनेषुच। श्रोत्रियान्वयजाश्चैवविज्ञेयाःपङ्क्तिपावनाः॥१८४॥

येब्राह्मणाःसर्व्वेषुवेदेषुसर्व्व * प्रवचनेषुसर्व्व * व्याख्यानेषुचाग्र्याः*श्रेष्ठाःसन्तःश्रोत्रियान्वयेजाताःयाः ।१। तेब्राह्मणाःपङ्क्तिपावनाविज्ञेयाः*पङ्क्तिदूषकसहित*भोजनेपङ्क्तिदोषहाः।२ ब्रह्मिणाचोक्तंतद्दूष या*अथचेन्मन्त्रविद्युक्तःशारीरैःपङ्क्तिदूषणैः। अदूष्यंतं यमःप्राहपङ्क्तिपावनएवसः।इति।२।१८४। अपरं पङ्क्तिपावनलक्षणमा*हत्रिणाचिकेतेत्यादि।१।१८५।

त्रिणाचिकेतःपञ्चाग्निस्त्रिसुपर्णःषडङ्गवित्। ब्राह्मदेयात्मसन्तानोज्येष्ठसामगएवच॥१८५॥

निमन्त्रितान्हिपितरउपतिष्ठन्तितान्द्विजान्। वायुवच्चानुगच्छन्तितथासीनानुपासते॥१८९॥

हियस्मात् पित्र्ये निमन्त्रितां स्तान्द्विजान्*पितरउपतिष्ठन्ति ॥ १ ॥ उपतिष्ठन्तश्चपितरो* निमन्त्रितां स्ता न्ब्राह्मणान्*गच्छतोवायुवदनुगच्छन्ति*तथासीनां स्तान्ब्राह्मणा*नुपसमीपमासते ॥ २ ॥ १८९ ॥ ननुयदि ब्राह्मणः*श्राद्धे भुङ्क्ते तदा किं स्या*दित्यतआह केतितइत्यादि ॥ १ ॥ १९० ॥

केतितस्तुयथान्यायं हव्यकव्येद्विजोत्तमः। कथञ्चिदप्यतिक्रामन्पापःशूकरतांव्रजेत् ॥१९०॥

केतितस्तुपूर्व्वेद्युरपरेद्युर्वा*श्राद्धे भोजनार्थं यथान्यायं केतितःसन् *द्विजोत्तमःकथञ्चिद्भोजनमतिक्रामेत् ॥ १॥ ततःसतदापापःसन्*मृतःपुनर्जन्मनि तु*शूकरतां व्रजेदिति ॥ २ ॥ १९० ॥ ननुनियतात्मकेतियदुक्तं तत्र*स्त्रीसम्भोगे किं स्यादित्यत*आहनिमन्त्रितइत्यादि ॥ १ ॥ १९१ ॥

निमन्त्रितस्तुयःश्राद्धे वृषल्यासहमोदते। दातुर्यद्दुष्कृतं किञ्चित्तत्सर्व्वं प्रतिपद्यते॥१९१॥

वृषल्येत्यतिशय*दोषाख्यापनार्थमुक्तं *तेनोपलक्षणात्स्त्रि*यैतिवेदितव्यं स्यात् ॥ १ ॥ १९१ ॥ ननुतर्हि पितरस्ते*तान्गच्छतोऽनुगच्छन्ति*तानासीनानुपासते ॥ १ ॥ तेकस्मादेनान्निमन्त्रितान् * नैवकुर्य्युरित्यतआ ह*क्रोधनइत्यादि ॥ २ ॥ १९२ ॥

अक्रोधनाःशौचपराःसततं ब्रह्मचारिणः। न्यस्तशस्त्रामहाभागाःपितरःपूर्व्वदेवताः॥१९२॥

पितरोहिपूर्व्वदेवता*नयःश्राद्धं करोतितस्य*पित्रादयःकेऽपि ॥ १ ॥ तेचाक्रोधनान्यस्तशस्त्राः*कथं तदास्य हिंसतः*दातुःपापं मपद्यते॥ २ ॥ तेहिशौचपराःसततं *ब्रह्मचारिणोमहाभागा * स्तेषां समीपे यस्मैष्युना* दातुःकर्त्तव्यश्राद्धं नयोत् ॥ ३ ॥ तच्छ्राद्धविनाशेदातु*र्यत्पापं तत्ते ब्राह्मणाः * स्वकृतदोषात्प्रतिपद्यन्त इति ॥४ ॥ १९२ ॥ ननपितरःपूर्व्वदेवताइति * यदुक्तं तत्कथमुपपद्यते * मनुष्याणां पितरइति*तत्रहियस्मा दित्यादि ॥ १ ॥

यस्मादुत्पत्तिरेतेषांसर्व्वेषामप्यशेषतः। येचयैरुपचर्य्याःस्युर्नियमैस्तान्निबोधत ॥१९३॥

एतेषां सर्व्वेषां पितृणां *यस्मादयसोत्पत्तिर्ये च*यैर्नियमैरुपचर्य्याःस्यु * स्तानशेषतोनिबोधत॥१॥१९३॥ मनोरित्यादि ॥ १९४ ॥

मनोर्हैरण्यगर्भस्यये मरीच्यादयःसुताः। तेषामृषीणांसर्व्वेषांपुत्राःपितृगणाःस्मृताः॥१९४॥

हैरण्यगर्भस्यस्वायम्भुवस्य * मनोःसुतायेमरीच्यादयस्तेषा * मृषीणां पुत्राःसर्व्वेषां *पितृगणाःसर्व्वे स्मृताः ॥ १ ॥ १९४ ॥ ननुकस्यकेपितृगणाइत्यत*आहविराट्सुताइत्यादि ॥ १ ॥ १९५ ॥

विराट्सुताःसोमसदः साध्यानांपितरःस्मृताः। अग्निष्वात्ताश्च देवानांमारीचालोकवि श्रुताः ॥ १९५ ॥

विराट्सुताः विराजः पौत्रः पुलहः * स्तस्य पुत्रा ये सोमसन्नामानस्ते * साध्यानां पितरः स्मृताः * सोमसदः साध्याजा
ताः । १ । येऽग्निष्वात्तनामानस्ते * मारीचा मरीचेः पुत्राः * लोकविश्रुतास्त्रिषु लोकेषु विख्याताः * देवानां पितरः स्मृ
ताः * देवास्तेभ्योऽपि प्रागजाताः । २ । १९५ । दैत्येत्यादि । १९६ ।

दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम्। सुपर्णकिन्नराणाञ्च स्मृता बर्हिषदोऽत्रिजाः ॥ १९६

अत्रिजाः पुत्रा बर्हिषन्नामानस्ते * दैत्यादीनां पितरः स्मृता दैत्याद्या * बर्हिषद्भ्योऽपि पूर्व्वमुदपद्यन्त ।१। १९६ ।
सोमपेत्यादि । १९७ ।

सोमपानाम विप्राणां क्षत्रियाणां हविर्भुजः। वैश्यानामाज्यपानाम शूद्राणान्तु सुकालिनः ॥१९७

सोमपानामकतेर्भृगोः पुत्रास्ते * विप्राणां पितरः स्मृताः * पूर्व्वं हि ब्राह्मणाः सोमपेभ्यो जाता * स्ततः पृथग्वचनम् । १
ततः परञ्चाग्निदग्धादिभ्यश्च * ब्राह्मणा उदपद्यन्त । २ । हविर्भुजो हविष्मन्तो * नामाङ्गिरसः पुत्रा ये * ते क्षत्रियाणां
पितरः * स्मृतास्तेभ्योऽपि क्षत्रियाः पूर्व्वं जाताः । ३ । पुलस्त्यस्य पुत्रा आज्यपा नाम ये * ते वैश्यानां पितरः स्युः * स्तेभ्यो
ऽपि वैश्याः प्राग्जाताः । ४ । वशिष्ठस्य पुत्राः सुकालिनामानो * ये ते शूद्राणां पितरः * स्मृतास्तेभ्योऽपि शूद्राः प्राग् * शूद्रास्त
तोऽप्युदभवन् । ५ । १९७ । ननु सोमपादयः केषां * ऋषीणां पुत्रा इत्यत * आह सोमेत्यादि । १ । १९८ ।

सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरःसुताः। पुलस्त्यस्याज्यपाः पुत्रा वशिष्ठस्य सुकालिनः ॥ १९८

विप्राणां पितरः सोमपा य उक्ता * स्ते कवेर्भृगोः पुत्रा ये * क्षत्रियाणां हविर्भुजः * पितर उक्तास्ते हवि * ष्मन्तो नामा
ङ्गिरःपुत्राः । १ । वैश्यानां पितरो य आज्यपा उक्ता * स्ते पुलस्त्यस्य पुत्रा ये * सुकालिनो नाम शूद्राणां पितर * उक्ता
स्ते वसिष्ठस्य पुत्राः । २ । १९८ । ननु विप्राः किं सोमपेभ्य एव * जाताः सोमपा एव किं * तेषां पितरो नान्ये * इत्यत
आह अग्नीत्यादि । १ । १९९ ।

अग्निदग्धानग्निदग्धान् काव्यान्बर्हिषदस्तथा। अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दि
शेत् ॥ १९९ ॥

विप्राणां पितॄनग्निदग्धादीन् षट् * निर्दिशेत् षडभ्य एव हि * तेभ्यो विप्रा अजायन्त । १ । तत्र काव्यानिति सोम
पान् * सौम्यान् सोमसद एव * साध्या हि ब्राह्मणा एव । २ । १९९ । य एत इत्यादि । २०० ।

य एते तु गणा मुख्याः पितॄणां परिकीर्त्तिताः। तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम् ॥ २०० ॥

य एते सोमपा अग्निष्वात्ता * बर्हिषदः सोमपा हवि * ष्मन्त आज्यपाः सुकालिनो * ऽग्निदग्धा अनग्निदग्धाश्च । १ । पि
तॄणां नव गणाः प्रकीर्त्तिताः * इह तेषां पुत्रपौत्रादिकञ्च * अनन्तमपरिसङ्ख्येयं विज्ञेयं । २ । २०० । ऋषिभ्य इ
त्यादि । २०१ ।

अवकाशेषुचोक्षेषुनदीतीरेषुचैवहि। विविक्तेषुचतुष्यन्तिदत्तेनपितरःसदा ॥ २०७ ॥

अवकाशेषुबहुकाशभाग*युक्तेषुचोक्षेषुस्वभावादेव*शुचिषुवनादिषुप्रदेशेषु ॥ १ ॥ तथानदीतीरेषुचविविक्तेषु* स्त्रीनाम्नादिनासदा*पितरोगणास्तुष्यन्ति ॥ २ ॥ २०७ ॥ आसनेष्वित्यादि ॥ २०८ ॥

आसनेषूपक्लृप्तेषुबर्हिष्मत्सुपृथक्पृथक्। उपस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् ॥२०८॥

अथतत्रब्राह्मणाना*मुपवेशनार्थं पृथक*पृथगुपक्लृप्तेषु आसनेषुबर्हिः*मत्सुतत्रविश्वदेवा * समीदे प्राङ्मुखं ना स्येत् ॥ १॥ ततःपश्चिमापौद्दीदो*कुशौविनास्येदेकास्मि*न्नेकमथपित्र्यासने*षु केकं कुशं दक्षिणाग्रं * विन्यस्यति लोदकेनप्रोक्षयेत् ॥ २ ॥ एवमेवदेवलेनोक्तं तद्यथा* द्वे चात्रविश्वदेवानां * विप्राःपूर्वं निमन्त्रिताः । प्राङ्मुखा न्यासनान्येषां द्विदर्भोपहितानि च ॥ ३ ॥ दक्षिणामुखयुक्तानि पित्र्याणामासनानि च । दक्षिणाग्रैकदर्भाणि प्रोक्षि तानि तिलोदकैः ॥ ४ ॥ इति ॥ तेष्वासनेषुतान्निमन्त्रितान्विप्रान्*उपस्पृष्टोदकान्सम्यक्*आचमनं कृतवत*उप वेशयेदिति ॥ ५ ॥ २०८ ॥ उपवेश्येत्यादि ॥ २०९ ॥

उपवेश्यतुतान्विप्रानासनेष्वजुगुप्सितान्। गन्धमाल्यैःसुरभिभिरर्चयेद्देवपूर्वकम् ॥ २०९

अजुगुप्सितांस्तान्विप्रान्*आसनेषूपवेश्यतु*गन्धिभिर्गन्धमाल्यैःपुष्पमाल्यैः * दैवपूर्वकं पाद्यादिभिरर्चयेत् ॥ १ ॥ २०९ ॥ तेषामित्यादि ॥ २१० ॥

तेषामुदकमानीयसपवित्रांस्तिलानपि। अग्नौकुर्यादनुज्ञातोब्राह्मणोब्राह्मणैःसह ॥ २१० ॥

तेषां देवपूर्वकं दत्तार्घाणां*मर्घोदकमानीयसपवित्रां*स्तिलांश्चानीयसंमिश्रितं कृत्वा ॥ १ ॥ तैर्निमन्त्रि तैर्ब्राह्मणैः*सह आज्ञप्तब्राह्मणः*स्वगृह्योक्तानुसारेण ॥ २ ॥ अग्नौकरवाणीत्येवं* प्रार्थितेनत्वजाकुरु*ष्वेत्येव मनुज्ञातोऽग्नौ*वक्ष्यमाणविधानेनहोमं कुर्यात् ॥ ३ ॥ २१० ॥ अग्नेरित्यादि ॥ २११ ॥

अग्नेःसोमयमाभ्यांचकृत्वाप्यायनमादितः। हविर्दानेनविधिवत्पश्चात्सन्तर्पयेत्पितॄन् ॥२११

ततःपरमादितःसोमयमाभ्यां*सहाग्नेर्विधिवत्पर्युक्षणादिकं*कृत्वाहविर्दानेनाप्यायनं कृत्वा ॥ १ ॥ पश्चा दन्न*पानादिभिः*पितॄन्सन्त * र्पयेदिति ॥ २ ॥ २११ ॥ नन्वेवमग्निमतएवश्राद्ध * कर्तुरग्नौकरणं सम्भवति* निरग्निस्तुकथमग्नौ*करणं कुर्यादित्यत*आहाग्न्यभावेत्वित्यादि ॥ २१२ ॥

अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेत्। योह्यग्निःसद्विजोविप्रैर्मन्त्रदर्शिभिरुच्यते ॥२१२

आहिताग्न्यभावे*तस्यकस्यचिद्विप्रस्य* पाणौतदग्नौकरणं * माहुतित्रयमुपपादयेदेव ॥ १ ॥ कस्मादग्न्यभावे विप्रपाणौ * वित्यतआह योह्यग्निरित्यादि ॥१॥ यएवाग्निःसएवद्विज * इतिमन्त्रदर्शिभिर्विप्रैः * सर्वैरेवोच्यते ॥ २ ॥ २१२ ॥

मार्गि ताश्च भिगि ग पानि * तिष्ठन्ति ह गोरे वपक्षयोस्तदा * गोभिलोक्तमिदं वचनं विरुध्यते ॥ ७९ ॥ एकादश्यां
नभुञ्जीत पक्षयोरुभयोरपि । वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥ ८० ॥ तर्हि शुक्लैकादशी*व्रतं गृहिणां
द्विजानां *नित्यमितिचेत्तदा *भविष्यपुराणवचनं । ८१ । कर्त्तव्यं साम्ब सर्व्वासु सर्व्वासु मासाणामितिव*शुक्लं मया
त्वहिरोवात्॥७८॥सिद्धश्च तेन कृष्णपक्षे गृहिणा*मेकादश्यां मु ग्रमिति*गोभिलवचने शुक्लामेव सदा*गृहीतिसन्दाम्बदी दि
ननित्यत्वसूचकं ॥ ८२ ॥ कृष्णपक्षे विकल्पस्थापनादेव * काम्यत्वमेव सूचितं ॥ ८४ ॥ वराहपुराणे त्वाक्तं*मे
कादश्यां निराहारो योभुङ्क्ते द्वादशीदिने । शुक्ले वाथ दिवा कृष्णे तद्व्रतं वैष्णवं मतमिति ॥ ८५ ॥ एतेन शुक्ल
विकल्पात्गोभिल*वचनविरोधोभवति गोभिल * संहितायान्तु नास्ति तद्वचनं ॥ ८६ ॥ यद्वा तद्वा भवतु नित्य
त्व*मेकादशीव्रतस्य फलश्रुतेः*प्रतिषेधदर्शनाच्च ॥ ८७ ॥ फलश्रुतिस्तु दृश्यते * यदोक्तं हि विष्णुनावासं पुत्रसम्पदमा
त्मनः । एकादश्यां नभुञ्जीत पक्षयोरुभयोरपि ॥इति॥८८ ॥अत्रोभयपक्षे विधानाद्गोभिल*वचनविरोधः फल*श्रुते
रनित्यत्वञ्च ॥ ८९ ॥ नशङ्केन पिबेत्तोयं नखादेत् कूर्म्मशूकरौ । एकादश्यां नभुञ्जीत पक्षयोरुभयोरपि*एतत्तगोभि
लवचनविरुद्धं ॥ ७० ॥ एकादशीव्रतपक्षणसमाप्ति*वचनाच्चकाम्यत्वं नच नित्यत्वं *तद्व्रतग्रहणमुक्तं * वराहपुराणे
यथा । ९१ । गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासन्तु गृह्णीयाद्यद्वावार्य्यं वधारयेत् । ९२ । एकाद
श्यां निराहारो भूत्वाचैवापरेऽहनि । भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत । इति । ९३ । स्कन्दपुराणे च
प्रोक्तं *रात्रिं नयेत्ततः पश्चात्प्रातः स्नायी समाहितः । उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत् । ९४ । अष्टाक्षरेण
मन्त्रेण त्रिजपेनाभिमन्त्रितम् । उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलम् । ९५ । इदं व्रतं मया देव गृहीतं पुरत
स्तव । ९६ । निर्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्द्दन । एकादश्यामुभौ पक्षौ निराहारः समाहितः । स्नात्वा सम
ग्विधानेन धौतवासा जितेन्द्रियः । ९७ । पूजयेद्विधिवद्विष्णुं श्रद्धयासमाहितः । पुष्पैर्गन्धैस्तथा धूपैर्दीपै
र्नैवेद्यकैः परैः । ९८ । उपचारैर्बहुविधैर्जपहोमप्रदक्षिणैः । स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः
। ९९ । दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः । सम्पूज्य विधिवद्रात्रौ कृत्वा चैव प्रजागरं । १०० । कथाद्याग
तिका विष्णोर्गायन् विष्णुपरायणः । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः । इति । १०१ । एतद्वचनस्थाना
मष्टाक्षरमन्त्रेणाभिमन्त्रित*जलपानेन निरम्बूपवास*भङ्गो भवतीति नास्तुत्रा ।१०२ ।एकादश्यामुभौ पक्षौ निराहा
इतिचासाधु । एकादश्यां पक्षयोस्तु*इत्येवं भवितुमर्हति*गोभिलवचनविरोधस्यस्यात् । १०३ । इत्येवं मतान्त
कश्चित्प्रमादो*ब्रूते विधवानामेकादशीव्रतं *सर्व्वथानित्यं यतिधर्म्मत्वात् । १०४ ।यतिधर्म्मे तूभयप*क्षे त्वेकादश
व्रतं*यथा गोभिलेनोक्तं ।१०५ । एकादश्यां नभुञ्जीत* पक्षयोरुभयोरपि*वनस्थयतिधर्म्मोऽयं ॥इति ॥ १०६॥ त
साधु विष्णुनाहि०सं संहितायामुक्तं *मृते भर्त्तरि ब्रह्मचर्यं *तदन्वारोहणं वेति।१०७। तच्च ब्रह्मचर्यं कौर्म्मे*ईश्वर
गीतायामुक्तं *भगवता मिथिलेनयथा १०८कायेन मनसा वाचा*सर्व्वावस्थासु सर्व्वदा ।सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यं प्रच
क्षते१०९नतु यतिधर्म्मो विधवानामुक्तो*गृहस्थाहि विधवा ब्रह्मचर्य्यं चरेदिति११०।तत्रापि एकादशीचर्य्यं लवमे*दृश्यमीति
यामेकादश्यामुप०वासे रौरवनरकगतिदोषा*त्तत्प्रतिषेधाद् नभङ्गस्स्यात् १११। परदिने द्वादश्यामुपवासे हि*वि
पासनासिद्धिरुभयो*र्दैवतोहरिर्वितानुक्तं*नत्वेकादशीव्रतसिद्धिः । ११२ । एकादशीव्रतग्रहणे त्वाक्तं* मेका
श्यां निराहारो भूत्वाचैवापरेऽहनि । भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ११३ ॥ नचैवक्तमेकाद

युक्षु कुर्व्वन्दिनर्क्षेषु सर्व्वान्कामान्समश्नुते । अयुक्षु तु पितॄन् सम्यक् प्रजां प्राप्नोति पुष्कलाम् ॥ २७७ ॥

दिनानि चर्क्षाणि च * तेषु दिनर्क्षेषु तत्र * दिनं चान्द्रं तिथ्युपभोगकाल एव ॥ १ ॥ कृष्णपक्षेऽपि युग्मतिथिभोगकाले युग्मनक्षत्रस्य * भोगकाले चमिलिते ॥ २ ॥ पितॄन्श्राद्धेनतर्पयन्कुर्व्वन्नरः * सर्व्वान्कामान्समश्नुते * युग्मतिथिर्द्वितीयाचतुर्थ्यादि * युग्मनक्षत्रं भरण्यादि ॥ ३ ॥ अयुक्षु दिनर्क्षेषु * प्रतिपत्तृतीयादितिथीनां भोग * काले चेद्युग्मनक्षत्राश्विन्यादेर्भोगकालोभवति ॥ ४ ॥ तदापितॄन्श्राद्धेनतर्पयन्कुर्व्व * न्नरः पुष्कलां धनविद्यागुणादि * पुष्टां प्रजां प्राप्नोतीति ॥ ५ ॥ अत्रकृष्णपक्षइत्यनुवर्त्तते * यतःकृष्णपक्षे दशम्यादयाइति * दिनर्क्षेष्वितत्र्यैकशेषेदिने ॥ ६ ॥ दशम्यादितिथिरेवभेदाऽन्यथा * तु पक्षेऽस्मिन्हि चान्द्रीकला * तद्भोगकालश्चान्द्रं दिनम्मतं ॥ ७ ॥ दिनर्क्षेष्वितीतरेतरयोगे * द्वन्द्वसमासाद्युग्मतिथिदिने * ऽयुग्मनक्षत्रभोग * काले तथैक आद्धविधिरिति ॥ ८ ॥ यद्युच्यते तिथिनक्षत्रयोगे * वायोगे वतदा यातिथिर्यश्च * नक्षत्रं तत्तत्फलदं तथैवत * मवगम्यं भवतीतिनालस्योऽर्थः ॥ ९ ॥ २७७ ॥

अथश्राद्धे प्रशस्तकालमाह * यथाचैवेत्यादिश्लोकम् ॥ १ ॥ २७८ ॥

यथाचैवापरःपक्षःपूर्व्वपक्षाद्विशिष्यते । तथाश्राद्धस्यपूर्व्वाह्णादपराह्णोविशिष्यते ॥२७८॥

यथाश्राद्धस्यापरःकृष्णःपक्षः * पूर्व्वपक्षाच्छुक्लपक्षाद्विशिष्यते * तथाश्राद्धस्यपूर्व्वाह्णा * दपराह्णोविशिष्यते ॥ १ ॥ एतावताशुक्लपक्षःपूर्व्वाह्णश्च * कालःकृष्णपक्षादपराह्णाच्चमविशिष्टः किन्तुनप्रतिषिद्धःफलत * स्तारतम्यमितिज्ञापितं भवति ॥ २ ॥ २७८ ॥

प्राचीनवीतिनासम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिना ॥२७९

प्राचीनवीतिनेत्यादि ॥ २७९ ॥ अतन्द्रिणा तन्द्राविहीनेनापि * पुरुषेणानिधनादि * त्याजीवनात्पित्र्यं कार्य्यं * मपसव्यं सव्यास्कन्धा * दुत्तरीयवस्त्रमप ॥ १ ॥ अपसृतं कृत्वा प्राचीनवीतिना * दर्भपाणिनाचभूत्वा * विधिवत्सम्यक्कार्य्यम् ॥ २ ॥ २७९ ॥ अथश्राद्धप्रतिषिद्धकालमाह * रात्रौश्राद्धमित्यादिकम् ॥ १ ॥ २८० ॥

रात्रौश्राद्धंनकुर्व्वीतराक्षसीकीर्त्तिताहिसा । सन्ध्ययोरुभयोश्चैवसूर्य्येचैवाचिरोदिते॥२८०

श्राद्धं रात्रौनकुर्व्वीत * कस्मादित्यतउच्यते * राक्षसीकीर्त्तिताहिसेति ॥ १ ॥ हियस्मात्सारात्रीराक्षसी * तराकीर्त्तिताराक्षसासुरादीनां * कालतयावेदप्रोक्तर्षिभिरुक्ता ॥ २ ॥ तर्हि हे सन्ध्ये मरात्रि * सत्त्वकिं श्राद्धं कुर्व्वीतेत्यतआह * सन्ध्ययोरुभयोश्चैवेति ॥ ३ ॥ प्रातःसन्ध्यायांसायंसन्ध्यायाञ्च * श्राद्धं नकुर्व्वीततर्हि * चा * रकुर्व्वीतदिनात्किं * कुर्य्यादित्यतउच्यते * सूर्य्ये चैवाचिरेत्यादि ॥ ४ ॥ अचिरोदितेसूर्य्ये चात्मोत्कर्षः * श्राद्धं कुर्व्वीत * एभ्योऽन्यस्मिन्कालेयथा * विहितं श्राद्धं कुर्व्वीतेति * पर्य्यादासनञ्जश्चेयम् ॥ ५ ॥ प्रमादिन

फाल्गुणे कृष्णपक्षे या तिथिः स्याच्चतुर्दशीति * यदुक्तं तत्र संशयः । १०१ । किं कृष्णफाल्गुणस्याथ * गौणफाल्गु
णस्येति चे* द्गौणफाल्गुणस्यैवेति * स्कान्दपुराणवचनात् । १०२ । मौत्रमासस्य शिशिरा प्रथमे फाल्गुणस्य च ।
कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्त्तिता । १०३ । अमन्तमासस्य शेषे यासैव * गौणफाल्गुणस्य प्रथमे भव
ति * सा चतुर्दशी शिवरात्रिर्ज्ञेयेति । १०४ । एतस्यां योगविशेषयोगे * भवत्युत्तमोत्तमा च * तदुक्तं शैवागम
संहितायां यथा । १०५ । माघे कृष्णचतुर्दश्यां रविवारो यदा भवेत् । भौमो वापि यदा देवि कर्त्तव्यं व्रतमुत्त
मम् । शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम् । १०६ । शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् । आचाण्डाल
मनुष्याणां भुक्तिमुक्तिप्रदायकम् । १०७ । शैवो वा वैष्णवो वापि यो वा स्यादन्यदेवतार्चकः । सर्व्वं पूजाफलं हन्ति शि
वरात्रिबहिर्मुखः ॥ १०८ ॥ इति ॥ तर्हि किं शिवरात्रिव्रतं नित्यं * कर्म्मयस्याकरणे शिवविष्ण्वादि * देवतार्चनफ
लं सर्व्वं विनश्यति ॥ १०९ ॥ नैवं तत्रैवेशान * संहितायां पुनरुक्तं * एवमेतद्व्रतं कुर्य्यात् * प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेतद्धि चतुर्विंशाब्दिकं तथा । सर्व्वान्कामानवाप्नोति प्रेत्य चेह च मानवः ॥ ११० ॥ इत्यनेनमन्त
व्यं च * द्वादशाब्दिकं चतुर्विंशत्याब्दिकञ्चेति व्रतपक्षा * उक्तास्तेन विकल्पो न नित्यत्वं ॥ १११ ॥ तर्हि यो
यावज्जीवं वा * द्वादशवत्सरं वाऽथ * चतुर्विंशतिवर्षं वा * नेदं व्रतं करोति स * चेत्सकलहिंसादिकं करोति ॥ ११२ ॥
तर्हि किं स शिवरात्रिबहिर्मुखो * भवतीति चेन्न भविष्य * पुराणे शिवरात्रिचतुर्दशी * माहात्म्ये व्याधोपाख्याने ॥ ११३ ॥
यदृच्छयोपवासे यदृच्छया च * शिवलिङ्गे बिल्वपत्रार्पणे तस्य * व्याधस्य शिवसन्निधौ * नित्यवासश्रवणात् ॥ ११४ ॥
तेन प्रात्यब्दिकपक्षव्रतमेक * वारिकरणमपि पक्षइति * न ततः शिवरात्रिबहिर्मुखः स्यात् ॥ ११५ ॥ तथा सति शिव
रात्रौ उपवासः स्वयमेव शिवलिङ्गे * बिल्वपत्रार्पणमिति * द्वयमेव मुख्यं न तु * केवलमुपवासः ॥ ११६ ॥ व्याधस्य यदृच्छ
येव तद्भय * कारणाज्जागरणात्तद् * भयेनैव * शिवस्य प्रीत्याधिक्य श्रवणाच्च ॥ ११७ ॥ पुष्पैस्तथा मनुष्याणां मिथ्या तत्रोपवा
सतइति । न तथा जायते प्रीतिर्विल्वपत्रैर्यथा मम इति * स्वयं शिवस्य वचनं हि श्रूयते ॥ ११८ ॥ अथ सा चतुर्दशी
पूर्व्वविद्धा * ग्राह्या नतु परविद्धा * वायुपुराणे ह्युक्तं ॥ ११९ ॥ त्रयोदश्यस्तगे सूर्य्ये नाडीष्वेतासु पि । चतुर्दशी
व्याप्ता तत्र शिवरात्रिव्रतं चरेत् ॥ इति ॥ १२० ॥ एतेन चतुर्नाडिकारात्रिकाल * पर्य्यन्तायां त्रयोदश्यां च * तदापि प्रहरं
प्रहरे लिङ्ग * पूजा चतुर्दश्यां स्यात् ॥ १२१ ॥ मध्यमप्रहरद्वय * महानिशाव्यापिनी च * भवति तद्व्यापिन्यां च
चतुर्दश्यां व्रतमिदं * शैवागमसंहितायामुक्तं यथा ॥ १२२ ॥ माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलि
ङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः ॥ १२३ ॥ तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । अर्द्धरात्रादधश्चो
र्द्ध्वं युक्ता यत्र चतुर्दशी ॥ १२४ ॥ व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद्व्रतं नरः * इत्यत्र महानिशा रात्रे * र्मध्यमप्रह
रद्वयं ॥ १२५ ॥ महानिशा तु विज्ञेया * मध्यमप्रहरद्वय * मिति पराशरादिमुनिवचनात् ॥ १२६ ॥ यातु स्मृत्युक्ते
लोक्ता * महानिशा द्वे घटिके * रात्रेर्मध्यमयामयो * रिति सा नात्र ग्राह्या स्यात् ॥ १२७ ॥ तद्घटिकाद्वयव्यापिनी
चतु * र्दशी पूर्व्वोत्तरदिने * द्वयेऽपि सम्भवति तत्र युग्मत्वात् * पूर्व्वदिने व्रतमिति चेत् ॥ १२८ ॥ तदा प्रहरे प्रहरे पूजाङ्ग
ः * सचेष्टएव यदा हि सार्द्धयाम * रात्रिपर्य्यन्तं त्रयोदशी स्यात्तदा * तदङ्गस्य स्वीकार्य्यो भवतैत्यवेति ॥ १२९ ॥ अन
यातत्विनुनष्टे तु * तद्व्रतलोपप्रसङ्गः स्या * दितिचेत्तदर्थं मतान्तरमुक्तं * मर्द्धरात्रादधश्चोर्द्ध्वमिति ॥ १३० ॥ अर्द्धरात्रि
रितार्द्धरात्रः * अस्मत्पक्षे द्विधा विभक्तायां रात्रेः * पूर्व्वो भागः शेषार्द्धभागश्चेति * द्विविधोऽर्द्धरात्रकः ॥ १३१

तत्रशेषार्द्धरात्रादधोदाप्राया*साचतुर्द्दशीयस्यांरात्रौ * लोकेऽस्मिन्नर*स्तस्यांरात्रौव्रतंकुर्यात् ॥ १२२ ॥ तत्पूर्व्वार्द्धरात्रादूर्द्ध्वव्याप्राया*साचतुर्द्दशीयस्यांरात्रौ * लोकेऽस्मिन्यातेनर * स्तस्यांरात्रौव्रतंकुर्यात् ॥१२३॥ इत्यत्ररात्रेःपूर्व्वप्रहरद्वय*व्यापिनीचतुर्द्दशीचे*दथवामधामयाम * द्वयव्यापिनीस्यादथवा* शेषयामद्वयव्यापिनी ॥ १२४ ॥ तदातस्यांरात्रौशिव*रात्रिव्रतंनरःकुर्य्या*दितिश्वःपश्चादुक्ता* ईशानसंहितायां ॥ १२५ ॥ भविष्यपुराणेप्रोक्तं * अर्द्धरात्रात्पुरस्तात्तुजयायोगोभवेद्यदि। पूर्व्वविद्धैवकर्त्तव्याशिवरात्रिःशिवप्रियैः ॥ इति ॥ ॥ १२६ ॥ विष्णुधर्म्मोत्तरेचोक्तं * जयन्तीशिवरात्रिश्चकार्य्येभद्राजयान्विते। कृत्वोपवासंतिथ्यन्तेमधोकुर्य्यात्सुपारणम् ॥ इति ॥ १२७ ॥ तर्हिचार्द्धरात्रात्परंजयायोगो* यदिस्यात्तदाकिंपर* दिनेऽमावस्याविद्धायां* चतुर्द्दश्यांव्रतंकुर्य्या * दितिचेत्सत्यमेवैतत् ॥ १२८ ॥ तदाहिरात्रेःशेषयामद्वय * व्यापिनीचतुर्द्दशीनभवति* परदिनेतुरात्रेर्यम * द्वयव्यापिनीचतुर्द्दशीभवति ॥ १२९ ॥ तर्हिकथंचतुर्द्दश्यांपरदिने * पारणांसम्भवति गौतमीयेऽपि*प्रोक्तंचतुर्द्दश्यांपारणंतद्यथा ॥ १४० ॥ दिनमात्रप्रमाणेनयातुरात्रौचतुर्द्दशी। शिवरात्रिस्तुसा ज्ञेयाचतुर्द्दश्यान्तुपारणमिति ॥ १४१ ॥ सत्यमेतद्यत्रदिनमात्रस्य*यत्प्रमाणंतत्प्रमाणयुक्तारात्रौ* चतुर्द्दशीतत्र पर*दिनेचतुर्द्दश्यांपारणं ॥ १४२ ॥ दिनमानप्रमाणान्यूना*रात्रौचतुर्द्दशीयत्र*तत्रचतुर्द्दश्यांनपारणमुक्तं*तत्रा मावस्यायामेव ॥ १४३ ॥ एतदभिप्रायेणस्कन्द*पुराणेप्रोक्तंतद्यथा*ब्रह्माण्डोदरमध्ये तु *यानितीर्थानिसन्ति वै। पूजितानिभवन्तीहभूतायांपारणेकृते ॥ इति ॥ १४४॥ एतेनचतुर्द्दशीचेत्परदिने * वर्त्तेतेतदाभूतामव्याप्यपारणं*नकुर्य्यादितिव्याख्यापितंभवतीति ॥ १४५ ॥ लिङ्गपुराणेयथोक्तं * शेषार्द्धरात्रगायत्र* जयापूर्व्वेऽह्नितत्रतु। शिवरात्रिव्रतेभूतांकामविद्धांविवर्जयेत्॥इति॥१४६॥ इत्यत्रमहानिशानाम्नदेवल*प्रोक्तायाम[illegible]समग्रवचनाभावात्* नापिप्रदोषव्यापिनोबनारोति॥१४७॥ एवमपिजन्माष्टम्यां* कृष्णास्यजायांमहा*निशानरात्रसौरात्रि*भवतिवि शेषवचना*त्तद्यथाब्रह्मपुराणे॥१४८॥ अथभाद्रपदेमासि*कृष्णाष्टम्यांकलौयुगे। अष्टाविंशतिमेजातःकृष्णोऽसौदेवकीसुतः॥१४९॥ विष्णुपुराणेऽपिप्रोक्तं*प्रावृट्कालेचनभसिकृष्णाष्टम्यांमहानिशि। उत्पत्स्येऽहंनवम्याञ्चप्रसूतिंत्वमवाप्स्यसीति॥१५०॥ संशयश्चात्रकिंभाद्रे*कृष्णाष्टम्यां वासुदेवः*कृष्णोऽभूज्जायताथश्रावणेकृष्णा*ष्टम्यां महानिशिजातः॥१५१॥ उच्यतेभाद्रपदेमासीतिगौण*भाद्रेयाकृष्णाष्टमीसा*मुख्यश्रावणेकृष्णाष्ट*मीतिनास्ति तद्विरोधः ॥ १५२ ॥ विष्णुपुराणेमहानिशीति विशेषेणोक्तत्वा* द्ब्रह्मपुराणेऽपितथा व्याख्यातव्यम ॥ १५३ ॥ यदापात्ररोहिणीयुक्ताष्टमी*नोक्तातथापराद्रिपुराणेविष्णु*धर्म्मोत्तरेचोक्तत्वात्तु* रोहिणीयोगउक्तव्यः ॥ १५४॥ तद्यथात्रप्रदर्श्यते*रोहिणीसहिताकृष्णा मासिभाद्रपदेऽष्टमी। सप्तम्याचार्द्धरात्राधःकलयापियदाऽभवत्॥१५५ तत्रजातोजगन्नाथः कौस्तुभीहरिरीश्वरः। तमेवोपवसेत्कालंतत्रकुर्य्याच्चजागरम् ॥ १५६ ॥ इति। अत्र भाद्रपद इति*गौणेभाद्रपदेमासि * रोहिणीसहिताकृष्णाष्टमीतिथिः * सप्तम्याविशिष्टायदा * द्धरात्राधःकलयापि ॥ १५७ ॥ पूर्व्वार्द्धरात्रस्यान्त्यकलयाविशि * ष्टाभवेत्तत्राष्टम्यांजगन्नाथो * हरिरीश्वरःकौस्तुभीकृष्णोजातः ॥ १५८ ॥ एषहिकृष्णस्यजन्मकालस्तत्र*नराणांक्रियाविधानं*महर्षिभिर्व्वारद्वयणादियोग* विशेषफलविशेषं ॥ १५९ ॥ दिवाचतुर्भिः पद्माद्भिविहितं * नामविशेषश्चकृतः * क्रमेणतत्प्रदर्श्यते ॥ १६० ॥ भविष्यपुराणेब्रह्मपुराणेच*रोहिणीसहिताकृष्णा मासेचश्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्द्धं कलयापियदाभवेत् ॥१६१

**न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते। न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः॥ २८२॥**

नपैतृयज्ञियेत्यादि॥ २८२॥ अग्नौ होमयमाभावात्तेनानेन * विहितपितृयज्ञाङ्ग*भूतोयोहोमःसन * लौकिकाग्नौविधीयते * आहिताग्नेर्द्विजन्मनोब्राह्मणादेः* दर्शश्राद्धं विनाऽपरं *श्राद्धमविधीयते॥ २॥ दर्शश्राद्धमकृत्वाऽन्यश्राद्धेऽधिकारो*नास्तितस्माद्दर्शश्राद्धं* यथाकुर्यात्तथानान्यश्राद्धंकुर्यात्॥ ३॥ कश्चित्प्रमादीतुवाच्छे * आहिताग्नेर्द्विजस्यामावस्याश्राद्ध*व्यतिरेकेणान्यापच्चे *दप्रमादीश्राद्धंनैवविधीयते॥ ४॥ तन्नमघादिश्राद्धानां * प्रतिषिधापत्तीतेषां*मपिकृष्यापच्चे विधेः* स्तस्मादमावस्याश्राद्धं *तदुक्तानान्यश्राद्धंकुर्यात्॥ २८२॥ नतपांचयाम्निकमन्वहमिति ० यदुक्तं तन्नोपपद्यतेउक्तं हि ० श्राद्धंकृत्वामैथुनंवर्जयेदिति। १॥ ततस्तानपत्यत्वप्रसङ्गःस्या० त्तेनपितृयज्ञेन ०सम्भवतीत्यतआह ०यदेवेत्यादिकश्लोकं॥ २८२॥

**यदेव तर्पयत्यद्भिः पितॄन्स्नात्वा द्विजोत्तमः। तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम्॥ २८३॥**

यद्द्विजोत्तमाब्राह्मणा ० विधिनास्नात्वाद्विजोयत् ० पितॄनद्भिस्तर्पयति॥१॥ तेनतर्पणेनपाञ्चयज्ञिक ० पितृयज्ञक्रियाफलं ० कृत्स्नंमाप्नोतीतेऽपपाञ्चयज्ञिक ० मन्वहमितास्यापवादः॥ २॥ प्रमादीतुपाञ्चयज्ञिकश्राद्धस्या*सम्भवेविधिरयमितिप्राह *तन्नकृत्स्नमितिवचनात्॥ २॥ २८३॥ वसूनित्यादि॥ २८४॥

**वसून्वदन्ति वै पितॄन्रुद्रांश्चैव पितामहान्। प्रपितामहांस्तथादित्यान्श्रुतिरेषा सनातनी॥ २८४**

पितॄनित्यादिवचनं पित्रा*दीनांभ्रातृगणस्यापि* पितृत्वादभिप्रायेनेति॥ १॥ २८४॥ इहश्राद्धकल्पेऽनुक्तं*यावच्छ्राद्धमप्रतिषिद्धं वाद्यनु*मतंतस्मादवतत्तत् *सर्वं विष्णुप्रोक्तं मयाविलिख्यते॥ १॥ तद्यथाविष्णुनाप्रोक्तं*ममावस्यास्तिस्रोऽष्टका*स्तिस्रोऽन्वष्टकामाघीप्रौष्ठपद्यूर्द्ध्वं* कृष्णत्रयोदशीव्रीहि*पाकयवपाकौचेति॥ १ एतांस्तुश्राद्धकालान्वै नित्यानाहप्रजापतिः। श्राद्धंनतेषुकुर्वाणोनरकं प्रतिपद्यते॥ २॥ अत्रामावस्याःकृष्णाष्टकास्तिस्रः*स्तिस्रश्चान्वष्टकाःमाघमासपूर्णः*प्रौष्ठपद्याःपूर्णिमाया*ऊर्द्ध्वमपरपक्षेमाघीत्रयोदशी॥ १॥ ॥ २॥ व्रीहिपाकोनवान्नश्राद्धं* यवपाकोयवश्राद्धमि * तानेतेनित्याःश्राद्धकालाः * प्रजापतिनाब्रह्मणोक्ताः॥ ३॥ अमावास्याश्राद्धमुक्तंचविष्णुना* अथश्राद्धेप्रतःपूर्वेद्युः * ब्राह्मणान्निमन्त्रये *द्वितीयेह्नि शुक्लपक्षस्यपर्वाह्णे॥ ४॥ कृष्णपक्षस्यापराह्णे *विप्रान्सुस्नातान्स्वाचान्तान्*यथाभूयोविद्याक्रमेण* कुशोत्तरेष्वासनेषूपवेशयेत्॥ ५॥ द्वौदैवेप्राङ्मुखौविप्रौ*त्रीन्पित्र्यउदङ्मुखान्। एकैकमुभयत्रवा॥ इति॥ ४॥ आमश्राद्धेषुकामेषु*प्रथमपक्षेनाग्निं कृत्वा*पक्षश्राद्धेषुमध्यमपक्षकेन* अमावास्यासूत्तमपक्षकेन॥५॥ आग्रहायण्यां जन्म*ष्टकाश्चक्रमेणैव * प्रथममध्यमोत्तम * पक्षकैरन्वष्टकाश्च॥ ६॥ ततोब्राह्मणास्नातः* पितॄनावाहये

पायसेन नवगव्येन * इत्यम। हविषेण कादशकौर्म्मेण * संवत्सरं गव्येन पयसा च तद्विकारैश्च । ७० । अत्रपितृगीता गाथाभवति * कालशाकं महाशल्कं मांसं वार्द्धीनसस्य च । विषाणवर्ज्जं खड्गास्तां भक्ष्यामहे सदा ॥७१॥ न चान्नमासनमारोपयेन्न पदा स्पृशेत् * उच्छेषणं भूमिगत * मजिह्मस्याशठस्य वा । दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ ७२ ॥ दैवे कर्म्मणि ब्राह्मणं न परीक्षेत * प्रयत्नात्पित्र्ये परीक्षेत ॥ ७३ ॥ हीनाधिकाङ्गान्विवर्जयेत् * विकर्म्मस्थान् वैडालव्रतिकान् * वृथालिङ्गिनो नक्षत्र * जीविनो देवलकांश्च ॥७४॥ चिकित्सकानन्दापुत्रां * स्तत्पुत्रान् वक्षयाजिनो * ग्रामयाजिनः शूद्रयाजिनोऽयाज्य * याजिनो व्रात्यांस्तद्याजिनः सूचकान् ॥७५॥ पर्व्वकारान् भृतकाध्यापकान्भृत * काध्यापितान् शूद्रान्नपुष्टान् पतित * संसर्गाननधीयानान् * सन्ध्योपासनाननुष्ठानान् ॥७६॥ राजसेवकान् नग्नान् * पितृमातृगुरुत्यागिन * स्वाध्यायत्यागिनश्च ॥७७॥ ब्राह्मणापसदा ह्येते * कथिताः पङ्क्तिदूषकाः । एतान्विवर्जयेद्विप्रान् श्राद्धकर्म्मणि पण्डितः ॥ ७८॥ अथ पङ्क्तिपावनास्त्रिणाचिकेतः * पञ्चाग्निर्ज्येष्ठसामगो * वेदपारगो वेदाङ्ग * शास्त्रैकशाखपारगः ॥ ७९ ॥ पुराणेतिहास व्याकरणपार * गो धर्म्मशास्त्रैकशास्त्रपारग * तीर्थपूतो यज्ञपूतस्तपःपूतः ॥ ८० ॥ सत्यव्रतो मन्त्रपूतो * गायत्रीजपनिरतो * ब्रह्मदेयानुसन्तानस्त्रिसुपर्णो * जामातृदौहित्रश्चेति * विशेषेण वर्ग्यागिनः ॥ ८१ ॥ अत्रपितृगीतागाथाभवति * अपि स्यात्स कुलेऽस्माकं भोजयेद्यस्तु योगिनम् । विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम् ॥ इति ॥ ८२ ॥ न गच्छेन्म्लेच्छविषयम् । परनिपानेऽपः पीत्वा * तत्सामान्यं गच्छतीति ॥ ८३ ॥ चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । स म्लेच्छदेशो विज्ञेय आर्यावर्त्तस्ततः परः ॥ ८४ ॥ इति ॥ अथ पुष्करेषु श्राद्धं * जप्यहोमतपांसि च । पुष्करे स्नानमात्रतः सर्व्वपापेभ्यः पूतो भवतीति ॥ ८५ ॥ एवमेव गयाशीर्षे * अक्षयवटेऽमरकण्टकपर्व्वते * वराहपर्व्वते यत्र * क्व च न नर्म्मदातीरे ॥८६ यमुनातीरे गङ्गायां * विशेषतः कुशावर्त्ते * बिल्वके नीलपर्व्वते * ॥ ८७ ॥ कनखले कुब्जाम्रे * भृगुतुङ्गे केदारे * महालये नड्वन्तिकायां * सुगन्धायां शाकम्भर्यां ॥ ८८ ॥ फल्गुतीर्थे महा * गङ्गायां मालि * हलिकाश्रमे * कुमारधारायां ॥ ८९ । प्रभासे यत्र क्व च न सरस्वत्यां विशेषतः । गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे । ९० । सततं नैमिषारण्ये वाराणस्यां विशेषतः । अगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतटे । ९१ । शोणस्य ज्योतिषायासङ्गमे श्रीपर्व्वते । कालोदके उत्तरमानसे * वडवायां मतङ्गवाप्यां । ९२ । सप्तार्षे विष्णुपदे स्वर्गमार्गपदे गोदावर्यां । गोमत्यां वेत्रवत्यां विपाशायां वितस्तायाम् । ९३ । शतद्रुतीरे चन्द्रभागायां * इरावत्यां सिन्धोस्तीरे * दक्षिणे पञ्चनदे औजसे । ९४ । एवमादिष्वन्येषु तीर्थेषु सरिद्वराम । सर्व्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु । ९५ । पर्व्वतेषु निकुञ्जेषु वनेषूपवनेषु च । गोमयेनोपलिप्तेषु मनोज्ञेषु । ९६ । अत्र च पितृगीता गाथाभवन्ति * कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् । नदीषु बहुतोयासु शीतलासु विशेषतः । ९७ । अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः । गयाशीर्षे वटे श्राद्धं यो नः कुर्यात्समाहितः । ९८ । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत । ९९ । वृषोत्सर्गे नीलवृषलक्षणं वक्ष्यते । याज्ञवल्क्यसंहितायाञ्च यदुक्तं * श्राद्धविधानं तदप्यत्र दर्श्यते * । १ । अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम । द्रव्यं ब्राह्मणसम्पत्ति विषुवं सूर्यसंक्रमः । १ । व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः । श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः । २ । अग्र्याः सर्व्वेषु वेदेषु श्रोत्रियो

ब्रह्मविद् युवा । वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥ ३ ॥ ऋत्विक् स्वस्रीययामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥ ४ ॥ कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः । मातृपितृपराश्चैव
ब्राह्मणाः श्राद्धसम्पदः ॥ ५ ॥ रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा । अवकीर्णी कुण्डगोलौ कुनखी श्याव
दन्तकः ॥ ६ ॥ भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः । मित्रध्रुक् पिशुनः सोमविक्रयी चाविनिन्दकः ॥ ७ ॥
मातापितृगुरुत्यागी कुण्डाशी वृषलीपतिः । परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः ॥ ८ ॥ निमन्त्रयीत पूर्वे
द्युर्ब्राह्मणानात्मवान् शुचिः । तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्मभिः ॥ ९ ॥ अपराह्णे समभ्यर्च्य स्वागते
नागतान् स्वयम् । पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥ १० ॥ युग्मान् दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथै
व च । परिश्रिते शुचौ देशे दक्षिणाप्रवणे तथा ॥ ११ ॥ द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा । माता
महानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥ १२ ॥ पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि । आवाहयेदनु
ज्ञातो विश्वे देवास इत्यृचा ॥ १३ ॥ यवैरन्ववकीर्याथ भाजने सपवित्रके । शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति
यवांस्तथा ॥ १४ ॥ या दिव्या इति मन्त्रेण हस्ते त्वर्घं विनिक्षिपेत् । दत्त्वोदकं गन्धमाल्यं धूपं वासः सदीप
कम् ॥ १५ ॥ तथाच्छादनदानञ्च करशौचार्थमम्बु च । अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥ १६ ॥ द्विगुणां
स्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् । आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः ॥ १७ ॥ यवार्थास्तु तिलैः
कार्याः कुर्यादर्घ्यादि पूर्ववत् । दत्त्वार्घं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥ १८ ॥ पितृभ्यः स्थानमसीति
न्युब्जं पात्रं करोत्यधः । अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ॥ १९ ॥ कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृ
यज्ञवत् । हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ॥ २० ॥ यथालाभोपपन्नेषु रौप्येषु तु विशेषतः । दत्त्वान्नं
पृथिवी पात्रमिति पात्राभिमन्त्रणम् ॥ २१ ॥ कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् । सव्याहृतिकां
गायत्रीं मधु वाता इति त्र्यृचम् ॥ २२ ॥ जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः । अन्नमिष्टं हविष्यञ्च
दद्यादक्रोधनोऽत्वरः ॥ २३ ॥ आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा । अन्नमादाय तृप्ताः स्थ शेषञ्चैवानु
मान्य च ॥ २४ ॥ तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत् सकृत् । सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ २५ ॥ उच्छि
ष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवत् । मातामहानामप्येवं दद्यादाचमनं ततः ॥ २६ ॥ स्वस्तिवाच्यं ततः कुर्यादक्ष
य्योदकमेव च । दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ २७ ॥ वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् । ब्रूयु
रस्तु स्वधेत्येवं भूमौ सिञ्चेत्ततो जलम् ॥ २८ ॥ विश्वे देवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् । दातारो नोऽभिवर्द्धन्तां वेदाः
सन्ततिरेव च ॥ २९ ॥ श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्विति । अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ॥ ३० ॥
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन । इत्युक्त्वा तु प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥ ३१ ॥ वाजे वाज इति प्रीतः पितृपू
र्वं विसर्जनम् । यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ॥ ३२ ॥ पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ।
प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥ ३३ ॥ ब्रह्मचारी भवेत्तान्तु रजनीं ब्राह्मणैः सह । एवं प्रदक्षिणं कृत्वा
वृद्धौ नान्दीमुखान् पितॄन् ॥ ३४ ॥ यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रिया । पिण्डांस्तु गोऽजविप्रेभ्यो द
द्यादग्नौ जले पि वा ॥ ३५ ॥ प्रक्षिपेत् सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत् । हविष्यान्नेन वै मासं पायसे
न तु वत्सरम् ॥ ३६ ॥ मत्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः । ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्

॥ ३७ ॥ मासहृद्याह्निपान्तिदत्तैरिहपितामहाः। खड्गामिषं महाशल्कं मधुमुन्यन्नमेव च ॥ ३८ ॥ लोहामिषं महाशाकं मांसं वार्ध्रीनसस्य च। यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते ॥ ३९ ॥ तथा वर्षात्रयोदश्यां मघासु च न संशयः। कन्यां कन्याविंदिनश्च पशून् मुख्यान् सुतानपि ॥ ४० ॥ द्यूतं कृषिञ्च वाणिज्यं द्विशफैकशफांस्तथा। ब्रह्मवर्च्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ॥ ४१ ॥ ज्ञातिश्रैष्ठ्यं सर्व्वकामानाप्नोति श्राद्धदः सदा। प्रतिपत्प्रभृतिष्वेतान् वर्जयित्वा चतुर्द्दशीम् ॥ ४२ ॥ शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते। स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलन्तथा ॥ ४३ ॥ पुत्रान् श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभम्। प्रवृत्तचक्रताञ्चैव वाणिज्यं प्रभुतां तथा ॥ ४४ ॥ अरोगित्वं यशो वीतशोकतां परमां गतिम्। धनं विद्यां भिषक्सिद्धिं कुप्यं गाश्चाप्यजाविकम् ॥ ४५ ॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति। कृत्तिकादिभरण्यान्तं सकामानाप्नुयादिमान् ॥ ४६ ॥ आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः। वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥ ४७ ॥ प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः। आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः। इति याज्ञवल्क्यप्रोक्तः श्राद्धकल्पः प्रदर्शितः ॥ ४८ ॥ अथ शाङ्खसंहितायां * शङ्खेनयत् श्राद्धविधानमुक्तं त * दप्यत्र मया दर्श्यते ॥ १ ॥ ब्राह्मणान्न परीक्षेत दैवे कर्म्मणि धर्म्मवित्। पित्र्ये कर्म्मणि सम्प्राप्ते तु क्रमात् संपरीक्षते ॥ १ ॥ ब्राह्मणा ये विकर्म्माणो वैडालव्रतिकाः शठाः। हीनाङ्गा अति रिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥ २ ॥ अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः। शूद्रान्नरसपुष्टाश्च ब्राह्मणाः पङ्क्तिदूषकाः ॥ ४ ॥ ऋग्यजुःपारगो यश्च साम्नां यश्चापि पारगः। अथर्व्वाङ्गिरसाध्येता ब्राह्मणः पङ्क्तिपावनः ॥ ५ ॥ षडङ्गवेदवेत्तारो बह्वृचाश्चैव सामगाः। त्रिणाचिकेताः पञ्चाग्नि ब्राह्मणाः पङ्क्तिपावनाः ॥ ६ ॥ ब्रह्मदेयानुसन्ताना ब्रह्मदेयप्रदायकाः। ब्रह्मदेयपतिर्यश्च ब्राह्मणाः पङ्क्तिपावनाः ॥ ७ ॥ नित्यं योगरतो विद्वान् समलोष्टाश्मकाञ्चनः। ध्यानशीलो यतिर्विद्वान् ब्राह्मणः पङ्क्तिपावनः ॥ ८ ॥ द्वौ दैवे प्राङ्मुखौ त्रीन् पित्र्ये चोदङ्मुखांस्तथा। भोजयेद्विधिना विप्रानेकैकमुभयत्र वा ॥ ९ ॥ भोजयेदथवाप्येकं ब्राह्मणं वेदपारगम्। दैवे कृत्वा तु नैवेद्यं पश्चाद्वह्नौ तु तत् क्षिपेत् ॥ १० ॥ उच्छिष्टसन्निधौ कार्यं पिण्डनिर्व्वपणं बुधैः। अभावे च तथा कार्यमग्निकार्यं यथाविधि ॥ ११ ॥ श्राद्धं कृत्वा प्रयत्नेन त्वराक्रोधविवर्जितः। उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ॥ १२ ॥ भोजयेद्विविधान् विप्रान् गन्धमाल्यानुलेपनैः। पङ्क्तिविद्यात्मनो गेहे भक्ष्यं वा भक्ष्यमेव वा ॥ १३ ॥ अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन। उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च। पुष्पाणि वर्जनीयानि तथापर्व्वतजानि च ॥ १४ ॥ तोयोद्भूतानि देयानि रक्तान्यपि विशेषतः। ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम् ॥ १५ ॥ दशां विवर्जयेत् प्राज्ञो यद्यप्यहतवस्त्रजाः। घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ॥ १६ ॥ धूपार्थं गुग्गुलुं दद्याद्घृतयुक्तं मधूत्कटम्। चन्दनञ्च तथा दद्यादिष्टं यत् कुङ्कुमं शुभम् ॥ १७ ॥ कूष्माण्डं गरगिम्बञ्च पद्मञ्च शतकं तथा। कपित्थं एडालाबूवार्त्ताकु कोविदारांश्च वर्जयेत ॥ १८ ॥ पिप्पलीं मरिचं चैव तथा पिण्डालुमूलकम्। कृतञ्च लवणञ्चैव वंशाग्रन्तु विवर्जयेत ॥ १९ ॥ राजमाषान् मसूरांश्च प्रवालकोरदूषकान्। लोहितान् वृक्षनिर्यासान् श्राद्धकर्म्मणि वर्जयेत् ॥ २० ॥ आम्रातलवलीमूलमूलञ्च न दधि दाडिमान्। सकोविदारयं सत् कन्दबीजं न मधु नासदा ॥ २१ ॥ सक्तून् शर्करां क्षारांश्च दद्या

च्छ्राद्धे प्रयत्नतः । पायसादिभिरुष्णैश्च भोजयित्वा तथा द्विजान् । भक्तापगामा आचान्तान् तथा वै दत्तद
क्षान । अभिवाद्य प्रसन्नात्मा अनुव्रज्य विसर्जयेत् ॥ २३ ॥ निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः
श्राद्धं भक्त्वा च दत्त्वा च युक्तः स्यात् महतैनसा ॥ २४ ॥ कालशाकं महाशल्कं मांसं वाध्रीणसस्य च । खड्गम
सं तथानन्त यमः प्रोवाच धर्म्मवित् ॥ २५ ॥ यद्ददाति गयाक्षेत्रे प्रभासे पुष्करेपि च । प्रयागे नैमिषारण्ये
सर्व्वमानन्त्यमुच्यते ॥ २६ ॥ गङ्गायमुनयोस्तीरे तीर्थे वामरकण्टके । नर्म्मदायां गयातीरे सर्व्वमानन्त्य
मुच्यते ॥ २७ ॥ वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये । सप्तारण्येऽषिकूपे च यत्तदक्षयमुच्यते ॥ २८ ॥ स्त्रीः
दर्शे तथा रात्रौ सन्ध्ययोश्च विशेषतः । न श्राद्धमाचरेत् प्राज्ञोऽन्यो च्छूद्रे न च व्रजेत् ॥ २९ ॥ हस्तिच्छा
सूर्य्यमितचन्द्रार्के राहुदर्शने । विषुवे चायने चैव सर्व्वमानन्त्यमुच्यते ॥ ३० ॥ प्रोष्ठपद्यामतीतायां मघायुक्तां
त्रयोदशीं । प्राप्य श्राद्धं तु कर्त्तव्यं मधुना पायसेन च ॥ ३१ ॥ प्रजां पुष्टिं तथा स्वर्गमारोग्यं च धनं तथा । नृणां
श्राद्धे सदा प्रीतिं प्रयच्छन्ति पितामहाः ॥ ३२ ॥ इति शङ्खोक्तश्राद्धविधानम् अथ* वशिष्ठेन श्राद्धविधानं यदुक्तं
तत्संहितायां तदत्र* समुपदर्श्यते यथा ॥ १ ॥ पूर्व्वेद्युर्ब्राह्मणान् सन्निपात्य यतीन्* गृहस्थान् साधून् वापरि
णत*वयसोऽविकर्म्मस्थान् श्रोत्रियान् शिष्यान् ॥ १ ॥ अन्तेवासिनः शिष्यानपि गुणवतो* भोजयेदिनग्नकु
शिर्वधि*वाणिज वत्स कृषिकृन्नखिवर्ज्जम् ॥ २ ॥ अथाप्युदाहरन्ति ॥ अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः । श्राद्धे नोद्वापनीयानि उच्छिष्टान्यादिनक्षयात् । खे पतन्ति हि याधा
रास्ताः पिवन्त्यकृतोदकाः । उच्छिष्टेन प्रपुष्टास्ते यावन्नास्तमितो रविः । चीरधारास्ततो यान्त्यलयाः सञ्च
भागिनः । प्राक् संस्कारात् प्रमीतानां प्रवेशनमिति श्रुतिः । भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे
उच्छेषणं भूमिगतं विकिरं लेपनोदकम् । अनुप्रेतेषु विसृजेदप्रजानामनायुषाम् । इति । उभयोः शाखयो
र्मुक्तं पितृभ्योऽन्नं निवेदितम् । तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः । तस्मादशून्यहस्तेन कुर्यादन्नमुपा
गतम् । भोजनं वा समालभ्य तिष्ठेतोच्छेषणे उभे । दैवे वापि पितृकृते चैकैकमुभयत्र वा । भोजयेत्सुसम
द्धोपि न प्रसज्जेत विस्तरे । सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः । पञ्चैतान् विस्तरो हन्ति तस्मात्तं परि
वर्जयेत् । अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् । शुभशीलोपसम्पन्नं सर्व्वलक्षणलक्षितम् । यद्येकं
भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य तु । देवतायतने कृत्वा ततः श्राद्धं
प्रवर्त्तयेत् । प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे । यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः । तावद्धि
पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः । हविर्गुणा न वक्तव्याः पितरो यावतर्पिताः । पितृभिस्तर्पितैः पश्चात्
वक्तव्यं शोभनं हविः । नियुक्तस्तु यदा श्राद्धे दैवे वा मांसमुत्सृजेत् । यावन्ति पशुरोमाणि तावन्नरकमृच्छति
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् । श्राद्धं दत्वा च
भुक्त्वा च मैथुनं योऽधिगच्छति । भवन्ति पितरस्तस्य तं मासं रेतसो भुजः । यतस्ततो जायते च दत्वा भुक्त्वा
पैतृकम् । न स विद्यामवाप्नोति क्षीणायुश्चैव जायते । पिता पितामहश्चैव तथैव प्रपितामहः । उपासते
सुतं जातं शकुन्तादिव पिप्पलम् । मधुमांसैश्च शाकैश्च पयसा पायसेन वा । एष नो दास्यति श्राद्धं वर्षासु च
मघासु च । सन्तानवर्द्धनं पुत्रं तृप्यन्तं पितृकर्म्मणि । देवब्राह्मणसम्पन्नमभिनन्दन्ति पूर्व्वजाः । नन्दन्ति पितर

स्नातवृष्टिरिवकर्षकाः। यद्गयास्थोददात्यन्नं पितरस्तेनपुत्रिणः। इति। श्रावण्याग्रहायण्योश्चाष्टकायाश्च* श्राद्धं पितृभ्यः प्रदद्यात्॥ १॥ इति वशिष्ठोक्तं श्राद्धविधानमुक्त्वा*मथगौतमोक्तं दर्श्यते॥ १॥ अथश्राद्धममावास्यायां पितृभ्यो*दद्यात्पञ्चमीप्रभृतिषुवापर*पक्षस्ययथाश्राद्धं सर्व्वस्मिनवा॥ १॥ द्रव्यदेशब्राह्मणसन्निधानेवा*कालनियमः शक्तितःप्रकर्षं* गुणसंस्कारविधिरन्नस्येति॥ २॥ नवावरान्भोजयेत्* अयुजोयथोत्साहं वा*ब्राह्मणान् श्रोत्रियान्वाग्रूप* वयःशीलसम्पन्नान्॥ ३॥ युवभ्योदानंप्रथम*मेकेपितृवच्च*तेनमित्रकर्म्मकुर्य्यात्॥ ४॥ पुत्राभावेसपिण्डा*मातृसपिण्डा*शिष्याश्च* दद्युस्तदभावेऋत्विगाचार्य्यौ॥ ५॥ तिलमाषव्रीहियवोदकदाने*मासं पितरःप्रीणन्ति*मत्स्यहरिणरुरुशशवराह* कूर्म्ममेषमांसैर्व्वत्सरं॥ ६॥ गव्यमांसपयःपायसै* द्वादशवर्षाणिप्रीणन्ति*वार्द्धीनसेनमांसेन॥ ७॥ कालशाककच्छागलोहखड्गमांसै* र्मधुमिश्रैश्चानन्त्यम्॥ ८॥ नभोजयेत्स्तेनक्लीब*तादिनोक्तं भागद्दर्शित*मथकात्यायनोक्तंयत्तत् प्रदर्श्यते॥ ९॥ पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनिशस्यते। वासरस्य तृतीयांशेनातिसन्ध्या समीपतः॥ १॥ यदाचतुर्द्दशीयामं तुरीयमनुपूरयेत्। अमावास्याक्षीयमाणा तदैवश्राद्धमिष्यते॥ २॥ यदुक्तं यदहस्त्वेवदर्शनं नैति चन्द्रमाः। अनयापेक्षयाज्ञेयं क्षीणे राजनिचेत्यपि॥ ३॥ यश्चोक्तं दृश्यमानेपितृचतुर्द्दश्यापेक्षया। अमावास्यां प्रतीक्षेत तदन्तेवापिनिर्व्वपेत्॥ 8॥ अष्टमेंऽशेचतुर्द्दश्याः क्षीणोभवतिचन्द्रमाः। अमावास्याष्टमांशेच पुनःकिलभवेदणुः॥ ५॥ आग्रहायण्यमावास्या तथाज्यैष्ठस्ययाभवेत्। विशेषमाभ्यां ब्रुवते चन्द्रचारविदोजनाः॥ ६॥ अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागोनकलावशिष्टः। तदन्तमेवक्षयमेतिकृत्स्नमेवं ज्योतिश्चक्रविदोवदन्ति॥ ७॥ यस्मिन्नब्दे द्वादशैकश्च यवा स्तस्मिंस्तृतीयायां परिदृश्यनस्यात्। एवंचारं चन्द्रमसोविदित्वा क्षीणेतस्मिन्नपराह्णे चदद्यात्॥ ८॥ सम्मिश्रयाचतुर्द्दश्याअमावास्याभवेत्क्वचित्। खर्व्वितां तां विदुः केचिद्गताध्वामितिचापरे॥ ९॥ वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि। यामांस्त्रीनधिकांवापि पितृयज्ञस्ततोभवेत्॥ १०॥ पक्षादावेवकुर्व्वीत तदापक्षादिकं चरु। पूर्व्वाह्णएवकुर्व्वन्तिविद्धेप्यन्ये मनीषिणः॥ ११॥ सपितुःपितृकृत्येषु पुनाधिकारोहिवर्त्तते। नजीवन्तमतिक्रम्यकिञ्चिद्दद्यादितिश्रुतिः॥ १२ पितामहेजीवतिच पितुःप्रेतस्यनिर्व्वपेत्। पितुस्तस्यचवृत्तस्य जीवेच्चेत् प्रपितामहः॥ १३॥ पितुःपितुःपितुश्चैवतस्यापि पितुरेवच। कुर्य्यात् पिण्डत्रयं यस्यसंस्थितः प्रपितामहः॥ १४॥ अन्तरेसर्व्वमासाद्ययथावदुपयुज्यते। देवपूर्व्वं ततः श्राद्धमत्वरः शुचिरारभेत्॥ १५॥ आसनाद्यर्घ्यपर्य्यन्तं वशिष्ठेन यथेरितम्। कृत्वाकर्म्माथपात्रेषु उक्तंदद्यात्तिलोदकम्॥ १६॥ तूष्णींपृथगपोदत्वामन्त्रेणात्र तिलोदकम्। गन्धोदकञ्चदातव्यं सन्निकर्षक्रमेणतु॥ १७॥ आचरेणानुपातेन यस्तुदद्यात्तिलोदकम्। पितरस्तस्यनाश्नन्ति दशवर्षाणिपञ्चच॥ १८॥ कुलालचक्रनिष्पन्नं मात्रं भस्मयं स्मृतम्। तदेवहस्तघटितं स्थाल्यादिदैविकं भवेत्॥ १९॥ गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानिच। धूपञ्चैवानुपूर्व्वेण ह्यग्नौकर्य्यादनन्तरम्॥ २०॥ अग्नौकरणहोमस्य कर्त्तव्यउपवीतिना। प्राङ्मुखेनैव देवेभ्यो जुहोतीतिश्रुतिश्रुतेः॥ २१॥ अपसव्येनवा कार्य्योदक्षिणाभिमुखेनच। निरुप्यहविरन्यस्मा अन्यस्मैनहिहूयते॥ २२॥ स्वाहाकुर्य्यान्नचात्रान्ते नचैव जुहुयाद्धविः। स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रंसमापयेत्॥ २३॥ पित्र्यायः पङ्क्तिमूर्द्धन्य

स्तीर्णपाणावनग्निमान् । हुत्वामन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥२४॥ न कुर्य्याद्धोममन्त्राणां पृथगादिषु
कुत्रचित् । अन्येषाञ्चाविकृष्टानां कालेनाचमनादिना ॥२५॥ सव्येनपाणिनैतावं यद्वत्रस्यदीरितं । परिसमूहना
मात्रं तत्सर्व्वास्यादिशतिक्रमम् ॥२६॥ पिण्डन्नादाभिसंग्रहाद्दक्षिणेनेतरात्करात् । अन्वारभ्याचसव्येनकुर्य्या
दुल्लेखनादिकं ॥२७॥ यावदर्थमुपादायहविषोऽर्भकमर्भकम् । चरुणासहसन्नीयपिण्डान्दद्यादुपक्रमेत
॥२८॥ पितृन्तरकर्षूमेमध्यमेमध्यमस्यतु । दक्षिणेतत्पितुश्चैवपिण्डान्पूर्व्वाणिनिर्व्वपेत् ॥२९॥ वाम
मावर्त्तनं केचिदुदगन्तंप्रचक्षते । सर्व्वं गौतमशाण्डिल्यौशाण्डिल्यायनएवच ॥३०॥ आहृताप्राणमायम्यपितॄन्
ध्यायन्यथार्थतः । जपंस्तेनैववाहृतास्ततःप्राणंप्रमोचयेत् ॥३१॥ पुरतोयात्मनःकर्षूःसापूर्व्वापरिकीर्त्तिता ।
मध्यमादक्षिणेनास्यास्तद्दक्षिणतउत्तमा ॥३२॥ वाय्वग्निदिङ्मुखास्तास्युकर्षूःसार्द्धाङ्गुलान्तराः । तीक्ष्णा
न्तायवमध्यास्तामध्यांनावमितोत्किरेत् ॥३३॥ प्राङ्मुखादिरःकार्य्यो रजतेनविभूषितः । प्राङ्मुखेवोपवेश्य
स्तुहादशाङ्गुलदृश्यते ॥३४॥ अग्नाभावेःकृष्णैःकार्य्यं कर्षूणांस्तरणंघनैः । दक्षिणान्तंतदग्रैस्तुपितृयज्ञे
परिस्तरेत् ॥३५॥ स्रगगरंसुरभिर्ग्यं चन्दनादिविलेपनम् । सौवीराञ्जनमित्युक्तं पिञ्जलीनां यदञ्जनम् ॥३६
मातुःप्रथमतःपिण्डंनिर्व्वपेत्पुत्रिकासुतः । द्वितीयन्तुपितुस्तस्यास्तृतीयंतत्पितुःपितुः ॥३७॥ इतिकात्याय
नोक्तममावस्यादि*श्राद्धविधानंदर्शितं * अथहारीतोक्तं दृश्यते ॥१॥ अनग्निकोयदाविप्रःश्राद्धंकरोतिपार्व्व
णम् । तत्रमातामहानाञ्चकर्त्तव्यमुभयंसदा ॥१॥ दैवपूर्व्वन्तुयच्छ्राद्धमदैवञ्चापियद्भवेत् । ब्रह्मचारीभवे
त्तत्रकुर्य्याच्छ्राद्धन्तुपैतृकम् ॥२॥ मातुःश्राद्धन्तुपूर्व्वंस्यात् पितृणांतदनन्तरम् । ततोमातामहानाञ्चवृद्धौश्राद्धत्र
यंमतम् ॥३॥ क्रतुर्दक्षोवसुःसत्यःकालकामौधुरिलोचनौ । पुरूरवामाद्रवाश्चविश्वेदेवाःप्रकीर्त्तिताः ॥४॥
आगच्छन्तुमहाभागाविश्वेदेवामहाबलाः । येयत्रविहिताःश्राद्धे सावधानाभवन्तुते ॥५॥ इष्टिश्राद्धे क्रतुर्दक्षो
वसुःसत्यश्चवैदिके । कालःकामोऽग्निकार्य्येषुअत्वरेधुरिलोचनौ ॥६॥ पुरूरवामाद्रवाश्चपार्व्वणे विनियोजयेत्
मृन्मयेषुचपात्रेषुश्राद्धे योभोजयेत्पितॄन् । अन्नदातापुरोधाश्चभोक्ताचनरकंव्रजेत् । अलाभे मृन्मयं दद्याद
नुज्ञातस्तु तैर्द्विजैः । घृतेनप्रोक्षणं कार्य्यं मृदःपात्रं पवित्रकम् ॥८॥ श्राद्धं कृत्वापरश्राद्धे यस्तुभुञ्जीतविह्वलः ।
पतन्तिपितरस्तस्यलुप्तपिण्डोदकक्रियाः ॥९॥ श्राद्धंदत्वाचभुक्त्वाचअध्वानं योऽधिगच्छति । भवन्तिपितरस्तस्य
तंमासंपांशुभोजनाः ॥१०॥ पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानं प्रतिग्रहं होमं श्राद्धं कृत्वाष्टव
र्जयेत् ॥११॥ अध्वगामीभवेदश्वः पुनर्भोक्ताचवायसः । कर्म्मकृज्जायते दासःस्त्रीगमने चशूकरः ॥१२॥
इतिश्राद्धकल्पःप्रदर्शितः*आसपिण्डीक्रियं कर्म्म *तत्रनयतप्तकाग्र *मनुमतंतत्पूर्व्वं *विस्तरेणदर्शितं ।इ
संक्षेपेणतदयमयादृश्यते * तद्यथाविष्णुसंहितायां ।१।मृतंद्विजंनशूद्रेणनिर्हारयेत् * नशूद्रं द्विजेनपितरं
मातरञ्च*पुत्रानिर्हरेयुर्द्विजं*पितरमपिनशूद्राः ॥१॥ ब्राह्मणमनाथंये*ब्राह्मणानिर्हरन्ति*तेस्वर्गलोकभाजः
॥२॥इति॥ पराशरेणोक्तञ्च*अनुगम्येच्छयाप्रेतं ज्ञातिमज्ञातिमेववा । स्नात्वासचेलंस्पृष्ट्वाग्निं घृतं प्राश्यविशुद्ध्यति
॥१॥ क्षत्रियंमृतमज्ञानाद्ब्राह्मणोयोऽनुगच्छति । एकाहमशुचिर्भूत्वापञ्चगव्येनशुद्ध्यति ॥२॥ शवञ्चवैश्यमज्ञानाद्ब्रा
ह्मणोयोऽनुगच्छति । कृत्वाऽशौचंद्विरात्रन्तुप्राणायामान्षडाचरेत् ॥३॥ प्रेतीभूतंतुयःशूद्रं ब्राह्मणोज्ञानदुर्ब्बलः ।
नयन्तमनुगच्छेतत्रिरात्रमशुचिर्भवेत् ॥४॥ त्रिरात्रेतुततःपूर्णे नदींगत्वासमुद्रगाम् । प्राणायामशतंकृत्वा

एवं प्राश्य विशुद्ध्यति ॥ ५ ॥ विनिवर्त्तेयदा शूद्रा उदकान्तमुपस्थिताः । द्विजैस्तदानुगन्तव्या इति धर्म्मविदो विदुः ॥ ६ ॥ तस्माद्द्विजो मृतं शूद्रं नस्पृशेन्न च दाहयेत् । दृष्टे सूर्य्यावलोकेन शुद्धिरेषा पुरातनी ॥ ७ ॥ अद्युते चमतुनाख्यं *दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् । पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः ॥ ८ ॥ आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ९ ॥ इति ॥ कात्यायनेनोक्तं यथा*दर्व्वं लं संस्थापयित्वा तु शुद्धवेलादिमं वृतम् । दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥ १ ॥ घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम् । चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्विभूषितम् ॥ २ ॥ हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु । मुखे तथापिधायैनं निर्हरेयुः सुतादयः ॥ ३ ॥ आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम् । एकोऽनुगच्छेत्तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि ॥ ४ ॥ अर्द्धमादहनं प्राप्य आसीनो दक्षिणामुखः । सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥ ५ ॥ अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत् । भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणे ॥ ६ ॥ तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे । आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रां नसि स्रुवम् ॥ ७ ॥ पादयोरधरां प्राचीमरणीमुरसीतराम् । पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥ ८ ॥ मुषलेन सहन्यस्य मन्तरूर्व्वोरुलूखलम् । ततोऽग्निलोकमत्वैवमनमन्त्रयतो विभोः ॥ ९ ॥ अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः । अथाग्निं सव्यं जान्वक्त्वा दद्याद्दक्षिणतः शनैः ॥ १० ॥ अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति प्रज्वालयन् ॥ ११ ॥ इति ॥ अत्रैतेनाभ्यक्तमाप्लाव्येति । स्नापयित्वा तव मृतं मन्त्रः ॥१२॥ ओं गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः । कुरुक्षेत्रं च गङ्गां च यमुनां च सरिद्वराम् ॥१३॥ कौशिकीं चन्द्रभागां च सर्व्वपापप्रणाशिनीम् । भद्रावकाशां सरयूं गण्डकीं पनसां तथा ॥१४॥ वैणवं च वराहं च तीर्थं पिण्डारकं तथा । पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ॥ १५ ॥ इतिमन्त्रं पठित्वा*स्नापयेदिति केचित्* इत्येतत्तु यदुक्तं ॥ १६ ॥ आरभ्य आद्यपतनाच्छ्राद्धं कुर्य्याद्दारोहिणं बुधः । त्रिधिस्थो विधिमास्थाय*रोहिणन्तु न लङ्घयेत् ॥ १७॥ इति सपिण्डीकरणान्तैकोद्दिष्ट*षण्मनवममृत्तौ प्रसक्तः*बुद्धौनत्वे कोद्दिष्टविधिकाब्दिके ॥१८॥ सपिण्डीकरणादूर्द्ध्वं*प्रेतमनुष्यभावाभावात्*पितृदेवभावात्संवत्सरे श्राद्धविधिर्द्दैवाहोरात्रो हि संवत्सरः ॥ १९॥ पितृभावादपरासु*दैवभावात्संवत्सरा*त्मकाहोरात्रे विहितमेकमे*वागमनाब्दिकं श्राद्धं*नामनमध्याह्ने कुतुपरोहिणात्मके ॥ २० ॥ ततो ब्रह्मपुराणे चोक्त*मपराह्णे कुतुपे एक*मितितन्मध्याह्ने य*दे कोद्दिष्टमुक्तं तत्षोडशश्राद्धं ॥ २१ ॥ इतिज्ञापनार्थमुक्तं *तदपवादे प्रातर्वृद्धि*निमित्तकमिति ॥ २२ ॥ वृद्धिनिमित्तकं यदेकोद्दिष्ट*श्राद्धं सपिण्डीकरणान्तं तत्* प्रातरेव न मध्याह्ने ॥ २३ ॥ तस्मादयमेतदविद्वान्*प्रमादी सांवत्सरिकं* श्राद्धं कुतपरोहिणं * कालेऽव्यवस्यापयति तदसाधु ॥ २४ ॥ गृह्यपरिशिष्टे प्रोक्तं *यथास्तं सविता याति* पितरस्तामुपासते * तिथिं तेभ्योऽपराह्णे हि *स्वयं दत्तः स्वयम्भुवा ॥ इति ॥ २५ ॥ तत्रोभयदिनापराह्णव्यापिनी * यदि स्यात्तिथिर्भवति तदा * पूर्व्वदिने श्राद्धं कार्य्यं *मिताक्षरमन्त्रकृत्यैः ॥ २६ ॥ स्याद्यापराह्णव्यापिनी वित्तस्मृताहस्य क्रिया तिथिः । पूर्व्वस्मिन्निर्व्वपेत् पिण्डमित्याङ्गिरसभाषितम् ॥ इति ॥ २७ ॥ भविष्यपुराणे चोक्तं *व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥ इति ॥ २८ ॥ एतानि षोडशैकोद्दिष्टानि श्राद्धानि*नाग्निमद्भिः सामिषेण*वैवाहिकाग्निपक्वेनान्नेन कार्य्याणि ॥२९॥ तदुक्तं लघुहारीते *सपिण्डीकरणं यावत्*प्रेतश्राद्धानि षोडश*पक्वान्नेनैव कार्य्याणि* सामिषेण द्विजातिभिरिति ॥ ३० ॥

तद्यथाऽयः पितरि मृते सत्यग्निं * गृह्णातिसमातृः षोडशश्राद्धानि * सामिषेणतस्मिन् विवाहाग्नावेव। २१। पक्वेनान्नेन कुर्वीत * यस्य चापुत्रकस्य मृतस्य भ्रातृ * ष्यनःसाग्निकः श्राद्धाधि * कारी भवति स च कुर्य्यात्। २२। अनग्निकस्तु सर्व्वाणि * कोद्दिष्टादीनि श्राद्धानि * निरामिषेणामान्नेन * कर्त्तव्यानि साग्निकैः * पापर्द्दितीर्थे चार्कन्दुग्रहणे च। २३। शूद्रेणापि सर्व्वदैव * निरामिषेणामान्नेन * श्राद्धानि कार्य्याणीत्याह प्रचेताः। २४। तद्यथा। आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं द्विजैः कार्य्यं शूद्रेणापि सदैव हि। इति। २५। उशनसाचोक्तमेवं * अनग्निरध्वगो वापि तथैव व्यसनान्वितः। आमश्राद्धं द्विजः कुर्य्याद् वृषलस्तु सदैव हि। इति। २६। अतः कारणमनग्नीनां द्विजाना * मसंस्कृते लौकिकाग्नौ * पाकस्य वृथात्वमुक्तं * भगवतात्रिणा स्वसंहितायां। २७। तद्यथा असंस्कृते लौकिकाग्नौ * पक्वेनान्नेन देवयज्ञादि च तु * विधपाकयज्ञविधानाभावात् * पाको वृथापाक उक्तः॥ २८॥ तदत्रिवचनमिदं * योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः॥ ३९॥ वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद् द्विजः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यतीति॥ ४०॥ यदन्नमनुपायस्यापाभक्ष्यं तच्च * पितृदेवानामभक्ष्यमेवतस्मा * दामान्नेनाग्निकः * द्विजोपि श्राद्धं कुर्य्यात्॥ ४१॥ कात्यायने न चोक्तं सदारोऽन्यान् पुनर्दारान् कथञ्चित् कारणान्तरात्। यदृच्छेदग्निमान् कर्त्तुं क्व होमोऽस्य विधीयते॥ ४२॥ स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन। न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते॥ इति॥ ॥ ४३॥ स्वेऽग्नाविति प्रथमभार्य्यया सह * गृहीतेऽग्नौ होमो भवेत् * द्वितीयभार्य्याग्रहणे * ऽग्निग्रहणाभावाल्लौकि * केऽग्नौ होमो न भवेत्॥ ४४॥ कस्मात् यस्मादाहिताग्नेः स्वं सर्व्वं * कर्म लौकिकेऽग्नौ नैव * कदाचिद् विधीयत इति॥ ४५॥ तस्माल्लौकिकेनाग्निना * पक्वेनान्नेनमनुष्यै * रप्यभक्ष्यं पाकं श्राद्धादि सर्व्वं * कर्म न कर्त्तव्यं सर्व्वैरेवेति॥ ४६॥ तेन विवाहाग्न्याद्यभावे * निरग्निभि * रामान्नेन श्राद्धं कार्य्यम्॥ ४७॥ इति॥ इति तृतीयाध्यायस्य श्राद्धकल्पस्य खिलं * श्राद्धकल्पविधानं॥ ४८॥ इत्येवं प्रातःकृत्यादि * श्राद्धबलिवैश्वदेवान्तानि * सर्व्वाणि कर्म्माणि कृत्वा * गृहीयत् कुर्य्यात्तदाह * विघसाशी भवेदित्यादि श्लोकम्॥ १॥

**विघसाशी भवेन्नित्यं नित्यं वामृतभोजनः। विघसो भुक्तशेषन्तु यज्ञशेषं तथामृतम्॥२८५**

नित्यं प्रतिदिनं गृही * प्रातःकृत्यादातिथ्यादि * भोजनान्तेशेषाशी स्यात्॥ १॥ अमृतभोजनो वा स्यात् * कः पुनर्विघसः किं चामृतमित्यत * आह विघस इत्यादि। २। भुक्तशेषन्तु विघस * इत्यतिथ्यादिसर्व्वेषां * भुक्तशेषं यत् स विघस उच्यते। ३। तथा यज्ञशेषं यत्तदमृतं स्या * दित्यनेन ज्ञापितं * गृही नित्यं प्रातःकृत्या * द्यतिथ्यादिभोजनकर्म्म * यज्ञकर्म्म च कुर्य्यादिति। ४। २८५। अध्यायार्थमुपसंहरत्येतद्व * इत्यादिकं श्लोकमेकम्। १।

**एतद्वोऽभिहितं सर्व्वं विधानं पाञ्चयज्ञिकम्। द्विजातिमुख्यवृत्तीनां विधानं श्रूयतामिति२८६**

**इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां तृतीयोऽध्यायः समाप्तः॥ १८७॥ ३॥ *॥**

एतत् पाञ्चयज्ञिकं विधानं सर्व्वं * युष्मभ्यं मयाभिहितं * द्विजातिमुख्यवृत्तीनां ब्राह्मणानां वृत्तीनां तु * विधानमथ श्रूयताम्॥ इति। २। इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां प्रमादभञ्जनीटीकायां तृतीयाध्यायस्य प्रमादभञ्जनी तृतीयाध्यायः। २।

ग्रन्थोद्देशेनाव * कल्पानन्तरं *वृत्तीनां लक्षणं*च वाहिष्टमस्ति ॥ १ ॥ ततो द्विप्राणां वृत्तिं वक्तुं *मवस्थाभेद कालमाह*चतुर्थमित्यादि ॥ १ ॥

चतुर्थमायुषोभागमुषित्वाद्यं गुरौद्विजः। द्वितीयमायुषोभागं कृतदारोगृहे वसेत् ॥ १ ॥

द्विजोब्राह्मणः क्षत्रियो * वैश्यश्चायुषयाद्यं चतुर्थं भागं गुरौ ब्रह्मचर्याश्रमे * यावद्वावेदग्रहणं तावदुषित्वा ॥ १ ॥ आयुषोद्वितीयं चतुर्थं *भागं यथावत्कृतदारः*सन्गृहे वसेत् ॥ ४ ॥ १ ॥ ननु तत्र गृहवासे *कयावृत्त्याजीवेदित्यत*आहाद्रोहेणेत्यादि ॥ १ ॥ १ ॥

अद्रोहेणैवभूतानामल्पद्रोहेणवापुनः। यावृत्तिस्तांसमास्थायविप्रोजीवेदनापदि ॥ २ ॥

भूतानां प्राणिनामद्रोहेणैव*जिघांसावातिरेकेण*यावृत्तिर्वर्त्तनसाधनं भवति*तां वृत्तिमास्थायविप्रः ॥ १ ॥ अथवाभूतानामल्पद्रोहेण वा*वृत्ति स्यात्तां वृत्तिमास्थायानापदि*जीवेद्द्रोहं विनावृत्तिः*लोकेणयेणासम्भवात् ॥२॥ आपदिपुनर्यावृत्त्या*जीवतितां वक्ष्यमाणां *वृत्तिमास्थायजीवेत् ॥ २ ॥ २ ॥ तर्हि कथं जीवनार्थं *धनसञ्चयं कुर्यादित्यत आह यात्रेत्यादि ॥ २ ॥

यात्रामात्रप्रसिद्ध्यर्थं स्वैःकर्म्मभिरगर्हितैः। अक्लेशेनशरीरस्यकुर्व्वीतधनसञ्चयम् ॥ ३ ॥

यात्राजीवनकालयापना*तन्मात्रं शरीरस्याक्लेशेन*स्वैरगर्हितैःकर्म्मभिः * प्रसिद्ध्यतितत्प्रसिद्ध्यर्थम् ॥ १ ॥ शरीरस्याक्लेशेन * तैरगर्हितैःकर्म्मभिः* धनसञ्चयं विप्रःकुर्व्वीतेति ॥ २ ॥ २ ॥ कैरगर्हितैःकर्म्मभिरित्यतः पुनरुच्यते *ऋतामृताभ्यामित्यादि ॥ १ ॥ ४ ॥

ऋतामृताभ्यांजीवेत्तु मृतेनप्रमृतेनवा। सत्यानृताभ्यामपिवानश्ववृत्त्याकदाचन ॥ ४

ऋतादिभिःपञ्चभिस्तु*कर्म्मभिर्यथेष्टमेव*धनसञ्चयं कृत्वा*जीवेन्नतुश्ववृत्त्याकदाचजीवेत् ॥ १ ॥ ४ ॥

ऋतमुञ्छशिलंज्ञेयममृतंस्यादयाचितम्। मृतन्तुयाचितंभैक्षंप्रमृतंकर्षणंस्मृतम् ॥ ५ ॥

सत्यानृतन्तुवाणिज्यंतेनचैवापिजीव्यते। सेवाश्ववृत्तिराख्यातातस्मात्तांपरिवर्जयेत् ६

तानिपञ्चऋतादि*कर्म्माण्याहऋतमित्यादिश्लोकौ ॥१॥ अनापदीत्यधिकारः*स्वामिगृहीतावशिष्टं*शस्यमेकैककणरूपम्*मञ्जुल्यायदुञ्छतिस*उञ्छःशस्यचयनम् ॥२॥ बौधायनेनोक्तं च*अवाधितस्थानेषु*पथिवाक्षेत्रेषुवा*ऽप्रतिहतावकाशेवा ॥ ३ ॥ यत्रौषधयोविद्यन्ते* तत्राङ्गुलीभ्यामेकैकं* कणं यत्समञ्जयति * सउञ्छःशस्यचयनम् ॥४॥ सकणिशस्यानामनेकेषां*चयनं शिलमुच्यते ॥५॥ तदुञ्छशिलं सतां कर्म्म*ऋतार्यमित्यतस्तद्द्वय* ऋतमुच्यते

॥ ५ ॥ अयाचितं यमर्थं लभते त * दमृतमित्युच्यते * याचितं भैक्ष्यं मृतमि * त्युच्यत इत्युक्तमिति ॥ ६ ॥ कर्षणं कृ
षिकर्म्मभि * रुत्पादितं यदन्नं तत् * प्रमृतं तद्धि बहुप्राणि * मरणेनोत्पन्नत्वात् प्रमृतमुक्तम् ॥ ७ ॥ ५ ॥ ब्राह्मणेन कृ
षिं यथा कृत्वा दोष * भाक् स्यात्तदुक्तं पराशरेण * षट्कर्म्मनिरतो विप्रः कृषिकर्म्माणि कारयेत् ॥ ८ ॥ हलमष्टगवं धर्म्यं
षड्गवं मध्यमं स्मृतं । चतुर्गवं नृशंसानां द्विगवं वृषघातिनाम् ॥ ९ ॥ क्षुधितं तृषितं श्रान्तं बलीवर्द्दं न योज
येत् । हीनाङ्गं व्याधितं क्लीवं वृषं विप्रो न वाहयेत् ॥ १० ॥ स्थिराङ्गं नीरुजं दृप्तं वृषभं षण्ढवर्जितं । वाहयेद्
दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत् ॥ ११ ॥ जप्यं देवार्च्चनं होमं स्वाध्यायञ्चैवमभ्यसेत् । एकद्वित्रिचतुर्वि
प्रान् भोजयेत् स्नातकान् द्विजः ॥ १२ ॥ एवं कृष्टेः तथा चैव धान्यैः स्वयमर्जितैः । निर्व्वपेत् पञ्चयज्ञांश्च क्रतुदी
क्षाञ्च कारयेत् ॥ १३ ॥ राज्ञे दत्त्वा तु षड्भागं देवानाञ्चैकविंशकं । विप्राणां त्रिंशकं भागं कृषिकर्त्ता न
लिप्यते ॥ १४ ॥ यो न दद्याद् द्विजातिभ्यो राशिमूलमुपागतः । स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्द्दिशेत् ॥ १५ ॥
वृक्षान् छित्त्वा महीं भित्त्वा हत्वा तु कृमिकीटकान् । कर्षकः खलु यज्ञेन सर्व्वपापात् प्रमुच्यते ॥ १६ ॥ तिलारसान्
विक्रेता विक्रेता धान्यतः समाः । विप्रस्यैवं विधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥ १७ ॥ संवत्सरेण यत् पापं मत्
स्यघाती समाप्नुयात् । अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली ॥ १८ ॥ पाशको मत्स्यघाती च व्याधः शाकुनि
कस्तथा । अदाता कर्षकश्चैव पञ्चैते समपापिनः ॥ १९ ॥ क्षत्रियोऽपि कृषिं कृत्वा द्विजान् देवांश्च पूजयेत् । वैश्यः
शूद्रः सदा कुर्य्यात् कृषिवाणिज्यशिल्पकान् ॥ इति ॥ १० ॥ वाणिज्यं सत्यानृतं तच्चेति सत्या * नृतं प्रायेण बहुसत्या
नृतवाच * हारादुत्पादितत्वादुक्तम् ॥ १ ॥ परेषां राजादीनां सेवा * श्ववृत्तिरिवेत्यतः श्ववृत्ति * रुच्यते तस्मा
त्तामेव * श्ववृत्तिं विप्रो वर्जयेत् ॥ २ ॥ ६ ॥ नन्वेतैः कर्म्मभिः कियन्मितधनं * सञ्चिनुयादित्यत आह * कुशूलधान्ये
त्यादिकम् ॥ १ ॥

**कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा । त्र्यैहिको वापि भवेदश्वस्तनिक एव वा ॥ ७ ॥**

ब्रीह्यागारं कुशूलः स्यात् * इति गोलाकारधान्य * स्थानं तत्परिपूर्णधान्यकः ॥ २ ॥ यावता धान्येन संवत्सरम् *
मर्हति तावद्धान्यः कुशूलधान्यको * मनुनाऽप्युक्तमेवेतत् * ॥ ३ ॥ यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हतीति ॥ ४ ॥ कश्चिद्व्याचष्टे तन्मेह * युक्त्यासिद्धातिपरार्द्धे * त्रैयहिकोऽश्वस्तनि
को वापीत्युक्तेः * दिनसंख्यायापनार्हधान्यमेवोपपद्यते ॥ ५ ॥ तदभिप्रायेणापरो व्याख्यातवान् * द्वादशाहं
कुशूलेन वृत्तिः कुम्भ्यादिना निषट् ॥ ६ ॥ इति ॥ परिमाणशास्त्रे तूक्तं * कुम्भो द्रोणास्तु चत्वार * इति तेन परि
वारसंख्याधिक्ये * षड्दिनवृत्तिसम्भवो * न भवतीति तदसत् ॥ ७ ॥ धान्यसञ्चयन्तु यः * कुशूलपरिमितं वा * कुम्भी

परिमितं वाच्य * स्वपरिवारोपयोज्यं * तं यद्विकं वाग्व्रस्तनिकं वाक्ययात् ॥ ८ ॥ ७ ॥ इतो वं धान्यसञ्चयं * धर्म्मतोज्यो इत्यमाह * चतुर्णामपीत्यादि ॥ १ ॥ ८ ॥

**चतुर्णामपिचैतेषांद्विजानांगृहमेधिनाम्। ज्यायान्परःपरोज्ञेयोधर्म्मतोलोकजित्तमः ८**

द्विजानामिह विप्राणां विप्रोजीवेद्दनापदी * तिविप्राधिकारान्न विप्रक्षत्रिय * वैश्यानां क्षत्रियवैश्य * इत्यीनां वत्या माणत्वात् ॥१॥ एतं षाडञ्छमिलानां मतत * प्रमृतसतयान् तञ्छवृत्तीना * षष्ठं मध्ये चतुर्णामप्यादयानां * उञ्छशिलाव नश्वतप्रमृतानां ॥ २ ॥ पुरःपुरोधर्म्मतो * ज्यायान्इत्युतमोलो * कजित्तमश्चभवति ॥ ३ ॥ द्वौकुसतयान्तं * अ्वह स्याखौविप्रौत्र्यवगौ * ब्राह्मणः तिषुबैश्यइत्विवात् ॥ ४ ॥ ८ ॥ तर्हि किं विप्रौद्वौ विप्राणां कर्त्तव्यौ * नस्यातामित्यत आह * षट्कर्म्मं कइत्यादि ॥ १ ॥ ८ ॥

**षट्कर्म्मैकोभवत्येषांत्रिभिरन्यःप्रवर्त्तते। द्वाभ्यामेकश्चतुर्थस्तुब्रह्मसत्रेणजीवति ॥ ९ ॥**

एकोविप्रःषट्कर्म्माख * उञ्छशिलामृतामृत * प्रमृतसतयान् तञ्छ * वृत्तीतिषट्कर्म्माभवति ॥१॥ अन्यएकोविप्र एषां * षण्णां मध्ये त्रिभिः कैश्चित् * कर्म्मभिस्तुप्रवर्त्तते ॥ २ ॥ एकश्चविप्रएषां मध्ये * द्वाभ्यां कर्म्मभ्यां जीव ति * चतुर्थो विप्रोब्रह्मसत्रेण केन * स्वाध्याये नवर्त्तमानः * सन्नयाचितेनजीवति ॥ ३ ॥ प्रमादौतव्याचष्टे * ऋतायाचितमृतांक्षेत्रमृतिनित्यः * पञ्चभिस्तेनचैवापीतिचकारात् * कुसीदेनेतोदं षड्भिः * कर्म्मभिःषट्कर्म्माणोद्विति ॥ ४ ॥ तथाब्रह्मसत्रेणोञ्छ * शिलानातरेणब्रह्मणासतत * भवत्वात्सत्रमिवसत्रमिति * तदसदेवव्याख्यानं ॥ ५ ॥ उञ्छशिलयोस्तुभयोः * कुतायेनोक्तत्वात् कुसी * दस्याब्राह्मणवृत्तित्वाच्च * तयोःस्वाध्यायवृभावा * भावाद्ब्रह्मसत्रत्वाभावात् ॥ ६ ॥ उञ्छशिलाभ्यांवृत्तिःपरस्मौकेन * वच्यमाणत्वात्पौन * रूक्तादोषप्रसङ्गाच्च ॥ ७ ॥ ८ ॥ वर्त्तयंश्च * त्यादिनोञ्छ * शिलवृत्तिमाहस्वयम् ॥ १ ॥

**वर्त्तयंश्चशिलोञ्छाभ्यामग्निहोत्रपरायणः। इष्टीःपार्व्वायनान्तीयाःकेवलानिर्व्वपेत्सदा १०**

शिलोञ्छाभ्यां वर्त्तयंश्च * कश्चिद्विप्रोऽग्निहोत्रपरायणःसन् * पार्व्वायनान्तीयाःकृत्स्ना * इष्टीःसदैवनिर्व्वपेत् ॥ २ ॥ अग्निणाचेष्टिरुक्ताहि * अग्निहोत्रं तपःसत्यंवेदानाञ्चैवपालनम्। आतिथ्यं वैश्वदेवञ्चइष्टिरित्यभिधीयते ॥ इति ॥ ३ ॥ पार्व्वकर्म्मदर्श * पौर्णमासौतथा * यनं कर्म्मायन * द्वाग्रयाद्वमिति ॥ ४ ॥ १० ॥

**नलोकवृत्तंवर्त्तेतवृत्तिहेतोःकथञ्चन। अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ ११ ॥**

नलोकवृत्तमित्यादि * विप्रोवृत्तिहेतोर्लोक * वृत्तं कथञ्चनकेनापि * प्रकारेणनवर्त्तेत ॥१॥ लोकवृत्तं हिंसा

रासदृशं तर्हि * किमेभिरेवकर्म्मभि * र्वर्त्तेतनान्यैः कर्म्मभि * रित्यतआहाजिह्मामित्यादिकम् ॥ २ ॥ अजिह्मांसरलामशठां शुद्धां * ब्राह्मणजीविकां जीवेत् * जीवनोपायं कुर्य्यात् ॥ ३ ॥ ११ ॥ कथमित्य * तउच्यते * सन्तोषमि* त्यादिश्लोकम् ॥ १ ॥

**सन्तोषं परमास्थाय सुखार्थी संयतो भवेत् । सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १२ ॥**

सुखार्थी ब्राह्मणः परं * सन्तोषमास्थाय संयतो भवेत् * हि यस्मात् सन्तोषमूलं * सुखमसन्तोषो दुःखस्य मूलं ॥ इति ॥ २ ॥ १२ ॥ कथं संयतो भवेदित्यतआह * अतोऽन्यतमये त्यादि ॥ १ ॥

**अतोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः । स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥ १३**

अतोऽस्मात् उक्तशीला * दीनामन्यतमया * वृत्त्यास्नातकोब्राह्मणः ॥ २ ॥ वक्ष्यमाणानां क्षत्रियवृत्तीना* मन्यतमयावृत्त्यातु * क्षत्रियो * वैश्यवृत्तीना * मन्यतमयातु वैश्यः ॥ ३ ॥ जीवन् मनुस्वर्गायुष्ययशस्यानी * मानि व्रतानि धारयेत् ॥ ४ ॥ १३ ॥ कानिव्रतानीत्यतआह * वेदोदितमित्यादिकम् ॥ १ ॥ १४ ॥

**वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः । तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥ १४**

विप्रोहि स्नातकोद्विधा * व्रतीचाव्रतीचतयो * र्व्रतिनोव्रतमेवेदम * वेदोदितं स्वकं कर्म्म * तन्द्रितः सन् नित्यं कुर्य्यात् ॥ १ ॥ किमर्थमित्यतआहतद्धीत्यादि * हि यस्मात्तद्वेदोदितं * कर्म्म यथाशक्ति कुर्व्वन् * विप्रः परमां गतिं प्राप्नोतीति ॥ २ ॥ १४ ॥ तत्रब्राह्मणस्य निषिद्धकर्म्माणि * यानि तान्याहनेहेत * त्यादिभिरेव श्लोकैः ॥ १ ॥ १५ ॥

**नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्म्मणा । न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः ॥ १५ ॥**

प्रसङ्गेनगीतवादित्रद्यूतादि * प्रसक्त्यार्थान्नेहेत * विरुद्धेन स्वधर्म्मविपर्य्ययेण * चार्थान्निप्रो नैवेहेत ॥ १ ॥ न विद्यमानेष्वर्थेष्वर्थानीहेत * न चार्त्त्यामापद्यपि यत * स्ततोऽपार्थानीहेत ॥ २ ॥ १५ ॥

**इन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतः । अतिप्रसक्तिञ्चैतेषां मनसा सन्निवर्त्तयेत् ॥ १६ ॥**

इन्द्रियार्थेष्वित्यादि * न सर्व्वेष्विन्द्रियार्थेषु * गीतवादित्रकामिनी * स्वर्गादिषु न कामतः प्रसज्येत ॥ १ ॥ सर्व्वेषां तेषामिन्द्रियार्थानामति * प्रसक्तिं मनसा सदा * ब्राह्मणः सन्निवर्त्तयेत् । २ । १६ । अपरञ्च * वर्ज्जनीय * मुच्यते स * र्व्वानित्यादि । १ ।

**सर्व्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः । यथा तथाऽध्यापयंस्तु सा ह्यस्य कृतकृत्यता १७**

ब्राह्मणः स्वाध्यायविरोधिनः सर्व्वा * नर्थान् परित्यजेद् यया * तथाये न तेन प्रकारेणवेदा * दीनध्यापयं स्तु वर्त्तेत । २ । हि यस्मात् सा वेदाद्यध्यापनावृत्ति * रस्य ब्राह्मणस्य कृत * कृत्यताकृतार्थकरणम् । इति । ३ । १७ ।

वर्णानां यथा शास्त्रं कर्त्तव्य मेवो * चानेव यद्दतादि ॥ १ ॥ १८ ॥

**वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥ १८ ॥**

इह लोके वयसः सारूप्येण * कर्म्मणश्च सारूप्येण * अर्थस्य सारूप्येण श्रुतस्य सारूप्येण * अभिजनस्य सारूप्येण ॥ १ ॥ वेषमाचरन् * वाचमाचरन् * बुद्धिमाचरन् * विप्रो विचरेत् ॥ २ ॥ १८ ॥ अपरञ्च * से वाकर्म्मो * पदिश्यते * बुद्धी त्यादि ॥ १ ॥ १९ ॥

**बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च। नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥ १९**

आशु बुद्धिवृद्धिकराणि शास्त्राणि * वाद्ववर्त्तपदार्थ घटितानान्वी * ष्कीवी विद्यादीनि ब्राह्मणोऽवेक्षेत ॥ १ ॥ धनानि वाहस्तती मनसादी * नाथ शास्त्रान वेक्षेत * हितान्यायुर्वेदज्योति * षादीनि शास्त्राणि हितानि * शास्त्रानावेक्षेत नित्यम् ॥ २ ॥ नित्यं वैदिकान् निगमा * नितिहासपुराणादीं * श्चावेक्षेत पर्य्यालोचयेत् ॥ २ ॥ १९ ॥ शास्त्राधिगम * फलमाह * यथायथा * इत्यादिकम् ॥ १ ॥ २० ॥

**यथायथाहि पुरुषः शास्त्रं समधिगच्छति। तथातथा विजानाति विज्ञानञ्चास्य रोचते ॥ २० ॥**

पुरुषो ब्राह्मणादिर्हि * यथायथा शास्त्रं समधिगच्छति * तथातथा विजानाति * विज्ञ एव हि भवति ॥ १ ॥ पुनरस्य विज्ञानं स्वयं रोचते * कर्म्मणां शास्त्रान्तरस्य * सन्देहे नैव प्रवृत्तिः स्यात् ॥ २ ॥ २० ॥

**ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा। नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत् ॥ २१ ॥**

ऋषीत्यादि ऋषियज्ञं देवयज्ञं * भूतयज्ञं नरयज्ञं * पितृयज्ञं ब्राह्मणं * यदा पदा तिजहाति ॥ १ ॥ ब्राह्मणः यथाशक्तिता * न कदापि हापयेत् * प्रयत्नात् संरक्षेदेव * स्नातकानामिदं हि प्रधानं व्रतम् ॥ २ ॥ १२१ ॥ मन्वापदापि कयं तान् संवक्षेदि * तानप्याह तानित्यादि ॥ १ ॥ २२ ॥

**एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः। अनीहमानाः सततमिन्द्रियेष्वेव जुह्वति ॥ २२ ॥**

एके यज्ञशास्त्रविदो * जना एतान् पञ्च महा * यज्ञाननीहमानास्तत्तद्यज्ञानां * यागावैतिकर्त्तव्यताकपा चेष्टा ॥ १ ॥ तानकुर्व्वन्तः सतत * मिन्द्रियेषु जुह्वतीति * समनस्केषु श्रोत्रादिषु ज्ञिषु तत्तत् * कर्म्माणिगाव्यवस्थया * होमाकृतीः कृत्वा जुह्वति ॥ २ ॥ २२ ॥ वाच्येके * त्यादिना * प्रकारेण * तानेवाह ॥ १ ॥ २२ ॥

**वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्व्वदा। वाचि प्राणे च पश्यन्तो यज्ञनिर्व्वृत्तिमक्षयाम् ॥ २३**

एके यज्ञशास्त्रविदो * जना अनीहमानास्तु * वाचि वाग्यज्ञानां * निर्व्वृत्तिं पश्यन्तो वाचि प्राणमाहुतिं कृत्वा पञ्चमहायज्ञान जुह्वति ॥ १ ॥ अपरे चैके यज्ञशास्त्रविदो * जनाः प्राणे वाग्यज्ञ * निर्व्वृत्तिं पश्यन्तः प्राणे * वाचमाहुतिं च कृत्वा * पञ्चैतान् महायज्ञानजुह्वति ॥ २ ॥ २३ ॥

**ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा। ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा ॥ २४ ॥**

अपरश्चाह ॥ ज्ञानेनेत्यादि ॥ २४ ॥ अपरे च द्विजा एषां *पञ्चानां महायज्ञानां * क्रियां ज्ञानमूलां ज्ञान* चक्षुषा पश्यन्तः सदा ॥ १ ॥ ज्ञानेन वैतैः पञ्चभि* र्मखैर्महायज्ञैर्ब्रह्मर्षि* प्रभृतीन् वै यजन्ति ॥ २ ॥ तथा चैता मेकविधेन* यथाशक्ति पञ्चयज्ञान् * द्विजः कदापि न हापयेदिति ॥ ३ ॥ २४ ॥ अथ मानुषकानामपराणि यज्ञानि* ना चान्तेऽग्निहोत्र* मित्यादिभिस्त्रिभिः श्लोकैः ॥ १ ॥ २५ ॥

**अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा। दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि ॥ २५**

सदा प्रतिदिनं द्युनिशोर्दिवस * निशयोराद्यन्ते दिन * स्यादौ निशायाश्चान्तेऽत्र * प्रातर्नवसन्ध्यायां ॥ १ ॥ तथा दिनान्तेऽवसाने *निशायाश्चादौ चाग्निं च* जुहुयान्नवसन्ध्यायाम् ॥ २ ॥ एतेनोक्तं प्रातर्होमो *रात्रेरवा वहितोत्तरं काल*मारभ्याखण्डगत्यर्कस्यहस्तमितोद्गतौ* दद्यात्कर्त्तव्यः स्यादिति ॥ ३ ॥ सायं होमस्तु दिन*स्यावसाने तोत्तरकालमारभ्य * यावन्नक्षत्राणि सम्यक्* सभावान्ते नचलोहितायां पायः स्यात् ॥ ४ ॥ तावत्कर्त्तव्यो भवति* स न्ध्याकालस्तु रजोनीहारादान्त*गते रवौ जानीयात्ततः*परं होमं कुर्यादिति ॥ ५ ॥ एतदुक्तञ्च कात्यायनेन नष्टा* सूर्योऽस्तगमनमप्राप्ते * षट्त्रिंशतासदाङ्गुलैः। प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शनात् ॥ ६ ॥ हस्तादूर्द्ध्वं रविर्यावद्* गिरिं हित्वा न गच्छति। तावद्धोमविधिः पुण्यो नान्त्योऽनुदितहोमिनाम् ॥ ७ ॥ यावत्सम्यङ्न भावान्ते नभस्यृक्षाणि सर्व्वतः। न च लोहिततामपैति तावत्सायञ्च हूयते ॥ ८ ॥ रजोनीहारधूमाभ्रवृक्षाद्यन्तरिते रवौ। सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते ॥ ९ ॥ न कुर्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम्। वैरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्जयेत् १० पर्युक्षणञ्च सर्व्वत्र कर्त्तव्यमुदितेऽन्विति। अन्ते च वामदेव्यस्य गानं कुर्यादृचं त्रिधा ॥ ११ ॥ इति ॥ एतद्विद्वान्व्याचष्टे *आद्यन्ते द्युनिशोरिति*द्युशब्दोऽत्र दिवसार्थः ॥ १२ ॥ उदितहोमपक्षे दिवसस्यादौ*निशायाश्चादाविति*अनुदितहोमपक्षे *दिवसान्ते निशायाश्चान्त इति ॥१३ ॥ यद्वाप्युदितहोमपक्षे *दिनस्यादौ दिनान्ते च*अनुदितहोमपक्षे *निशादौ निशान्ते च* त्वग्निहोत्रं कुर्यादिति ॥ १४ ॥ तद्व्याख्यानमसाधु* कात्यायनोक्तविरोधा * दग्निहोत्रविधानाश्च व्याख्यातत्वाच्च ॥ १५ ॥ अर्द्धमासान्ते दर्शेन*पौर्णमासेन च जुहुया* दितिद्विविधश्चान्द्रमासमुक्तः ॥ १६ ॥ मुख्यो गौणश्चेति तत्र*गौणार्द्धमासान्ते दर्शेनयागेन * मुख्यार्द्धमासान्ते पौर्ण*मासेन यागेन जुहुयात् ॥१७ ॥ २५ ॥

**सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः। पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः ॥२६**

सस्यान्त इत्यादि। सस्यानां पुराणानामन्ते *नवे सस्ये धान्ये जाते* नवसस्येष्ट्या जुहुयात् ॥ १ ॥ ऋत्वन्ते हेमन्तग्रीष्मवर्षाणामन्ते *ऽध्वरैश्चातुर्मास्याख्य* यागैर्जुहुयादिति।२॥अयनस्य दक्षिणस्योत्तरस्य चादौ पशुना

जुहुयात् ॥ ३ ॥ समान्तेवत्सरान्ते * सौमिकैः सोमसाध्यैः * मखैर्यज्ञैरग्निष्टोमादि * नामयागैर्जुहुयात् ॥ ४ ॥ ततश्चैवत्सरोऽत्र 'निपदादि*गणनया, द्वादशमासात्मकोवर्षः*समाप्ते वसन्ते सौमिकयागाःस्युः ॥ २६ ॥

नानिष्ट्वानवसस्येष्ट्यापशुनाचाग्निमान्द्विजः। नवान्नमद्यान्मांसंवादीर्घमायुर्जिजीविषुः॥२७

नानिष्ट्वेत्यादिदीर्घं मायुर्जिजीविषुरग्निमानेव द्विजोनवसस्येष्ट्यात्वनिष्ट्वायागं * नकृत्वानवान्नं नाद्यात् * पशुनाचानिष्ट्वामांसम। १ ॥ २७ ॥ ननुकस्य द्विजस्याग्निमान्द्विजो*दीर्घम् आयुर्जिजीविषु*र्नवसस्येष्ट्यापशुना*चानिष्ट्वानवान्नं मांसञ्च*नाद्यादित्यतआहनवेनेत्यादि ॥ १ ॥ २८ ॥

नवेनानर्च्चिताह्यस्यपशुहव्येनचाग्नयः। प्राणानेवात्तुमिच्छन्तिनवान्नामिषगर्द्धिनः॥२८

अग्निमतोह्यग्नयःपशु*नवान्न, मिषगर्द्धिनः*स्ते चाग्नयोऽग्निमतामवे*नान्नेनपशुहव्येनमच ॥ १ ॥ अनर्चिताअस्याग्निमतः * प्राणानेवात्तुमिच्छन्तिततः * स्वल्पायुषोभवन्तीतातो * नवान्नपशुयागौकुर्य्यात् ॥ २ ॥ २८ ॥ अपरञ्चाहासनेत्यादि ॥ २८ ॥

आसनाशनशय्याभिरद्भिर्मूलफलेनवा। नास्यकश्चिद्वसेद्गेहे शक्तितोऽनर्च्चितोऽतिथिः॥२९॥

येनाग्निमताद्विजेनशक्तितआसनादिभि*रतिथिनर्चितःस्या*द्गृहे कश्चिन्नवसेत् ॥१॥२९॥ अत्रातिथिविशेषाणामर्च्चनवर्जनमाह*पाषण्डिनइत्यादिना ॥ १ ॥ ३० ॥

पाषण्डिनोविकर्म्मस्थान्वैडालव्रतिकान्शठान्। हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्च्चयेत्॥३०॥

पाषण्डप्रभृतीनतिथीन्*वाङ्मात्रेणापिनार्च्चयेत्*वेदवाह्यव्रतचिह्न*धारिणःपाषण्डिनःस्युः ॥ १॥ विकर्म्मस्थाः प्रतिषिद्ध* वृत्तिजीविनउच्यन्ते * वैडालव्रतिकाग्रत्र*वक्ष्यन्ते शठाःकितवाः ॥ २ ॥ हैतुकावेदविरोधितर्किणो*वकवृत्तिस्तुवक्ष्यते ॥ ३ ॥ ३० ॥ अर्च्यानर्च्यान*तिथीनाह*वेदविद्या* इत्यादिश्लोकेन ॥ १ ॥ ३१ ॥

वेदविद्याव्रतस्नातान्श्रोत्रियान्गृहमेधिनः। पूजयेद्धव्यकव्येनविपरीतांश्चवर्जयेत्॥३१॥

वेदमधीत्यब्रह्मचर्यञ्चव्रतं * कृत्वायेस्नाताःसमाप्तास्तेवेद * विद्याव्रतस्नाताःश्रोत्रिया * गृहमेधिनोभवन्ति ॥ १ ॥ अग्निमान्हव्यकव्येन * तानेवातिथीन्पूजयेत् * येब्रह्मचर्यव्रतानि * नकृत्वावेदविद्यां च * नकृत्वास्नात्वागृहमेधिनोभवन्ति ॥ २ ॥ येचवेदविद्यां नसमाप्य * ब्रह्मचर्यव्रतं समाप्य * गृहमेधिनोभवन्ति* ननैष्ठिकब्रह्मचारिणोभवन्ति ॥ ३ ॥ तान्सर्व्वाण्वेदविद्या * व्रतस्नातश्रोत्रियगृहमेधिभ्यो *विपरीतानतिथीन्वर्जयेत् ॥ ४ ॥ हारीतेनत्रिविधःस्नातकउक्तः * समाप्यवेदान्नसमाप्यव्रतानि * यःसमावर्त्ततेसवै * वेदविद्यास्नातकःस्यात् ॥ ५ ॥ यःसमाप्यव्रतानासमाप्यवेदान् * समावर्त्ततेसव्रतस्नातकः * उभयं

समाप्याय:समावर्त्तते *सवेदविद्याव्रतस्नातकःस्यात् ॥ ६ ॥ तथाद्योर्गि मुतब्रह्मचर्याविव*गृहमेधीनावश्रोत्रियौ* तस्मात्तौतद्विपरीतावतिथी * अग्निमानवर्जयेत् ॥ ७ ॥ इतीवं मता कार्यं प्रतिषेधार्थं * श्रोत्रियान् गृहमेधिन*इतिविशेषणद्वयं ॥ ८ ॥ ताभ्यां तयोर्वर्जने सिद्धेऽपि*विपरीतवर्ज्जनं तु*असमाप्तवेदव्रतादिवर्ज्जनार्थं पुनरुक्तं ॥ ९ ॥ ३१ ॥ एतद्विद्वान्कश्चित् * प्रमादीलवयाचष्टे * वेदविद्याव्रतस्नातान् ॥ १० ॥ इति ॥ विद्यास्नातव्रतस्नातोभयस्नाता*इतित्रयोऽपिस्त्ववान्ते *विपरीतदर्शनोत्तम*दर्शितदोषस्यादर्शनात् ॥ ११ ॥ ३१ ॥

**शक्तितोऽपचमानेभ्योदातव्यं गृहमेधिना । संविभागश्चभूतेभ्यःकर्त्तव्योऽनुपरोधतः ॥ ३२ ॥**

शक्तितइत्यादि । गृहमेधिनाऽन्नमपचमानेभ्य * शक्तितोदातव्यमनुपरोधतो * भूतेभ्योऽपिसंविभागो*ऽन्नस्यकर्त्तव्यइति ॥ १ ॥ ३२ ॥ नन्वेवंविप्रोगृहीचेदनिर्वृतःस्या * तदानिर्वृत्यर्थं किंकुर्यादि* त्यतआहराजतो*धनमन्विच्छेदित्यादि । १ ॥ ३३ ॥

**राजतोधनमन्विच्छेत् संसीदन्स्नातकःक्षुधा । याज्यान्तेवासिनोर्वापिनत्वन्यत इति स्थितिः ॥ ३३ ॥**

स्नातकोगृहीक्षुधासंसीदन्धनं* क्षत्रियाद्राजतोऽन्विच्छेत् * याज्यस्यसकाशादन्ते * वासिनःसकाशाद्वापि*धनमन्विच्छेन्नान्यतः । १ । ३३ । अपरञ्चाहनसीदेदित्यादि । ३४ ।

**नसीदेत्स्नातकोविप्रःक्षुधाशक्तःकथञ्चन । नजीर्णमलवद्वासाभवेच्चविभवे सति ॥ ३४ ॥**

स्नातकोविप्रःशक्तोऽपि*कथञ्चनन क्षुधा*सीदेद्यथोपवासीनस्यात्सतिचवि*भवे जीर्णमलिनवासानभवेत्।तर्हि द्विजःकीदृशःस्यात्तदाह*कॢप्तकेशनखेत्यादि । १ । ३४ ।

**कॢप्तकेशनखश्मश्रुर्दान्तःशुक्लाम्बरःशुचिः । स्वाध्याये चैवयुक्तःस्यान्नित्यमात्महितेषु च ॥ ३५ ॥**

त्रिःपक्षस्यकॢप्तकेश*नखश्मश्रुःस्याद्दान्तःस्यात्*शुक्लाम्बरःशुचिश्चस्यात् । १ । नित्यं स्वाध्याये चास्य * हितेषु चयुक्तःस्यात् । १ । ३५ । अपरञ्चाहवैणवीमित्यादि । ३६ ।

**वैणवींधारयेद्यष्टिंसोदकञ्चकमण्डलुम् । यज्ञोपवीतंवेदञ्चशुभेरौक्मेचकुण्डले ॥ ३६ ॥**

वैणवीं वंशकृतां यष्टिं धारयेत् * सोदकं कमण्डलुं च * यज्ञोपवीतं चवेदं च*रौक्मे सौवर्णे शुभे द्वे *कुण्डले चधारयेत् । १ । ३६ । निषिद्धमाहनेक्षेतेत्यादिश्लोकौ । ३७ ।

**नेक्षेतोद्यन्तमादित्यं नास्तं यान्तंकदाचन । नोपसृष्टंनवारिस्थंनमध्यंनभसोगतम् ॥ ३७ ॥**

उद्यन्तमादित्यं नेक्षेत*नचास्तं गच्छन्तं नराहु * नापसृष्टं नवारिणिच* ननभोमध्यस्थं वेक्षेत । २ । ३७ । नलङ्घयेदित्यादि । ३८ ।

**मलङ्घयेद्वत्सतन्त्रीं नप्रधावेच्चवर्षति। नचोदके निरीक्षेत स्वरूपमितिधारणा ॥ ३८ ॥**

वत्सतन्त्रीं वत्सगल*बन्धनीं रज्जुं नलङ्घयेत्* नदेवे वर्षति नधावेत् * नोदके स्वरूपं वीक्षेत । १ । ३८ ।

**मृदङ्गान्दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन् ॥ ३९**

मृदङ्गानित्यादि । ३९ । मृदङ्गान्दैवतं विप्रं*घृतं मधु चतुष्पथं * प्रज्ञातान्लोके विख्यातान् * वटादीन् वनस्पतीं श्च*सर्व्वाण्येतानि प्रदक्षिणानि कुर्यात् । १ । ३९ ।

**नोपगच्छेत्प्रमत्तोपि स्त्रियमार्त्तवदर्शने । समानशयने चैव नशयीत तया सह ॥ ४० ॥**

प्रमत्तोपि कामयुक्तेन*प्रमादेनापि द्विजोनार्त्तवदर्शने स्त्रियमुपगच्छेत् । १ । तया समं तयास्त्रिया च सहैक *श
य्यायां न शयीत । २ । ४० ।

**रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः । प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते ॥ ४१ ॥**

रजसेत्यादि । ४१ । रजसाभिप्लुतां तृतीयदिवस * पर्य्यन्तां रजस्वलां च*नारीमुपगच्छतो हि* नरस्य प्रज्ञा
दि हीयते । १ । ४१ ।

**तां विवर्जयतस्तस्य रजसा समभिप्लुताम् । प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रवर्द्धते ॥ ४२ ॥**

तामित्यादि । ४२ । तां रजसाभिप्लुतां च * नारीमुपगमने विवर्जयतो* नरस्य प्रज्ञादि वर्द्धते । १ । ४२ ।

**नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् । क्षुवतीं जृम्भमाणां वा नचासीनां यथा
सुखम् ॥ ४३ ॥**

नाश्नीयादित्यादि ॥ ४३ ॥ भार्य्यया सार्द्धं नाश्नीया*दश्नतीमेनां भार्य्यां च*क्षुवतीं च जृम्भमाणां * वा नेक्षेत
यथासुखमासीनां नेक्षेत ॥ १ ॥ ४३ ॥

**नाञ्जयन्तीं स्वके नेत्रे नचाभ्यक्तामनावृताम् । नपश्येत्प्रसवन्तीञ्च तेजस्कामो द्विजोत्तमः ४४**

नाञ्जयन्तीमित्यादि ॥ ४४ ॥ भार्य्यामितो वर्त्तते *स्वके नेत्रे अञ्जयन्तीं *भार्य्यां तेजस्कामो ब्राह्मणो नेक्षेत ॥ ४४ ॥
नग्नेच्छ नाभ्यक्तां भार्य्यां पश्येन्नच*मूत्रं प्रसवन्तीं पश्येत् ॥ ४६ ॥

**नान्नमद्यादेकवासा ननग्नः स्नानमाचरेत् । नमूत्रं पथि कुर्व्वीत नभस्मनि नगोव्रजे ॥ ४५ ॥**

नान्नमित्यादि ॥ ४५ ॥ ब्राह्मण एकवासा नान्नमद्यान्न* नग्नः स्नानमाचरेन्न * मूत्रं पथि कुर्व्वीत न * भस्मनि
नच गोव्रजे ॥ १ ॥ ४५ ॥

न फालकृष्टे न जले न चित्यां न च पर्व्वते। न जीर्णदेवायतने न वल्मीके कदाचन ॥ ४६ ॥

नफालकृष्टइत्यादि ॥ ४६ ॥ न फालकृष्टे चैव मूत्रं कुर्व्वीत * न जले न चित्यां न च * पर्व्वते न जीर्णदेवायतने न * वल्मीके च मूत्रं कुर्यात् ॥ १ ॥ ॥ ४६ ॥

न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः। न नदीतीरमासाद्य न च पर्व्वतमस्तके ॥ ४७ ॥

नससत्त्वेष्वित्यादि ॥ ४७ ॥ न मूत्रं कुर्व्वीत तथैव * ससत्त्वेषु सप्राणिषु * गर्त्तेषु न मूत्रं कुर्व्वीत * नापि गच्छन्न च स्थितः ॥ १ ॥ न नदीतीरमासाद्य मूत्रं कुर्यात् * न च पर्व्वतमस्तके ॥ २ ॥ ४७ ॥

वाय्वग्निविप्रमादित्यमपः पश्यंस्तथैव गाः। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनम् ॥ ४८ ॥

वाय्वग्निविप्रेत्यादि ॥ ४८ ॥ न मूत्रं कुर्व्वीतेति निवर्त्ततोच्यते * वाय्वग्निविप्रादित्यान् गा अपश्च * पश्यन् विण्मूत्रं विसृजेत् ॥ १ ॥ ४८ ॥

तिरस्कृत्योच्चरेत्काष्ठलोष्टपत्रतृणादिना। नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥ ४९ ॥

तिरस्कृत्येत्यादि ॥ ४९ ॥ काष्ठादिना विड्विसर्ग * स्थानं तिरस्कृत्याच्छाद्य * वाचं नियम्य प्रयतः ॥ १ ॥ संवीताङ्गश्चाच्छादितसर्व्वाङ्गः सं * श्चावगुण्ठितो वस्त्रेण * वेष्टितशिरा उच्चरेत् * पुरीषं त्यजेदिति ॥ २ ॥ ४९ ॥

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः। दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥ ५० ॥

मूत्रोच्चारेत्यादि ॥ ५० ॥ मूत्रञ्चोच्चारश्च तयो * र्मूत्रपुरीषयोः समुत् * सर्गं त्यागं दिवा तूदङ्मुखः सन् कुर्यात् ॥ १ ॥ रात्रौ दक्षिणाभिमुखः सन् कुर्यात् * सन्ध्ययोर्द्वयोर्यथा दिवा * वोदङ्मुख एव कुर्यात् ॥ २ ॥ ५० ॥

छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्यात्प्राणबाधभयेषु च ॥ ५१ ॥

तत्रापवादमाह छायायामित्यादि ॥ ५१ ॥ छायायां रात्रावहनि * वान्धकारे वा रात्रावहनि वा * प्राणबाध भयेषु च रात्रावहनि वा यथासुखमुखः ॥ १ ॥ मूत्रोच्चारसमुत्सर्गं * द्विजोत्तमः कुर्यादिति * तत्र न दक्षिणोत्तरास्य नियमः ॥ २ ॥ ५१

प्रत्यग्निं प्रतिसूर्यं च प्रतिसोमोदकद्विजान्। प्रतिगां प्रतिवातं च प्रज्ञा नश्यति मेहतः ॥ ५२ ॥

प्रत्यग्निमित्यादि ॥ ५२ ॥ अग्निं प्रतिमुखं कृत्वा * सूर्यञ्च प्रति सोमञ्च * प्रत्युदकञ्च प्रति द्विजांश्च प्रति * गाञ्च प्रति वातञ्च प्रति * मेहतः प्रज्ञा नश्यति ॥ १ ॥ ५२ ॥

नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्। नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ ५३

नाग्निमित्यादि ॥ ५३ ॥ नचाग्निमाक्रिपपधमेत् * नग्नां स्त्रियं नेक्षेत * नाप्यमेध्यं प्रक्षिपेत् * न पादौ प्रतापयेत् ॥ १ ॥ ५३ ॥

अधस्तान्नोपदध्याच्चनचैनमभिलङ्घयेत्। नचैनंपादतःकुर्यान्नप्राणाबाधमाचरेत् ॥ ५४

अधस्तादित्यादि ॥ ५४ ॥ शय्यासनादीनामधस्तात् * अग्निं * नोपदध्यात् ॥ १ ॥ नचैनमग्निमभिलङ्घयेत् * नचैनमग्निं पादतःकुर्यात् * पादौ यस्यां दिशि तस्यां दिशि न संस्थापयेत् * प्राणाबाधमाचरेत् ॥ २ ॥ ५४ ॥

नाश्नीयात्सन्धिवेलायांनगच्छेन्नापिसंविशेत्। नचैवप्रलिखेद्भूमिंनात्मनोपहरेत्स्रजम्५५

नाश्नीयादित्यादि ॥ ५५ ॥ सन्धिवेलायां सन्ध्याकाले नाश्नीयात् * नगच्छेत् नापि संविशेत् * नभूमिं पादाङ्गुल्यादिना लिखेत् * स्रजमात्मना नोपहरेत् ॥ १ ॥ ५५ ॥

नाप्सुमूत्रंपुरीषंवाष्ठीवनंवासमुत्सृजेत्। अमेध्यलिप्तमन्यद्वालोहितंवाविषाणिवा५६

नाप्स्वित्यादि ॥ ५६ ॥ नाप्सु मूत्रं पुरीषं ष्ठीवनं * अमेध्यलिप्तं वान्यद्वा * लोहितं वा विषाणि वा * समुत्सृजेदिति ॥ १ ॥ ५६ ॥

नैकःसुप्याच्छून्यगेहे शयानंनप्रबोधयेत्। नोदक्ययाभिभाषेतयज्ञंगच्छेन्नचावृतः ॥ ५७॥

नैकइत्यादि ॥ ५७ ॥ नैकः शून्यगेहे स्वप्यात् * नशयानं प्रबोधयेत् * नोदक्यया रजस्वला * यासहाभिभाषेत ॥ १ ॥ नयज्ञमवृतोवरणं विनार्त्विज्यार्थं स्वयं गच्छेत् दृष्टुं * कामन्तु दर्शनार्थं गच्छेत् ॥ २ ॥ ५७ ॥

अग्न्यागारेगवांगोष्ठेब्राह्मणानाञ्चसन्निधौ। स्वाध्यायेभोजनेचैवदक्षिणंपाणिमुद्धरेत् ५८

अग्न्यागारइत्यादि ॥ ५८ ॥ अग्निहोत्राग्न्यागारे च * गवां निवासे च गोष्ठे * ब्राह्मणानां सन्निधौ च * स्वाध्याये च भोजने च * दक्षिणं पाणिमुद्धरेत् * वसनादहिस्कुर्यात् ॥ १ ॥ ५८ ॥

नवारयेद्गांधयन्तींनचाचक्षीतकस्यचित्। नदिवीन्द्रायुधंदृष्ट्वाकस्यचिद्दर्शयेद्बुधः ॥५९॥

नवारयेदित्यादि ॥ ५९ ॥ पानीयं धयन्तीं गां नवारयेत् * स्ववता धयन्तीं गां कस्य * चित्सम्बन्धिपयं चेदयति * तद्दानाचक्षीतनवदेत् ॥ १ ॥ दिवि चेन्द्र धनुः दृष्ट्वा नकस्यचित् * पण्डितस्तत्प्रदर्शयेत् ॥ २ ॥ ५९ ॥

नाधार्म्मिकेवसेद्ग्रामेनव्याधिबहुलेभृशम्। नैकःप्रपद्येताध्वानंनचिरंपर्व्वतेवसेत्६०

नाधार्म्मिकेवसेदित्यादि ॥ ६० ॥ अधार्म्मिकेग्रामे नवसेदेव * भृशं व्याधिबहुले च ग्रामे नवसेत् * नैकोऽध्वानं प्रपद्येत * नपर्व्वते चिरं वसेत् ॥ १ ॥ ॥ ६० ॥

नशूद्रराज्येनिवसेन्नाधार्म्मिकजनावृते । नपाषण्डिगणाक्रान्तेनोपसृष्टेऽन्त्यजैर्नृभिः ॥ ६१

नशूद्रराजाइत्यादि ॥ ६१ ॥ नशूद्राधिकृतराज्ये निवसेत्*नाधार्म्मिकजनावृते *राज्ये निवसेन्नपाषण्डिगणा * क्रान्ते राज्ये निवसेत्॥ १ ॥ अन्त्यजैर्भिरुप*सृष्टे समीपस्थे*इत्ते राज्ये ननिवसेत् ॥ १ ॥ ६१ ॥

नभुञ्जीतोद्धृतस्नेहंनातिसौहित्यमाचरन् । नातिप्रगेनातिसायंनप्रातःसायमाशितः ६२

नभुञ्जीतेत्यादि ॥ ६२ ॥ उद्धृतस्नेहं क्षीरं तद्विधवान्*भुञ्जीत नावतत्क्ता*चयोद्धृतस्नेहं तिल*कल्कादिकं नभुञ्जीत ॥ १ ॥ नचातिसौहित्यं तृप्ति*माचरन्भुञ्जीत नातिप्रगे तिप्रत्यूषे नभुञ्जीत*नातिसायं भुञ्जीत ॥ १॥ सायं रात्रावेवाशितः समाग भुक्तवानजीर्णे*प्रातर्दिने नभुञ्जीत*तदाहारे जीर्णे भुञ्जीत* ॥ २ ॥ ६२ ॥

नकुर्व्वीतवृथाचेष्टांनवार्य्यञ्जलिनापिबेत् । नोत्सङ्गेभक्षयेद्भक्ष्यान्नजातुस्यात्कुतूहली ६३

नकुर्व्वीतेत्यादि ॥ ६३ ॥ वृथाचेष्टां नकुर्व्वीत* नाञ्जलिनावारिपिबेत् * उत्सङ्गे क्रोडे स्थितान् *भक्ष्यान्नभक्षयेन्न जातु कुतूहली स्यात् ॥ १ ॥ ६३ ॥

ननृत्येदथवागायेन्नवादित्राणिवादयेत् । नास्फोटयेन्नचक्ष्वेडेन्नचरक्तोविरावयेत् ॥ ६४ ॥

ननृत्येदित्यादि ॥ ६४ ॥ ननृत्येन्नगायेन्नवा*वादित्राणि च वादयेत् *न बाहुमास्फोटयेन्न*दन्तैर्दन्तान्चर्वेच्च* रक्तः सन्विगतशब्दं रावयेत् ॥ १ ॥ ६४ ॥

नपादौधावयेत्कांस्येकदाचिदपिभाजने । नभिन्नभाण्डेभुञ्जीतनभावप्रतिदूषिते ॥ ६५॥

नपादावित्यादि ॥ ६५ ॥ नकांस्यभाजने पादौधावयेत्*नभिन्नभाण्डे भग्नपात्रे भुञ्जीत*नभावप्रतिदूषिते* भावदुष्टे पात्रे भुञ्जीत ॥ १ ॥ ६५ ॥

उपानहौचवासश्चधृतमन्यैर्नधारयेत् । उपवीतमलङ्कारंस्रजंकरकमेवच ॥ ६६ ॥

उपानहावित्यादि ॥ ६६ ॥ नान्यधृतानुपानह*स्त्रपवीतालङ्कारम्*स्रक्करकमण्डलून्धारयेत् ॥ १ ॥ ६६ ॥

नाविनीतैर्व्रजेद्धुर्य्यैर्नचक्षुद्व्याधिपीडितैः । नभिन्नशृङ्गाक्षिखुरैर्नवालधिविरूपितैः ६७

नाविनीतैरित्यादि*धुरं वहन्तीति धुर्य्याः* रथादिवाहनाः * अविनीतैर्दान्तैः ॥ २ ॥ दुर्दान्तैर्वाहनैर्न रथादिना*व्रजेन्नक्षुत्पीडितैर्न *व्याधिपीडितैर्नभिन्न* खुरैर्नलाङ्गुलविरूपैः ॥ २ ॥ ६७ ।

विनीतैस्तुव्रजेन्नित्यमाशुगैर्लक्षणान्वितैः । वर्णरूपोपसम्पन्नैःप्रतोदेनातुदन्भृशम् ॥ ६८

विनीतैस्त्वित्यादि ॥ ६८ ॥ धुर्य्यैरितिवानु* वर्त्तते ऽधिकारेण ॥ १ ॥ विनीतैराशुगैर्लक्षणान्वितैर्वर्णरूपोपसम्पन्नैः*धुर्य्यैःप्रतोदेनभृशम्*अतुदन्नितान्त व्रजेत् ॥ २ ॥ ६८ ॥

बालातपः प्रे तथा मोवर्ज्यं भिन्नं तथासनम्। नच्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान् ॥ ६९ ॥

बालातपइत्यादि ॥ ६९ ॥ बालातपः प्रातःकालभवातपः * बालातपश्चप्रेतधूमश्च भिन्न * मासनञ्चैतौ तत्सर्व्वं वर्ज्जनीयं ॥ १ ॥ नखान्लोमानि चदन्तैर्नच्छिन्द्यात् * नदन्तैर्नखानुत्पाटयेत् ॥ २ ॥ ६९ ॥

नमल्लोष्ट्रञ्चमर्द्दीयान्नच्छिन्द्यात्करजैस्तृणम्। नकर्म्म निष्फलं कुर्य्यान्नायत्यामसुखोदयम् ॥ ७० ॥

नमल्लोष्ट्रञ्चेत्यादि ॥ ७० ॥ मल्लोष्ट्रं पादैर्नमर्द्दीयाच्च * करजैर्नखैस्तृणं छिन्द्याच्च * निष्फलं कर्म्म आयत्यां * असुखोदयमायत्यामविच्छेदं कुर्य्यात् ॥ १ ॥ ७० ॥ एषां करणे दोषानाह ॥

लोष्ट्रमर्द्दी तृणच्छेदी नखखादी च यो नरः। स विनाशं व्रजत्याशु सूचकोऽशुचिरेव च ॥ ७१ ॥

लोष्ट्रमर्द्दीत्यादि ॥ ७१ ॥ लोष्ट्रमर्द्दी चतृणच्छेदी च * नखखादी च सूचकः खल * आशु चाशुचिश्चैव * विनाशं व्रजतीति ॥ १ ॥ ७१ ॥

नविगर्ह्यकथां कुर्य्याद्बहिर्म्माल्यं नधारयेत्। गवाञ्च यानं पृष्ठेन सर्व्वथैव विगर्हितम् ॥ ७२ ॥

नविगर्ह्येत्यादि ॥ ७२ ॥ परान्विगर्ह्य नकथां कुर्य्यात् * नवहिर्म्माल्यं कण्ठे धारयेत् * नगवां पृष्ठेन यानं * कुर्य्याद्गर्हितत्वादिति ॥ १ ॥ ७२ ॥

अद्वारेण च नातीयाद्ग्रामं वा वेश्म चावृतम्। रात्रौ च वृक्षमूलानि दूरतः परिवर्ज्जयेत् ॥ ७३ ॥

अद्वारेणेत्यादि ॥ ७३ ॥ नग्राममद्वारेणातीयात् * नचावृतं वेश्मातीयात् * वृक्षमूलानि रात्रौ * दूरतः परिवर्ज्जयेत् ॥ १ ॥ ७३ ॥

नाक्षैः क्रीडेत्कदाचित्तु स्वयं नोपानहौ हरेत्। शयनस्थो नभुञ्जीत नपाणिस्थं नचासने ॥ ७४ ॥

नाक्षैरित्यादि ॥ ७४ ॥ नाक्षैः कदाचित्क्रीडेत् * नस्वयमुपानहौ हरेत् * नशयनस्थो भुञ्जीत * नपाणिस्थं भुञ्जीत न * चासनेस्थितं भुञ्जीत ॥ १ ॥ ७४ ॥

सर्व्वञ्च तिलसम्बन्धं नाद्यादस्तमिते रवौ। नच नग्नः शयीतेह नचोच्छिष्टः क्वचिद्व्रजेत् ॥ ७५ ॥

सर्व्वञ्चेत्यादि ॥ ७५ ॥ अस्तमिते रवौ सर्व्वं * तिलसम्बन्धं नखादेत् * नचनग्नः सन् शयीत * नचक्वचिदुच्छिष्टः सन्व्रजेत् ॥ १ ॥ ७५ ॥

आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्। आर्द्रपादस्तु भुञ्जानो दीर्घमायुरवाप्नुयात् ॥ ७६ ॥

आर्द्रपादस्त्वित्यादि ॥ ७६ ॥ आर्द्रपादःसन्भुञ्जीत * नचार्द्रपादःसंविशेत् * आर्द्रपादःसन्भुञ्जानो * दीर्घमायुरवाप्नुयात् ॥ १ ॥ ७६ ॥

**अचक्षुर्विषयं दुर्गं नप्रपद्येत कर्हिचित्। नविण्मूत्रमुदीक्षेत नबाहुभ्यां नदीं तरेत् ॥ ७७॥**

अचक्षुरित्यादि ॥ ७७ ॥ चक्षुरविषयं नप्रपद्येत न * दुर्गञ्च प्रपद्येत * नविण्मूत्रञ्चदीक्षेत * ननदीं बाहुभ्यां तरेत् ॥ १ ॥ ७७ ॥

**अधितिष्ठेन्नकेशांस्तु नभस्मास्थिकपालिकाः। नकार्पासास्थिनतुषान् दीर्घमायुर्जिजीविषुः॥७८**

अधितिष्ठेन्नेत्यादि ॥ ७८ ॥ नकेशानधितिष्ठेन्न * भस्मानास्थीनिकपालिकाः कार्पासास्थीनितुषांश्च * दीर्घमायुर्जिजीविषुरधितिष्ठेत् ॥ १ ॥ ७८ ॥

**नसंवसेच्च पतितैर्नचाण्डालैर्नपुक्कशैः। नमूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥७९**

नसंवसेच्चेत्यादि ॥ ७९ ॥ नपतितैःसहसंवसेत् * नचण्डालैर्नपुक्कशैश्च * सहितःसंवसेत् ॥ १ ॥ नमूर्खैर्नावलिप्तैर्धनादिमद * दर्पितैर्नचान्त्यैर्नापि * चान्त्यावसायिभिश्चसहसंवसेत् ॥ २ ॥ अन्त्यजाउक्तावासेन * स्वसंहितायां तद्यथा * वज्र कीनापितीगोपआशापःकुम्भकारकः। वणिककिरातकायस्थमालाकारकुटुम्बिनः ॥१ वरटोमेदचण्डालदासश्वपचकोलकाः। एतेऽन्त्यजाःसमाख्याताये चान्ये चगवाशनाः ॥ २ ॥ एषांसंभाषणात् स्नानं दर्शनादर्कवीक्षणमिति। अन्त्यावसायिनोवच्यान्ते ॥ ३ ॥ निषादस्त्रीतुचाण्डालात्पुत्रमन्त्यावसायिनम् ॥ इति ॥ ३ ॥ ७९ ॥

**नशूद्राय मतिं दद्यान्नोच्छिष्टं नहविष्कृतम्। नचास्योपदिशेद्धर्म्मं नचास्य व्रतमादिशेत्८०**

नशूद्रायेत्यादि ॥ ८० ॥ ब्राह्मणःशूद्रायनमतिंदद्यात् * नोच्छिष्टञ्चदद्यान्नहविष्कृतञ्च * यस्मात्कदेशेन हुतं तद्धविष्कृतं ॥ १ ॥ नचास्यशूद्रस्यधर्म्ममुपदिशेत् * नापास्यव्रतमादिशेत् ॥ ८० ॥ तत्रदोषमाह

**योह्यस्यधर्म्ममाचष्टे यश्चैवादिशतिव्रतम्। सोऽसंवृतं नामतमःसहतेनैव मज्जति ॥ ८१॥**

यइत्यादि ॥ २ ॥ ८१ ॥ अस्यशूद्रस्ययोद्विजो * धर्म्ममाचष्टे व्रतं वापिआदिशेत्स * खल्वसंवृतं नामैव * तमो नरकं तेनैव * शूद्रेणसहमज्जति ॥ १ ॥ ८१॥

**नसंहताभ्यां पाणिभ्यां कण्डूयेदात्मनःशिरः। नस्पृशेच्चैतदुच्छिष्टोनचस्नायाद्विनाततः ॥८२**

नसंहताभ्यामित्यादि ॥ ८२ ॥ नसंहतपाणिभ्यामात्मशिरः * कण्डूयेन्नचोच्छिष्टआत्मशिरः * स्पृशेन्नशिरो विनानितास्नायीस्यात् ॥ १ ॥ ८२ ॥

केशग्रहान्प्रहारांश्च शिरस्येतान्विवर्जयेत्। शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत्॥ ८३

केशग्रहानित्यादि ॥ ८३ ॥ परेषां शिरसि केश*ग्रहान्शिरसि प्रहारांश्च*सर्व्वदैव विवर्जयेत् ॥ १ ॥ तैले नाभ्यज्य शिरःस्नातःसन्विप्रः*किञ्चिदप्यङ्गं नस्पृशेत् ॥ २ ॥ ८३ ॥

नराज्ञःप्रतिगृह्णीयादराजन्यप्रसूततः। सूनाचक्रध्वजवतां वेशेनैव च जीवताम् ॥ ८४ ॥

नराज्ञइत्यादि ॥ ८४ ॥ राजनो नक्षत्रियेण*प्रसूतराजादन्यस्मात्*सूनाचक्रध्वजवेशै* र्जीविनां नराणां च*नकिञ्चित्प्रतिगृह्णीयात् ॥ १ ॥ क्षत्रियजातिराजादीदृशात्तु*प्रतिग्रहीननिषेधः ॥ २ ॥ ८४ ॥ ईदृशादक्षत्रियाद्राज्ञःप्रति*ग्रहप्रतिषेधे हेतु*माहदशसूनेत्यादि ॥ १ ॥ ८५ ॥

दशसूनासमं चक्रं दशचक्रसमो ध्वजः। दशध्वजसमो वेशो दशवेशसमो नृपः ॥ ८५ ॥

सूनाप्राणिवधस्थानं*चक्रं बीजघातस्थानं*तिलादिपीडनयन्त्रं*ध्वजो मद्यविक्रयस्थानं * वेशः स्त्रीपण्यभृतिरितोषां मध्ये ॥ १ ॥ दशसूनाभिःपापतः*समम् एकं चक्रं भवेत्*दशभिश्चक्रैःपापतः* समएकोध्वजोभवेत् ॥ २॥ दशभिध्वजैःपापतः*समएकोवेशोभवेत्*दशभिर्वेशैःपापतः*समस्तेपामक्षत्रियोनृपोभवेत्* तस्मात्ततःप्रतिग्रहो* नधर्म्म्योऽतोनिषिध्यते ॥ ३ ॥ ८५ ॥ अपरञ्चाह दशेत्यादि ॥

दशसूनासहस्राणि यो वाहयति सौनिकः। तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥ ८६॥

सूनाभिर्जीवतीति सौनिको यः*सूनासहस्राणि दश*वाहयति व्यापारयति* तेन तुल्यस्तस्याक्षत्रियो राजा स्यात् ॥ १ ॥ तस्मादक्षत्रियात्तद्राजात्*प्रतिग्रहो घोरो भीमद*स्तानस्तद्धनं वर्ज्यं ॥ २ ॥ ८६ ॥ ८६ ॥ अपरराजप्रतिग्रहदोषमाह*योराज्ञइत्यादिश्लोकः ॥ ८७ ॥

योराज्ञःप्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्त्तिनः। स पर्यायेण यातीमान्नरकानेकविंशतिम् ८७

उच्छास्त्रवर्त्तिनः शास्त्र* मुल्लङ्घ्यवर्त्तिनो लुब्धस्याचराज्ञः* क्षत्रियभिन्नस्यापि धनं * योविप्रः प्रतिगृह्णाति ॥ १ ॥ पर्यायेणाक्रमेणेमा* नेकविंशतिंनरकान् * वक्ष्यमाणांस्तामिस्रादीन् सयातीति ॥ २॥ ८७ ॥ तान्नरकानाहतामिस्रमित्यादिभिस्त्रिभिःश्लोकैः ॥ १ ॥ ८८

तामिस्रमन्धतामिस्रं महारौरवरौरवौ। नरकं कालसूत्रञ्च महानरकमेव च ॥ ८८ ॥

सञ्जीवनं महावीचिं तपनं सम्प्रतापनम्। संहातञ्च सकाकोलं कुड्मलं पूतिमृत्तिकम् ॥ ८९ ॥

लोहशङ्कुमृजीषञ्च पन्थानं शाल्मलीं नदीम्। असिपत्रवनञ्चैव लोहदारकमेव च ॥ ९० ॥

जपहोमादिक्रियासु च ॥ ५ ॥ प्रातरुत्थाय यो विप्रः प्रातःस्नायी भवेत् सदा । सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ ६ ॥ उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ । प्राजापत्येन तत्तुल्यं महापातकनाशनम् । ७ । प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हितम् । सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् । ८ । स्नानादनन्तरं तावदुपस्पर्शनमुच्यते । अनेन तु विधानेन आचान्तः शुचितामियात् । ९ । प्रक्षाल्य पादौ हस्तौ चेत्यादिना आचमनविधानमुक्तम् । त्रिसन्ध्यास्नानं स्थापितम् । १० । सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः । सन्ध्यां द्विजोऽप्युपासीरन् ब्राह्मणास्तु विशेषतः । ११ सन्ध्यां नोपासते ये तु ब्राह्मणा हि विशेषतः । स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते । १२ । सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु । यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते । इति । १३ । इह प्रातःस्नानात् परं * प्रातःसन्ध्याविधानेन * प्राक् प्रातःसन्ध्याकालादुषःकालो * विप्र इति ख्यापितं । १४ । उदिते रवौ सन्ध्यायामिति पाठस्तात् * सन्ध्यायां यत् स्नानं तत्तु * स्नानं प्राजापत्यतुल्यम् । १५ । इति । हारीतेनाप्युक्तं तद्यथा * स्नानं कार्य्यं ततो नित्यं दन्तधावनपूर्व्वकम् । उषःकाले समुत्थाय कृतशौचो यथाविधि । १ । मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः । तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तकाष्ठकं । २ । करञ्जं खादिरं वापि कदम्बं कुरुवं तथा । सप्तपर्णाश्मपर्णी जम्बूनिम्बं तथैव च । ३ । अपामार्गश्च बिल्वश्च * अर्कश्चोडुम्बरमेव च । एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि । ४ । सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः । दन्तकाष्ठस्य भक्षस्य समासेन प्रकीर्त्तितः । ५ । अष्टाङ्गुलेन मानेन दन्तकाष्ठमिहोच्यते । प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् । ६ । प्रतिपत्पर्व्वषष्ठीषु नवम्याञ्चैव सत्तमाः । दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् । ७ । अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेषु च । अपां द्वादशगण्डूषैर्मुखशुद्धिं समाचरेत् । ८ । स्नात्वा मन्त्रवदाचम्य पुनराचमनं चरेत् । मन्त्रवत् प्रोक्ष्य चात्मानं प्रक्षिपेदुदकाञ्जलिं । ९ । आदित्येन सह प्रातर्मन्देहा नाम राक्षसाः । युध्यन्ति वरदानेन ब्रह्मणोऽव्यक्तजन्मनः । १० । उदकाञ्जलिनिःक्षेपा गायत्र्या चाभिमन्त्रिताः । निघ्नन्ति राक्षसान् सर्व्वान् मन्देहाख्यान् द्विजेरिताः । ११ ततः प्रयाति सविता ब्राह्मणैरभिवन्दितः । मरीच्याद्यैर्महाभागैः सनकाद्यैश्च योगिभिः । १२ । तस्मान्न लङ्घयेत् सन्ध्यां सायं प्रातः समाहितः । उल्लङ्घयति यो मोहात् स याति नरकं ध्रुवम् । १३ । पूर्व्वां सन्ध्यां सनक्षत्रामुपासीत यथाविधि । गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनात् । १४ । उपास्य पश्चिमां सन्ध्यां सादित्याञ्च यथाविधि । गायत्रीमभ्यसेत्तावद्यावत्ताराणि पश्यति ॥ १५ ॥ इति ॥ ९४ ॥ अथ ब्राह्मे मुहूर्त्ते बुध्येतेत्यनेन * वेदार्थतत्त्वचिन्तनं * यदुक्तं तत्क्रियं चिन्तयेदित्यत * आह पूर्व्वां सन्ध्यामित्यादि ॥ ॥ १ ॥ ९५ ॥

**श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान्। ९५।**

श्रावण्यां प्रौष्ठपद्यां वा * पौर्णमास्यां यथाविधिरुपाकर्म्म * कृत्वा युक्तो द्विजः सार्द्ध * चतुर्म्मासान् वेदानधीयीत नान्यत् ॥ १ ॥ ९५ ॥ सार्द्धचतुर्म्मासानन्तरं यत् कुर्य्यात् * तदाह पुष्ये त्वित्यादि ॥ १ ॥ ९६ ॥

**पुष्ये तु छन्दसां कुर्य्याद्बहिरुत्सर्जनं द्विजः। माघशुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ॥ ९६**

कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने। एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते ॥ १०२ ॥

कर्णाभ्यां श्रवे शब्दे रात्रावनिले *दिवापांशुसमूहने* चानिले वर्षासु तौ द्वा*वनध्यायावध्यायज्ञाः प्रचक्षते ॥ १ ॥ १०२ ॥ अपरच्चाह विद्युत्*स्तनितेत्यादि ॥ १ ॥ १०३ ॥

विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे। आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥१०३॥

विद्युतिमेघगर्ज्जने*वारिवर्षे महोल्कानां च संप्लवे एतेषु आकालिकं* दृष्टिकालव्यतिरिक्त*कालभवमनध्यायं मनुरब्रवीत् ॥ १ ॥ १०३ ॥ अनापवाद्माह*एतानित्यादि ॥ १ ॥ १०४ ॥

एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु। तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ १०४ ॥

प्रादुष्कृताग्निषु होमार्थं *प्रकटीकृतेष्वग्निषु*सायंप्रातर्होमकाले यदा एतान् विद्युदादयो भवन्ति*तदैतान् विद्युदादीन्*अभ्युदिता-नर्कस्योदित*पर्यन्तमनध्यायान्विद्यात् ॥ १ ॥ अनृतावभ्रदर्शने चानार्त्तव* मेघदर्शने विद्युदादिषु च*गाभ्युदितानर्कोदित*पर्यन्तमनध्यायान्विद्यात् ॥ २ ॥ १०४ ॥ अपरञ्चाह निर्घातेत्यादि ॥ १ ॥ १०५ ॥

निर्घाते भूमिचलने ज्योतिषां चोपसर्जने। एतानाकालिकान् विद्यादनध्यायानृतावपि ॥१०५॥

ऋतावनृतावपि निर्घाते मेघे *वायोरन्तरात्पातात्प्रबलशब्दे भूमिकम्पे *सूर्यादीनां ज्योतिषां चोपसर्गे च ॥ १ ॥ अनध्यायानेतानकालिकान् विद्यात्*इदपरमपवादमाह प्रादुष्कृतेष्वग्निष्वित्यादि ॥ २ ॥ १०५ ॥ १०६ ॥

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिःस्वने। सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा ॥१०६॥

प्रातरग्निषु प्रादुष्कृतेषु*विद्युत् स्तनितनिःस्वने *सविद्युन्मेघगर्ज्जने *विनापि वर्षं सज्योतिः* प्रागर्कास्ता-दिवा यथाऽनध्यायः स्यात् ॥ १ ॥ तथा शेषे सायं प्रादुष्कृतेष्वग्निषु *विद्युत्स्तनितनिःस्वने * विनापि वर्षं रात्रा-वनध्यायः स्यात्* ॥ २ ॥ १०६ ॥

नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च। धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा ॥ १०७ ॥

नित्यानध्याय इत्यादि ॥ १०७ ॥ धर्मनैपुण्यकामानां *धर्मस्य नैपुण्यातिशयकामनावतां *भूस्वामिनां ग्रामेषु नगरेषु च* नित्यानध्याय एव स्यात्* इदं यावत् तत्कर्म्मक्रिया स्यात् ॥ १ ॥ पूतिगन्धे च सर्व्वदेति*यत्रासीनोऽधीते यदि* तत्र पूतिगन्धो वर्त्तते* तदा यावत्स गन्धो*वर्त्तते तावदनध्यायो भवति ॥ २ ॥ १०७ ॥

अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ। अनध्यायो रुद्यमाने समवाये जनस्य च ॥ १०८ ॥

अन्तर्गतशव इत्यादि ॥ १ ॥ यस्मिन् ग्रामे शवो वर्त्तते * तस्मिन् ग्रामेऽनध्यायः स्यात् वृषलस्य सन्निधौ च नाधी-यीत ॥ १ ॥ वृषलोऽत्र न शूद्रजातिरेव*पूर्व्वमुक्तं न शूद्रजनसन्निधाविति *प्रतिषेधादतः पारिभाषिकः ॥ २ ॥ तद्यथा

ऽनधीतश्च द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः। ३। इत्यादिना शूद्र इव* द्विजो न वृषल इति* मनोरभिप्रायो ज्ञेयः। ४। जने रुद्यमाने रोदनकाले* ऽनध्यायः स्यात्* जनस्य समवाये * ऽन ध्यायो भवतीति* जनसमूहमेलने ॥ ५ ॥ १०८ ॥

उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने। उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत् ॥१०९॥

उदक इत्यादि ॥ १ ॥ १०९ ॥ उदकस्थितो न शास्त्रं * चिन्तयेत् मध्यरात्रे न विण्मूत्रस्य विसर्गे। १। नो च्छिष्टः सन् द्विजः शास्त्रं चिन्तयेत्* न च श्राद्धभुग् ब्राह्मणो मनसापि* शास्त्रं चिन्तयेद् वाचा च नाधीयीत ॥ २ ॥ १०९ ॥

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम्। त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥११०॥

प्रतिगृह्येत्यादि ॥ ११० ॥ एकोद्दिष्टस्य श्राद्धस्य* षोडशानां प्रेतश्राद्धानां* मध्यात् एकस्याकारिणः* स्वच्छन्दं भो क्तुः केतनं* तस्य निवासभवनं* प्रतिगृह्यागन्तुं स्वीकृता। १। तदवधि त्र्यहं ब्रह्म* वेदं न कीर्त्तयेत् स्वयं* नाधीयीत न चाध्यापयेत्। २। राज्ञो राजाधिपतेः क्षत्रियस्य * सूतके मरणाद्यशौचे त्र्यहं न * ब्रह्म कीर्त्तयेद्राहोश्च* सूतके चन्द्रार्कग्रहणे ॥ ३ ॥ ११० ॥

यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति। विप्रस्य विदुषो देहे तावद् ब्रह्म न कीर्त्तयेत् ॥ १११॥

यावदित्यादि ॥ १११ ॥ विदुषो विप्रस्यैकानुदिष्टस्य * चन्दनादिर्निकाय* मनुलिप्तस्य शरीर* यावत् गन्धो लेपश्च * यावन्तं कालं तिष्ठति ॥ १ ॥ तावत्कालं ब्रह्म वेदं * न कीर्त्तयेत् स्वयं नाधीयीत न च * शिष्यान् अध्यापये दिति ॥ २ ॥ १११ ॥

शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्। नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥११२॥

शयान इत्यादि ॥११२॥ शयानो ऽवसक्थिकां * जानूपरि पादं कृत्वा * प्रौढपादश्च सन् ब्रह्म नाधीयीत। १। आमिषं मत्स्यमांसं जग्ध्वा तद्दिनं * नाधीयीत सूतकान्नाद्यमशौचे* चान्नाद्यं जग्ध्वा ब्रह्म नैवाधीयीत ॥ २ ॥ ११२ ॥

नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः। अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च ॥११३॥

नीहार इत्यादि ॥ ११३ ॥ नीहारे कुज्झटिकायां * बाणशब्दे निक्षिप्यमाणस्य* बाणस्य शब्दे च उभयोः * सन्ध्ययोरुभयोश्चामावास्या * दिषु ब्रह्म नाधीयीतेति ॥ १ ॥ ११३ ॥ अमावास्यादिष्वध्ययनस्य फल * माह अमावा स्येत्यादि ॥ ११४ ॥

अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी। ब्रह्माष्टकापौर्णमास्यौ तस्मात्ताः परिवर्जयेत् ॥११४॥

स्पष्टार्थो ऽयं श्लोको ज्ञेयः ॥ १ ॥ ११४ ॥

पांशुवर्षे दिशां दाहे गोमायुविरुते तथा। श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद् द्विजः ॥ ११५ ॥

पांशुवर्ष इत्यादि ॥ ११५ ॥ अभ्रभावाद्धूलिसमूहे नभःस्थले प्रचालिते सति* द्विजो न ग्रन्थं पठेत्* दिग्दाहे च न पठेत् ॥ १ ॥ गोमायुभिर्विनते क्रियमाणे च न पठेत् * खरखरोष्ट्रे चरवति* धूनिं कुर्वति सति न* पठेदेवं पङ्क्तौ चासीनो न पठेत् ॥ २ ॥ ११५ ॥

**नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा । वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च ॥ ११६ ॥**

नाधीयीतेत्यादि ॥ ११६ ॥ श्मशानस्यान्तप्रदेशे * नाधीयीत ग्रामस्यान्ते च नाधीयीत * गोष्ठे च नाधीयीत । १ । यद्वासः परिधाय मैथुनं गच्छति * तन्मैथुनं वासो वसित्वा परिधाय नाधीयीत । २ । श्राद्धिकं यद्वा श्राद्धे दत्तं तच्च * प्रतिगृह्य तद्दिनं च * न वेदमधीयीत ॥ ३ ॥ ११६ ॥ प्राणिवेत्यादिना श्राद्धिकं विवृणोति । ११७ ।

**प्राणि वा यदि वाऽप्राणि यत् किञ्चिच्छ्राद्धिकं भवेत् । तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः ॥ ११७ ॥**

प्राणिद्रव्यमप्राणिद्रव्यं वा यत् * किञ्चित् श्राद्धे दत्तं भवेत् * तद्द्रव्यमालभ्य पाणिभ्यां गृहीत्वा* तस्य तद्दिनमनध्यायः । १ । कस्मादित्यत आह पाण्यास्यो हि* द्विजः स्मृत इति पाणिभ्यामेव च* द्विजो गृह्णाति तद्भक्षणं भक्षणं ॥ २ ॥ तस्मात् पाणौ एव द्विज* स्यास्यमिवास्यमुच्यते *तथाविधाच्छ्राद्धिकद्रव्यभक्षणात्* तद्दिनं तस्यानध्यायः ॥ ३ ॥ ११७ ॥

**चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते । आकालिकमनध्यायं विद्यात् सर्वाद्भुतेषु च ॥ ११८ ॥**

चौरैरित्यादि । ११८ । यस्मिन् ग्रामे स्वस्यावास* स्तस्मिन् ग्रामे चौरैरुपप्लुते सति* तद्दिनमाकालिकम *वानध्यायं विद्यादिति । १ । एवमग्निकारिते वेश्मन्य* ग्निदग्धे सति संभ्रमे *व्यग्रभावे चाकालिकमन*ध्यायं विद्यात् सर्वेषु चा*द्भुतेष्वनध्यायं विद्यात् ।२। अद्भुतानि ज्योतिषोक्तानि* गृहोपरि गृध्रपतन*प्रभृतीनि विद्यात् ॥ ३ ॥ ११८ ॥

**उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षेपणं स्मृतम् । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥ ११९ ॥**

उपाकर्मणीत्यादि । ११९ । उपाकर्म चोत्सर्गश्च * याज्ञवल्क्य उक्तवान्* अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा । हस्ते नौषधिभावे वा पञ्चम्यां श्रावणस्य तु । १ । पौषमासस्य रोहिण्यामष्टकायामथापि वा । जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः । २ । त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु । उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते । इति । ३ । तेनोपाकर्मणि वेदस्योत्सर्गे च * त्रिरात्रमनध्यायत्वात् * क्षेपणं स्मृतं विद्वद्भिः । ४ । उत्सर्गे तु पक्षिण्यहो * रात्रावनध्याया वुक्ता * विनियत्वाख्यात तद्*नार्षत्वादसाधुत्वेयम् । ५ ।

तत्रदितादि सावित्री*त्रिपदाचतुर्विंशत्यक्षरेत्युक्तं*तत्प्रथमपादे तु* ब्रह्मा ब्रह्माणिप्रधानी ।५। सेनकिंनि
च त्रिपदाऽष्टपत्छन्द*स्ततश्चतुर्विंशत्याक्षराऽनसा*दितिचेत्संशयोऽनवकाशस्तदोच्यते ।६। पिङ्गलेनछन्दोऽवधा
मनेह्युक्तं*पादद्वयादिपूरण*इनिसृत्य तेनतत्र*वरेण्यमितियत्पदं ।७। तद्वरेणियमिता वक्षार्थे च*पादद्वये
नवयाऽसा*च्गीनमिचत्रिपाद्गुष्टुप् छन्द*श्चतुर्विंशत्याक्षरैवाक्तेः ।८। एवमेवोक्तं साहित्यसावित्रीपूर्व*ब्रह्मणा
तद्यथाब्रह्म*सनत्कुमारसंवादे ॥९॥ सनत्कुमारउवाच*भगवन्त्वां प्रष्टुकामि*तत्त्वात्मकं शुकवच* मधीहि
भोपितामह ॥१०॥ ब्रह्मोवाच ॥०॥ ओङ्कारपूर्व्विकास्तिस्रो * महाव्याहृतयोऽव्ययाः । तत्तादिभवी
वेदेभास्त्रिपदाष्टाक्षरीक्रमात् ॥११॥ चतुर्विंशत्यक्षरीमासावित्रीप्रणवान्तिका। गायन्तं त्रायते यस्माद्गा
यत्रीतेनचोच्यते ॥१२॥ तत्कारात्सवितुःपश्चाद्वरेणियं ततःपरम् । भर्गोदेवस्यानुतन धीमहीतिधिय
स्ततः ॥१३॥ योनःपश्चात्प्रचोदयात्त्रिपदाष्टाक्षरात्मिका । चतुर्विंशत्यक्षरीयं शाश्वती ब्रह्मवाचिका ॥१४॥
अस्यागायत्र्याःपरं ब्रह्मऋषि*ऋग्यजुःसामगायत्रीछन्दो । गायत्रीसावित्री सरस्वतीब्रह्मशक्तिर्देवताधर्मार्थ
काममोक्षार्थे विनियोगः ।१। पूर्व्वतःपातुगायत्रीसावित्रीपातुदक्षिणे । सत्वरजस्तमःपश्चादुत्तरे तु सरस्वती ।१
ऊर्द्ध्वं रक्षेत्स्वयं ब्रह्मा*मधोरक्षेत्स्वयं हरिः । मध्यं रक्षेन्महारुद्रोदिक्पालाःपान्तुमे दिशः ।२। प्रणवोमे
शिरःपातुभूःकारोभुमनःसह । भुपातुमे कण्ठदेशं स्वःपातुहृदयं सदा ।३। स्वःपातुनाभिदेशं मे स्वाधि
ष्ठानं समूलकम् । तत्कारोमेपातुखञ्चसकारोमेऽनिलं तथा ।४। विकारोमेऽनलं पातु अपःपातु नुकारकः ।
र्व्वकारोमेपातु भूमिं रेकारःपातुग्रीवकम् ।५। णिकारस्तुत्वचं पातुयंकारःपातुनेत्रयोः । भकारःपातुमे
जिह्वां गोंकारःपातुनासिकाम् ।६। देकारोमेत्वचं पातुवकारःकरयुग्मकम् । स्यकारःपातुमेपादं धीकारः
पातुलिङ्गकम् ।७। मकारःपातुमेगुह्यं हिकारः पातुगणकम् । धिकारःपातुमेबुद्धिमहङ्कारं योकारकः
।८। योकारःपातुमे गन्धं नःकारःपातुमेरसम् ।प्रकारःपातुमेरूपं चोकारःस्पर्शं रक्षतु ।९। दकारःपातु
मेशब्दं यात्कारःपातुचित्तकम् । ओङ्कारोमे पातुदेहं नखरोमादिभिःसह ॥१०॥ आद्यन्ते प्रणवोमध्ये तिस्रो
व्याहृतयस्ततः । चत्वारोविंशतिर्वर्णा इतोयानि मदक्षरी ।११। इदं पठतियोनित्यं पुण्यात्माब्राह्मणोभवेत् ।
कवचस्यप्रसादेनदीर्घमायुर्लभेत्सुधीः ।१२। समहापातकोपपातकेभ्यः पूतो भवति । ससर्व्वान्वेदान
धीतीभवति ससर्व्वेषुतीर्थेषुस्नातो भवति । सभवबन्धनान्मुक्तोभवति स्वरूपाख्यं तत्त्वात्मकं कवचं योनित्य
मधीते सब्रह्मवर्चस्वीमहामोक्षं प्राप्नोति । नपुनरावर्त्तते नपुनरावर्त्तते । इति ब्रह्मसनत्कुमारसंवादे तत्त्वा
त्मक स्वरूपाख्याकवचं समाप्तम् ।०।१०। एवमङ्गिराश्चगायत्रीं *ययोद्धृतवांस्तद्दर्शयते *अङ्गिराउवाच ।१।
गायत्र्याउद्धृतं रूपं यथाश्रुतिनिदर्शनात् । ब्रह्माणमहमवोचं कागायत्रीत्वद्विणा काचमस्करिणामिति ॥
सहोवाच । गायत्रीतेमयाप्रोक्तातदुद्धारस्वकथ्यते । त्रिपदाष्टाक्षरीपादाश्चतुर्विंशतिकोष्ठकं । लिखेत्सप्त
ट् षड्क्षराणि समपङ्क्तिचतुष्टये । ऊर्द्ध्वपङ्क्तौरसाग्नवत्स इति षड्क्षरं ।२। ततोऽधस्ताद्भीचोयो
देविएतत्षड्क्षरम् । ततोऽधश्चणिमदयोर्गास इति षड्क्षरम् ।३। ततोऽधस्तु यं हियात्धिभतद् तत् षड्क्ष
रम् । वामतस्तानुलोमान्नलिखित्वाप्रातिलोमतः ।४। वामावर्त्तेनवपठेदधस्तादूर्द्ध्वतःक्रमात् । अथवा
पिलिखेदेवं समपङ्क्तित्रयेक्रमात् । वामतोऽष्टाष्टाक्षराणिपूर्व्ववच्चपठेत्सुधीः । सर्गोहिचोप्रमभवि *लिखे

प्रणवं कुर्यात्मपादप्रादि*इति मतत्वादीसयात् ॥ १ ॥ यत्प्रमन्त्रं प्रणवमादावस्ति*तत्रस तस्य नापरः* प्रणवः*पूर्व्वं कर्त्तव्यः सएवस तस्यात् ॥ २ ॥ ० ॥ गायत्री तु शक्तिर्मन्त्र* तस्मात्मन्त्रत्वादियञ्च*गायत्रीबाच्यते नच*गायत्री छन्दइदं ॥ ३ ॥ तर्हि किं शक्तिमन्त्रजपवत्करमालायां गायत्रीजपेत् ॥ ४ ॥ नैवं जपप्रकारोक्त्वा*स्वात्वा सारतन्त्रे द्वादश*पटले योगिनीतन्त्रे च*तद् यथाऽत्रैवप्रदर्श्यते ॥ ५ ॥ पुंमन्त्रंप्रजपेद्देवि*शिवसख्यवमालया। चक्रमन्त्रं विनादेवि गायत्रीन्तु विनातथा ॥ ६ ॥ शक्तिमन्त्रं जपेद्देवि शक्तिसख्यवमालया। गायत्रीं प्रजपेद्देवि शिवसख्यवमालया ॥ ७ ॥ गायत्र्यास्तुजपःशस्तः सर्व्वदा करमालया। इति ॥ ८ ॥ करमालाचोक्ता रुद्र* शिर्व्वा णातन्त्रे षष्टितमपटले *तद्रूमयाप्रदर्श्यते ॥ १ ॥ अनामामध्यमारभ्य कनिष्ठादिक्रमेण च। प्रादक्षिण्यात्मच्छे शानिजपेद्दशसुपर्व्वसु ॥ २ ॥ पर्व्वद्वयन्तु तर्जन्यामेकन्तु विद्धि पार्व्वति। पर्व्वत्रयमनामायाः कनिष्ठायाः पर्व्वत्रयं। पर्व्वत्रयं मध्यमायास्तर्जन्यामूलपर्व्व च। करमालासमाख्याता शक्तिमन्त्रजपे त्वियम्। अष्टकलोजपेदेविशक्ति मन्त्रस्यात्क्रमः। अनामामूलमारभ्य कनिष्ठादिक्रमेण शिवे। मध्यमामूलपर्य्यन्तमष्टपर्व्वसु शङ्करि ॥ ० ॥ तिस्रो ऽङ्गुल्यस्त्रिपर्व्वाणो मध्यमा चोर्द्ध्व पर्व्विका। पर्व्वद्वयं मध्यमाया जपकाले विवर्जयेत् ॥ अनामामध्यमारभ्य कनिष्ठादिक्रमेण च। प्रादक्षिण्यात्तु पुंमन्त्रं जपेद्दशसुपर्व्वसु ॥ अनामामूलमारभ्य कनिष्ठादिक्रमेण च ॥ तर्जनीम ध्यपर्य्यन्तमष्टपर्व्वास्वथाजपे ॥ इति ॥ ० ॥ पशवादेरमधीयतइत्य*पाकर्म्मानन्तरं वेदमात्र*मुत्सर्गानन्तरं वेद* वेदाङ्गादिकं यथोक्तं ॥ १ ॥ १२५ ॥

**पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः। अन्तरागमने विद्यादनध्यायमहर्निशम् ॥ १२६ ॥**

पश्चितादि ॥ १२६॥ अध्यापकाध्यापायोरन्तरा*मध्येतीगवादिपश्वादिभि*र्गमने तदहर्निश*मनध्यायं विद्यादिति ॥ १ ॥ ० ॥ १२६ ॥

**द्वावेवबर्जयेन्नित्यमनध्यायौप्रयत्नतः। स्वाध्यायभूमिञ्चाशुद्धामात्मानञ्चाशुचिं द्विजः ॥१२७॥**

द्वावेतादि ॥ १२७ ॥ ० ॥ नित्यं स्वाध्याये ऽनध्यायावरोधीना*स्तौयाक्त तत्वलक्षणा*ममेधावस्तूपहता* स्वाध्यायभूमिमात्मान* श्चाशुचं स्वसात्यचिलम् ॥ १ ॥ इतिद्वावेवानध्यायौ * द्विजःप्रयत्नतोवर्जयेत्*नत्वनयान ध्यायानित्येते*नध्यायाउक्ताःशेषाय*संहितान्तरेद्रष्टव्याः ॥ २ ॥ ० ॥ १२७ ॥ ० ॥

**अमावस्यामष्टमीञ्चपौर्णमासीं चतुर्द्दशीम्। ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥१२८**

अथापरं*चसद्वृत्तमाहामावास्यामित्यादि ॥ १२८ ॥ स्नातकोगृहस्थोद्विजो*भार्यायामृतावनृतावपिनित्य* ममावास्याष्टमीपौर्ण * मासीचतुर्द्दशीषु ब्रह्मचारीस्यात् ॥ २ ॥ ब्रह्मचर्यं मनोवाक्कायकृत * मैथुनवर्जनमुक्तम ॥ ३ ॥ ० ॥ १२७ ॥

नस्नानमाचरेद्भुक्त्वानातुरोनमहानिशि। नवासोभिःसहाजस्रंनाविज्ञाते जलाशये ।१२९

नस्नानमित्यादि ॥ १२९ ॥ स्नातकोद्विजोभुक्त्वा * स्नानमाचरेन्नातुरः* स्नानमाचरेन्नमहा*निशिचस्नानमाचरे*दनात्रचन्द्रोपरागात् ॥ १ ॥ परामरेणचोक्तंहि * महानिशातुविज्ञेयामध्यम प्रहरद्वयं। प्रदोषपश्चिमौयामौदिनवत्स्नानमाचरेत् ॥ १ ॥ दिवाकरकरैःपूते दिवास्नानं प्रशस्यते। अप्रशस्तं निशिस्नानं राहोरन्यत्रदर्शनात् ॥ २ ॥ मरुत्तोवसवोरुद्रा आदित्याश्चादिदेवताः सर्व्वेसोमे विलीयन्ते तस्मात्स्नानन्तुतद्ग्रहे इति ॥३॥ तेनराहुदर्शनादन्यत्रमहा*निशायां कामात्स्नानं नकुर्यात्*पुनर्नैमित्तिकस्नानं *तदुक्तंहिदेवलेन ॥ ४ ॥ महानिशात्रविज्ञेयामध्यस्थं प्रहरद्वयम्। तस्मिन् स्नानं नकुर्व्वीतकाम्यं नैमित्तिकादृते इति ॥ ५ ॥ वासोभिश्चवस्त्रैः सह*नस्नानमाचरेन्नचाजस्रं स्नान*माचरेन्नापाविज्ञाते *जलाशये स्नानमाचरेत् इति ॥ १ ॥ ० ॥ १२९ ॥

देवतानां गुरोराज्ञःस्नातकाचार्य्ययोस्तथा ।नाक्रामेत्कामतश्छायां बभ्रुणोदीक्षितस्यच १३०

देवतानामित्यादि ॥ १३० ॥ गुरोर्मातापिताजातकर्म्मादिकृत् * मध्यतिर्य्यःकश्चित्तस्य * राज्ञःक्षत्रियभूपतेः ॥ १ ॥ स्नातकस्याविश्रुतवल्लभचर्य्यायं * अरिलाग्यहस्थोभवतितस्याय* उपणीयवेदमध्या*पयतिसआचार्य्यस्तस्य ॥ २ ॥ बभ्रुणाउद्दिनामायो*नकुलाकृतिर्जन्तुविशेषस्तस्य*यज्ञेदीक्षितस्यछायां *कामतोनाक्रामेन्नोल्लङ्घयेदिति ॥ ३ ॥ ० ॥ १३० ॥ ० ॥

मध्यन्दिनेऽर्द्धरात्रे चश्राद्धंभुक्त्वाचसामिषम्। सन्ध्ययोरुभयोश्चैवनसेवेतचतुष्पथम् १३१

मध्यन्दिनइत्यादि ॥ १३१ ॥ सामिषं श्राद्धं भुक्त्वा* मध्यन्दिनेऽर्द्धरात्रे *सन्ध्ययोरुभयोश्च*चतुष्पथं नसेवेत इति ॥ १ ॥ ० ॥ १३१ ॥ ०

उद्वर्त्तनमपस्नानं विण्मुत्रे रक्तमेवच। श्लेष्मनिष्ठ्युतवान्तानिनाधितिष्ठेत्तुकामतः ॥ १३२ ॥

उद्वर्त्तनमित्यादि ॥ १३२ ॥ उद्वर्त्तनादीनिकामतोद्विजो*नाधितिष्ठेन्नतदुपरितिष्ठेत्* गात्रमलापकर्षणार्थन्तुयत् ॥ १ ॥ हविद्रादिद्रव्यं पिष्ट्वा * तेनगात्रमुद्घृष्यते *तदुत्सानमुद्वर्त्तनम् ॥ २ ॥ अपस्नानं यत्स्नात्वाऽपस्राजति*तत्स्नानोदकतात्गस्य*स्थानं विण्मूत्रे रक्तञ्च* निक्षिप्तं श्लेष्माणं तथा*निष्ठ्युतं चर्व्वितदन्त* काष्ठादिकं वान्तमुद्गीर्णं ॥ २ ॥ ० ॥ १३२ ॥ ० ॥

वैरिणंनोपसेवेतसहायञ्चैववैरिणः। अधार्म्मिकंतस्करञ्चपरस्यैवचयोषितम् ॥१३३॥

वैरिणमित्यादि ॥ १३३ ॥ नवैरिणमुपसेवेत*वैरिणःसहायञ्चनोप * सेवेतनाधार्म्मिकमुप* सेवेतनतस्करञ्च ॥ १ ॥ परस्यच*योषितंनै*वोपसेवे*तेतिक्रमात् ॥ १ ॥ ० १३३ ॥ ० ॥

नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् ॥ १३४ ॥

नहीत्यादि ॥ १३४ ॥ हि यस्मादिह लोके खलु ईदृशमनायुष्यं न * किञ्चनापरं विद्यते * पुरुषस्य यादृशमस्तु * परदारोपसेवनमनायुष्यम् ॥ १ ॥ ० ॥ १३४ ॥ ० ॥

क्षत्रियञ्चैव सर्पञ्च ब्राह्मणञ्च बहुश्रुतम् । नावमन्येत वै भुष्णुः कृशानपि कदाचन ॥ १३५ ॥

क्षत्रियञ्चैवेत्यादि ॥ १३५ ॥ भूष्णुर्भूतिमान् कश्चिदपि * कदाचन कृशान् दुर्बला * नपि क्षत्रियादीनन्नैवाव* मन्येत कस्मादित्यत आह ॥ १ ॥ ० ॥ १३५ ॥

एतत्त्रयं हि पुरुषं निर्दहेदवमानितम् । तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥ १३६ ॥

एतत्त्रयं हीत्यादि ॥ ० ॥ १३६ ॥ ० ॥ हि यस्मादेतत्त्रयं क्षत्रियः सर्पो * बहुश्रुतब्राह्मणश्चावमानितः * काले कश्चित् प्रायो निर्दहेत् * निःशेषेण विनाशयेत् ॥ १ ॥ तस्मादेतत्त्रयं नित्यं * बुद्धिमान् सर्व्वो जनोऽन * कदाचिदवमन्येत ॥ २ ॥ ० ॥ १३६ ॥

नात्मानमवमन्येत पूर्व्वाभिरसमृद्धिभिः । आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् १३७

नात्मानमित्यादि ॥ १३७ ॥ ० ॥ पूर्व्वाभिः पूर्व्वमसमृद्धिभिर्धना * भावे नात्मानं नैवाव * मन्येताऽमृत्योस्तु * श्रियं समृद्धिमन्विच्छेत् ॥ १ ॥ एनान्तु समृद्धाश्रियं * दुर्लभां चेष्टाभिरलभ्यां * न कदापि हि मन्येत ॥ २ ॥ ० ॥ १३७ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः ॥ १३८ ।

सत्यमित्यादि ॥ १३८ ॥ सर्व्व एव जनः सर्व्वमेव जनं * सत्यमेव प्रियमेव * ब्रूयान्नत्वप्रियं सत्यं * ब्रूयान्न प्रियमनृतं * ब्रूयादेष सनातनो धर्म्मः ॥ १ ॥ ० ॥ १३८ ॥

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् । शुष्कवैरं विवादञ्च न कुर्य्यात्केनचित्सह ॥ १३९ ॥

भद्रमित्यादि ॥ १३९ ॥ सर्व्वत्रैव वक्तव्ये प्रतिवचने * भद्रं भद्रमिति ब्रूयात् * इत्यथवा भद्रमेवेत्यवधारणे * प्रतिवचनं वदेत् शुष्कवैरं निष्प्रयोजनं शत्रुत्वं * केनापि जनेन सह * कोऽपि न कुर्य्यात् * शुष्कञ्च * विवादं केनापि सह कोऽपि कुर्य्यात् ॥ २ ॥ ० ॥ १३९ ॥ ० ॥

नातिकल्यं नातिसायं नाभिमध्यन्दिने स्थिते । नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह ॥ १४०

नातिकल्यमित्यादि ॥ १४० ॥ अतिकल्यमतिप्रत्यूषकाले * न गच्छेन्न चातिसायं काले गच्छेत् * इति मध्यन्दिने स्थिते नैव गच्छेत् ॥ १ ॥ अज्ञातेन स्वभावतो * व्यवहारतः कुलतो * योऽनज्ञातस्तेन सह * न गच्छेन्नैवैको गच्छेत् * न वृषलैर्वेदबहिस्तु सह गच्छेत् ॥ २ ॥ ० ॥ १४० ॥ ० ॥

हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोऽधिकान् । रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ १४१ ॥

हीनाङ्गानित्यादि ॥ १४१ ॥ हीनाङ्गादीन् जनान् कोपि * नाक्षिपेन्नतयोक्त्या * परिहासादिनापि न भाषेत ॥ १ ॥ ० ॥ १४१ ॥ ० ॥

नास्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् । न चापि पश्येदशुचिः स्वस्थो ज्योतिर्गणान् दिवि ॥ १४२ ॥

नस्पृशेदित्यादि ॥ १४२ ॥ विप्रो विप्रादिरेवोच्छिष्टयुक्तः सन् * गोब्राह्मणानलान् पाणिना न स्पृशेत् * अन्यथा शुचिः सन् स्वस्थो * दिवि ज्योतिर्गणान् पश्येत् ॥ १ ॥ ० ॥ १४२ ॥ ० ॥ गोब्राह्मणानलानामशुचिना * स्पर्शने प्रायश्चित्तमाह * स्पृष्ट्वैतानित्यादि ॥ १ ॥ १४३ ॥

स्पृष्ट्वैतानशुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् । गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु ॥ १४३

अशुचिर्द्विजः एतान् गो * ब्राह्मणानलान् पाणिना * स्पृष्ट्वा अद्भिः प्राणानिन्द्रियाण्युपस्पृशेत् ॥ १ ॥ अद्भिः सर्वाणि गात्राण्युपस्पृशेत् * अद्भिः पाणितलेन * नाभिमुपस्पृशेदिति ॥ २ ॥ ० ॥ १४३ ॥ ० ॥

अनातुरः स्वानि खानि न स्पृशेदनिमित्ततः । रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ॥ १४४ ॥

अनातुर इत्यादि ॥ १४४ ॥ अनातुरो विप्रादिरनिमित्ततः * स्वानि खानीन्द्रियाधिष्ठानानि नैव * स्पृशेदातुरः स्पृशे * न्निमित्ततस्त्वनातुरः ॥ १ ॥ रहस्यानि गुह्यानि लोमानि सर्वाण्येव स्पर्शने विवर्जयेत् * कश्चिद्दानष्टेच्छेदयेत् ॥ १ ॥ ० ॥ १४४ ॥ ० ॥

मङ्गलाचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः । जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥ १४५ ॥

मङ्गलाचारेत्यादि ॥ १४५ ॥ विप्रादिर्मङ्गलाचारयुक्तः स्यात् * प्रयतात्मा जितेन्द्रियः सन् जप्यं जपेदतन्द्रितः सन्नग्निं * जुहुयात् तत्त्वानपाठ्यः ॥ १ ॥ १ ॥ ० ॥ १४५ ॥ ० ॥

मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ १४६

मङ्गलेत्यादि ॥ १४६ ॥ मङ्गलाचारयुक्तानां द्विजानां * नित्यं प्रयतात्मनाञ्च * नित्यं गायत्रीं जपतां * नित्यमग्निहोत्रं जुह्वतां * विनिपातो नाशो नास्ति ॥ १ ॥ ० ॥ १४६ ॥ ० ॥

वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥ १४७ ॥

वेदमित्यादि ॥ १४७ ॥ द्विजो यथाकालमतन्द्रित एव * वेदमेव नित्यमभ्यसेदस्य हि * द्विजस्य तं वेदाभ्यासं * परं धर्ममाहुर्धर्मज्ञाः ॥ १ ॥ वेदाभ्यासादन्यो धर्मस्त्वस्य द्विज * सोपधर्म एवोच्यते ॥ २ ॥ ० ॥ १४७ ॥ ० ॥

वेदाभ्यासेन सततं शौचेन तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्व्विकीम ॥ १४८

वेदाभ्यासेनेत्यादि ॥ १४८ । द्विजो हि सततं वेदाभ्यासेन* शौचेन तपसा भूतानामेव* चाद्रोहेण पौर्व्विकीं *जातिं स्मरति तद्यथा ॥ १ ॥ ० ॥ १४८ ॥ ० ॥

पौर्व्विकीं संस्मरन् जातिं ब्रह्मैवाभ्यसते पुनः। ब्रह्माभ्यासेन चाजस्रमनन्तं सुखमश्नुते ॥ १४९

पौर्व्विकीमित्यादि । १४९ । पौर्व्विकीं जातिं जन्म संस्मरन् द्विजः* पुनर्ब्रह्मैवाभ्यसते *तज्ज्ञत्व सिवाहु लात् । १ । पुनर्ब्रह्माभ्यासेनाजस्रं वेदानां*मभ्यासेनानन्तं सुखं *स च द्विजः खल्वश्नुते । २ । ० । १४९ । ० ।

सावित्रान् शान्तिहोमांश्च कुर्यात् पर्व्वसु नित्यशः। पितॄंश्चैवाष्टकास्वर्च्चे न्नित्यमन्वष्टकासु च ॥ १५०

सावित्रानित्यादि । १५० । ० । पर्व्वसु नित्यं नित्यं सावित्रान्* सविवृदेवतान् शान्तिहोमान्*कुर्यात् तथाष्टकासु पितॄ*नन्वष्टकास्वर्च्चयेत् ॥ १ ॥ ० । १५० ॥

दूरादावसथान्मूत्रं दूरात् पादावसेचनम्। उच्छिष्टान्नं निषेकञ्च दूरादेव समाचरेत् ॥ १५१

दूरादित्यादि । १५१ आवसथादग्निग्रहा * दूरान्मूत्रं समाचरेत्*तदावसथाद्दूरात्*पादप्रक्षालनं कुर्य्यात् । १ । तदावसथाद्दूरादेवोच्छिष्टान्नं * प्रक्षेपणं समाचरेत् * भार्य्यायां निषेकं च * तदावसथाद्दूरे समाचरेदिति । २ । ० । १५१ । ० ।

मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम् ॥ १५२ ॥

मैत्रमित्यादि।१५२। मैत्रादिकर्म्म पूर्व्वाह्ण*एव कुर्व्वीत तत्र मैत्रमिति* पायोर्म्मित्रमधिष्ठात्*दैवतं तेनाधिष्ठितत्वान्मित्रन्तु पायुस्तस्य कर्म्म पुरीषविसर्गो *मैत्रं कर्म्म तच्च मौनी भूत्वा पूर्व्वाह्णे तत्कुर्य्यात्*तदुक्तमत्रिसंहितायाम् ॥ २ ॥ पुरीषे मैथुने होमे प्रस्रावे दन्तधावने। स्नानभोजनजप्येषु सदा मौनं समाचरेत् ॥ ३ ॥ यस्तु संवत्सरं पूर्णं भुङ्क्ते मौनेन सर्व्वदा। युगकोटिसहस्रेषु स्वर्गलोके महीयते इति ॥ ४ ॥ पुरीषोत्सर्गात्परं च*शौचविधानं दक्षेण*यदुक्तं तत्प्रदर्श्यते ॥५ ॥ शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम् ॥ ६ ॥ अशौचाद्धि वरं वाह्यं वाह्यादाभ्यन्तरं वरम्। उभाभ्याञ्च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ७ ॥ एका लिङ्गे गुदे तिस्रो दश वामकरे तथा। उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥ ८ ॥ गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम्। द्विगुणं त्रिगुणञ्चैव चतुर्थस्य चतुर्गुणम् ॥ ९ ॥ अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका

स्मृता ॥ द्वितीयाच तृतीयाच तदर्द्धः परिकीर्त्तितः ॥ १० ॥ लिङ्गे त्वेकसमाख्याता विपर्य्ये पूर्य्यतेयया । एतच्छौ
चं गृहस्थस्य मां द्विगुणं ब्रह्मचारिणाम् । ११ ॥ त्रिगुणन्तु वनस्थानां यतीनाञ्चचतुर्गुणम् ॥ दातव्यमुदकं तावन्म
दभावोयदाभवेत् ॥ १२ ॥ मृदाजलेन शुद्धिः स्यात् नक्लेशोनधनव्ययः । यस्यशौचेपिशैथिल्यं चित्तं तस्यपरीक्षितम्
१३ ॥ अनादेवं दिवाशौचं रात्रावनार्द्धमीयते । अनार्त्तापन्नविप्राणामनादेवह्यनापदि ॥ १४ ॥ दिवोदितस्य
शौचस्य रात्रावर्द्धं विधीयते । तदर्द्धं मातुरस्याहुस्त्वरायां मर्द्ध मध्वनि ॥ १५ ॥ न्यूनाधिकं नकर्त्तव्यं शौचे शुद्धि
मभीप्सता । प्रायश्चित्तेन युज्यते विहितातिक्रमे कृते इति ॥ १६ ॥ प्रसाधनं देहमलापहरणं * तथाकेशादि
विन्यासकरणं च स्नानं दिवास्नानं न प्रातःस्नानं ॥ १७ ॥ प्रातर्हि स्नात्वा द्विजोरात्रिदण्डे * सन्ध्योपासनां कुर्य्या
दित्यभिहितं * तस्य तु प्रातःस्नानकालीनदिनं ॥ १८ ॥ प्रातःस्नानकालस्य दिनत्वाभावात् * नपूर्व्वाह्ने प्रातःस्नानं *
तर्हि किं तद्दिवास्नानं ॥ १९ ॥ तस्यापूर्व्वाह्ने विधानं * दक्षोक्तयामार्द्धकता * वचनेन विरुध्यते । २० ॥ तद्वचनन्ति
दमुक्तं * चतुर्थेच तथाभागे * स्नानार्थं मृदमाहरेत् * तिलपुष्पकुशादीनि * स्नानञ्चाकृत्रिमे जले इति ॥ २१ ॥ तस्य त
पूर्व्वाह्णस्य द्विधा विभक्त * दिनस्यपूर्व्वार्द्धं आद्यं पूर्व्वाह्णापराह्णं च * न त्रिधाविभक्तस्य ॥ २२ ॥ इति ॥ देवतानाञ्च
पूजनं * पूर्व्वाह्ण एवकुर्व्वीतेति * तर्हि किं मध्यान्दिनं यावत्कुर्व्वीत ॥ २३ ॥ नैवं मेतत्कर्म्मादीनां हि कालः * मा
नानन्तोऽर्द्ध दिनपर्य्यन्तमुक्त * स्तत्रविशेषविधिना * यथास्वकालोमनुनाविवक्षितः ॥ २४ ॥ तर्हि प्रत्यूषसिमं
तं कर्म्मतच्च * दन्तधावनञ्च प्राक्प्रातःस्नानादुक्तं * तत्कथं पूर्व्वाह्ण एवोपपद्यते ॥ २५ ॥ सत्याम्मेतत्रात्रेःशेष
याम हि दिनवत्तत्रापि शेषयामार्द्धकालादिनमेवोक्तं हि * त्रियामां रजनीं प्राहुरिति ॥ २६ ॥ तस्मात्स्नानं प्रातःस्ना
नं * मध्याह्नस्नानञ्च यथोक्तकाले * पूर्व्वाह्ण एवकुर्व्वीत ॥ २७ ॥ पूर्व्वाह्णश्चार्द्ध दिनपर्य्यन्तं द्विधा * विभक्तस्य दिवसस्य * नतु
त्रिधाविभक्तस्य मध्याह्नकालपर्य्यन्तं * नषाट्दण्डपर्य्यन्तं ॥ २८ ॥ दिनस्य चतुर्थभागे * दक्षेणदिवास्नानस्योक्तं *
स्तत्रयथोक्तकाले च * दशदण्डकालपर्य्यन्तं * देवतानां पूजनमितिनिर्णयं ॥ २९ ॥ देवताचयद्यपि माध्याह्निकस्यात्
* स्नातद्भातस्य पूजा स्यात् * दशदण्डाभ्यन्तर एवानात्र * विशेषविधानादिति ॥ ३० ॥ एतेनान्यत्रशास्त्रे वेदादौ यद्य*
द्देवतापूजनमुक्तं * तत्सर्व्वं मनुनानुमतं ज्ञेयं ॥ ३१ ॥ तद्यथायाज्ञवल्क्यसंहितायां * विनायकपूजनमुक्तं * तदत्रच
प्रदर्श्यते ॥ ३२ ॥ विनायकः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः । गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥ ३३ ॥
तेनोपसृष्टोयस्तस्य लक्षणानि निबोधत । स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥ ३४ ॥ काषायवासस
श्चैव क्रव्यादांश्चाधिरोहति । अन्त्यजैर्गर्द्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥ ३५ ॥ व्रजन्तमपि तथात्मानं मन्यतेऽनुगतं
परैः । विमनाविफलारम्भः संसीदत्यनिमित्ततः ॥ ३६ ॥ तेनोपसृष्टोलभते नराज्यं राजनन्दनः । कुमारी न च
भर्त्तारमपत्यं नच गर्भिणी ॥ ३७ ॥ आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा । वणिग्लाभं नचाप्नोति कृषिञ्चैव
कृषीवलः ॥ ३८ ॥ स्नपनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्व्वकम् । गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥ ३९
सर्व्वौषधैः सर्व्वगन्धैः प्रलिप्तशिरसस्तथा । भद्रासनोपविष्टस्य स्वस्तिवाच्या द्विजाः शुभाः ॥ ४० ॥ अश्वस्थानाद्ग
जस्थानाद्वल्मीकात् सङ्गमाद्ध्रदात् । मृत्तिकां रोचनां गन्धान् गुग्गुलुञ्चाप्सु निक्षिपेत् ॥ ४१ ॥ या आहृता
एकवर्णैश्चतुर्भिः कलसैर्ह्रदात् । चर्म्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं तथा ॥ ४२ ॥ सहस्राक्षं शतधारमृषिभिः
पावनं कृतं । तेनत्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ ४३ ॥ भगन्ते वरुणोराजाभगं सूर्य्यो बृहस्पतिः ।

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ ४४ ॥ यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा ॥ ४५ ॥ स्नातस्यासार्षपं तैलं स्रुवेणौडुम्बरेण च । जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च ॥ ४६ ॥ मितश्च सम्मितश्चैव तथा शालकटङ्कटौ । कुष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः ॥ ४७ ॥ नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ॥ दद्याच्चतुष्पथे सूर्पे कुशानास्तीर्य सर्वतः ॥ ४८ ॥ कृताकृतांस्तण्डुलांश्च पललौदनमेव च । मत्स्यान् पक्वांस्तथैवामान् मांसमेतावदेव तु ॥ ४९ ॥ पुष्पं चित्रं सुगन्धञ्च सुराञ्च त्रिविधामपि । मूलकं पूरिकापूपांस्तथैवैण्डेरिकास्रजः ॥ ५० ॥ दध्यन्नं पायसं चैव गुडपिष्टं समोदकम् । एतान् सर्व्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ॥ ५१ ॥ विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥ दूर्व्वासर्षपपुष्पाणां दत्वार्घ्यं पूर्णमञ्जलिम् ॥ ५२ ॥ रूपं देहि यशो देहि भाग्यं भगवति देहि मे । पुत्रान् देहि धनं देहि सर्व्वान् कामांश्च देहि मे ॥ ५३ ॥ ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः । ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥ ५४ ॥ एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्म्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ॥ ५५ ॥ आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्व्वन् सिद्धिमवाप्नुयात् ॥ ५६ ॥ इत्यादि ॥ ० ॥ विष्णुसंहितायां विष्णु*पूजनक्रम तदत्र*प्रदर्श्यते तद्यथा ॥ ५७ ॥ ० ॥ अथातः सुस्नातः प्रक्षालितपाणि*पादः शुचिर्बद्धशिखो *दर्भपाणिः स्वाचान्तश्च ॥ ५८ ॥ प्राङ्मुख उदङ्मुखो वोपविष्टो*ध्यानी देवताः पूजयेत् ॥ ५९ ॥ स्वाचान्तो देवतार्च्चायां * स्थण्डिले वा भगवन्तमनादिनिधनं *वासुदेवमभ्यर्च्चयेत् ॥ ६० ॥ अश्विनोः प्राणस्त्वेते इति*कौचक्षौयमन्वेण ष्ठ शजीवसा*भगवतीं जीवाद्यं* कृत्वा ॥ ६१ ॥ युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा* जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्य्यात् ॥ ६२ ॥ आपो हि ष्ठेति तिसृभिः* ऋग्भिरर्घ्यं निवेदयेत्*हिरण्यवर्णा इति* चतसृभिः पाद्यं ॥ ६३ ॥ शन्न आपो धन्वन्या*इत्याचमनीयमिद*मापः प्रवहत इति स्नानीयम ॥ ६४ ॥ रथे अक्षे पुरुषभवा जा इत्यनुलेपनालङ्कारौ*युवा सुवासा इति वासः ॥ ६५ ॥ पुष्पवतीरिति पुष्पं* धूरसि धूर्वेति धूपं* तेजोऽसि शुक्रमिति दीपं ॥ ६६ ॥ दधिक्राव्ण इति मधुपर्कं * हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यं ॥ ६७ ॥ चामरं व्यजनं माला छत्रं यानासनं तथा । सावित्रेणैव तत्सर्व्वं देवाय विनिवेदयेत् ॥ ६८ ॥ एवमभ्यर्च्य जपेत् सूक्तं पौरुषं ततः । तेनैव जुहुयाद्राजा यदिच्छेच्छाश्वतं पदं ॥ ६९ ॥ इति वासुदेवार्च्चनं ॥ ० ॥ अथ शिवपूजनक्रमः कालीपुराणे *वेतालभैरवौ प्रति * महर्षिणा वशिष्ठेन ॥ ७० ॥ ० ॥ तेजोमयः सदा शुद्धो ज्ञानामृतविवर्द्धितः । जगन्मयश्चिदानन्दो गौरस्स्फटिकरूपधृक् ॥ ७१ ॥ महादेवो महामूर्त्तिर्महायोगयुतः सदा । यावन्ति तस्य रूपाणि तानि को गदितुं क्षमः ॥ ७२ ॥ किन्तु यैरिह रूपैः स्तु विचरत्येष शङ्करः । तेषां यन्मे ज्ञान गम्यं तत्तयोर्विगदामि वाम् ॥ ७३ ॥ प्रथमं शृणुतं मन्त्रं ततोऽनुध्यानगोचरम् । ततः क्रमं तु पूजायाः क्रमाद्विन्नरर्षभौ ॥ ७४ ॥ समस्तानां स्वराणान्तु दीर्घाः षष्ठाः सबिन्दुकाः । ऋद्धिप्रनाः सार्द्धचन्द्रा उपान्तेनेति संज्ञिताः ॥ ७५ ॥ एभिः पञ्चाक्षरैर्मन्त्रः पञ्चवक्त्रस्य कीर्त्तितः ॥ क्रमात् सम्पद् सन्दोह नाद गौरव संज्ञकाः ॥ ७६ ॥ प्रासादस्तु भवेत् षष्ठः पञ्चमन्त्राः प्रकीर्त्तिताः । एकैकेन तथैकैकं वक्त्रं मन्त्रेण पूजयेत् ॥ ७७ ॥ एकं समुद्दितं कृत्वा पञ्चभिर्वा प्रपूजयेत् । सम्पदादिषु मन्त्रेषु प्रसादस्त्वग्रमन्त्र ॥ ७८ ॥ प्रश्नोः प्रसादनेनैव यस्माद्धृत्तश्च मन्त्रकः । तेन प्रासाद संज्ञोऽयं कथ्यते मुनिसत्तमैः ॥ ७९ ॥ तस्मात् सर्व्वेषु मन्त्रेषु

प्रासादः प्रीतिदःपरः। आमोदकारकः प्रश्नोमन्त्रः सम्मदृत्तवाते॥ ८०॥ मनःप्रसादजनाश्यसन्तोषः परिकी र्त्तितः। आकर्षकोभवेन्नादीगुरुत्वाद्दौरवाह्वयः॥ ८१॥ एतद्दास्तंसमस्तञ्चमन्त्रं प्रभोः प्रकीर्त्तितं। पञ्चा क्षरं चयन्मन्त्रं पञ्चवक्त्रमप्रकीर्त्तितं। सुरा तेनैवमन्त्रेण आराधयतमीश्वरं॥८२॥ मन्त्रोद्धारेसमस्तानां स्वराणान्तु* ककारद्ध प्रथमा*दीर्घाणिषाडति पञ्च* ङ ए ऐ ओ औ तेपुनःसबिन्दुकाः॥८३॥ ङं एं ऐं ओं औं भवन्तितेपुनः* सार्द्धचन्द्राश्च ङँ एँ ऐँ ओँ औँ ताः*स्तेचौपान्ता नातिसंहिता इति*श्रीङ्कारेणातिसंहिताःपुटिताः॥ ८४ तेक्रमेणमन्त्र इसन्तोषमाद*गौरवप्रमादसंज्ञाः*पञ्चवक्त्रशिवस्य*खलुकैकवक्त्रस्यैकैकमन्त्रं॥ ८५॥ पश्चिम वक्त्रस्य ङँ मन्त्रःउत्तर*वक्त्रस्य एँ दक्षिणवक्त्रस्य ऐँ पूर्ववक्त्रस्य ओँ ऊर्द्धवक्त्रस्य औँ॥ ८६॥ इतिपञ्चभि र्वीजैश्चैकं मन्त्र*मितिव्यस्तं समस्तञ्च*पञ्चवक्त्रस्यमन्त्रं परिकीर्त्तितम्॥ ८७॥ अथध्यानमाहयथा *ध्यानञ्च शृणुवक्ष्यामि समग्रं वितालभैरव॥ ८८॥ पंचवक्त्रं महात्मानं जटाजूटविभूषितम्। चारुचन्द्रकलायुक्तं मूर्द्धिवानीषसङ्कुलं। वाङ्कभिर्दशभिर्युक्तं व्याघ्रचर्म्माम्बरधरं। कालकूटधरंकण्ठेनागहारोपशोभितं॥९० किरीटवन्धनं वाङ्कभूषणं चभुजङ्गमान्। बिभ्रनं सर्व्वगात्रेषुज्योतिर्म्मयार्पितरोचिषं॥ ९१॥ भूतिसंलिप्त सर्व्वाङ्गमेकैकवदनेत्रिभिः। नेत्रैःस्वपंचदशभिर्ज्योतिषांज्ञिविराजितम्॥ ९२॥ इत्रभोपरिसंस्थन्तु गजकृति परिच्छदं। सद्योजातं वामदेवमघोरं चततःपरं॥ ९३॥ तत्पुरुषं तथेशानं पंचवक्त्रं प्रकीर्त्तितं। सद्यो जातं भवेद्वक्त्रं शुद्धस्फटिकसन्निभं॥ ९४॥ पीतवर्णं तथासौम्यं वामदेवं मनोहरम्। नीलवर्णमघोरन्तु दंष्ट्रातीव विवर्द्धितम्॥ ९५॥ वक्त्रं तत्पुरुषं देवं दिव्यमूर्त्तिमनोहरम्। श्यामलंचतथेशानं सर्व्वदेवशि रात्मकम्॥ ९६॥ चिन्तयेत् पश्चिमेत्वाद्यं द्वितीयन्तुतथोत्तरे। अघोरंदक्षिणेदेवं पूर्व्वेतत्पुरुषंतथा॥९७ ईशानमधातीषधेयं चिन्तयेद्भक्तितत्परः। शक्तिंत्रिशूलं खट्वाङ्गवरदाभयदंशिवं॥ ९८॥ दक्षिणेषुच हस्तेषु वामेष्वपिततःशृणु। अक्षसूत्रंवीजपूरं भुजगंडमरुत्पलम्॥ ९९॥ अष्टैश्वर्य्यसमायुक्तं ध्यायेत् त्रनन्तंशिवं। एवं विचिन्तयेध्याने महादेवं जगत्पतिम्॥ १००॥ चिन्तयित्वाद्वारपालान् गणेशादीन् प्रपूजयेत्। विशुद्धिंपंचभूतानां चिन्तयित्वाततोबुधः॥ १०१॥ अष्टमन्त्रौस्ततःपश्चात् पूजयेदष्टनामभिः। आसनानिच तस्याथपूजयेत्सकलानिच॥ १०२॥ भवादीनष्टवर्णानि हृदेवविनियोजयेत्। नाराचमुद्रयातस्य ताडनंपरिकीर्त्तितं॥ १०३॥ विसर्जनंधेनुमुद्रांदर्शयित्वाविधानतः। निर्म्मार्ल्य धारणंकुर्य्यात्सदाचण्डे श्वरंधिया॥ १०४॥ मन्त्रैकंपंचभिर्मन्त्रैरङ्गानिच प्रमार्जयेत्। रुद्रादिभिरेतस्य पूर्व्वोक्तैर्नरसत्तमौ॥ १०५ वामांरौद्रींतथाज्येष्ठां कालींचतदनन्तरं। कलविकरणींचैव वलप्रमाथिनींतथा॥ १०६॥ दमनीं सर्व्वभूतानांमन्मथिनीं तथैवच। अष्टौताः पूजयेद्देवीः क्रमाच्छम्भोस्तुप्रीतये॥ १०७॥ एवं शिवंपूजयित्वा ध्यानतत्परमानसः। जपेन्नलाः समादायमन्त्रं ध्यात्वातथागुरुं॥ १०८॥ एकंपंचाक्षरं मन्त्रमेकं प्रसादमेववा। तत्सक्तमानसोजप्या सर्व्वसिद्धिमवाप्स्यथः॥ १०९॥ इतिवांक्यितं मन्त्रं ध्यानंपूजा क्रमस्तथा। गच्छतं नाटकंशैलं तत्रबोधयतंहरम्॥ ११०॥ वेतालभैरवावूचतुः। पञ्चाक्षरस्य मन्त्रोऽयं धृतस्त्वत्तत्त्वमतीश्वर। इत्यादिनावेतालभैरवयोर्नाटकशैलगमनं तत्रस्थण्डिलंकृत्वा शिवाराधनं ततऊर्द्ध प्रदेशे देवगणसहित सापर्णशिवदर्शनं ततस्तदधोभागे सरस्तीरेतयोःस्थितिः शिवाराधनंचोक्तं। ततश्चोक्तं।

पश्चाच्चरेणमन्त्रेण पूजयानौ वृषध्वजं। व्यतिचक्रामवस्तीव सहस्रं परिवत्सराम् ॥ १११ ॥ निराहारौ यता
हारौ हरसंसक्त मानसौ। तपसानिन्युत् वैवंसहस्रमप्येकवर्षवत् ॥ ११२ ॥ गतेत्वर्थ सहस्रे तुस्वयमेव वृषध्वजः।
प्रसन्नस्तुतयोर्भूत्वा प्रत्यक्षत्व मुपागतः ॥ ११३ ॥ तन्तुप्रत्यक्षतो दृष्ट्वा तदानींतालभैरवौ। वृषध्वजं हृष्ट्वदध्यौन
गमो पुरःस्थितं ॥ ११४ ॥ वेतालभैरवा चुचतुः ॥ ० ॥ पञ्चवक्त्रं महाकायं सर्व्वज्ञान मयं परं। संसार
सारं तं शान्तं प्रणमावो वृषध्वजम् ॥ ११५ ॥ त्वं परःपरमात्माच परेभ्यः पुरुषोत्तमः। त्वं कूटस्थोजगद्व्यापी
प्रधानः परमेश्वरः ॥ ११६ ॥ रूपात्मात्वं महात्मात्वं तत्त्वज्ञानालयः प्रभुः। साङ्ख्ययोगालयः षड्गुणत्रया
वभागभृत् ॥ ११७ ॥ त्वं नित्यस्त्वमनित्यश्च जगत्कर्त्तालयःस्थितिः। एकानेक स्वरूपश्चशान्तश्चेताजगन्मयः ॥ ११८
निर्विकारी निराधारो नित्यानन्दः सनातनः। त्वं विष्णुस्त्वं महेन्द्रश्च त्वं ब्रह्माजगतां पतिः ॥ ११९ ॥ यो
रूपरूपेश्वर वर्त्तमानः संभूतिभूतोनिरवग्रहश्च। काङ्क्षावतीर्णाविगतः प्रमाथो योगेश्वरो ज्ञानगतिस्त्वगम्यः
॥ १२० ॥ प्रमेयरूपात्मधराधराभो भोगीन्द्र वद्यान्तर्भागतन्त्रः। सूक्ष्माकरस्तत्त्वविदः प्रमाथी त्वं देवदेवः
शरण्यं शरणाम् ॥ १२१ ॥ विकल्पमानः परिहीनदेहः यज्ञात्मधामात्व गतैकविद्यः। वहिर्मुखरूपः पुरुषः
परात्मा त्वमिन्द्रियौघस्य विचारबुद्धः ॥ १२२ ॥ त्वं नाथनाथः प्रभवःपरेषां गतिर्वनीनां परयोगगम्यः। त्वं
भूधरोभोगधरोह्यनन्तो विश्वात्मनस्ते त्वभवन् प्रपञ्चाः ॥ १२३ ॥ ज्ञानामृतस्यन्दन पूर्णचन्द्रोमोहान्धकारस्य
परः प्रदीपः। भक्तात्मजानां परमः पितात्वं कायेचपञ्चानन रूपधारी ॥ १२४ ॥ शास्ताखिलानां प्रथमोऽपिच
त्वान् तन्नपाच्यं तनुधिमरवानि। त्वं ब्रह्मरूपेण करोषिसृष्टिं त्वं विष्णुरूपीसततं स्थितिंच ॥ १२५ ॥ त्वं रुद्र
रूपी रूपितयान्तं त्वत्तोनचान्या जगतीहरस्तु। त्वं रात्रिनाथो दिवसेश्वरश्च त्वमग्निरापः पवनोधरित्री ॥ १२६
नभस्तथात्व क्रतुतन्त्रहेतो त्वमष्टमूर्त्तिर्भवतो नचान्यत्। अनन्तमूर्त्तिस्त्विह तस्य भावाश्निगद्यतेचाष्ट मयीति
मूर्त्तिः ॥ १२७ ॥ अनन्तमूर्त्तिः कथमन्यथाते सञ्ज्ञाभिरूपस्य यदष्टमूर्त्तिः। त्वं त्र्यम्बकस्त्वं त्रिपुरान्तकस्त्वं
त्वं शम्भुरीशः शमनो वधाता ॥ १२८ ॥ सहस्रबाहुश्च हिरण्यबाहुः सहस्रमूर्त्तिस्त्विह पंचवक्त्रः। प्रभूतने
त्रश्च षडङ्गनेत्रः प्रभूतबाहुर्द्द्यवाहुरीशः ॥ १२९ ॥ प्रभूतभोगी मितभोगयुक्तो भोगोऽत्वसारो निरवग्रहश्च ॥ १३०
नित्यानित्य स्वरूपाय नित्यधाम स्वरूपिणे। परतत्त्व स्वरूपाय नमस्तुभ्यं शिवात्मने ॥ १३० ॥ नान्तं लिङ्गस्य
यस्यान्तं ब्रह्मणाविष्णुनातथा। तस्यावां किं विधास्यावः स्तुतिवाक्यं वृषध्वज ॥ १३१ ॥ स्वरूपं यस्यजा
नन्ति नदेवानापि दानवाः। बालाबाबां कथंतुत्वां स्तोष्यावः परमेश्वर ॥ १३२ ॥ भक्तिमात्रेण देवत्वं
तवावां वृषभध्वज। कुर्व्वःप्रनामं गौरीश भूयस्तुभ्यं नमोनमः ॥ १३३ ॥ इति और्व्व उवाच सगरं प्रति ॥ ० ॥
इति स्तुतो महादेव इत्यादि। ततः साक्षात्स्थितं शिवं वरंययाचाते। नित्यंयथानुगच्छाव स्तथादेहि वर
गुनौ। इति ततः शिवस्तौमत्यभावापनयन पूर्व्वकदेवत्व प्रदानं कृत्वाता वुवाच ॥ ० ॥ अहं प्रीतस्तुयुवयोः
पार्व्वती दयितामम। मद्भक्तं काममाकाङ्क्षा नाराधयत मीश्वरीं ॥ १३५ ॥ तामृतेऽहं न शक्नोमिदातु
मिष्टं सनातनं। सेवितुंच शतोनितां तस्मात्तां शरणंव्रज ॥ १३६ ॥ ० ॥ * ॥ ० ॥ इतोवक्ष्यमेकपंचा
सत्तम * धाये कालिकापुराणे * द्विपञ्चाशत्तमेऽध्याये * वेतालभैरवावूचतुः ॥ १३७ ॥ पार्व्वत्यानहिजा
नीवोध्यान मन्त्रार्च्चनाविधीन्। कथमाराधयिष्यावो भगवन् समाख्यातम् ॥ १३८ ॥ भगवाञ्छिवउवाच ॥

महामायामन्त्रविधिं कल्पं शृणु तत्त्वतः। उपदेशामितत्त्वेन येन सर्व्वं भविष्यति ॥ १३९ ॥ वक्ष्यामिमन्त्रं
शृणु तं गुह्याद्गुह्यतमं परम्। अष्टाक्षरन्तु वैष्णव्या महामाया महात्मने ॥ १४० ॥ वैष्णवीमन्त्रस्यानार
दऋषिः*शम्भुर्देवता अनुष्टुपच्छन्दः * सर्व्वार्थसाधने विनियोगः ॥ १४१ ॥ हान्तान्तपूर्व्वो मान्तश्चनान्तोणान्त
स्तथैव च। ककाद्यष्टादिषष्ठःखान्तोविष्णुःपुरःसरः ॥ १४२ ॥ एभिरष्टाक्षरैर्मन्त्रं योगपदासमप्रभम्।
ओंकारं पूर्व्वतःकृत्वाजपंसर्व्वं सुभात्मकैः ॥ १४३ ॥ महामन्त्रमिदं गुह्यं वैष्णवीतन्त्रसंयुकम्। मन्त्रं कलेवरगतं
तस्याङ्गं प्रकीर्त्तितम् ॥ १४४ ॥ महादेवस्योद्भवं बीजमेतस्य कीर्त्तितम्। ओङ्कारःज्वबीजस्वप्रकारः
शक्तिरुच्यते ॥ १४५ ॥ सवीजं कथितं मन्त्रं कल्पञ्चशृणु भैरव इति कल्पमातऊर्द्ध * दर्शयिष्याम इति ॥ १४६ ॥
हाण्डान्तपूर्व्व इति * प्रसिद्धवर्णनिर्द्देशे *योऽन्तेयस्यासहान्तःसकार इति ॥ १४७ ॥ सोऽन्तेयस्यासहान्तान्तः *
षस्तस्मात्षकारात् पूर्व्वःशकारोहान्तान्तपूर्व्वःस्यात् ॥ १४८ ॥ तस्यशकारस्यापुरःसरोमान्तो* मकारस्यान्तोयका
रः*स्तस्यापुरःसरोनान्तो*नकारस्यान्तःणकारः*स्तस्यापुरःसरोणान्तः ॥ १४९ ॥ णकारस्यान्तस्तकारः*स्तस्यापुरः
सरःककाद्यःककाः* रावधीकाद्यस्तुटः ॥ १५० ॥ तस्याटकारस्यापुरः*सराष्टकारमारभ्यादौषष्ठस्तु * चकारस्त
स्यापुरःसरःखान्तःकः*खोऽन्तेयस्यासतथा ॥ १५१ ॥ तस्याककारस्यापुरःसरोविष्णुः*रकारइतोभिरष्टाक्षरैर्मन्त्रं*
मकाचटतपयशेति*योगपदासमप्रभम् ॥१५२॥ तन्मन्त्रं प्रणवं पूर्व्वतःकृत्वा*सर्व्वैःशुभात्मकविषयैःप्रयत्नैः*साधकैर्ज
प्यम् ॥१५३॥ इतिवैष्णवीतन्त्रसंयुक्तं मन्त्रं*विष्णोःसर्व्वव्यापकस्य*परमात्मनःशिवस्यशक्तेर्वैष्णव्यावाङ्मय्याःकले
वरगतं ॥१५४॥ तस्यादङ्गमन्त्रं नामप्रकीर्त्तितं * जपारम्भेऽस्यावैष्णवीमन्त्रस्य*नारदऋषिःशम्भुर्देवता ॥१५५॥
अनुष्टुप्छन्दोमहादेवस्योद्भं*मुखमोङ्कारश्चबीजं*शक्तिःप्रकारःसर्व्वार्थ*साधने विनियोगइतिपठेत् ॥१। मन्त्रस्य
चास्यकवचे* अःपातपूर्व्वकाष्ठायामाग्नेय्यांपावकःसदा। पातुनैऋत्यामाकाष्ठायां टानैऋतांसर्व्वदा ॥ १५६॥
मां पातुवीऽसौ पाश्चात्ये पस्तुवायव्यादिग्गतम्। यःपातमाम् चरस्यामैशान्यां शस्तथावशः ॥ १५७ ॥ ननुप्रणवं
पूर्व्वतःकृत्वाकथं*शूद्रैर्जप्यमिदं स्यात्*इतिचेत्पट् पंचाशदध्यायेषिर्म्मैर्न वोक्तं तद्यथोच्यते ॥१५८॥ महाणां
प्रणवःसेतुस्तत्सेतुःप्रणवःस्मृतः। चरत्यनोङ्कृतं पूर्व्वं परंचाणुविशीर्य्यति ॥ १५९ ॥ नमस्कारोमहामन्त्रोतिवि
शेषाचात्रसर्वे। द्विजातीनामयं मन्त्रःशूद्राणां सर्व्वकर्म्मणि ॥ १६० ॥ अकारंचाप्युकारं चमकारं चप्रजापतिः।
वेदत्रयात्समुद्धृत्यप्रणवं निर्म्ममे पुरा ॥ १६१ ॥ स उदात्तोद्विजाग्र्याणां शूद्रा स्यादनुदात्तकः। प्रतिरेकाक
जातानां मनसापितथास्मरेत् ॥ १६२ ॥ चतुर्द्दशःस्वरोयोऽसौशेषऔकारएवच। सचानुस्वारचन्द्राभ्यांशूद्रा
णां सेतुरुच्यते ॥ १६३ ॥ निःसेतुचयथातोयं क्षणान्निम्नं विसर्पति। मन्त्रस्तथैवनिःसेतु क्षणात्क्षरतियज्व
नाम् ॥ १६४ ॥ तस्मात्सर्व्वत्रमन्त्रेषु चतुर्व्वर्णाद्विजातयः। पाप्मयोःसेतुमादायजपकर्म्मसमाचरेत् ॥ १६५ ॥
शूद्राणामादिसेतुर्वाद्विसेतुर्वायथेच्छया। द्विसेतवःसमाख्याताःसर्व्वइव द्विजातयः इति॥ १६६॥ तत
सेतुःप्रणव इति*प्रणवमात्रजपेपि*प्रणवपुटितःप्रणवःकार्य्यः ॥ १६७ ॥ एतद्विद्वांसद्दानीं सर्व्वे*गुरवःशिष्या
भाःप्रणवपुटितं*विनामन्त्रं दत्वास्वयं चगुरुतो*गृहीत्वाद्ययादीक्षां कुर्व्वन्तिदत्वन्तिच ॥ १६८ ॥ एकोनषष्टितमे
ऽध्याये*भगवानुवाचाङ्गि*मन्त्रं चतद्यथा ॥ १६९ ॥ अङ्गिमन्त्रागणाहं वक्ष्ये चण्डिकायाविशेषतः। यैःस
माराधितादेवी चतुर्वर्गप्रदाभवेत् ॥ १७० ॥ तालव्यान्तीयुतःषष्ठ स्वरविन्दु न्दुवह्निभिः। तथोपान्त्यश्चते

स्मृता द्विज । दशाक्षराधिकामन्त्रास्तदूर्ध्वा गीजसंज्ञिताः ॥ २०५ ॥ इति एषां मन्त्राणामष्टाक्षरमन्त्रं *यश्च विधिमन्वीतवान् यः*सकालिकापुराणस्य*द्विपञ्चाशत्तमेऽध्याये ॥ २०६ ॥ महामायामन्त्रविधिं कल्पां सुभकन्तौ सुतौ । उपदेक्ष्यामि तच्चैनेतौ आरभ्य तदध्याये ॥ २०७ ॥ त्रिपञ्चाशत्तमः पञ्चाशत्पञ्च*पञ्चाशत्षट् पञ्चाशत् सप्त पञ्चाश*दष्टपञ्चाशत्तमेषु*सप्तस्वेवाध्यायेषु ॥ २०८ ॥ प्रोक्तेनकल्पेनवैष्णवीं* महामायां नित्यपूजयेत्* नैमित्तिकपूजां चयथा*कुर्यात्तद्दूर्ध्वं वक्ष्यते ॥ २०९ ॥ यस्तु नैवमन्त्रं गृहीतवान् स*तेनैव वैष्णवीपूजाकल्पेनेत्थं* ध्यात्वा नित्यं पूजयेत्तद्ध्यानं यथा ॥ २१० ॥ जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् । लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥ २११ ॥ तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम् । नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम् ॥ २१२ ॥ सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् । त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥ २१३ ॥ मृणालायतसंस्पर्शदशबाहुसमन्विताम् । त्रिशूलं दक्षिणे ध्येयं खड्गं चक्रं क्रमादधः ॥ २१४ ॥ तीक्ष्णवाणं तथाशक्तिं वाहुसङ्घेषु संगतम् । खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥ २१५ ॥ घण्टां वा परशुं वापि वामतः प्रतियोजयेत् । अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥ २१६ ॥ शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् । हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥ २१७ ॥ रक्तारक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम् । वेष्टितं नागपाशेन भ्रुकुटीकुटिलाननम् । २१८ ॥ सपाशवामहस्तेन धृतकेशं च दुर्गया । वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥ २१९ ॥ देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् । किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥ २२० ॥ स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ॥ उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ २२१ ॥ चण्डा चण्डवती चैव चामुण्डा चण्डिका तथा । आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् ॥ २२२ ॥ चिन्तयेत् सततं देवीं धर्म्मकामार्थसिद्धिदाम् ॥ एवं ध्यात्वा दशभुजां *नित्यं साधकः प्रपूजयेत् ॥ २२३ ॥ अथ नैमित्तिकीं पूजां *यथा कार्य्या तथोक्तं च * तत्रादौ शिवेनयथा ॥ २२४ ॥ रवौ मकरवाशिस्थे याभवेत्सितपञ्चमी । तस्यां मनेनसम्पूज्या मन्त्रेण विधिवच्छिवा ॥ २२५ ॥ शुक्लाष्टम्यां पुनर्देवीं पूजां कृत्वा यथाविधि । नरस्य बलिदानानि प्रभूतानि समाचरेत् ॥ २२६ ॥ सन्ध्यायाञ्च बलिं कुर्य्यान्निजगात्रासृगुक्षितं । एवं कृतेतु कल्याणयुक्तोनित्यं प्रमोदते ॥ २२७ ॥ पुत्रपौत्रसमृद्धस्तु धनधान्यसमृद्धिभिः । दीर्घायुः सर्व्वसुभगो लोकेऽस्मिन्सचजायते ॥ २२८ । अत्र निजगात्रोक्षिभा सृजाबलिं *क्षत्रियादिः कुर्य्यान्नतु *ब्राह्मणस्तस्य प्रतिषेधात् २२९ ॥ सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः । अशोकैरपियः कुर्य्यान्मन्त्रेणानेन पूजनम् । २३० । नतस्य जायते शोको रोगोवाप्यनादुर्गतिः ॥ २३१ ज्यैष्ठे च शुक्लपक्षस्य अष्टम्यां समुपोषितः । नवम्यां सतिलैः शूर्पैर्यावकैरथमोदकैः ॥ २३२ ॥ चौरैराज्यैस्तथा चौष्ट्रै र्मदिराभिः सपिष्टकैः । नानापशूनां रुधिरैर्मांसैरपि च पूजयेत् ॥ २३३ ॥ ततोदशम्यां शुक्लाया मद्भिःस्तुतिलमिश्रितैः । दुर्गातन्त्रेण मन्त्रेण दातव्यमञ्जलित्रयम् ॥ २३४ ॥ एवं कृते दशम्यान्तु यत्पापं दशजन्मभिः । कृतं तत् प्रलयं यातिदीर्घायुरपि जायते ॥ २३५ ॥ आषाढे शुक्लपक्षस्याष्टमी श्रावणस्य वा । पवित्रारोहणं कुर्य्याद्देवीप्रीतिकरं परम् । २३६ । दुर्गातन्त्रेणमन्त्रेणाद्दुर्गाबीजेन भैरव । वैष्णवीतन्त्रमन्त्रेण पवित्रारोहणं चरेत् । २३७ । विशेषाच्छ्रावणेऽभ्यर्च्य देव्याः कुर्य्यात्पवित्रकं । सर्व्वासामेव देवानां पवित्रारोहणं चरेत् । २३८ । आषाढे श्रावणे वापि संवत्सरफलप्रदम् ।

प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः ॥ २३९ ॥ श्रियो देव्या द्वितीया च तिथीनामुत्तमा स्मृता । तृतीया च भवानीया चतुर्थी तत्सुतस्य च ॥ २४० ॥ पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च । सप्तमी भास्करस्योक्ता दुर्गायाश्च तथाष्टमी ॥ २४१ ॥ मातॄणां नवमी प्रोक्ता वासुकेर्दशमी तथा । एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः ॥ २४२ ॥ त्रयोदशी त्वनङ्गस्य शिवस्य च चतुर्दशी । ब्रह्मणो दिक्पतीनाञ्च पौर्णमासी तिथिर्मता ॥ २४३ ॥ पवित्रारोहणं यावद्देवानां न समाचरेत् । तस्यासां वत्सरपूजाफलं हरति केशवः ॥ २४४ ॥ तस्माद्यत्नेन कर्त्तव्यं पवित्रारोहणं परम् । कृते वर्षफलप्राप्तिस्तत्पूजासफला भवेत् ॥ २४५ ॥ पवित्रं येन सूत्रेण यथा कार्य्यं विजानता तत्सर्वं सुप्रमाणन्तु वचनाच्छृणु भैरव ॥ २४६ ॥ प्रथमं दर्भसूत्रञ्च पद्मसूत्रं ततः परम् । ततः क्षौमं सुपुण्यं स्यात् कार्पासकमतः परम् ॥ २४७ ॥ पट्टसूत्रमतोऽन्येन पवित्राणि न कारयेत् । विचित्राणि पवित्राणि कर्त्तव्यानि प्रयत्नतः ॥ २४८ ॥ गन्धैर्माल्यैश्च रभिभिरर्च्चितानि यथोदितम् । कन्यया कर्त्तयेत् सूत्रं प्रमदा च पतिव्रता ॥ २४९ ॥ विधवा साधुशीला वा दुःशीला न च कर्त्तयेत् । यत् सूचिभिन्नं दग्धञ्च मलधूमाभिगुण्ठितम् ॥ २५० ॥ तद्वर्जनीयं यत्नेन सूत्रमग्निपवित्रके । अशुक्लञ्चाप्यजग्धं वामेध्यं रक्तादिदूषितम् ॥ २५१ ॥ मलिनं रक्तनीलञ्च यत्नेन परिवर्जयेत् । सूत्रैः पवित्रं त्रिभिस्तत् कनिष्ठोत्तममध्यमम् ॥ २५२ ॥ कनिष्ठं तत्पवित्रं यत् सप्तविंशतितन्तुभिः । मतं यशःकीर्त्तिसुखसौभाग्यमुत्तमम् ॥ २५३ ॥ चतुःपञ्चाशतापूर्व्वं तन्तूनां मध्यमं परम् । दिव्यभोगावहं पुण्यं स्वर्गमोक्षप्रदायकम् ॥ २५४ ॥ उत्तमञ्च वतन्तूनामष्टोत्तरशतेन च । तद्दानात् सह देव्या च शिवसायुज्यमाप्नुयात् ॥ २५५ ॥ उत्तमं वाथवा देव्यै यदि पवित्रकम् । तदा याति हरेर्लोकं साधको नात्र संशयः ॥ २५६ ॥ अष्टोत्तरशतं तन्तुरत्नमालेति गीयते । पवित्रन्तु महादेव्या भुक्तिमुक्तिप्रदायकम् ॥ २५७ ॥ रत्नमालान्तु यो दद्यान्महादेव्यै पवित्रकम् । कल्पकोटिसहस्राणि स्वर्गे स्थित्वा शिवो भवेत् ॥ २५८ ॥ एतत्तु नागहाराख्यं सहस्रात् पवित्रकम् । अष्टोत्तरसहस्रेण तन्तूनां च मनोहरम् ॥ २५९ ॥ यः प्रयच्छति मह्यं तत् यावत्तत्तन्तुसञ्चयः । तावत्कल्पसहस्राणि मम लोके प्रमोदते ॥ २६० ॥ अष्टोत्तरसहस्रेण वनमाला हरेः स्मृता । तन्तूनां तस्य दानेन विष्णुसायुज्यमाप्नुयात् ॥ २६१ ॥ यत्कनिष्ठं पवित्रन्तु नाभिमात्रं भवेत्तु तत् । द्वादशग्रन्थिसंयुक्तमात्ममानेन योजयेत् ॥ २६२ ॥ जानुप्रमाणं मध्यं स्याद्ग्रन्थीनां तत्र योजयेत् । चतुर्व्विंशतिमप्यस्य मानमात्मन एव च ॥ २६३ ॥ पवित्रमुत्तमं प्रोक्तं जानुमात्रं च भैरव । षट्त्रिंशता तु ग्रन्थीनां योजयेदात्ममानतः ॥ २६४ ॥ शतमष्टोत्तरं कार्य्यं ग्रन्थीनां सविधानतः । नागहाररत्नमालावनमालासु योजयेत् ॥ २६५ ॥ पवित्रं क्रियते येन सूत्रेण ग्रन्थयः पुनः । तद्वर्णसूत्रेण कर्त्तव्या लक्षणान्विताः ॥ २६६ ॥ ग्रन्थिन्तु सप्तभिः कुर्य्याद्दशने च कनिष्ठके । द्विगुणैर्मध्यमे कुर्य्यात् त्रिगुणैरुत्तमे तथा ॥ २६७ ॥ अधिवास्य पवित्राणि पूर्व्वस्मिन् दिवसे ततः । मन्त्रन्यासं पवित्रे तु कुर्य्यात्तत्र परेऽहनि ॥ २६८ ॥ दुर्गाबीजेन मन्त्रेण मन्त्रन्यासं द्विजश्चरेत् । वैष्णवीतन्त्रमन्त्रेण कुर्य्याद्रत्नेऽत्र भैरव । २६९ प्रतिग्रन्थिस्वयं कुर्य्यान्मन्त्रन्यासं विचक्षणः । अङ्गुष्ठापर्व्वणा जप्यमालायामिव भैरव ॥ २७० ॥ यावन्तो ग्रन्थयस्तस्य तावन्तो वचसं न्यसेत् । मन्त्राणि तेन तस्याश्च स्याद्देवांशोपनियोजनम् ॥ २७१ ॥ दुर्गातन्त्रेण मन्त्रेण तत्तन्न्यासं प्रधारयेत् । एकमन्त्रस्य सकलं यत्र पात्रे पवित्रकम् ॥ २७२ ॥ तस्मिन् विधाय गन्धादिपुष्पाचितलशोभनम् । तत्र न्यासं ततः कुर्य्यादङ्गुष्ठाग्रेण भैरव ॥ २७३ ॥ विष्णोस्तन्त्रमन्त्रेण तत्तन्न्यासन्तु कारयेत् । इदं विष्णोरिति प्रोच्य

नासे भक्तं द्विजशुद्धि ॥ २७४ ॥ मूद्राणां मन्त्रविन्यासे मन्त्रैर्वैद्यदशाक्षरैः । प्रसादेनतमन्त्रेणतत्त्वन्यासोमम
कृतः ॥ २७५ ॥ अनेनमन्त्रन्यासस्तु दानध्यानेनकारयेत् । कुङ्कुमोशीरखण्डैश्चन्दनादिविलेपनैः ॥ २७६ ॥
पवित्राणिविलिप्यायतत्त्वन्यासन्तुयोजयेत् । संपूज्यमण्डले देवीं विधिवत्प्रयतोनरः ॥ २७७ ॥ वैष्णवीतन्त्र
मन्त्रेणपूजयित्वाप्रयत्नतः । दुर्गामन्त्रेण दद्यात्तु देव्यामूर्ध्नि पवित्रकम् ॥ २७८ ॥ यस्मादेवस्ययापूजातस्यात
स्यैवमण्डलम् ॥ यस्यायस्यातु योमन्त्रोयथाध्यानादिपूजनम् ॥ २७९ ॥ तदेवं तेनभावेन पूजयित्वाप्रयत्नतः ।
तस्यैवबीजमन्त्राभ्यां मूर्ध्नि दद्यात् पवित्रकम् ॥ २८० ॥ पवित्रसमयेदद्याद्देवेभ्यश्चपवित्रकम् । सर्वेषामेव
देवानां सम्प्रीत्यर्थं भैरव ॥ २८१ ॥ अग्निर्ब्रह्माभवानीचगजवक्त्रोमहोरगः । स्कन्दोभानुर्मातृगणोदिक्पाला
श्चनवग्रहाः ॥ २८२ ॥ एषां घटेपूर्वोक्तं पूजयित्वायथाविधि । मूर्ध्नि पवित्रमेकैकं दद्याद्देभ्यः समाहितः
२८३ ॥ पञ्चगव्यचरुं कृत्वादेव्यैदत्वाहुतित्रयम् । तेनैववह्निणावेद्धत्वा पश्चात्चयथाविधि ॥ २८४ ॥ आज्ये
नाष्टोत्तरशतं तिलैराज्यैस्तथैवच । अष्टोत्तरशतंदद्यान्महादेव्यै चसाधकः ॥ २८५ ॥ एवमेवविधानेनविष्णा
दीनांच वैष्णवः । पवित्रारोहणंकुर्याद्धर्मकामार्थसिद्धये ॥ २८६ ॥ नैवेद्यैर्विविधैःपेयैर्वटपिष्टकमोद
कैः । कूष्माण्डैर्नारिकेलैश्चखर्जूरैःपनसैस्तथा ॥ २८७ ॥ आम्रदाडिमकर्कोटद्राक्षादिविविधैःफलैः ।
भक्ष्यभोज्यादिभिः सर्वैर्मद्यैर्मांसैस्तथौदनैः ॥ २८८ ॥ गन्धैःपुष्पैस्तथाधूपैर्दीपैस्समनोहरैः । वासोभि
र्भूषणैश्चैवभवानीं साधकोयजेत् ॥ २८९ ॥ नटनर्त्तकसङ्घैश्चवेश्याभिश्चैवभैरव । नृत्यगीतसमृद्धिर्जागरं
कारयेन्निशि ॥ २९० ॥ भोजयेद्ब्राह्मणांश्चापिस्वातीनपिद्विजानपि । पवित्रारोहणेदत्तेदक्षिणांसुपकल्प
येत् ॥ २९१ ॥ हिरण्यं गांस्तिलान्धेनुंवासोवासांसिवा । इमंमन्त्रंततःपश्चात्साधकःसमुदीरयेत्
२९२ ॥ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयंसांवत्सरीपूजातवास्तुपरमेश्वरि ॥ २९३ ॥ ततो
विसर्जयेद्देवीं पूर्व्वाभिः प्रतिपत्तिभिः । एवंकृतेपवित्राणांदानेदेव्यायथाविधि ॥ २९४ ॥ संवत्सर
स्यापूजासम्पूर्णावत्ससाभवेत् । कल्पकोटिसहस्राणिदेवीगेहेवसेन्नरः २९५ । अत्रापिसुखसौभाग्यं समृद्धिरवला
भवेत् ॥ पवित्रारोहणविधिरेषवत्समयोदितः ।२९६। इति ॥०॥ यत्रयत्रदेवपितृक्रियासु*भक्ष्यभोज्यपेयानांप
क्वानां*दानमुक्तंतत्साग्निकैर्*देयंनत्वनिरग्निभिः ॥ २९७ ॥ साग्निकानांहिवैवाह्निकेवह्नौ*पक्वमन्नंपवित्रं
देवपितृ*मनुष्यादिभिर्ग्राह्यंननिरग्नीनाम् ॥ २९८ ॥ निरग्नयोहिलौकिकाग्नौपचति* तत्पापान्नमभोज्यत्वात्*
मनुष्यपितृदेवादिभि*र्वृथापाकत्वादुक्तं स्मृतिषु ॥ २९९ ॥ योऽश्नात्यविवाहाग्निं गृहस्थइतिमन्यते । अन्नं
तस्यनभोक्तव्यंवृथापाकोहिसस्मृत इति ॥ ३०० ॥ तस्मान्निरग्निभिरामान्नेनफल*मूलादिभिःपितृदैवतकर्माणि*
कर्त्तव्यानिनपक्वान्नैःवृथापाकात् ॥ ३०१ ॥ अथषष्ठितमोऽध्यायः *वेतालभैरवौप्रति*भगवाञ्छिवउवाच ॥ ३०२
दुर्गातन्त्रेणमन्त्रेणदुर्गादेव्यामहोत्सवम् । महानवम्यांपरदिवविदामनृपादयः ॥ ३०३ ॥ आश्विनस्यचया
शुक्लायाभवेदष्टमीतिथिः । महाष्टमीतिसाप्रोक्तादेव्याःप्रीतिकरीपरा ॥ ३०४ ॥ ततोऽनुनवमीयास्यात्सा
महानवमीस्मृता । सातिथिःसर्व्वलोकानांपूजनीयाशिवप्रिया ॥ ३०५ ॥ अनयोर्वत्सपूजायांविशेषंशृणुभैरव ।
मूर्त्तिभेदेयथादेवीपूजाभ्युदितिभूतये ॥ ३०६ ॥ कन्यासंस्थेरवौवत्सशुक्लामारभ्यनन्दिकाम् । अयाचित
एकनक्ताशीएकाशीत्वथवाव्रतः ॥ ३०७ ॥ प्रातःस्नायीजितद्वन्द्वस्त्रिकालंशिवपूजकः । जपहोमसमायुक्तोभोज

कादिभिः ॥ ७४१ ॥ बालप्रियैश्चनैवेद्यै र्लाजाघृतफलादिभिः । गव्यैर्गुडैश्च ग्रामांसै र्मद्यैर्मधुभिरे
व च ॥ ७४२ ॥ दुग्धदध्यैः सिताभिश्च लवलीनागरङ्गकैः । अजैश्च महिषैर्मेषैः स्वात्मशोणितसंस्रवैः ॥ ७४३ ॥
पक्ष्यादिबलिजातीयैस्तथा नवविधैर्मृगैः । पूजयेज्जगतां धात्रीं मांसशोणितकर्दमैः ॥ ७४४ ॥ रात्रौ स्कन्द
विशाखौ च कृत्वा पिष्टकपुत्रकौ पूजयेच्च कुनामाय दुर्गायाः प्रीतये तथा ॥ ७४५ ॥ होमश्च सतिलै राज्यैः समं
संरपिचा चरेत् । उग्रचण्डादिकाः पूज्यास्तथाष्टौ योगिनीः शुभाः ॥ ७४६ ॥ योगिनीश्च चतुःषष्टिं तथैव
कोटियोगिनीः । नवदुर्गास्तथा पूज्या देव्याः सन्निहिताः शुभाः ॥ ७४७ ॥ जयन्त्यादौ गन्धपुष्पैस्तादेव्या
मूर्त्तयो मताः । देव्याः सर्वाणि चास्त्राणि भूषणानि तथैव च ॥ ७४८ ॥ अष्टप्रत्यङ्गयुक्तानि वाहनं सिंहमे
व च । महिषासुरमर्द्दिन्याः पूजयेद्यत्नतः सदा ॥ ७४९ ॥ इति दुर्गातन्त्रं दुर्गामन्त्रस्तु । ओं दुर्गे दुर्गे रक्षणि
स्वाहा ओं म्* नवार्णवमन्त्र इति ॥ ७५० ॥ वैष्णवीतन्त्रोक्तेन सामान्यविधिना*दुर्गां दशभुजां पूजयित्वा
ष्ट*दले पूर्वचण्डादिका*अष्टौयोगिनीः पूजयेत् ॥ ७५१ ॥ ध्याने तासां यथा*उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्ड
नायिकाः । चण्डा चण्डवती चैव चामुण्डा चण्डिका तथा । इति ॥ ७५२ ॥ योगिनीश्च चतुःषष्टिं * तथा कोटि
रेकमेव*गन्धपुष्पाभ्यां पूज्यान्ताः ॥ ७५३ ॥ जयन्त्याद्यो नवदुर्गा*देव्याः सन्निहिता गन्ध * पुष्पैः पूजास्तास्तु
प्रोक्ता ॥ ७५४ ॥ जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा शिवा क्षमा धात्री नवदुर्गाः प्रकी
र्त्तिताः ॥ ७५५ ॥ केचिदेतान्नवदुर्गा*नवसु पत्रिकासु पूजायितुं * व्यवस्थापयन्ति तन्न ॥ ७५६ ॥ एतद्देव्याः
सन्निहिता इत्युक्तेः*अष्टादशभुजायाः पूजायां हि*सप्तम्यां पत्रिकापूजा विव्यक्तिश्च ॥ ७५७ ॥ इत्थं सप्तम्यां
अष्टम्यां नवम्यां*पूजयित्वा नवमीरात्रौ स्कन्द*विशाखयोः पूजा निशायां कार्या । ७५८ । ततो दशम्यां
विसर्जनं कुर्यात्*शावरोत्सवैर्विसर्जनं कृत्वा*साधकोऽनन्तमगन माचरेत् ॥ ७५९ ॥ इति साधकस्य स्वाङ्ग
दशभुजा पूजाविधि * रुक्तस्ततः परं परार्थश्च दुर्गा* पूजाविधिरुक्तस्तद्यथा दृश्यते । ७६० । रामस्यानु
ग्रहार्थं वै रावणस्य वधाय च । रात्रावेव महादेवी ब्रह्मणाबोधिता पुरा । ७६१ । ततस्तु त्यक्तनिद्रा सा नन्दा
यामाश्विने सिते । जगाम नगरीं लङ्कां यत्रासीद्राघवः स्वयं । ७६२ । तत्र गत्वा महादेवी तदानीं राम
रावणौ । युद्धे नियोजयामास स्वयमन्तर्हिताम्बिका । ७६३ । रक्षसां वानराणाञ्च जग्ध्वा मांसानि शोणितं ।
रामरावणयोर्युद्धं सप्ताहं साऽन्वयोजयत् । ७६४ । व्यतीते सप्तमे चाह्नि नवम्यां रावणं ततः । रामेण
घातयामास महामाया जगन्मयी । ७६५ । यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत । तावत्तु सप्तरात्राणि
सर्वैर्देवैः सुपूजिता । ७६६ । निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोक
पितामहः । ७६७ । ततः संप्रेषिता देवी दशम्यां शावरोत्सवैः । शक्रोऽपि देवसेनाया नीराजनमथाकरोत् । ७६८ ।
शान्त्यर्थं सुरसैन्यानां देवराजस्य वृद्धये । रामरावणवाणेन युद्धक्षोभव्यभीतिदम् । ७६९ । तृतीयायां
हिलक्षायाः पूर्वोत्तरदिशि स्थितम् । स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत् । ७७० । शान्त्यर्थं वारया
मास देवेन्द्रश्चचनाकरिः । ततस्तु श्रवणे नाथ दशम्यां चण्डिकां शुभाम् । ७७१ । विसृज्य चक्रे शान्त्यर्थं
बलनीराजनं हरिः । नीराजितबलः शक्रस्तत्र रामश्च राघवम् । ७७२ । संभाष्य प्रययौ स्वर्गं सह देवैः शची
पतिः । इति वृत्तं पुराकल्पे मनोः स्वायम्भुवान्तरे । ७७३ । प्रादुर्भूता दशभुजा देवी देवहिताय वै । नृणां

बोधनमुक्तं ॥ ४०७ ॥ परार्थं तरामात महार्थं शुक्लपक्षे प्रतिपदि रात्रौ ब्रह्मणा कृतं बोधनं ॥ ४०८ ॥ तस्माच्छु
क्लप्रतिपदि दशभुजाया बोधनं रात्रौ कर्त्तव्यमिति हि विधं दशभुजायाः शास्त्रेऽभिहितं ॥ ४०९ ॥ एतच्छास्त्र
मविद्वान् कश्चित्प्रमादी प्राह दशभुजाया आश्विनस्य शुक्लपक्षे षष्ठ्यां पितृपक्षे नवम्याञ्च बोधनम् ॥ ४१० ॥ का
लिकापुराणे कामाख्यापञ्चमूर्त्तिप्रकरणे तस्याः नवम्यां बोधनोक्तत्वात् ॥ ४११ ॥ तद् यथापञ्चषष्टितमोऽध्या
ये शरत्काले पुरा यस्मान्नवम्यां बोधिता सुरैः । शारदा सा समाख्याता पीठे लोके च नामतः इति ॥ ४१२ ॥
सत्यमेतद्दशभुजायाः शरदि बोधजननाच्छारदा नामाभूत्तथापि तस्यास्तु नवम्यां सुरैर्बोधिता ॥४१३॥ सा नवमी
किं कृष्णा शुक्ला वा किं माश्विनस्य कार्त्तिकस्य सौरस्य चान्द्रस्य वा किं मुख्यस्य गौणस्य वा ॥ ४१४ ॥ तन्न स्पष्टं ना
स्ति शरत्काल इति तस्य स्पष्टमेवास्ति यात् पितृपक्षे नवमी सा गौणचान्द्राश्विनस्य न तु शरदी ॥ ४१५ ॥ कालगणनादि
शास्त्रे द्विधा निर्द्दिष्टा उत्तरायणं षण्मासाः शिशिरवसन्तग्रीष्माः दक्षिणायनं षण्मासा वर्षाशरद्धेमन्ताः ॥
४१६॥ तत्र माघफाल्गुणौ शिशिरश्चैत्रवैशाखौ वसन्तो ज्यैष्ठाषाढौ ग्रीष्मः श्रावणभाद्रौ वर्षा आश्विनकार्त्ति
कौ शरत् ॥ ४१७ ॥ तेन न भाद्रमासः शरत् स्यात् यदि ज्योतिश्चक्रविभ्रमवशात् कदाचिद् आश्विने सा नवमी स्यात् त
दापि सा न शारदी ॥ ४१८ ॥ तस्मात् पितृपक्षे नवम्यां नैव तद्बोधनं सुरैः कृतं नापि तत्परमाश्विनस्य शुक्लपक्षे
महानवम्यां वा ॥ ४१९ ॥ तद्बोधने दुर्गोत्सवात् पूर्वपक्षे नापि कृष्णपक्षे ततः कार्त्तिके मासि या शुक्ला नवमी
सैव हि दुर्गानवमी विख्याता ॥ ४२० ॥ तस्यां सुरैः स्तोत्रेणाबोधितत्वात् दुर्गा शारदानामाभूत् । तदा बोधनाश्चा
श्विने पूजा सम्भवतीति ॥ ४२१ ॥ तस्यास्तु कामरूपे शारदापीठे पूजायामपरं मन्त्रं विधानञ्च नानोक्तं यथा
४२२ ॥ तृतीयं पीठमन्त्रन्तु शारदायाश्च होत्तरम् । शृणु तच्च कमनसा चतुर्वर्गप्रदायकं ॥ ४२३ ॥ इत्यारभ्य पञ्चा
ननं कामरक्षं दैत्यामपि प्रपूजयेत् । पीठदेवीं शारदाञ्च कामाख्यामधिदेवताम् ॥ ४२४ ॥ इत्यादिभिरुक्तत्वात्तस्मा
द्यास्य कृष्णनवम्यां पितृपक्षे बोधनान्न दशभुजायाः शारदा नामाभूच्छरत्कालत्वाभावादिति ॥ ४२५ ॥ यदा
पात्र शरत्काले मासनवमी मासनिर्द्देश एव सामान्यान्न विशेषेण ॥ ४२६ ॥ तथापि दुर्गाकल्पे जगद्धात्री प्रस्ता
भावे विशेषेण स्फुटीकृतत्वात् कार्त्तिकी शुक्ला नवमी सा ज्ञेया ॥ ४२७ ॥ तत्र बोधनाद्दुर्गा जगद्धात्री शारदानाम
बभूव तद् यथात्र प्रदर्श्यते ॥ ४२८ ॥ कार्त्तिके शुक्लपक्षेऽह्नि नवम्यां भौमवासरे । सर्व्वदेवहितार्थाय दुर्
गमनाय च ॥ ४२९ ॥ आविरासीज्जगद्धात्री युगादौ परमेश्वरी । शृणु पार्व्वति वक्ष्यामि रहस्यं पर
माद्भुतम् ॥ ४३० ॥ पुरा पुरन्दरमुखाः स्वे स्वे ईश्वरत्वाभिमानिनः । गाढः किमीश्वरोऽस्त्यस्मादतिरिक्तः सुरा इति
॥ ४३१ ॥ अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी । एतेषां धर्म्मसेतूनामिन्द्रादीनां नियन्त्र्यहम्
॥ ४३२ ॥ भविष्यामीति निश्चित्य ज्योती रूपं दधाव सौ । नवम्यां शुक्लपक्षस्य कार्त्तिक्यां बोधिता सुरैः ॥
४३३ ॥ शरद्याविरभूद्दुर्गा जगद्धात्रीति शारदा । कोटीसूर्य्यप्रतीकाशा चन्द्रकोटीसमप्रभा इति ॥ ४३४ ॥ एव
मन्यत्रापुक्तं यथा अकिण्वार्के हरौ सुप्ते शक्रध्वजक्रियाश्विने । तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनमिति
४३५ ॥ अत्रापि प्रमादी षष्ठ्यामिति शेषो नवमी बोधनं कन्यायामेवेति प्राह तद्दोकण्यायां षष्ठी बोधनस्य शिष्टे न
वमीबोधनस्य चाप्राप्तिः ॥ ४३६ ॥ पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत् । इत्यादि यदुक्तं तच्चोक्तं तद् यथा
४३७ ॥ अष्टम्यां रुधिरैर्मांसैर्महामांसैः सुगन्धिभिः । पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवाम् ॥४३८॥

सिन्दूरैः पट्टवासोभिर्नानाविधविलेपनैः । पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि ॥ ४३९ ॥ उपवासं महा
ष्टम्यां पुत्रवान्न समाचरेत् । यथातथैव पूतात्मा व्रती देवीं प्रपूजयेत् ॥ ४४० ॥ पूजयित्वा महाष्टम्यां नवम्यां व
लिभिस्तथा । विसर्जयेद्दशम्यां तु श्रवणे शावरोत्सवैः ॥ ४४१ ॥ अन्त्यभागे दिवाभागे श्रवणं यदा भवेत् ।
तदा संप्रेषणं देव्या दशम्यां शावरोत्सवैः ॥ ४४२ ॥ कुमारीभिर्वेश्याभिर्नर्त्तकैस्तथा । शङ्खतू
र्य्यनिनादैश्च मृदङ्गैः पटहैस्तथा ॥ ४४३ ॥ ध्वजैर्वस्त्रैर्बहुविधैर्लाजपुष्पप्रकीर्णकैः । धूलिकर्द्दमविक्षेपैः
क्रीडाकौतुकमङ्गलैः ॥ ४४४ ॥ भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः । भगलिङ्गादिशब्दैश्च क्रीडयेयुरलं जनाः
४४५ ॥ परैर्नाक्षिपाते यस्तु यः परान्नाक्षिपत्यपि । क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम् ॥ ४४६ ॥ आदि
पादे निशाभागे श्रवणं यदा भवेत् । तदा देव्याः समुत्थानं नवम्यां न पुनर्दिवा ॥ ४४७ ॥ अन्त्यपादे निशाभा
गे श्रवणं यदा भवेत् । तदा देव्याः समुत्थानं दशम्यां दिनभागतः ॥ ४४८ ॥ विसर्जनमनेनैव मन्त्रेण वत्स
भैरव । कर्त्तव्यमम्भसि स्थाप्य विसर्जयेद्विभूतये ॥ ४४९ ॥ उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च । कुरुष्व
मम कल्याणमष्टाभिः शक्तिभिः सह ॥ ४५० ॥ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि । यत्पूजितं मयाद्य वि
परि पूर्णं तदस्तु मे ॥ ४५१ ॥ व्रज त्वं स्रोतसि जले तिष्ठ गेहे च भूतये । निमज्ज्याम्भसि संताड्य पत्रिकां मूर्त्तिं जले
४५२ ॥ पुत्रायुर्धनवृद्ध्यर्थं स्थापितासि जले मया । इत्यनेन तु मन्त्रेण गां देवीं संस्थापयेज्जले । ४५३ । अथवाय
पुराणे प्रोक्तं यथा * शरत्काले महापूजा क्रियते या च वार्षिकी । साकार्योदयगामिन्यां न तत्र तिथि युग्मता
इति ॥ ४५४ ॥ भविष्योत्तरे च प्रोक्तं * प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातश्च संपूज्य प्रातरे
व विसर्जयेत् इति ॥ ४५५ ॥ एतद्वचनद्वयं देव्याः पूजायां * कालव्यापि तिथ्यभिप्रायेण न तु * तिथिद्वय इति
भिन्नाभिप्रायेण ॥ ४५६ ॥ भविष्यपुराणे हि तदुक्तं * व्रती संपूजयेद्देवीं सप्तम्यादिदिनत्रयं । द्वाभ्यां च न
रहोभिर्व्याप्ता सद्भिरन्यास्तिथिर्भवेदिति । ४५७ । तेन मासि त्वाश्विने सप्तमी पूजाहे * कालव्यापिनी तत्राष्टमी परे * दिने
पूजाहे काले न वर्त्तते * पूर्व्वदिने वा निवर्त्तते तदा ॥ ४५८ ॥ द्वाभ्यामहोभ्यां देवीं प्रपूजयेत * तिथेरुभयोरस्थ
सम्भवे * यथा सप्तमी वाष्टमी वा * पञ्चाहोरात्रमतीत्य वर्त्तते ॥ ४५९ ॥ तदा तिथिमनुज्ञाताय * पूजां कृत्वा परदिने च *
पूजयेदिति चतुर्भिरहोभि * र्देवीं तिथिवृद्धिवशात् * पूजयेदिति व्यवस्था ॥ ४६० ॥ अतोऽत्र पूजाहे काल
व्यापिन्या * मुदयगामिन्या सप्तम्यामष्टम्यां * नवम्यां चेति सप्तम्यादिदिन * त्रये देवीं व्रती संपूजयेदिति । ४६१ ।
नन्दिकेश्वरे गाप्युक्तं * भगवत्याः प्रवेशादि विसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्व्वास्ताः कार्य्यदृश्यः ।
इति । ४६२ ॥ उदयात् उदयगामिनी * मलव्याप्तिरिक्ता च यदा पूजार्हा भवति * तदुक्तं नारदीये हि ॥ ४६३ ॥ आदि
त्योदयवेलाया आरभ्य षष्टिनाडिकाः । तिथिस्तु सा हि शुद्धा स्यात् * सार्व्वतिथ्यो ह्ययं विधिः । इति ॥ ४६४ ॥
तेन यद्यकर्म्मण्य * प्रकर्म्मणां तिथिमलं * विद्यादिकादश्यो विनेति बोध्यम् ॥ ४६५ ॥ अथोदयगामिन्यां तिथौ
भग * वत्याः प्रवेशादि विसर्जनान्ताः * क्रियास्तु कर्त्तव्या भवन्ति तदा ॥ ४६६ ॥ यदि सोदयगामिनी * तिथिरल्प
कालाभवे * न्न च तावति काले सर्व्वास्ताः क्रियाः * सम्पद्यन्ते तदा पूर्व्वा * हे युक्तत्वात् किं तासाम् ॥ ४६७ ॥ इति चेन्न
यस्यां हि तिथौ या क्रिया * विहिता तत्क्रियानिष्पत्तिर्यावता * कालेन स्यात्तावत्काल * व्यापिनी सती सा तिथिः ॥ ४६८
यद्युदयगामिनी स्यात् * तदा तया तिथ्या युक्ते * काले न तत् क्रियायाः कर्म्माणि कुर्व्वीत ॥ ४६९ ॥ तत्र तिथेरुभिरा

एतद्वै तद्दिने पितिथिमले * चामलतिथौ च दिने * सन्धिपूजां स्थापयित * यथा न एव निद्रितोऽभूत् ॥ ५०० ॥ अष्ट म्यान्तु दिने पूजायां कृतायां * पुनः महानिशायां बलिदानं * न निशि पुनः पूजामपेक्षते ॥५०१॥ यथा माघेऽष्टम्यां दिने * कृतायां पूजायां पुनः * सन्ध्यायां निजगोत्रासु * न बलिदानं पुनः पूजां नापेक्षते ॥ ५०२ ॥ तथाच महानिशा गामिन्यामेव * ह्यष्टम्यां दिने विशेषपूजा * महानिशाऽष्टम्यामेव बलिदानमिति चेत् ॥ ५०३ ॥ यदा पूर्व्वाह्णादूर्द्ध्वं प्रवर्त्तमाना * सत्यष्टमी परदिने * पूर्व्वाह्णादूर्द्ध्वं यदा सा * तदा पूजा किं पूर्व्व दिने * पूर्व्वाह्णादूर्द्ध्वं भवति ॥५०४॥ परदिने पूजायां हि * महानिशाऽष्टम्यामभावात् * बलिदानं नोपपन्नं स्यात् ॥ ५०५ ॥ तस्मात् पुनः पूजामष्टम्यामिति * महानिशि बलिदाने तिथि * नियमो नास्तीति निर्णयः ॥ ५०६ ॥ तथाच यत्र षष्टी घटिकाकालं * सप्तमी परदिने च * पूजार्हकालव्यापिनी * सत्युदयगामिनी तत्र * परदिने पूजा कार्य्या ॥ ५०७ ॥ तत्र युग्मत्वं न ग्राह्यं * तथाष्टमी परदिने * घटिकाकालं मुहूर्त्तं वा वर्त्तते ॥ ५०८ ॥ तत्रोदयगामित्वेऽपि * क्रियानिष्पत्त्यनर्हत्वात् * युग्मत्वेऽपि च न परदिने पूजा स्यात् ॥ ५०९ ॥ किन्तु क्रियायोग्यत्वादनुदय * गामित्वे युग्मत्वेऽपि च * पूर्व्वदिने पूजा भवति * न हि द्विगोत्सवव्यापारो मुहूर्त्ते स्यात् ॥ ५१० ॥ यदि हि नवमी पूर्व्वदिने कियत् * कालानन्तरं प्रवृत्ता * परदिने मुहूर्त्तकाला भवति * तदानुदयगापि सा ॥ ५११ ॥ पूजार्हत्वात् पूर्व्वदिने पूजायां * ग्राह्या न परदिने तूदयगापि * प्रभूतबलिदानादानर्हत्वात् ॥ ५१२ ॥ अथ विसर्जनं दशम्यान्तु कुर्य्याद् शावरोत्सवैरिति * चरलग्ने श्रवणायुक्ते * पूर्व्वोक्ते दिने दशम्यां ॥५१३॥ तदुक्तं देवीपुराणे यथा * चरलग्ने चरांशे वा देवानियतमानसः ॥ ५१४ ॥ प्रतिसंवत्सरं कुर्य्यात् स्थापनञ्च विसर्जनम् * राज्ञो विनाशमिच्छेत्तु स्थिरलग्ने शिवार्पिता ॥ ५१५ ॥ इत्याह कश्चित् देवीपुराणोक्तेन । इति दशभुजापूजाविधिरायश्चिन्ने प्रोक्तः ॥ ५१६ ॥ ० ॥ अथ यो भद्रकालीं षोडश * भुजां महामायामुपासीत स * तस्या यद् यन्मन्त्रं गृह्णीयात्तदुक्तं * मे कथयितमेऽधात्र्य कालीपुराणे ॥ ५१७ ॥ सर्व्वलोकहितार्थाय सर्व्वलोकविभूतये । दुर्गातन्त्रेण मन्त्रेण पूजितव्या त्वमेऽपि ॥ ५१८ ॥ भद्रकाल्युग्रचण्डा च महामाया महोत्सवे । नेत्रबीजञ्च सर्व्वासां पूजने परिकीर्त्तितम् ॥ ५१९ ॥ योगिनीनाञ्च सर्व्वासां मूलमूर्त्तिस्त्वयैव च । उग्रचण्डाभद्रकाल्योर्मन्त्रन्तु शृणु भैरव ॥ ५२० ॥ आद्यद्वयं नेत्रबीजं मन्त्रस्यापान्त्यमन्ततः । वह्निरन्तस्वरेणेन्दुबिन्दुभ्यां मन्त्रमौपिकम् ॥ ५२१ ॥ नेत्रबीजद्वितीयन्तु द्विरावर्त्तितमुच्यते । भद्रकाल्यास्तु मन्त्रोऽयं धर्म्मकामार्थसिद्धये इति ॥ ५२२ ॥ सर्व्वासां देवीनां पूजने नेत्रबीजं प्रणवपुटितं * ओँम् ऐँ ह्रौँ ह्रौँ ओँम् ॥५२३॥ दुर्गातन्त्रेण मन्त्रेण पूजितव्या * भद्रकाल्युग्रचण्डे द्वे * ओँ दुर्गे दुर्गे रक्षणि स्वाहा ओँम् * इति साधारणमन्त्रद्वयं ॥५२४॥ प्रत्येकमन्त्रन्त्वाद्यद्वयमित्यादि * नेत्रबीजमन्त्रस्याद्यद्वयं मेँ ह्रौँ * तस्यान्तत उपान्त्यो हकारवर्णः ॥ ५२५ ॥ वह्नी नारेफेणान्तस्वरेणौकारेण * इन्दुबिन्दुभ्यामर्द्धचन्द्राकृति * रेखानुस्वाराभ्यां युक्तो ह्रौँ तेन ॥ ५२६ ॥ ओँम् ऐँ ह्रौँ ह्रौँ ओँम् इति * उग्रचण्डाया मन्त्रो * भद्रकाल्यास्तु मन्त्रो * ५२७ ॥ नेत्रबीजस्य द्वितीयं ह्रौँ । तद्द्विरावर्त्तितं ह्रौँ ह्रौँ * तच्च प्रणवपुटितं ओँ ह्रौँ ह्रौँ ओँम् ॥ ५२८ ॥ तथाच नेत्रबीजमयतादुर्गा * मन्त्रमथवा ह्रौँ ह्रौँ * मिति मन्त्रं गृहीत्वा पूर्व्वोक्त दुर्गा * तन्त्रविहितक्रमेण । ५२९ ॥ भद्रकालीं नित्यां पूजयेत्तत्राय * विशेषस्तूक्तस्तद् यथा ॥ ५३० ॥ उग्रचण्डोदयाष्टौ दुर्गामूर्त्तिरुकीर्त्तिताः । भद्रकाल्यास्तु मन्त्रेण भद्रकालीं प्रपूजयेत् ॥ ५३१ ॥ पूजयेन्नित्यार्थमेता एवाष्टयोगिनीः । जयन्ती

ऽत्यजन्म दुस्तदातपः। नदूरात् संस्थितो नाहं मुनिनाकात्यायनेन॥ ६९८॥ स त्वामायां तदाग्रहः शिष्यार्थं
क्रोधसंकुला। यस्मात्त्वया मे शिष्योऽयं मोहितस्तपसश्च्युतः॥ ६९९॥ ततस्त्वयास्त्रीरूपेण तत्त्वं स्त्रीमिह
निष्यति। इतिमां यस्तवानुपूर्व्वं मुनिः कात्यायनोहिमाम्॥ ७००॥ तस्यायं(पस्य) कालोऽयमागतः समुपस्थितः।
देवेन्द्रत्वं मयाप्राप्तं भुक्तं त्रिभुवनं समम्॥ ७०१॥ किञ्चिन्नशोचामि स्वर्गस्य च स्व्छीयं त्रियम्मया।
तस्मात्त्वां वै प्रपन्नोऽहं प्रार्थयेऽपि ह्रियन्मम॥ ७०२॥ तद्देहि देवि दुर्गे त्वं भुयोदेवि नमोनमः। देव्युवाच।
प्रार्थनीयोवरोयस्ते तं वृणुत्वं महासुर। ७०३। दास्यामि ते वरं प्रार्थ्यं संशयोनात्र विद्यते। महिषउवाच।
यज्ञभागमहंभोक्तुमिच्छामि त्वत् प्रसादतः। ७०४। यथा यज्ञेषु सर्व्वेषु पूज्योऽहं स्यां तथाकुरु। त्वत्पाद
मेवां नत्यक्ष्ये यावत् सूर्य्यः प्रवर्त्तते॥ ७०५। देव्युवाच। यज्ञभागः सुरैस्तु कल्पितावै पृथक् पृथक्।
भागोनविद्यते चान्योयं दास्यामितवाधुना। ७०६। किन्तुत्वयिमया युद्धे निहते महिषासुर। नैवत्यक्ष्यसि
मत्पादं सततं नात्र संशयः। ७०७॥ मम प्रवर्त्तते पूजा यत्र यत्र च तत्र ते। पूजा स्विन्त्यश्च कायोऽयं तवैवतव
दानव। ७०८। इति श्रुत्वा वचस्तस्याः प्रत्युवेमहिषासुरः। वरं प्राप्य हि मुदितः प्रसन्नवदनस्तदा। ६०९।
उग्रचण्डे भद्रकालि दुर्गे देवि नमोऽस्तुते। अमूर्त्तामूर्त्तयोर्देवि भवत्याः सकलात्मिकाः। ७१०। काभिस्त्वं मूर्त्ति
भिः पूज्यो यस्यां स्यां परमेश्वरि। तन्मामाचक्ष्व यदिमे भवत्यै हकपाकृता। ७११। देव्युवाच। भोक्तानियानि
नामानि त्वयेहमहिषासुर। तासुमूर्त्तिषु संस्पृष्टः पूज्योलोके भविष्यसि। ७१२। उग्रचण्डेति यामूर्त्ति भद्र
कालीत्यहंपुनः। ययामूर्त्त्यात्वां हनिष्ये सा दुर्गेति प्रकीर्त्तिता। ७१३। एतासुमूर्त्तिषु यदापादलग्नो नृणां
तदा। पूज्योभविष्यसित्वं वै देवानामपिरक्षमाम्। ७१४। आदिसृष्टे उग्रचण्डामूर्त्या त्वं निहतःपुरा। द्वितीय
सृष्टौभवान् भद्रकाल्यामयाहतः। ६१५। दुर्गारूपेणाधुनात्वां हनिष्यामि ससहानुगम्। किन्तुपूर्व्वं न गृहीतस्त्वं
मयापादयोस्तले। ६१६। अधुनाप्रार्थितवरो गृहीतः पूर्व्वकायथाः। गृहीतवांश्च पश्चात्त्वं यज्ञभागोपभुक्तये
[।] ६१७। इत्युक्तासामहामायाउग्रचण्डाहृयां तनुं। दर्शयामासचतदा महिषायोरवीर्यवे। ७१८। महिषः
प्रणानामाशु दृष्ट्वा विस्मयमागतः। ततोययापदाक्रम्य निहतो महिषासुरः। ६१९। यथैवजगृहे पादतले देवी
दयन्तुतं। छिदिशूलेननिर्भिन्नं महिषं त्रिशिरस्ककं। ६२०। गृहीतकमण्डलं देव्याश्च निर्यद्रक्तविभूषितं।
निर्यद्रक्तं महाकायं दृष्ट्वापूर्व्वतनुं स्वकाम्। ६२१। भयं प्राप्यासुरः सोऽथ शुशोच च मुमोह च। ततस्तु च गणमा
त्मानं संस्तभ्य स च दानवः। ६२२। प्रणम्य वचनं देवीमिदमाह सगद्गदम्। यदि देवि प्रसन्नासि यज्ञभाग
स्वकल्पितः। ७२३। तदा ममानादानाश्च एवमेवभवेन्नहि। ययाहं नवरैः सार्द्धं करिष्ये वैरमद्भुतम्। ७२४।
तथामां कुरुतां देवि नजन्मप्रलभेतथा। देव्युवाच। आराधिताहं भवता वरोदत्तो मयातव। ७२५। वधा
त्ततत्वं मम वैहनात्र कार्य्या विचारणा। इत्थं याप्रार्थितश्चापि सर्व्वैः सुरगणैः सह। ७२६। विरोधामेसदामा
भूदितिचापि भविष्यति। मत्पादतलसंस्पर्शा त्त्कुशरीरं तवदानव। ७२७। यज्ञभागोपभोगाय विशीर्णं न भ
विष्यति। विगतप्राणजीवात्मा सन्नेवत्वं महासुर। ७२८। वहस्वपाद संयोगाच्चिरं स्थास्यसि केवलम्।
कल्पकोटि सहस्राणि विंशतिमहिषासुर॥ ७२८॥ गतानिच ष्टाक्षनयानि जम्मतेन भविष्यति। इति देवी
वरंदत्वा तत्रैवान्तरधीयत। इति॥ ६२९॥ अथकन्यायां कृष्णपक्षस्येति * कन्यायां गौणचान्द्राश्विने रवौ *

कृष्णपक्षस्य सप्ततः परं हि बुध्यते ॥ ६३१ ॥ शुक्लपक्षे चतुर्थ्यां च विसर्जनं तु*मुख्यचान्द्राश्विने इति ॥ ६३२ ॥ नवम्या
मार्द्रानक्षत्रे*दिवाभागे देवीमुग्र*चण्डां दुर्गातन्त्रोक्तविधानेन*पूजयित्वा गीतादीनां* निःस्वनैर्बोधयेदिति
६३३ ॥ नवकस्मादेव गौणचान्द्राश्विने दिने*नवम्यामार्द्रायां बोधयेत्*तदष्टादशभुजायाश्च* षष्ठ्यां प्रतिपदि वेति
६३४॥ तत्रोच्यते । षष्टितमेऽध्याये भग*वान्महादेवउवाच यथा ॥६३५ ॥ उग्रचण्डा तु यामूर्त्तिरष्टादशभुजाऽभवत् ।
सानवम्यां पुरा कृष्णपक्षे कन्यान्तरे रवौ ॥ ६३६ ॥ प्रादुर्भूता महामाया योगिनीकोटिभिः सह । आषाढस्य तु
पूर्णायां सत्रं द्वादशवार्षिकम् ॥ ६३७ ॥ दक्षः कर्त्तुं समारेभे ततः सर्व्वे दिवौकसः । तत्राहं नहतस्तेन दक्षेण च
महात्मना ॥ ६३८ ॥ कपालीति सती चापि तज्जायेति वृतानच । ततो रोष समायुक्ता प्राणांस्तत्याज सा सती
६३९ ॥ तावद्देहात्सतीचापि चण्डमूर्त्तिस्तदाऽभवत् । ततः प्रवृत्ते यज्ञे पितरस्मिन् द्वादशवार्षिके ॥ ६४०॥ नवम्यां
कृष्णपक्षे तु कन्यायां चण्डरूपधृक् । योगनिद्रा महामाया योगिनीकोटिभिः सह ॥ ६४१ ॥ सती रूपं परित्यज्य
यज्ञभङ्गमथाकरोत् । भृङ्गरोगणैः सर्व्वैः सहिता शङ्करेण च ॥ ६४२ ॥ स्वयं तु भञ्जयद्देवी महासत्रं महात्म
नः । ततो देव्या महाक्रोधं ज्ञातीत त्रिदिवौकसः ॥ ६४३ ॥ पूजयाञ्चक्रुरतुलां देवीं पूर्व्वोदिते नवे । पूर्व्वो
दितविधानेन पूजामस्या दिवौकसः ॥ ६४४ ॥ कृत्वैव परमामापुर्निर्वृतिं दुःखहानये । एवमन्यैरपि सदा कार्य्या०
देव्याः प्रपूजनम् ॥ ६४५ ॥ विभूतिमतुलां प्राप्य चतुर्व्वर्गप्रदायिनीम् । यो मोहादथवालस्याद्देवीं दुर्गां महो
त्सवे ॥ ६४६ ॥ न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव । क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ॥ ६४७ ॥
परत्र च महामायावलिर्भूत्वा स जायते । इति ॥ अष्टम्यां रुधिरैर्मांसै*रित्यादुक्तं पूर्व्वं भ्रमं यम् ॥ ६४८ ॥ इतो
न कालमविद्वान् * कश्चित्प्रमादी वाचष्टे * कालिकापुराणेतु * नवम्यां बोधनमष्टा*दशभुजाया इति तन्न
६४९ ॥ तत्रैव हि कालिकापुराणे प्रोक्तं *उग्रचण्डेति यामूर्त्तिर्भद्रकाली ह्यहं पुनः । ययामूर्त्त्या त्वं हि निष्प्र
मा दुर्गेति प्रकीर्त्तिता ॥ ६५० ॥ एतासु मूर्त्तिषु यदा पादलग्नो नृणां तदा । पूज्यो भविष्यसि त्वं वै देवानामपर
त्तमाम् ॥ ६५१ ॥ इत्यनेन कात्यायन्या दुर्गायाः * पादलग्नत्वेन महिषासुरस्य * पूज्यत्वमुक्तमतएवाष्टादशभु
जायास्तु ॥ ६५२ ॥ पादलग्नत्वं महिषासुरस्य न * सम्भवति तस्मादष्टादशभुजाया नवम्यां * न बोधनमिति यत् *
प्रमादिना व्याख्यातम् ॥६५३॥ तदसाधुत्वादग्राह्यं *प्रमादी ह्यन्धः कार्णो वा*यतः स्वयं कालीपुराणवचनं०*लिखितं
एतासु मूर्त्तिषु यदा*पादलग्नो नृणां तदा ॥ ६५४॥ पूज्यो भविष्यसि त्वमिति तथापि* तन्नाम्ना दृष्टं च च* कात्याय
न्या दुर्गायाः*पादलग्नत्वेन*महिषासुरस्य पूज्यत्वमुक्तमिति ॥ ६५५ ॥ एतासु मूर्त्तिष्विति बहुवचन*नान्तपदाभ्यां किं
दुर्गे*वोपस्थाप्यते पूर्व्वोक्तोग्रचण्डादि* मूर्त्तित्रयं नोपस्थाप्यते ॥ ६५६ ॥ प्रमादी कथमाह स * महिषासुरस्य
दुर्गायाः*पादलग्नत्वेन पूज्यत्वोक्तिरष्टा * दशभुजापादलग्नत्वं * न सम्भवति तस्माच्च ॥ ६५७ ॥ अष्टादशभुजाया न*
नवम्यां बोधनमिति*महिषासुरस्याष्टादशभुजा*पादलग्नत्वं किं तस्या*बोधने हेतुर्भवति ॥६५८॥ सा नैव तस्मै
वरमदादयदा त्वं० *मम पादलग्नः स्यास्तदा मम*पूजार्थं बोधनं भविष्यतीति॥ ६५९ ॥ अधुना प्रार्थितवरो*गृहीतः प्र
त्यक्षायया * रितापि किं नैवापश्यत् । तस्मात्तत्प्रमादिव्याख्यानमसाधुः* विरुद्धं हि वल्गाम्नायं * तत्संस्कृत
वाक्यमिति ॥ ६६० ॥ इत्यश्वगौणचान्द्राश्विने कृष्ण*पक्षे नवम्यामार्द्रायां* दिवाभागे बिल्वशाखायां फल*युक्ता
यां यथोक्तेनैव ॥ ६६१ ॥ विधानेन पूजयित्वा*गीतवादित्रादिशब्दैः*उग्रचण्डां बोधयित्वा * दशम्यादिषु दुर्गा

तन्त्रोक्तविधिनाप्रतीभूत्वाप्रत्यहं ॥ ६६२ ॥ नित्यपूजाविधिनापूजयेदथ*शुक्लपक्षे चतुर्थ्यान्तु * देव्याःकेश मोचनं कुर्यात् * पञ्चम्यां प्रातरेवस्नापयेत्* सप्तम्यां पत्रिकापूजा ॥ ६६३ ॥ सप्तम्यां दुर्गां तन्त्रोक्तविधानेन * तामूग्रचण्डां पूजयित्वानवत्व*पत्रिकास्थनवानां दुर्गाणां पूजा ॥६६४ ॥ नवपत्रिकाश्चोक्ताः*कदलीदाडिमीधान्य *हरिद्रामानकं कचुः । बिल्वोऽशोकोजयन्तीचविज्ञेयानवपत्रिकाः ॥ ६६५ ॥ अत्रविल्वइतिफलयुग्मसहितविल्व शाखा* लिङ्गपुराणेऽभिहिता ॥ ६६६॥ युग्मऽभिन्नाभ्यां बिल्वस्यफलाभ्यां शाखिकां तथा । संस्नाप्यामृतयोः देवीं पूजयित्वाप्रवेशयेदिति ॥६६७॥ पत्रिकाप्रवेशश्चोक्तो*हयशीर्षपञ्चरात्रे* श्रीभाविनिजगत्सिद्ध्यै*प्रवेशेविल्व वासिनी । बिल्वपादपमभ्येतिपूजार्थं सायमम्बिकाइति॥६६८॥ इत्यानेनपूर्व्वदिने सायं*षष्ठ्यां सञ्ज्योत्यायां तद् भावेचामन्त्रयेन्मत्स्य * सूक्तेऽयुक्तं तद्यथा ॥ ६६९ ॥ ज्येष्ठावाप्यथवाषष्ठीसायंकालेनचेद्भवेत् । सायमेवत थापिस्यादिल्वशाखाभिमन्त्रणम् ॥ ६७० ॥ पूर्व्वां षष्ठीं समन्वितां सायं प्राप्तामपित्यजेत् । यदातु पत्रिकापूजा नपरेद्युर्भविष्यति ॥ ६७१ ॥ सन्निकृष्टन्तुयत्पूर्व्वं पत्रिकादिवसस्यतु । तद्दिनेवरणंकृत्वापरे शाखां प्रवेश येत् ॥ ६७२ ॥ नन्दिकेश्वरेणाप्युक्तं *पत्रीप्रवेशात् पूर्व्वेद्युःसायाह्ने विल्ववासिनीम् । चण्डीमामन्त्रये द्विद्वान्नात्रषष्ठीपुरस्क्रिया ॥ ६७३ ॥ इतो बं यह्फलान्विताया यस्यां *विल्वशाखायां बोधनं*कृतं तस्यां शाखा यां देवी*मधिवासेनामन्त्रयेत् ॥ ६७४ ॥ एवं नवसुपत्रिकासुचनव * दुर्गा अधिवासेनपूर्व्वं * दिनमामन्त्रयेत्प रेऽह्नि सप्तम्यां पत्रिकासुपूजां कुर्व्वीत ॥ ६७५ ॥ तत्राष्टदलपद्मस्याष्टसुदले * षष्टौकौशिकादीःपूजयेत्प्रत्यह* मष्टम्यां दुर्गां तन्त्रोक्तविधानेन ॥ ६७६ ॥ पूजये महानिशायां *स्वयं वलिदानं त्वयं*जागरणञ्चकुर्व्वीत*अपुत्रक स्तूपवासं *कुर्यान्नतुपुत्रवानिति ॥ ६७७॥ नवम्यां तथापूजयित्वाविधिवत्*भूरिवलिदानं कुर्यात्*दशम्यां पूर्व्वो क्तविधानेनैव*विसर्जनंकुर्यात्तथा॥६७८॥शावरोत्सवंकुर्य्यात्*राजातुमहानाजां वल*हृदयं नीराजनं कुर्य्यात्* इत्युग्रचण्डापूजाविधिः ॥ ६७९ ॥ वैष्णवीं महामायां यउपासीत*सकलैवरगतं वैष्णवीमन्त्रं *गृहीत्वावैष्णवी तन्त्रोक्तविधिनैवं*मूर्त्तिं ध्यात्वा*साधकोनित्यं पूजयेत् ॥ ६८० ॥ शोणपद्मप्रतीकाशां रक्तमृदुजलम्बिनीं । चलत्काञ्चन माणिक्य कुण्डलोज्ज्वल शालिनीम् ॥ ६८१ ॥ सुवर्णरत्नसम्बन्ध किरीटद्वय धारिणीं । रक्तकृष्णा कृष्णनेत्रैः स्वाभिन्नैश्च विभूषिताम् ॥ ६८२ ॥ सन्ध्यानलसमप्रख्य कपोलां लोललोचनाम् । विपक्कदाडिमी वीज दन्तां सुभ्रूयुगोज्ज्वलाम् ॥ ६८३ ॥ वन्धूकदलरसनां शिरीषप्रभनासिकाम् । कम्बुग्रीवां विशालाक्षीं सूर्य्य कोटि समप्रभां ॥ ६८४ ॥ चतुर्भुजां विवसनां पीनोन्नत पयोधराम् । दक्षिणोर्द्धेनलिस्त्रिंश परेणासिद्ध सूत्रकम् ॥ ६८५ ॥ त्रिभ्रतीं वामहस्ताभ्यां ममौति वरदायिनीम् । निम्ननाभिं क्रमायात क्षीणमध्यां मनो रमाम् । ६८६ ॥ आनम्रनागनासान्तां गुप्तगुल्फां सुपार्ष्णिकाम् । वक्षपर्य्यङ्क सङ्कल्प निविड़ासन राजि ताम् ॥ ६८७ ॥ गात्रेण रत्नस्तम्भञ्च समायालम्ब्यासंस्थिताम् । किमिच्छसीतिवचनं व्याहरन्तीं मुकु न्दः ॥ ६८८ ॥ पञ्चाननं पुरःसंस्थं निरीक्षन्तीं स्ववाहनम् । मुक्तावली स्वर्णरत्नहारकङ्कणकादिभिः ॥६८९॥ सर्व्वैरलङ्कार गणैरुज्ज्वलां सस्मिताननाम् । सूर्य्यकोटि प्रतीकाशां सर्व्वालङ्कार संयुताम् ॥ ६९० ॥ नव यौवन सम्पन्नां तथासर्व्वाङ्ग सुन्दरीम् । ईदृशीमम्बिकां ध्यात्वा ओँ नमः फड़िति मस्तके ॥ ६९१ ॥ स्वकीयं समनोद्दद्यात् साहमेवं विचिन्तयेत् । इत्येवं नित्यंपूजको*यथाश्विने पूजयेत्त*इक्ताम कोन षष्ठितमेऽध्याये

॥ ६९२ ॥ यदा तु वैष्णवीं देवीं महामायां जगन्मयीम्। पूजयेत्तत्र तदा विशेषं शृणु भैरव ॥ ६९३ ॥
कन्यासंस्थे रवाविति या शुक्ला तिथिरष्टमी। तस्यां रात्रौ विधातव्या पूजा विभवविस्तरैः ॥ ६९४ ॥ नवम्यां
बलिदानञ्च कर्त्तव्यं वै यथाविधि। जपं होमञ्च विधिवत् कुर्य्यात्तत्र विभूतये ॥ ६९५ ॥ सम्पूजयेन्महादेवीं
मष्टपुष्पैः क्रमान्नरः। इतात्र विशेषं शृणु * भैरवेति यदुक्तम् ॥ ६९६ ॥ तदाश्विने दशभुजा * पूजाविधानं
सामान्या* दुक्तं तदनुवृत्त्या*तत्र विशेष उक्तः ॥ ६९७ ॥ तेनस्वाश्वकोशः स्वार्थे * माश्विने वैष्णवीं देवीं * पूज
येत् शुक्ल प्रतिपदादि * नवम्यन्तं यावत् * त्वाहिनियमेन व्रतीस्यात् ॥ ६९८ ॥ प्रातःस्नायीच त्रिकालं *
शिवपूजकश्चभवेत्*कुमारीश्च भोजयेत् ॥ ६९९ ॥ षष्ठ्यां वैष्णवीतन्त्रोक्त*विधानेन बहुफल*सहितायां बिल्व
शाखायां पूर्णां पूजां *पूर्व्वाह्ने देवकृतात्वात्*कल्पाव ।दिवादिस्वनेऽ ॥ ७०० ॥ देवीं सम्बोधयेज्जागरयेत्*
प्रमादौतु षष्ठ्यां सायं *बोधनमिति व्याचष्टे ॥ ७०१ ॥ षष्ठ्यां बिल्वतरौबोधं सायं सन्ध्यासु कारयेत् * दितिनिद
र्शनञ्च दर्शयति ॥ ७०२ ॥ तन्निदर्शनमनार्षं * भविष्योत्तरेखेन दर्शितं नच*तत्रास्ति सन्ध्यास्विति बहुवच
न*प्रायुक्तं यच्चक्रत्वात् ॥ ७०३ ॥ सायं तस्याः बिल्वशाखायामामन्त्र्य*तां वैष्णवीं देवीमधिवासयेत्। ७०४
परदिने सप्तम्यां तां *शाखामाहृत्य वैष्णवीं*तन्त्रोक्त विधानेनतां पूजयेत्*अष्टम्यां पुनर्विशेषेण पूजयेत् ॥
अष्टम्यां रुधिरैर्मांसै रिहाद्रात्रौ*विशेषेण पूजयेत्*स्वयं कुर्य्याद्बलिदानं * महानिशीति यदुक्तं * तत्रविशेष
मुच्यते । ७०५ । कन्यासंस्थे रवाविति इत्यादि*कन्यासंस्थे रवावित्युक्तं वेद* इतिलक्षं पुनरिदमग्रहणं*
मत्वाचान्द्राश्विनस्थापनार्थमेव । ७०६ । तत्र शुक्लाष्टम्यां रात्रौ*विभवविस्तरैर्देव्याः*पूजाविधातव्या नवम्यां
बलि*दानं जपोहोमश्च वि*भूतये कर्त्तव्यादिति । ७०७ । पूजाच्चदिनत्रयमेवाष्टपुष्पैः*कर्याकुर्य्यादष्ट पुष्प
क्राचाक्रा*इहन्निर्व्वाण तन्त्रे तद्यथोच्यते । ७०८ । विष्णुक्रान्ता सन्ध्याद्यानेच करवीरकम्। कुर्य्याद्द्रव्य
द्रोणपुष्पं जवादेया तथाञ्जलौ । ७०९ । जलपद्मं स्थलपद्मं वकपुष्पं मनेदद्देत् । स्वदेहे देवबुद्ध्वा
ध्यात्वादौ मस्तके क्षिपेत् । ७१० । श्वेतकरवीरं देविधानं तद्देवतात्मकम्। अन्तर्यागे चाष्ट पुष्पं युक्तं
तत्स्वपदृश्यते । ७११ । अहिंसापरमंपुष्पं पुष्पमिन्द्रियनिग्रहः । दयापुष्पं क्षमापुष्पं भक्तिपुष्पमतःपरम्।
७१२ । ज्ञानपुष्पं शमपुष्पं सोऽहंपुष्पं तथाष्टमं । देहपुष्पं देहिपुष्पं देहिदेहैक्य पुष्पकम्
। ७१३ । मन्त्रपुष्पं देवपुष्पं गुरुपुष्पञ्च शाश्वतम्। सर्व्वकान्तु सोऽहं पुष्पमष्टपुष्पमहं परम्। इति ७१४
अपराजितारक्तकरवीर*द्रोणजवाजलपद्मस्थलपद्मावकपुष्प *श्वेतकरवीराणीति*भवन्त्यष्टपुष्पाणीति । ७१५ ।
नन्वेवं विधाष्टमी नवम्यां पूजा*कस्माद्विहितेति चेत्तत्रायं हेतुः * प्रागुक्तमाश्विनस्यैव शुक्ले याभवेदष्टमी
तिथिः । ७१६ । महाष्टमीति साप्रोक्ता देवीप्रीति करीपरा*इति महाष्टमी देव्यास्तिथिरुक्ता । ७१७ । ततो
ऽनुनवमी यास्यात् सामहा नवमीस्मृता । सातिथिः सर्व्वलोकानां पूजनीया शिवप्रिया । इति । ७१८ । इति
महानवमी शैवीतिथि * रुक्तातयोर्मिलने ऽर्द्धनारीनर* प्रायातिथि र्भवतितत्र *वैष्णवीपूजा बहुफला । ७१९ ।
तदुक्तं विष्णुधर्म्मोत्तरे यथा*अष्टम्या नवमीयुक्ता नवम्याचाष्टमीतथा । अर्द्धनारीनरप्राया उमामाहेश्वरी
तिथिः । ७२० । इति । नतु सिद्धैवाष्टम्यन्तरानवमी* तत्कस्मादुक्तमष्टम्या*युक्ता नवमी नवम्या युक्ताचाष्टमी
तिचेत्सत्यम् । ७२१ । नखलुसम्पूर्णा महाष्टमीतिथिः* सम्पूर्णाच महानवमीतिद्वयी*भवत्यर्द्धनारीनर प्राया

वाच। शृणु वत्स प्रवक्ष्यामि यथावत् परिपृच्छसि ॥ ७५५ ॥ महासिद्धिप्रदं पुण्यं सर्व्वपापनिबर्हणम्। सर्व्वलोकोपकारार्थं विशेषाद्भूमिवृत्तिषु ॥ ७५६ ॥ कर्त्तव्यं ब्राह्मणैर्देवि क्षत्रियैर्भूमिपालकैः। गोधनार्थं वत्स वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ॥ ७५७ ॥ महाव्रतं महापुण्यं शङ्करादैरनुष्ठितम्। कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥ ७५८ ॥ कन्यासंस्थे रवौ वत्स शुक्लामारभ्य नन्दिकाम्। अयाचिताशी ह्येकाशी नक्ताशी ऽथ वाग्यतः ॥ ७५९ ॥ प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः। जपहोमसमायुक्तः कन्यकां भोजयेत् सदा ७६० ॥ अष्टम्यां नवमेहानि द्वादशानि गुणानि च। एकं वा वित्ताभावेन कारयेत् द्विजसत्तम ॥ ७६१ ॥ तस्मिन् देवीप्रकर्त्तव्या ह्यष्टमी वा राजतीतथा। महानीललक्षणोपेता खड्गं मृण्मयेऽथ पूजयेत् ॥ ७६२ ॥ सर्व्वोपहारसम्पन्नवस्त्ररत्नफलादिभिः। कारयेद्रथदोलादौ पूजा बलिवर्द्धिनीम् ॥ ७६३ ॥ पुष्पैश्च द्रोणबिल्वाम्रजातीपुन्नागचम्पकैः। विचित्रां रचयेत् पूजामष्टम्यामुपवासयेत् ॥ ७६४ ॥ दुर्गापतोजपे काम्यमें कथितः शुभाशितः। तद्वद्यामिनीशेषे विजयार्थं नृपोत्तमैः ॥ ७६५ ॥ सर्व्वाङ्गलक्षणोपेतं गन्धपुष्पस्रजार्च्चितम्। विधिवत्कालिकालीतिजप्त्वा खड्गेन घातयेत् ॥ ७६६ ॥ पशुं तद्रुधिरं मांसं गृहीत्वा पूतनादिषु। नैरृताय प्रदातव्यं महाकौशिकमन्त्रितम् ॥ ७६७ ॥ तस्याग्रतो नृपः स्नायात् शत्रुं कृत्वा तु पिष्टजम्। खड्गेन घातयित्वा च दद्यात् स्कन्दविशाखयोः ॥ ७६८ ॥ ततो देवीं स्नापयेत क्षीरसर्पिर्जलादिभिः। कुङ्कुमागुरुकर्पूरचन्दनैश्चर्च्चापूजयेत् ॥ ७६९ ॥ हेमादिपुष्परत्नादि वासांसि वाहनानि च। निवेद्य मन्त्रपूतन्तु देयं देव्यै शुभावितम् ७७० ॥ देवीभक्ताश्च पूज्येरन् कन्यकाः प्रमदा अपि। द्विजान् दीनांस्तपस्विनान् सर्व्वान् दानेन प्रीणयेत् ॥ ७७१ नन्दन्ति भक्ता ये येन महाव्रतधरास्तये। पूजयेत्तान् विशेषेण तस्माद्देवचर्च्चिका ॥ ७७२ ॥ मातृकाणाञ्च देवीनां पूजा कार्या तथा निशि। ध्वजस्त्रच्छत्रपताकादि मूर्च्छयेच्चाम्बिकागृहे ॥ ७७३ ॥ रथयात्रां बलिक्षेपं पटुवादित्रनाकुलम्। कारयेत्तूर्यघोषेण देवीवस्त्रनिपातनैः ॥ ७७४ ॥ अश्वमेधफलावाप्तिर्भक्तितः द्विजसत्तम। महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥ ७७५ ॥ सर्व्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्त्तिताम्। कृत्वाप्नोति यशो राजा पुत्रायुर्धनसम्पदः ॥ ७७६ ॥

---

## अथकालीपूजाकालनिर्णयः।

पूर्व्वाह्णो वै देवानां * मध्यन्दिनं मनुष्याणां * अपराह्णः पितृणां * इति श्रुतिं कृत्वा मनुनाभिहितं ॥ १ ॥ पूर्व्वाह्ण एव कर्त्तव्यं * देवतानाञ्च पूजनं * इति तस्यापवादे ॥ २ ॥ यथा शिवरात्रिव्रते शिवस्य * जन्माष्टमीव्रते कृष्णस्य रात्रौ * पूजाविहिता तथैव * कालीपूजा रात्रौ शस्या ॥ ३ ॥ तद्यथा शिववचनं * दिवा न पूजयेद्देवीं रात्रौ नैव च पूजयेत्। सर्व्वदा पूजयेत कालीं दिवारात्रिविवर्जिते। इति ॥ ४ ॥ सूर्य्यावस्थितिकालो दिवा त्रियामा * रात्रिः प्रथमार्द्धयाम * शेषार्द्धयामौ विहाय * मध्यमत्रियामा रात्रि * रनायस्य वर्णेया ॥ ५ ॥ इत्यत्र प्रथमयाम * शेषयामद्वयमिति * त्रियामा रात्रि विवक्षिता ॥ ६ ॥ इत्येवं त्रियामा रात्रिं * सूर्य्यावस्थितिकालं दिवा * वर्जयित्वा

युक्तापामावास्याकालरात्रीतिविश्रुता ॥ ६७ ॥ आविर्भूतामहाकालीयोगिनीकोटिभिःसह । तस्यांपूजाप्रकर्त्तव्यानिशार्द्धे कर्कटोदये ॥६८॥ तत्रोभयदिनेप्रस्तकालेभूतयुतायदि । उमामाहेश्वरीसाच तिथिःसिद्धिप्रदामता ॥ ६९ ॥ इति महाकाली विषयपूजा*वचनं नदक्षिणकाली विषयं*तत्रकर्कटे इतिनोक्ता * यत्कर्कटोदय इत्युक्तं ।७०। तेनज्ञापितं यस्याममावास्यायां*कर्कटस्योदयःस्यात्तस्यामेव*ह्यमावास्यायांमहाकालीं पूजयेत् ॥७१॥ नतु यस्याममावास्यायां* कर्कटोनोदितः कियत्कालं वर्त्तते*तस्याममावास्यायामिति ॥ ७२ ॥ तत्रोभयदिनेप्रस्तकाले इति*यत्रकालेऽक्षयफलं*समतकल्पफलं *चौरोपमफलंसहि प्रस्तकालः ॥ ७३ ॥ तत्रभूतचतुर्द्दशी * युक्तामावास्या यदिस्यात्*तदासातूमामाहेश्वरी तिथिःस्यात् ॥ ७४ ॥ इति ॥ तत्रापिकार्त्तिकस्य प्रथमदिनमारभ्य मेषवृष मिथुनपरिमानं पञ्चविंशति पलाधिकचतुर्दशदण्डाः । तेनाष्टम मुहूर्त्तनूनत्वे उत्तरोत्तरदिनेषुमेषमानापाये मुहूर्त्त पूरणे महाकाली पूजनं न दक्षिण कालिकाया इति निष्कर्षः ॥ * ॥ इत्येवं स्वस्वाभीष्टानां देवतानां*पूजनं यथोक्त विधिना पूर्व्वाह्णे एवकर्त्तव्यमितिध्येयं ॥ * ॥ ७८८ ॥ * ॥ १५२ ॥

दैवतान्यभिगच्छेत्तु धार्म्मिकांश्चद्विजोत्तमान् । ईश्वरञ्चैवरक्षार्थं गुरूनेवचपर्व्वसु ॥ १५३ ॥

दैवतानीत्यादि ॥ १५३ ॥ द्विजोनिजसंरक्षार्थं * पर्व्वसुदेवतानामभि*गच्छेद्धार्म्मिकान् द्विजोत्तमान् ब्राह्मणा*नभिगच्छेदीश्वरञ्च*राजानं गुरुंश्चाभिगच्छेत् ॥ १ ॥ १५३ ॥

अभिवादयेद्वृद्धांश्चदद्याच्चैवासनंस्वकम् । कृताञ्जलिरुपासीतगच्छतःपृष्ठतोऽन्वियात् ॥१५४

अभिवादयेदित्यादि ॥ १५४ ॥ स्वगृहमागतान्वृद्धा*नभिवादयेत् स्वकञ्चासनं दद्यात्* तान्कृताञ्जलिःसन्नुपासीततांश्च*गच्छतः पृष्ठतोऽन्वियात् ॥ १ ॥ १५४ ॥

श्रुतिस्मृत्युदितंसम्यङ्निबद्धंस्वेषुकर्म्मसु । धर्म्मूलंनिषेवेतसदाचारमतन्द्रितः ॥ १५५ ॥

श्रुतीत्यादि ।१५५। द्विजःस्वेषुकर्म्मसु धर्म्मूलं श्रुतिस्मृतिभ्यां सम्यग्यथार्थं नैव * निबद्धंसंहितात्वमेण*कृतं तच्चनिषेवेत । १ । अतन्द्रितः*सन्धर्म्मूलं *सदाचारं*निषेवेत । २ । १५५ । सदाचाराद्यत्फलं भवति तदुच्यते*आचाराल्लभतइत्यादि । १ । १५६ ।

आचाराल्लभतेह्यायुराचारादीप्सिताःप्रजाः । आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ १५६ ॥

अलक्षणमशुभ लक्षणमाचारोहन्त्यथ दुराचार कार्य्यमाह दुराचारेत्यादि । १ । १५६ । १५७ ।

दुराचारोहि पुरुषोलोके भवतिनिन्दित:। दु:खभागीच सततंव्याधितोऽल्पायुरेवच ॥ १५७

सद्व,चैव्याय श्लोक:सदाचारस्यापरंफलमाह*सर्वलक्षणेत्यादिकं ॥ १५७ ॥

सर्व्वलक्षणहीनोपियः सदाचारवान्नरः। श्रद्दधानोऽनसूयश्चशतं वर्षाणिजीवति ॥ १५८

यद्यत्परवशं कर्म्म तत्तद्यत्नेन वर्जयेत्। यद्यदात्म वशन्तुस्यात्तत्त सेवेतयत्नत:॥ १५९

सर्व्वंपरवशं दु:खं सर्व्वमात्मवशं सुखम्। एतद्विद्यात् समासेनलक्षणं सुखदु:खयो:॥ १६०

यत्कर्म्म कुर्व्वतोऽस्यस्यात्परितोषोऽन्तरात्मन:। तत्प्रयत्नेनकुर्व्वीतविपरीतन्तुवर्जयेत् ॥ १६१

आचार्य्यञ्चप्रवक्तारं पितरंमातरं गुरुम्। नहिंस्याद्ब्राह्मणान्गाश्चसर्व्वांश्चैवतपस्विन:॥१६२

नास्तिक्यंवेदनिन्दाञ्च देवतानाञ्चकुत्सनम्। द्वेषंदम्भञ्चमानञ्च क्रोधंतैक्ष्ण्यञ्चवर्ज्जयेत् ॥ १६३

परस्यदण्डं नोद्यच्छेत् क्रुद्धोनैव निपातयेत्। अन्यत्र पुत्राच्छिष्याद्वाशिष्ट्यर्थं ताडयेत्तौ ॥ १६४

यद्यदित्यादि*ताडयेत्तु ता*वित्यन्ता:सप्त*श्लोका:स्पष्टार्था:॥ १ ॥ ब्राह्मणायेत्यादि ॥ १६४ ॥

ब्राह्मणायावगुर्य्यैवद्विजातिर्वधकाम्यया। शतंवर्षाणितामिस्रेनरके परिवर्त्तते ॥ १६५ ॥

द्विजातिर्वधकाम्यया * ब्राह्मणायावगुर्य्यदण्डमुद्यम्य*तामिस्रे नरके शतं* वर्षाणिपरिवर्त्तते ॥ १ ॥१६५

ताडयित्वातृणेनापि संरम्भान्मतिपूर्व्वकम। एकविंशतमाजाती: पापयोनिषुजायते॥१६६

ताडयित्वेत्यादि ॥ १६६ ॥ संरम्भादिति क्रुधादि*विहत्यारभटीं कृत्वा*एकविंशतितमाइति*एकविंशते: पूरणीएकविंशी ॥ १ ॥ एकविंशीमांजातीनां**जन्मनांमध्येऽतिशयेनपाप*योनिषुयाजातयस्ता*एकविंशतितमा इति ॥ २ ॥ ० ॥ १६६ ॥ ० ॥

अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गत:। दु:खंसुमहदाप्नोतिप्रेत्याप्राज्ञतयानर:॥ १६७

अयुद्यमानस्येत्यादि ॥ १६७ ॥ सर्व्वएवनरोब्राह्मणं*स्यायुद्धमानस्याङ्गतोऽसृक् * ग्रज्ञमप्राज्ञतयोत्पाद्य* प्रेतामहद्दु:खमाप्नोति ॥ १ ॥ ० ॥ १६७ ॥ ० ॥

शोणितंयावत:पांशून्संगृह्णाति महीतलात्। तावतोऽब्दानमुत्रान्यै:शोणितोत्पादकोऽद्यते ॥ १६८

शोणितमित्यादिनापर*दोषमाहायुद्धमानस्य*ब्राह्मणस्यासृक्पाते ।१।०॥१६८॥०॥ अयुध्यमा नस्यब्राह्मणस्याङ्गतः*शोणितंयेनोत्पादितं* मह्यांतस्माद्यावतःपांशून्गृह्णाति*तावतोऽब्दानमुत्र ।१। स तच्छोणित*तोत्पादको*नरोऽन्यैरद्यते इति ॥२॥०॥१६८॥

नकदाचिद्द्विजेतस्माद्विद्वानवगुरेदपि। नताडयेत्तृणेनापिनगात्रात्स्रावयेदसृक् ॥१६९

नकदाचिदित्यादि॥१६९॥ तस्मात्स्वामिस्नुनवको*ग्रतवर्षवाशादिदोषाद्विद्वान्* वधकामायंविद्विजे ॥१॥ ब्राह्मणेनावगुरेत्न*दण्डमुद्यच्छेत्तृणे*नापिनताडयेत्नच*गात्रादसृकस्रावयेत्*नलवधकामायादोषो* नच युद्ध्यमानस्यापात्॥२॥०॥१६९॥०॥

अधार्म्मिकोनरोयोहि यस्यचाप्यनृतंधनम्। हिंसारतश्चयोनित्यं नेहासौसुखमेधते ॥१७०

अधार्म्मिक इत्यादि॥१७०॥ अनृतंधनमितिधर्म्मार्थंव्ययं*नक्रियतेहिंसारतइत्यावेध* हिंसारतोनवे धहिंसायांरत*स्तस्यदोषाभावोक्तत्वात्॥१॥०॥१७०॥०॥

नसीदन्नपिधर्म्मेण मनोऽधर्म्मेनिवेशयेत्। अधार्म्मिकाणां पापाना माशुपश्यन् विपर्य्य यम् ॥१७१

नसीदन्नित्यादि॥१७१॥०॥ धर्म्मेणावसीदनधनादभावेन*क्लिश्यन्नपिनरोविद्वा*नधार्म्मिकाणामाशुवे व*विपर्य्ययंपापानान्तु*कर्म्मधनादिमप्यदं॥१॥ पश्यन्नाधर्म्मेमनोनिवेशयेदिति*कस्मान्नपापानांकर्म्म*ध नसम्पत्स्याम्नविप*दित्यत आहन त्यादि॥२॥०॥१७१॥०॥१७१॥

नाधर्म्मश्चरितोलोके सद्यःफलतिगौरिव। शनैरावर्त्तमानस्तुकर्त्तुर्मूलानिकृन्तति ॥१७२॥

नाधर्म्मइत्यादिः। नरेणचरितोयस्तुधर्म्मःसखलु*लोकेगौरिवदुग्धंन*सद्यःफलतिशनैःस* आवर्त्तमानस्तु कर्त्तु*र्मूलानिकालेकृन्तति॥१॥०॥१७२॥०॥

यदिनात्मनिपुत्रेषु नचेत्पुत्रेषुनप्तृषु। नत्वेवतुकृतोऽधर्म्मःकर्त्तुर्भवतिनिष्फलः॥१७३॥

कदाफलतीत्यतआह*यदीत्यादि॥१७३॥ यदिपापकर्म्मफलं* नात्मनिफलतिपुत्रेषुफलेत्*पुत्रेषुन चेत्फलति * नप्तृषुपौत्रेषुफलेत्। १। ततस्तुधर्म्मोनकर्त्तुर्निष्फलःस्या * दितिवंकालेफलति।१।० १७३॥०॥ यदावमेकेनकृतकर्म्मफल* मनास्मिन्फलतितदात्वनात्मत*कर्म्मफलमन्येभुङ्क्ते।२। ततो ऽनात्मकादिमास्तिकानांमत*मुपपद्यतेनास्मात्मेति।३। नैवंयोहिशुभाशुभं*कर्म्मकरोतिसएव* तत्तत्कर्म्म फलंभुङ्क्ते।४। कर्म्मणःकालान्तरफलकत्वा*द्यद्यात्मनिजीवतिनफलति* परलोकेपिनयदिफलति।५।

२॥ किन्तर्हि पितामहादयस्तेन * वर्त्मना येन प्रकारेण * सतां मार्गं * याताः स्तेन * प्रकारेण * तत्पुत्रादिरपि सतां मार्गं यायात्। २॥ यदपिता येन प्रकारेण पिता * पितामहादयश्चास * मार्गं याताः स्तेनप्रका * रेणासतां मार्गं यायात्॥ १॥ तेन प्रकारेण सतां * मार्गं * गच्छन्नधर्मेण * रिषाते न हिंसते ॥ इति ॥ ४॥ ०॥ १७८॥ ०॥

ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः। बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः॥१७९
मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत्॥१८०

ऋत्विगित्यादि॥१७९॥ १८०॥ ऋत्विगादिभिर्दासवर्गान्तैः सह * विवादं न समाचरेत् यामयो भगिनीस्नुषादय इति ॥१॥०॥ १७९॥ १८०॥ तैः सहविवादत्यागफलमाह * एतैर्विवादानित्यादि ॥ १ ॥ ० ॥ १८१ ॥

एतैर्विवादान्सन्त्यज्य सर्वपापैः प्रमुच्यते। एभिर्जितैश्च जयति सर्वांल्लोकानिमान्गृही॥१८१

विवादत्यागेन जितैरेभिरृत्विगादिभिः* * गृही सर्वानिमाल्लोकाञ्जयतीति ॥ १ ॥ १८१ ॥

आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः॥१८२

आचार्य इत्यादिना येन सह * विवादपरित्यागेन * यं लोकं जयति तत्तत्तद्व * तत्तल्लोके प्रभुः ॥१ ॥ ० ॥ १८२ ब्रह्मलोके प्रभुराचार्यः * स्तेन सहविवादपरित्यागेन * गृही ब्रह्मलोकं जयति ॥ २ ॥ प्रजापत्यलोके प्रभुः पिता तेन * सहविवादत्यागेन * तल्लोकं गृही जयति ॥ ३ ॥ इन्द्रलोके प्रभुरतिथिः * स्तेन सहविवादस्य * परित्यागेनेन्द्रलोकं गृही जयति ॥ ४ ॥ देवलोकस्य प्रभुरृत्विक् * तेन सहविवादस्य * परित्यागेन देवलोकं जयति ॥ ५ ॥ १० ॥ १८२ ॥

यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः। सम्बन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलौ॥१८३

यामय इत्यादि ॥ १८३ ॥ ० ॥ अप्सरसां लोकेशा * यामयस्तैः सहविवाद * परित्यागेनाप्सरोलोकं जयति ॥ ६ ॥ वैश्वदेवस्य लोके बान्धवा ईशा * स्तैः सहविवादत्यागेन * वैश्वदेवलोकं जयति ॥ ७ ॥ अपां लोके सम्बन्धिनो * वैवाहिकादय ईशा * स्तैः सहविवादत्यागे * नापां लोकं जयति । ८ । पृथिव्या लोके लोकेशौ मातृमातुलौ * ताभ्यां सहविवादस्य * त्यागेन भूलोकं जयति ॥ ९ ॥ ० ॥ १८३ ॥

आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः॥१८४

आकाशेशा इत्यादि ॥ १८४ ॥ बालादय आकाशेशा * स्तैः सहविवादत्यागे * नान्तरीक्षलोकं जयति । १ । ज्येष्ठो भ्राता पितासम * स्तेन सहविवादस्य * त्यागेन च * प्राजापत्य * लोकं जयति भार्या च * पुत्रश्च स्वीया तनुः ॥ २ ॥ ० ॥ १८४ ॥

छायास्वोदासवर्गश्च दुहिता कृपणं परम्। तस्मादेतैरधिक्षिप्तः सहेताऽसंज्वरः सदा ॥ १८५

छायेत्यादि ॥१८५॥ दासवर्गः स्वाच्छायासमा* दुहितापरं कृपणं *कृपापात्रमिति तत्सा * अतोऽयमादिभिरधिक्षिप्तः*सन्नपासंज्वरोमनसि*तापं नकृत्वासहेत् ॥ २॥ ०॥ १८५ ॥ ०॥

प्रतिग्रहसमर्थोऽपिप्रसङ्गं तत्रवर्जयेत्। प्रतिग्रहेणह्यस्याशुब्राह्मं तेजः प्रशाम्यति ॥ १८६

प्रतिग्रहेत्यादि ॥१८६॥ विद्याक्रियातपोभिःसम्पन्न एव*द्विजःप्रतिग्रहसमर्थो भवति* तद्यथायथाविधि यथाकालं । १ । उपनीतोगुरुकुले*वसन्ब्रह्मचर्यं चरनवेदान्*वेदौवेदामकशाखां बाधीत्यावि*सुतब्रह्मचर्यःस न्गुरुणानुमतः स्नात्वा ।२। समावर्त्तनेसविद्यासम्पन्नः* स्यान्नत्वविधिनावेदमधीत्यापि*विद्यासम्पन्नोभवति ।३। नापितेर्द्विनानायाक्षमधीत्यादि विद्यासम्पन्नोभवति । ४ । तर्थवविद्वान्दारान्गृहीत्वाग्नेऽमावसनगृहीत्वाचाग्नि*मग्निहोत्रादीनियः करोति*सक्रियासम्पन्नः स्यात् । ५ । इत्येवं विधोद्विजःप्रतिग्रहसमर्थः स्यात्तथाविधोपि *तत्रप्रसङ्गन्तुपुनःपुनः*प्रवृत्तिं वर्जयेत् ॥ १ ॥ कस्मात्हियस्मात्सतत * प्रतिग्रहेणब्राह्मं तेजो * वेदाध्ययनादिजनितं *तेजस्राशुप्रशाम्यति २ ॥ ० ॥ १८६ ॥

नद्रव्याणामविज्ञायविधिं धर्म्यं प्रतिग्रहे। प्राज्ञःप्रतिग्रहं कुर्यादवसीदन्नपिक्षुधा ॥ १८७

नद्रव्याणामित्यादि ॥ १८७ ॥ द्रव्याणां प्रतिग्रहे धर्म्यं विधिं न*विज्ञायप्राज्ञःक्षुधया* सीदन्नपिप्रतिग्रहं * नकुर्यात्दूषार्भेदेदोषात् ।२।१८७। कस्मिन्द्रव्ये कोदोषइत्यत आह*हिरण्यं भूमिमित्यादि ।१।१८८।

हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्। प्रतिगृह्णन्नविद्वांस्तु भस्मीभवतिदारुवत् ॥१८८

अविद्वान्वेदाध्ययन*विहीनोब्राह्मणोहिर*ण्यादीनिप्रतिगृह्णन्सन्*दारुवद्भस्मीभवति ॥१॥ ० ॥१८८॥०॥ तत्रयत्प्रतिग्रहेयत्*स्यात्तदाहहिरण्य*मायुरित्यादिश्लोकम् ॥ १ ॥ ० ॥ १८९ ॥ ० ॥

हिरण्यमायुरन्नञ्चभूर्गौश्चाप्योषतस्तनुम्। अश्वश्चक्षुस्त्वचं वासो घृतं तेजस्तिलाःप्रजाः॥१८९

अविदुषावेदमनधीयानेन**प्रतिगृहीतं हिरण्य*मन्नञ्चेतातेतस्यायु*रोषतउषदाहे भौवादिकोऽयम् ॥१ भूर्गौश्चेतातेचाविदुषाप्रति*गृहीतं तस्यवतनु*शरीरमोषतएव*मश्वश्चाविदुषाप्रति*गृहीतश्चक्षुरोषति ॥ २ वासोवस्त्रमविदुषा*प्रतिगृहीतं तस्यैव*त्वचं चर्म्मदेहस्योषति* ॥ ३ ॥ घृतमविदुषाप्रति * गृहीतं तेजओषति* तिलाअविदुषाप्रति* गृहीताःप्रजाओषन्ति ॥ ४ ॥ ० ॥ १८९ ॥ ० ॥ असमर्थस्यप्रतिग्रहफलमाह * अतपा इत्यादिश्लोकं ॥ १ ॥ ० ॥ १९० ॥

अतपास्त्वनधीयानःप्रतिग्रहरुचिर्द्विजः। अम्भस्यश्मप्लवेनेवसहतेनैवमज्जति ॥ १९० ॥

यस्तु द्विजो ब्राह्मणो वेद* मनधीयानश्चातपाश्च* प्रतिग्रहरुचिः ॥ १ ॥ स खल्वम्भसि अश्मप्लवेनेव तेन* दानेन दायकेनैव* सह पापे निमज्जति ॥ २ ॥ ० ॥ १९० ॥ ० ॥

**तस्मादविद्वान् बिभियाद्यस्मात्तस्मात् प्रतिग्रहात्। स्वल्पकेनाप्यविद्वान् हि पङ्के गौरिव सीदति ॥ १९१ ॥**

तस्मादित्यादि ॥ १९१ ॥ तस्माद्ब्राह्मणः प्रतिग्रहीतैव* पापेनैव दोषाद् अविद्वांस्तु* यस्मात्तस्मात् कस्मादपि* प्रतिग्रहात्तु बिभियात् ॥ १ ॥ कस्माद्यस्माद्धेतोरविद्वान् स्वल्पकेनापि* प्रतिग्रहेण गौ* रिव पङ्के पापे सीदति ॥ २ ॥ ० ॥ १९१ ॥ ० ॥ यस्मै दानं न देयं तदाह ॥

**न वार्य्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे। न बकव्रतिके विप्रे नावेदविदि धर्म्मवित् ॥ १९२ ॥**

न वार्य्यपीत्यादिना* यस्मिन् ब्राह्मणे किमपि* न देयं तदुच्यते ॥१॥१९२॥ वैडालव्रतिके द्विजे* ब्राह्मणे वेदविदि अपि दाता वार्य्यपि* जलमपि न प्रयच्छेत्* बकव्रतिके च विप्रे वेदविदि अपि* वार्य्यपि न प्रयच्छेत् ॥१॥ वैडालव्रतिक बकव्रतिकौ च* स्वयमेव वक्ष्यते* वेदविदि द्विजे द्विविधो विप्र* आचार्य्यो वेदपारगश्चेति श्रेष्ठत्वात् ॥२॥ समब्राह्मण ब्राह्मण* ब्रुवौ श्रेष्ठत्वाभावा* दिह न अनुवर्जितौ ॥३॥ एतासु न तयोर्द्दाने समद्विगुणफलमुक्तं* तद् यथा प्रदर्श्यते ॥४॥ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। सहस्रगुणमाचार्य्ये ह्यनन्तं वेदपारगे ॥ ५ ॥ ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवी च स भवेदब्राह्मणः समः ॥ ६ ॥ गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च। नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥ ७ ॥ अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः। सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥ ८ ॥ इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च। अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान् ॥ ९ ॥ मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः। इतिहासपुराणानि स भवेद्वेदपारगः ॥ १० इति ॥ समब्राह्मणे दानं यत् समफलं* ब्राह्मणब्रुवे च दानं* यद् द्विगुणं फलमुक्तं* तयोर्द्दातुरादावेव* पारत्रिकफलाभिप्रायेण ॥ ११ ॥ अवेदविदोस्तयोः समब्राह्मण* ब्राह्मणब्रुवयोर्द्दाने* दातृदातारौ परलोकानर्थः स्या* दिति तस्माद्युक्तमुक्तं ॥१२॥ अत्रिसंहितायां दश* विधो ब्राह्मणोऽभिहित* स्तत्र देवमुनिद्विजा* स्त्रयो वेदविदः* शेषा अवेदविदः स्यु * स्तद् यथा प्रदर्श्यते ॥ १३ ॥ देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः। पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः ॥ १४ ॥ सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम्। अतिथिं वैश्वदेवं यः कुर्य्यात् स देव उच्यते ॥ १५ ॥ शाके पत्रे फले मूले वनवासे सदा रतः। निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥ १६ ॥ वेदान्तं पठते नित्यं सर्व्वसङ्गं परित्यजेत्। साङ्ख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥ १७ ॥ अस्त्राहताः सधन्वानः सङ्ग्रामे सर्व्वसम्मुखे। आरम्भे निर्ज्जिता येन स विप्रः क्षत्र उच्यते ॥ १८ ॥

कपिक्रमेरतोवयगताच्छ्रतिपालकः। वाणिज्योत्रवसाययसविप्रोवैग्राउच्यते ॥ १९ ॥ लाक्षालवण्णमिश्र कुसुम्भं चीरसर्पिषी। विक्रेतामधुमांसानां सविप्रःशूद्रउच्यते ॥ २० ॥ चौरश्चतस्करश्चैव सूचकोदंशकस्तथा। मत्स्यमांसे सदालुब्धोविप्रोनिषादउच्यते ॥ २१ ॥ ब्रह्मतत्त्वं नजानातिब्रह्मसूत्रेणगर्व्वितः। तेनैवच सपापेनविप्रःपशुरुदाहृतः ॥ २२ ॥ वापीकूपतडागानामाराममसरःसुच। निःशङ्कंरोधकश्चैव सविप्रोम्लेच्छउच्यते ॥ २३ ॥ क्रियाहीनश्चमूर्खश्च सर्व्वधर्म्मविवर्जितः। निर्दयःसर्व्वभूतेषु विप्रश्चाण्डालउच्यते ॥ २४ ॥ वेदैर्विहीनाश्चपठन्तिशास्त्रं शास्त्रेणहीनाश्चपुराणपाठाः। पुराणहीनाःकृषिणोभवन्ति भ्रष्टास्ततोभागवता भवन्ति २५ ॥ ज्योतिर्विदोह्यथर्व्वाणःकीराःपौराणपाठकाः। श्राद्धे यज्ञे महादाने नवरणीयाःकदाचन ॥ २६ ॥ श्राद्धञ्चपितृणांमोघं दानञ्चैवतुनिष्फलम्। यज्ञेचफलहानिःस्यात्तस्मात्तान्परिवर्जयेत् ॥ २७ ॥ इति ॥ १९२ ॥०॥ एषुवैडालव्रतिक*बकव्रतिकावेदवित्सुदानेषु*दु*अमाह्नविधिनेत्यादि ॥ १ ॥ ० ॥ १९२ ॥

त्रिष्वप्येतेषुदत्तंहिविधिनाप्यर्जितंधनम्। दातुर्भवत्यनर्थायपरत्रादातुरेवच ॥ १९३ ॥

विधिनाधर्म्मेणापार्जितंधन*मेतेषुवैडालव्रतिकवक*व्रतिकावेदवित्सुदत्तं ॥१॥ दातुरादातुश्चपरत्रानार्थाय*भवतीत्यतस्तान् त्यजेत् ॥ २ ॥ ० ॥ १९३ ॥ ० ॥ ० ॥

यथाप्लवेनौपलेननिमज्जत्युदकेतरन्। तथानिमज्जतोऽधस्तादज्ञौदातृप्रतीच्छकौ ॥ १९४ ॥

यथेत्यादि ॥ १९४ ॥ औपलेनप्रस्तरकृतेन*प्लवेनद्रोण्यायथैव* तरंस्तेनैवप्लवेन*सहोदकेमज्जति ॥१॥ तथातेषुदातप्रतीच्छकश्चेति* द्वावप्यधस्तान्मज्जतः ॥ २ ॥ ० ॥ १९४ ॥ ० ॥ ननुकोऽसावाह्मणोवैडालव्रतिकः* कश्चवकव्रतिकइ*त्याशङ्क्यतदुभयलक्षणमाह*धर्म्मध्वजीसदेत्यादि ॥ १ ॥ ० ॥ १९५ ॥ १९६ ॥

धर्म्मध्वजीसदालुब्धश्छाद्मिकोलोकदम्भकः। वैडालव्रतिकोज्ञेयोहिंस्रःसर्व्वाभिसन्धकः ॥ १९५

धर्म्मोध्वजंचिह्नमस्यास्तीतिधर्म्म * ध्वजीलोकेधार्म्मिकता * चिह्नं यःप्रकाशयति ॥ १ ॥ सदाधनादिषु लुब्ध*श्छाद्मिकोधार्म्मिकजन *व्याजेनव्यवहरति ॥ २ ॥ लोकदम्भकोलोकेषु * दर्पकारीहिंस्रःसर्व्वाभिसन्धक सर्व्वेषांदोषच्छिद्राभि *प्रायिकारीसब्राह्मणो*वैडालव्रतिकःस्मृतः ॥ २ ॥ ० ॥ १९५ ॥ ० ॥

अधोदृष्टिर्नैष्कृतिकःस्वार्थसाधनतत्परः। शठोमिथ्याविनीतश्चवकव्रतचरोद्विजः ॥ १९६ ॥

अधोदृष्टिरित्यादि ॥ १९६ ॥ ० ॥ सविनयत्वख्यापनायपोविप्रः*सततमधोदृष्टिःस्यात्*नैष्कृतिकःप्रवञ्चकः *स्वार्थसाधनतत्परः*शठादिश्चवकव्रतिकः ॥ १ ॥ ० ॥ १९६ ॥ ० ॥

येवकव्रतिनोविप्रायेचमार्जारलिङ्गिनः। तेपतन्त्यन्धतामिस्रेतेनपापेनकर्म्मणा ॥ १९७ ॥

ननु तयोर्दानं प्रतिषेधोऽस्तु*कात्वनयोःपरत्र तु*गतिःस्यादित्यतआह* येवकव्रतिन इत्यादि॥ १ ।०। १९७॥०।' स्पष्टार्थोऽयंश्लोकः॥ १९७॥

**नधर्मस्यापदेशेनपापं कृत्वाव्रतंचरेत्। व्रतेनपापंप्रच्छाद्यकुर्व्वन्स्त्रीशूद्रदम्भनम्॥ १९८**

नधर्मेत्यादि॥ १९८॥ पापंकृत्वाधर्म्मार्थ्या * देशेनानेनकारणेन*नायंधर्म्मइत्येवमपदेशेन॥ १॥ स्त्रीशूद्रादिमूर्खदम्भनंमोहनं*कुर्व्वन्व्रतेनपापंप्रच्छाद्य*नव्रतंचरेदिति॥ २॥ ०॥ १९८॥ ०॥

**प्रेतेहचेदृशाविप्रागर्ह्यन्तेब्रह्मवादिभिः। छद्मनाचरितंयच्चव्रतंरक्षांसिगच्छति॥ १९९॥**

प्रेतेत्यादि॥ १९९॥ ईदृशाच्छद्मनाव्रत * माचरन्तोविप्राब्रह्म * वादिभिरिहप्रेत्यचगर्ह्यन्ते॥ १। कस्मात्। छद्मनायच्चव्रतंचरितंस्या*त्तद्व्रतंरक्षांसिगच्छति*नतुदेवानितिशेषः॥ २॥ ०॥ १९९॥ ०॥

**अलिङ्गीलिङ्गिवेशेनयोवृत्तिमुपजीवति। सलिङ्गिनांहरत्येनस्तिर्य्यग्योनौचजायते॥ २००॥**

अलिङ्गीत्यादि। २००। यस्ययच्चिह्नंनभवतिसएव* यस्तस्यलिङ्गिनोवेशेनवृत्ति*मुपजीवतिसतल्लिङ्गिनामेनः*पापंहरतितिर्य्यग्योनौचजायते॥ १॥ ०॥ २००॥ ०॥

**परकीयनिपानेषुनस्नायाच्चकथञ्चन। निपानकर्त्तुःस्नात्वातुदुष्कृतांशेनलिप्यते॥ २०१॥**

परकीयेत्यादि॥ २०१॥ निपानंजलाशयःपरकीयेषु*देवेभ्योऽनुत्सृष्टेषु निपानेषुकदाचन* पञ्चपिण्डानतुद्धृत्य*ब्राह्मणोनस्नायात्कस्मात्॥ १॥ परकीयनिपानेषु*स्नात्वानिपानकर्त्तुःदुष्कृतस्यांशेनलिप्यते॥ २॥ उक्तञ्चयाज्ञवल्क्येन*पञ्चपिण्डानतुद्धृत्यनस्नायात्परवारिषु। उद्धृत्यवाचतःपिण्डानपारक्यंस्नानमाचरेत्। इति। ३॥ अत्रिसंहितायाञ्च। अलाभेदेवखातानांह्रदेषुचसरःसुच। उद्धृत्यचतुरःपिण्डान्पारक्येस्नानमाचरेत्॥ ४॥ इति॥ ०॥ २०१॥ ०॥

**यानशय्यासनान्यस्यकूपोद्यानगृहाणिच। अदत्तान्युपयुञ्जानएनसःस्यात्तुरीयभाक्॥ २०२**

यानेत्यादि॥ २०२॥ अस्यपरस्ययानादीनियानितत् * स्वामिनापरेषामुप * योगार्थंवाचाविधिनावादेवेभ्यो*नदत्तानितानिउपयुञ्जानःपुरुषः*तस्यैनसःपापस्य*तुरीयांशभाग्भवति। २। ०। २०२।

तर्हिक्वस्नायात्? इत्यतआह*नदीषुदेवखातेत्यादि। १। ०। २०२। ०।

**नदीषुदेवखातेषुतडागेषुसरःसुच। स्नानंसमाचरेन्नित्यंगर्त्तप्रस्रवणेषुच॥ २०३॥**

अष्टसहस्रधनूंषियत्रदेशे*इधिकादेशगामिनी*नदीभवतितत्रोनूनादेशगो*गर्त्तोभवतितदुक्तं* । १। धनुःसहस्राण्यष्टौचगतिर्य्यासांनविद्यते। नतानदीशब्दवहागर्त्तास्तापरिकीर्त्तिताः। इति। २। देवखातानिदेवादकस्माद्यानि*खातानितडागानिस्वल्पसरः॥ प्रस्रवणंपर्व्वतेभ्यः*प्रसृतजलाशयइति। २। ०। २०३।

स्त्री*क्लीवपुरुषाधमयत्र जुह्वति ॥ १ ॥ तद्देतद्विद्विषाणां * देवतापत्याप्रतीप° * माह्यविपरीतमति* तस्मात्तद्गृहाद्विधादि*यत्रान्नं परिवर्जयेत् ॥ २ ॥ २०६ ॥ ० ॥

मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन। केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः ॥२०७

मत्तेत्यादि ॥ २०७ ॥ स्पष्टार्थोऽयं श्लोकः ॥ २०७ ॥ ० ॥

भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया। पतत्रिणावलीढञ्च शुना संस्पृष्टमेव च ॥ २०८

भ्रूणघ्नेत्यादि ॥ २०८ ॥ ये भ्रूणघ्नास्तैर्वीक्षितं* मन्नं न भुञ्जीत तथोदक्यया * रजस्वलया संस्पृष्टं * मन्नं ब्राह्मणो न भुञ्जीत ॥ १ ॥ पतत्रिणा मक्षिकादिनावलीढं * शुना स्पृष्टञ्चान्नं ब्राह्मणो* न कदाचन भुञ्जीत ॥ २ ॥ ० ॥ २०८ ॥

गवा चान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः। गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् ॥ २०९

गवेत्यादि ॥ २०९ ॥ गवा स्त्रिग्धघ्राणे*नोपघ्रातमन्नं न भुञ्जीत तथान्यः * विशेषतो घुष्टान्नं ॥ १ ॥ यत्र बुभुक्षितो योयोऽस्ति स* समागतो भुङ्क्तामिति* घोषणाकृतमन्नं न भुञ्जीत ॥ २ ॥ गणान्नं नाट्यादिषु श्रेणिबद्धो हि* गणो गणिका वेश्या*विदुषा यदन्नं निन्द्यते *तच्चान्नं न भुञ्जीत ॥ ३ ॥ ० ॥ २०९ ॥

स्तेनगायनयोश्चान्नं तक्ष्णो वार्धुषिकस्य च। दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥ २१०

स्तेनेत्यादि ॥ २१० ॥ स्तेनस्य गायनस्य चान्नं तक्ष्णः*काष्ठतक्षरथकारादेरप्यन्नं * वृद्ध्युपजीविनश्चान्नं न भुञ्जीत ॥ १ ॥ दीक्षितस्य तावत्सवियप्रणामेव* कदर्यस्यमात्मानं तिरस्कृत्य संचयशील(चार) * मायाविनस्याद्विजातेरन्नं न भुञ्जीत ॥ २ ॥ बद्धस्य निगडस्य चेति निगडः*कारागारस्तत्रस्थस्य*बद्धस्यान्नान्नाद्यद्बद्धमा ॥ ३ ॥ ० ॥ २१० ॥ ० ॥

अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च। शुक्तं पर्युषितञ्चैव शूद्रस्योच्छिष्टमेव च ॥ २११

अभिशस्तस्येत्यादि ॥ २११ ॥ अभिशस्तो महापापित्वयाख्यातः*षण्डः क्लीवः पुंश्चलीति* बहुपुरुषगामिनी स्वैरस्थिता वेश्या च*दाम्भिको योगादर्पकृत् ॥ १ ॥ शुक्तमपर्युषितममूरसापन्नं पर्युषितं निशोषितं *शूद्रोच्छिष्टं° शूद्रभुक्तादनन्तरं *न भुञ्जीत तावद्वर्त्तते ॥ २ ॥ ० ॥ २११ ॥ ० ॥

चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः उग्रान्नं सूतिकान्नञ्च पर्याचान्तमनिर्दशम् ॥ २१२

चिकित्सकस्येत्यादि ॥ २१२ ॥ तृतीयाध्याये अधिकारः कृतः । वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् । गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्वितामित्यधिकारं कृत्वा सर्वमिदमुक्तं ॥ तथा च यो ब्राह्मणः कृतज्ञो यथाविधि यथा

पूर्त्तं धर्म्मा न वैदिकः । इति वैदिकोऽग्निहोत्रादाविष्टे ॥ १ ॥ एतद्विद्वान् प्रमादोऽयमाचष्टे * इष्टमन्तर्वेदि यज्ञादि*कर्म्म तितदसरे *वानिवचनदर्शनात् ॥ ३ ॥ ० ॥ २२६ ॥ ० ॥

दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् । परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ २२७

दानधर्म्ममित्यादि ॥ २२७ ॥ नित्यं दानधर्म्मं स्नातकः परितुष्टेन भावे सदानसत्पात्र*मासाद्य शक्तितो निषेवेत ॥ १ ॥ ऐष्टिकपौर्त्तिकं धर्म्मं नित्यं *स्नातको निषेवेतेति ॥ २ ॥ ० ॥ २२७ ॥

यत्किञ्चिदपि दातव्यं याचितेनानसूयया । उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्व्वतः ॥२२८

यत्किञ्चिदित्यादि ॥ २२८ ॥ याचितेन स्नातकेन *याचकायसमग्रा... *अनसूयया यत् *किञ्चिदपि दातव्यं ॥ १ ॥ नहि सर्व्वं दानपात्रं लभ्यते *सततदानकरणे *कचित्तथाविधं दान*पात्रमुत्पत्स्यते यत् *सर्व्वतः पापात्तारयति ॥ २ ॥ ० ॥ २२८ ॥ ० ॥

वारिदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २२९ ॥

वारिदइत्यादि ॥ २२९ ॥ वापीकूपादिभिर्वारिदः *तृप्तिमाप्नोति *अन्नदोऽक्षयं सुखमाप्नोति* तिलप्रद इष्टां प्रजामाप्नोति*दीपदउत्तमं चक्षुराप्नोतीति ॥ २ ॥ ० ॥ २२९

भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥२३०

भूमिदइत्यादि ॥ २३० ॥ स्पष्टार्थोऽयं ॥ २३० ॥

वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥२३१

वासोदइत्यादि ॥ २३१ ॥ ब्रध्नः सूर्य्यस्तस्य विष्टपं स्थानं* ॥ २३१ ॥

यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥२३२

यानशय्येत्यादि ॥ २३२ ॥ नौकादोलादियानं * खट्टादिशय्यां यो ददाति स भार्य्यामाप्नोति*प्रीतोऽयमर्थः ॥ १ ॥ ब्रह्मदो वेदस्याध्यापनेन दाता*ब्रह्मसार्ष्टितां ब्रह्मणः*सलोकतामाप्नोतीति ॥ २ ॥ ० २३२ ॥

सर्व्वेषामेव दानानां ब्रह्मदानं विशिष्यते । वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥२३३

सर्व्वेषामित्यादि ॥ २३३ ॥ वार्य्यन्नादीनां सर्व्वेषां * दानानां दानेभ्यो ब्रह्म * दानमेव विशिष्यते ॥ १ ॥ ० ॥ २३३ ॥

येन येन तु भावेन यद्यद्दानं प्रयच्छति । तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥ २३४ ॥

येनेत्यादि ॥ २३४ ॥ प्रतिपूजितः परत्र फलदेन * प्रतिपुनः सत्कृतः * ॥ २३४ ॥

योऽर्च्चितं प्रतिगृह्णाति ददात्यर्च्चितमेव च । तावुभौ गच्छतः स्वर्गं नरकन्तु विपर्य्यये ॥ २३५ ॥

योऽर्च्चितमित्यादि ॥ २३५ ॥ विपर्य्यये इतरानर्च्चितं वस्तु यो * ददाति यश्च गृह्णाति * तावुभौ नरकं गच्छतः १ ॥ ० ॥ २३५ ॥ ० ॥

न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम् । नार्त्तोऽप्यपवदेद्विप्रान्न दत्त्वा परिकीर्त्तयेत् ॥ २३६ ॥

न विस्मयेतेत्यादि । २३६ ॥ अनेन तपसेदं किं स्यादिति एवं * न विस्मयेतेष्ट्वा यज्ञं * कृत्वा च न मिथ्यावाक्यं * वदेदार्त्तः पीडितोऽपि विप्रान्नापवदेत् तथा ॥ १ ॥ दत्त्वा यत्किञ्चिन्न तत् कदाचन * परितः सर्व्वतः कीर्त्तयेत् । २ । ० २३६ ॥

यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् । आयुर्विप्रापवादेन दानञ्च परिकीर्त्तनात् ॥ २३७ ॥

एषां फलमाह यज्ञ इत्यादि ॥ २३७ । विस्मयात्तपः क्षरति * यज्ञो मिथ्योक्त्या क्षरति * विप्रापवादेनायुः क्षरति चावर्त्ते * परिकीर्त्तनाद्दानं क्षरति । १ । ० । २३७ । ०

धर्म्मं शनैः सञ्चिनुयाद्वल्मीकमिव पुत्तिकाः । परलोकसहायार्थं सर्व्वभूतान्यपीडयन् ॥ २३८ ॥

धर्म्मं शनैरित्यादि । २३८ । ० । यथा पुत्तिका वल्मीकं * कृत्कीटाः शनैर्धीरं धीवं बाल्मीकं सञ्चिन्वन्ति । १ । तथा विद्वान् सुतकोद्विजः परलोकसहायार्थं शनैः * धर्म्मं सर्व्वाणि भूतानि * नापीडयन् सञ्चिनुयात् । २ । ० ॥ २३८

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारं न ज्ञातिर्द्धर्म्मस्तिष्ठति केवलः ॥ २३९

नामुत्रेत्यादि । २३९ । हि यस्मादमुत्र परलोके सहायार्थं पिता * माता च तौ न तिष्ठतः । १ । न पुत्रश्च दाराश्च सहगा भार्य्या तिष्ठति न ज्ञातिस्तिष्ठति * केवल एको धर्म्मस्तिष्ठति * तस्माच्छनैर्धर्म्मं चिनुयात् । २ । विष्णुसंहितायामुक्तं हि * दृष्ट्वा लोकमनाक्रन्दं म्रियमाणं स्वबान्धवान् । धर्म्ममेकं सहायार्थं वरयध्वं सदा नराः । १ । मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् । जायावर्ज्जं हि सर्व्वस्य याम्यः पन्था निरुध्यते । धर्म्म एकोऽनुयात्येनं यत्र क्वचन गामिनम् । ननु सारे नृलोकेऽस्मिन् धर्म्मं कुरुत माचिरम् । इति । ५ । पराशरेणाप्युक्तं यथा * मृते भर्त्तरि या नारी ब्रह्मचर्य्ये व्यवस्थिता । सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः । ६ । तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे । तावत्कालं वसेत् स्वर्गं भर्त्तारं यानुगच्छति । ७ । व्यालग्राही यथा व्यालं बिलादुद्धरते

महर्षिपितृदेवानां गत्वानृण्यं यथाविधि। पुत्रे सर्व्वं समासज्य वसेन्माध्यस्थ्यमाश्रितः॥२५७

महर्षीत्यादि ॥ ० ॥ २५७ ॥ ० ॥ ब्राह्मण स्वाध्यायेन महर्षीणां * आनृण्यं नित्यश्राद्धादिना पितृणां * आनृण्यमग्निहोत्रादिना देवानां * आनृण्यं यथाविधि गत्वा ॥ १ ॥ पुत्रे सर्व्वमर्थजातं समासज्य समर्प्य गार्हस्थ्य माध्यस्थ्यं * नच्छिन्नवनवासी * तोषं भूत्वा गृहे वसेत् ॥ २ ॥ ० ॥ २५७ ॥ ० ॥

एकाकी चिन्तयेन्नित्यं विविक्ते हितमात्मनः। एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति॥२५८

एकाकीत्यादि ॥ ० ॥ २५८ ॥ आत्मनो हितं पारलौकिकं नानात् * शेषं सर्व्वं स्पष्टमिति। १। ०। २५८। ०

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती। स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः॥ २५९ ॥

एषोदितेत्यादि। २५९। गृहस्थस्य प्रायेण विप्रस्य * सङ्कुचितवृत्तिपादस्य * शाश्वती चिरं योदिता स्नातक * व्रतकल्पश्च उक्तः ॥ १ । ० ॥ २५९ । ० ।

अनेन विप्रो वृत्तेन वर्त्तयन् वेदशास्त्रवित्। व्यपेतकल्मषो नित्यं ब्रह्मलोके महीयते ॥ २६० ॥

अनेनेत्यादि श्लोकः स्पष्टार्थः। २६०। ०।

॥*॥*॥ इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * चतुर्थोऽध्यायः ॥*॥४॥*॥

इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * वैद्यगङ्गाधर कृतायां प्रमाद * भञ्जन्यां चतुर्थाध्याय प्रमादभञ्जिनी ॥*॥*॥*॥

---

यथोद्दिष्टक्रमेण * भक्ष्याभक्ष्यं वक्तव्यं * तत्रर्षीणां प्रश्नमाह।

श्रुत्वैतानृषयो धर्म्मान् स्नातकस्य यथोदितान्। इदमूचुर्महात्मानमनलप्रभवं भृगुम् ॥ १ ॥

श्रुत्वेतानिति। १। अनलप्रभवं भृगुमिति प्रभवः प्रभावो नतजन्म तात्प्रकाशो वा यथा * हिमवतो * गङ्गाप्रभवतीत्यादि। १। ०। १।

एवं यथोक्तं विप्राणां स्वधर्म्ममनुतिष्ठताम्। कथं मृत्युः प्रभवति वेदशास्त्रविदां प्रभो ॥ २ ॥

एवमित्यादि ॥ २ ॥ मृत्युः प्रभवति मारणाय समर्थो * भवतीति नात्र प्रकाशः प्रभवः। १। ०। २। तत्रोत्तरमाह।

सतानुवाचधर्म्मात्मामहर्षीन्मानवोभृगुः। श्रुयतांयेनदोषेणमृत्युर्विप्रान्जिघांसति ॥ ३ ॥

सतानित्यादि । २ ॥ ० । मानवोमनोरपत्यं । १ । ० । ३ । ० ॥

अनभ्यासेनवेदानामाचारस्यचवर्ज्जनात्। आलस्यादन्नदोषाच्चमृत्युर्विप्रान्जिघांसति ॥४॥

अनभ्यासेनेत्यादि ॥ ४ ॥ वेदानामनभ्यासेन*चाचारस्यवर्ज्जनाच्च*आलस्याच्चान्नदोषाच्च* मृत्युर्विप्रान्जिघांसति ॥ १ ॥ ४ ॥ तत्रादावस्त्रयःस्फुटार्था।*अन्नदोषांस्त्ववदति*लशुनमित्यादिश्लोकैः ॥ १ ॥ ० ॥ ५ ॥ ०

लशुनंगृञ्जनञ्चैवपलाण्डुंकवकानिच। अभक्ष्याणिद्विजातीनाममेध्यप्रभवाणिच ॥ ५ ॥

चकाराल्लशुनादिगन्धरसानि*द्रव्याणिवर्ज्ज्यानीत्युक्तानिविष्णुना*प्रायश्चित्तविधानेन*तानिर्द्दिशानितद्यथा ॥२ लशुनपलाण्डुगृञ्जन*गन्धिविड्वराह*ग्रामकुक्कुटवानर*गोमांसभक्षणेनच*चान्द्रायणंकुर्य्यादिति। कवकाणिछत्राकाणि कानीतिकश्चित्वर्णंपश्नत्तान् ॥ ५ ॥

लोहितान्वृक्षनिर्य्यासान्व्रश्चनप्रभवांस्तथा। शेलुंगव्यञ्चपेयूषंप्रयत्नेनविवर्ज्जयेत् ॥ ६ ॥

लोहितानित्यादि। ६। वृक्षनिर्य्यासान्स्वतोवृक्षान्निर्गतान्*स्वरसविशेषान् वृक्षस्यव्रश्चना*च्छेदात्प्रभवन्तिये* निर्य्यासास्तान्रक्तवर्णान। १। शेलुंश्लेष्मातकफलं*गव्यंपेयूषंसद्यःप्रसूतायागोःक्षीरंपेयूषं १ । ० । ६ ।

वृथाकृसरसंयावंपायसापूपमेवच। अनुपाकृतमांसानिदेवान्नानिहवींषिच ॥ ७ ॥
अनिर्दशायागोःक्षीरमौष्ट्रमैकशफंतथा। आविकंसन्धिनीक्षीरंविवत्सायाश्चगोःपयः ॥ ८ ॥
आरण्यानाञ्चसर्व्वेषांमृगाणांमाहिषंविना। स्त्रीक्षीरञ्चैववर्ज्ज्यानिसर्व्वशुक्तानिचैवहि ॥९॥

वृथेत्यादयस्त्रयः श्लोकाः ॥ ७ । ८ । ९ । ०। वृथेतिदेवतापितॄन् * नार्हन्तियेतेतु * वृथाकृसरास्तिलतण्डुलाःपक्वाः ॥ १ । कात्यायनेनोक्तं यथा*तिलतण्डुलसंपक्वःकृसरःसोऽभिधीयते इति । २ ॥ संयावोगोधूमचूर्णं *दुग्धघृतगुडैश्च संमिश्रपक्वं *पायसःक्षीरेणपक्व*मन्नं यदुच्यते परमान्नमिति ॥ २ ॥ अपूपंवटकमेतानिवृथा*पक्वानिवर्ज्जनीयानि*मन्त्रेणपर्य्युक्षणप्रोक्षण*मुपाकरणमुच्यते ॥ ४ ॥ तदुपाकरणहीनभक्ष्य* पशुमांसानिवर्ज्ज्यानि*देवान्नानिदेवतार्थंकृतान्नानि* प्रागुद्देवभोदानादेवं * हवींषिचप्राग्होमात् ॥ ५ ॥०॥ ७ ॥०॥ अनिर्दशायागोःप्रसूताया*गोर्महिष्याश्चजायाश्च* दशाहाभ्यन्तरेक्षीरं* वर्ज्ज्यमिकक्षंधमेन ॥ १॥ अनिर्दशाहगोःक्षीरमाजंमाहिषमेवच ॥ इति ॥ तत्रगव्यपेयूषसा* पानेप्रायश्चित्तविशेषात्पृथगुक्तिः ॥ २ ॥ सदैरौष्ट्रमैकशफमश्वखरादीनांक्षीरं *माविकञ्चक्षीरंवर्ज्ज्यम् ॥ १ ॥ सन्धिनीक्षीरंवृषभसन्धत्ते* यायद्दिनंयभते

त*द्विनेतसाऽक्षीरंवर्ज्ज*विवत्साया अगोःपयोवर्जनीयं ॥ २ । ० ॥ ७ ॥ ० । आरण्यानां सर्व्वेषां मृग* जातीनां क्षीरं वर्ज्जं विनामाहिष*क्षीरमारण्यामहिषी*क्षीरं पेयमिति अर्थः ॥१॥ स्त्रीलोकानां क्षीरं द्विगणावर्ज्ज* सर्व्वाणिचशुक्तानियानि*न्यन्म जातिद्रव्याणि*काले जातानि रसानि ॥ २ तानिचेत् तानिद्वया *कसरादीनिभक्षणार्थं*द्विजैर्वर्ज्जानिभवन्तिः ॥ १ ॥ ० ॥ ८ ॥ ० ॥

दधिभक्ष्यञ्चशुक्तेषुसर्व्वञ्चदधिसम्भवम्। यानिचैवाभिषूयन्ते पुष्पमूलफलैःशुभैः ॥ १० ॥

शुक्तेषु*अदमाह*दधिभक्ष्य*श्चेत्यादि ॥ १ ॥ शुक्तेषुमध्ये दधिभक्ष्यं भवति* दधिसम्भवं*सर्व्वं तक्रमोक्षा*मस्तुप्रभृतिकं भक्ष्याम् ॥ २ ॥ शुभैःपुष्पमूलफलैर्यानिद्राभि*षूयन्ते सन्धीयन्ते काले * जातामानाम वारिष्ट*प्रभृतीनिशुक्तानिद्य*स्तानिभक्ष्याणि भवन्ति ॥ ३ ॥ ० ॥ १० ॥ ० ॥

क्रव्यादान्शकुनीन्सर्व्वांस्तथाग्रामनिवासिनः। अनिर्दिष्टांश्चैकशफांष्टिट्टिभञ्चविवर्जयेत्॥११॥

क्रव्यादानित्यादि ॥ ११ ॥ मांसादान् शकुनीन् शोनगृध्रादीन्*ग्रामनिवासिनःसर्व्वान् * शकुनीन्पारावतचटकादीन् *भक्षणार्थं विवर्जयेत् ॥ १॥ ये चैकशफायश्च निर्दिष्टास्ते भोः*ऽनाने कशफान् खरादीन् भक्षणार्थं विवर्जयेत् *दुष्ट्यान्श्चोयश्च निर्दिष्टौ*तयोर्मांसं भक्षयेत् ॥ २॥ श्रुतिद्दुष्ट्यान्वाङ्कमानामेनेति*टिट्टिभकपक्षिभेदं *भक्षणार्थं निवर्जयेत् । २ ॥ ११ ॥ ० ॥

कलविङ्कंप्लवंहंसंचक्राङ्गंग्रामकुक्कुटम्। सारसंरज्जुवालञ्चदात्यूहंशुकसारिके ॥ १२ ॥

कलविङ्कमित्यादि ॥ १२ ॥ कलविङ्कोहरिद्राभमस्तकश्चटकभेदो*नयामयाचौतेनेह * ग्रामशुकाः ग्रामेष्ववनीन*भेकःपक्षिप्रकरणात् ॥ १ ॥ चक्राङ्गश्चक्रवाकःपक्षी*शकुनीन्ग्रामनिवासिनः * सर्व्वानित्यनेनग्रामकुक्कुटस्यावर्जने *सिद्धे सति ॥ १ ॥ पुनर्ग्रामकुक्कुटमिति*तद्वर्जनवचनं प्रायश्चित्तभेद*ज्ञापनार्थं नपुन*रारण्यकुक्कुटविधायं ॥ २ ॥ ग्रामकुक्कुटवर्जने *नारण्यकस्याभक्ष्यत्व*सिद्धे रज्जुवालःपक्षिविशेषः। दात्यूहोदात्यूहइत्याख्यो*लोके शुकसारिके प्रसिद्धे ॥ २ ॥ १२ ॥ ० ॥

प्रतुदानजालपादांश्चकोयष्टिंनखविष्किरान्। निमज्जतश्चमत्स्यादान्सौनंवल्लूरमेवच ॥ १३॥

प्रतुदानित्यादि ॥ १३ ॥ प्रतुदाञ्च्चाहायुर्व्वेदे कता*शतपत्रादिपक्षिणां । १ । भक्षयन्तोनात्ववस्तोक्ताः* विकीर्य्यविष्किराश्चे वप्रतुदाप्रतुदास्तथा ॥ २ ॥ शतपत्राभङ्गराजकोयष्टिजीवजीवकाः। कैरातःकोकिलोत्यूहोगोपापुत्रःप्रियात्मजः ॥ ३ ॥ लटटालटटपकोरभ्रवटहाहिरिडमाणकाः ॥ जटीदुन्दुभिवास्कारलोहपृष्ठकुलिङ्गकाः ॥ ४ ॥ कपोतशुकसारङ्गाश्चिरटीकङ्कयष्टिकाः। शारिकाकलविङ्कश्चटकोऽङ्गारचूड़कः ॥ ५ ॥ पारावतःपाग

षे दिति ॥ २ ॥ एतद्विद्वान् प्रमादी*वाचष्टे एकचरान् सर्पादीनिति * तदसाधुअख्याता*श्चेतिचकारश्चैर्यथा पसः ॥ ३ ॥ ० ॥ १७ ॥ ० ॥

श्वाविधं शल्लकं गोधां खड्गकूर्म्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥ १८ ॥

पञ्चनखवर्जनेऽप*वादमाह श्वाविधमिति ॥ १ ॥ ० । १८ ॥ ० ॥ शल्लको द्विविधः दीर्घशल्लकः*क्षुद्रशल्लकश्चैव * यः श्वानं शल्लकैराविधाति स श्वावित् ॥ १ ॥ पञ्चनखेषुमध्ये चैतान् *पञ्चपञ्चनखान् भक्ष्यानाहुः कृतएकपङ्क्तिदन्तान् *सर्व्वानुष्ट्रवर्जं छाग*मेषादीन् भक्ष्यानाहुः ॥ २ ॥ ० । १८ ॥ ० ॥

छत्राकं विड्वराहञ्च लसुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद् द्विजः ॥ १९ ॥
अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ २० ॥

छत्राकमित्यादि ॥ १९ ॥ उक्तेषु भक्ष्येषु मध्ये *छत्राकादीनि षट् मत्या*जग्ध्वा द्विजः पतेदित्य ॥ १९ ॥ अमत्या तानि छत्राकादीनि षट् *जग्ध्वा सान्तपनं यति*चान्द्रायणान्यतरं चरेत् । १ ॥ शेषेषु भक्ष्येषूक्तेषु*मत्यामत्या भुक्तेषु*रेकमुपवसेदिति ॥ २ ॥ ० ॥ २० ॥ ० ॥

संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥२१॥

संवत्सरस्यैकमित्यादि ॥ २१ ॥ द्विजोत्तमो ब्राह्मण एव विशेषे*णोक्तत्वान्न द्विजमात्र * अज्ञातभक्षशुद्ध्यर्थं *विशेषतो ज्ञातस्य भुक्तस्य शुद्ध्यै ॥ १ ॥ संवत्सरस्य मध्ये कृच्छ्रं*प्राजापत्यादि कमपि कृच्छ्रव्रतं चरेत् ॥ २ ॥ ० ॥ २१ ॥ ० ।

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥ २२ ॥

ननु ब्राह्मणादिविषये शङ्का*मभक्ष्यं भक्ष्यञ्च मांसं*यदुक्तं तत्कथमुपपद्यते ऋषिद्वाक्यानां*मृगपक्षिणां कस्यापि ॥ १ ॥ अथ विनानमांसं स्यात् * तर्हि किं ब्राह्मणादिभि* र्भक्ष्यात् मृगपक्षिणो वध्याः * इत्यतआह यज्ञार्थमित्यादि ॥ २ । ० ॥ २२ ॥ ० ॥ ब्राह्मणैरिति बहुवचनाद्द्विजैः*प्रशस्ता मृगपक्षिण*इति चन्द्रवचनाच्च लजाश्च*कूर्म्ममतस्याश्चापिताः ॥ १ ॥ प्रशस्तादिति भक्ष्यानभक्ष्यायज्ञा*देवयज्ञपितृयज्ञभूतयज्ञनृयज्ञादौ* स्तेनैषुन्नभूताः मधु*पर्कपितृदैवक्रियाः । २ । तथाच ब्राह्मणादिभि*र्द्विजैः प्रशस्ता मृगपक्षिणो येतु भक्ष्या उक्तास्ते यज्ञार्थं *भृत्यानां पोष्याणां वृत्त्यर्थं वध्याः ॥ ३ । कस्मादित्यतउच्यते *अगस्त्यो ह्याचरत्पुरेति*वर्षसाहस्रिके सत्रे*महर्षिरगस्त्यः पुरा प्रशस्तमृगपक्षिवधमाचरत् । ४ ० । २२ ।

बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम्। पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ २३ ॥

अपरञ्च ॥ बभूवुरित्यादि ॥ ० ॥ २३ ॥ ० ॥ पुराणेषु यज्ञेषु च* हि यस्मात् भक्ष्याणां मृग*पक्षिणां पुरोडाशा बभूवुः ॥ १ ॥ ब्रह्मक्षत्रसवेषु च*ब्राह्मणानां भोजने नोत्सवेषु*क्षत्रियाणां च भोजने नोत्सवेषु*मृगपक्षिपुरोडाशाः ॥ २ ॥ ० ॥ २३ ॥ ० ॥ सर्व्वं पर्युषितं माद्य*मित्यस्यापवादमाह*यत्किञ्चित्स्नेहेत्यादि ॥ १ ॥ ० ॥ २४ ॥

यत्किञ्चित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम्। तत्पर्युषितमप्याद्यं हविःशेषञ्च यद्भवेत् ॥ २४ ॥

स्नेहसंयुतं यत् किञ्चि*त्खाद्यं घृतपूरादिकं *यच्चागर्हितं स्नेहसंयुतं भोज्यं मांसौ*दनादिकं तत्सर्व्वं * पर्युषितमपि खाद्यं ॥ १ ॥ हविःशेषञ्च यत्तच्च*पर्युषितमपि खाद्यं *ब्राह्मणादीनां भवति ॥ २ ॥ ० २४ ॥ ० ॥

चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः। यवगोधूमजं सर्व्वं पयसश्चैव विक्रिया ॥ २५ ॥

चिरस्थितमपीत्यादि ॥ २५ ॥ यवगोधूमजमस्नेहाक्तं भक्ष्यं *सक्त्वादिकं भोज्यञ्च*यत्किञ्चित्तत्सर्व्वं चिर* स्थितमपि द्विजातिभि*राद्यं खाद्यं भवतीति ॥ १ ॥ पयसो विक्रिया च तक्रतक्र*कूर्च्चिकादिकं चिरस्थितमपि * द्विजातिभिराद्यं खाद्यं भवति ॥ २ ॥ ० ॥ २५ ॥ ० ॥

एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः। मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्ज्जने ॥ २६ ॥

एतदित्यादि ॥ २६ ॥ ० ॥ द्विजातीनां भक्ष्याभक्ष्यमशेषत*एतन्मयोक्तमतःपरं * मांसस्य भक्षणवर्ज्जने* विधिमहं प्रवक्ष्यामि ॥ १ ॥ ० ॥ २६ ॥

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया। यथाविधि नियुक्तश्च प्राणानामेव चात्यये ॥ २७ ॥

प्रोक्षितमित्यादि ॥ २७ ॥ अनुपाकृतमांसवर्ज्जनेनैवो*पाकृतमांसभक्षणमर्थागतः* प्राप्तमिद्धौ प्रोक्षितं * भक्षयेन्मांसमिति ॥ १ ॥ भक्षणविधिस्तदनुवादोऽनत*नियमःप्राणात्यये हि * भक्ष्याभक्ष्यप्रोक्षिताप्रोक्षितमांस* भक्षणविधानाद्युक्तं ॥ २ ॥ नियमश्चेत्तदपवादोऽयं प्राणा*त्यये सर्व्वमांसभक्षणविधि* र्ब्राह्मणानाञ्च काम्ययेति मांसत्यागव्रतविषयं ॥ ३ ॥ यो मांसभक्षणत्यागी*सचब्राह्मणानां काम्यया प्रोक्षितं* भक्ष्यं मांसं भक्षयेत् ॥४॥ मद्ब्राह्मणकाम्ययेति*यमवचनाद्द्वित्रादि*वारान् भक्षयेत् ॥ ५ ॥ यथाविधि यज्ञे नियुक्तस्त्वार्त्विक् *तत्प्रोक्षितं मांसं भक्षयेदेव*प्राणानामत्यये चेति*त्रयो नियमा उक्ताः ॥ ६ ॥ ० ॥ २७ ॥ ० ॥ प्राणात्यये कथं सर्व्वमांसविधि*रित्यत आह प्राणेत्यादि ॥ १ ॥ ० ॥ २८ ॥ ० ॥

प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत्। स्थावरं जङ्गमञ्चैव सर्व्वं प्राणस्य भोजनम् ॥ २८ ॥

दशाहमित्यादि । ५८ । सपिण्डेष्वितिनर्णेषु * प्रायमिकत्वाद्ब्राह्मणेषु सपिण्डेषु * मृतसागम्निकस्याग्र्या* गम्निरूपस्वगमाद्दशाहमाशौचं । १ । साग्निकस्यास्त्रिसञ्चयनादूर्ध्वं *आवमाशौचं निर्गुणेषु * सगुणेषु केवलवेद वित्सत्र्यहं *वेदाग्निमत्स्वेकाहं *वेतिवाशब्दतोवाअस्था ॥ १ ॥ ५८ ॥ ननुकेऽसन्*सपिण्डाइत्यतउक्तः* सपिण्डतेत्यादिश्लोकः । १ ।

**सपिण्डतातुपुरुषे सप्तमेविनिवर्त्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ ६० ॥**

सहपिण्डायेषां तेसपिण्डाः पिण्ड * दाकस्तेषां भावःसपिण्डताखलु * सप्तमेपुरुषेऽतीते * विशेषेण निवर्त्तते ॥ २ ॥ विग्रब्देनेदमुक्तं च * पिण्डभोजित्वं पिण्डलेपभोजित्व * श्चेतिद्विधासपिण्डता * मुख्याच गौणीचेति ॥ ३ ॥ वचाते चदायभाग*प्रकरणे पिण्डदान*विधानं यसाययस्यास्तित्र यथा ॥ ४ ॥ त्रयाणामुदकं कार्यं त्रिषुपिण्डःप्रवर्त्तते । चतुर्थः सम्प्रदातैषां पञ्चमोनोपपद्यते । इति ॥ ५ ॥ तेनचतुर्षु पुरुषेषुमुख्यपिण्डता* मुख्यापिण्डभोजित्वात् * ततऊर्द्ध्वं त्रिषुपुरुषेषु * गौणसपिण्डतापिण्ड* लेपभोजित्वादित्युक्तं ॥ ६ ॥ एतञ्च मात्स्यपुराणे *लेपभाजश्चतुर्थाद्या पित्राद्याःपिण्डभागिनः । सप्तमःपिण्डदस्तेषां सापिण्ड्यं साप्तपौरुषं । इति ॥ ७ ॥ मार्कण्डेयपुराणे च*सपिण्डीकरणादूर्द्ध्वं पितुर्यः प्रपितामहः । सलेपभोजितां याति प्रलुप्तपितृपिण्डतः ॥ ८ ॥ तेषामनाश्चतुर्थोयःपिण्डलेपभुजोऽहभुक् । सोपिसम्बन्धतोनूनमुपभोगं प्रपद्यते ॥ ९ ॥ पितापितामहश्चैवतथैवप्रपितामहः । पिण्डसम्बन्धिनोह्येते विज्ञेयाः पुरुषास्त्रयः ॥ १० ॥ लेपसम्बन्धिनश्चान्ये पितामहपितामहात् । प्रभृत्युक्तास्त्रयस्तेषां यजमानश्चसप्तमः । ॥ ११ ॥ इत्येषमुनिभिः प्रोक्ताःसम्बन्धः साप्तपौरुषः । यजमानात्प्रभृत्यूर्द्ध्वं मातुलेपभुजस्तथा । इति ॥ १२ ॥ एषां समानां पुरुषाणामुत*रोत्तरं मेकैकपुरुषेजाते *पूर्व्वपूर्व्वैकैकपुरुषेतनागात्*साप्तपौरुषःसापिण्ड्यवन्धः ॥ १३ ॥ ततश्चातःपौरुषेमुख्यास्तत* ऊर्ध्वं पुरुषेगौण*स्तदेवाभिप्रेत्याविपराशराभ्याम्*उक्तं तद्यथा ॥ १४ ॥ सपिण्डतासर्व्वेषां *गोत्रजे साप्तपौरुषी । पिण्डाश्चोदकदानञ्च शावाशौचं धनागमम् ॥ १५ ॥ प्राप्यते सूतकं गोत्रे चतुर्थपुरुषेणत । दायाद्विच्छेदमाप्नोति पञ्चमोह्यात्मवंशजः ॥ १६ ॥ चतुर्थे दशरात्रं स्यात्षण्निशाःपुंसिपञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयमिति ।१७। अष्टमे दिनमेकन्तुनवमे प्रहरद्वयम । दशमे स्नानमात्रेणसूचके तु शुचिर्भवेदिति।१८। समानोदकभावस्तुजन्मनाम्नोरवेदने *सगोत्रमात्रस्याने तु*समानोदकभावो*नसापिण्ड्यं ।१९ । सप्तपुरुषादूर्ध्वं जन्मनाम्नोरवेदनेऽतुल्यं पभुक्तं *तवोक्तमष्टमे दिनमित्यादि तेनात्रसाप्तपौरुषेसापिण्ड्ये*सामान्यतउक्तं वाशब्द स्यास्य * यवपुरुषविशेषे* गुणविशेषे च व्याख्या यं । १९ । तद्यथाचतुर्थे पुरुषे पुरुषे * रात्रं पञ्चमे पुरुषे षड्रात्रं षष्ठे चतुरहं त्र्यहम्वाशब्दात् ॥ २० । सप्तमे त्रिरात्रमष्टमे त्वेकाहं वाशब्दान्नवमे प्रहरद्वयं * दशमे

मविरुद्धं स्यात् ॥ ४६ ॥ एतत्भूतेभ्यो पर्णाशौचं यस्तु*व्याचष्टे तस्या*विपरागरयोर्वचनविरोधे कागतिर्भवति ॥४७॥ इत्येवं व्याख्यानमविद्ध।*सःखलु * प्रमादात्मामपौरुष * सापिण्ड्यं गुरुं मत्वैव * सहृदपुरुषे एव * पूर्णाशौचं भापमाणाः । ४८ ॥ तर्हाह्निककर्त्तव्यसन्ध्योपासनः*नष्टतिकर्म्मनोपात्तदत्तारकत*कर्मणाञ्च।छिद्रिरेनेवं*लोकानां निजानामपि ।४९। धर्म्मलोपं विधायानत्*पापं प्रतिधाभूतं स्वयमपिच*गच्छन्तितञ्चवदन्ते ।५०। यं वदन्तितमोभूतात्र र्वाधर्मामतविदः। तत्पापं शतधाभूत्वातद्वक्तॄननुगच्छतीति ।५१ ॥ यश्चापरप्रमादोबाष्टेपट् च * पुरुषादर्वाक्स्वयमेति * सप्तपटनाधस्तात्स्वयमेतिवसतेति * सपिण्डास्त्वयोदगणाः ॥५२॥ तदपुक्तव्याख्यानेन * दूषितं भवताक्रि च * दोषैरितिज्ञेयं बुधैः ॥ ५३ ॥ ० ॥ ६० ॥ अथशावाशौचमुक्त्वा * जननाशौचकथाले * यथेदं शावमित्याह । १ । ६१ ।

**यथेदं शावमाशौचं सपिण्डेषु विधीयते। जननेप्येवमेवस्यान्निपुणांशुद्धिमिच्छता ॥ ६१ ॥**

इदं शावमाशौचं सपिण्डेषु*छत्वो पुयथानिर्गुणो *सगुणेपुनिर्धीयते ।२। जननेप्येवमेवजायमानेषु सपिण्डेषु निर्गुणेषु*सगुणेषु।शौच निपुणां * शुद्धिमिच्छता बुधैर्नविधीयते ।३। विष्णुसंहितायामपि*चैवमेव*भाषितं तदगयोचात ।४। ब्राह्मणस्यसपिण्डानां * जननमरणयोर्दशाहमाशौचं* द्वादशाहं राजन्यस्य*पञ्चदशाहं वैश्यास्यमासं शूद्रस्य । ५ । सपिण्डताचपुरुषे सप्तमे विनिवर्त्तते इति ॥ ६ ॥ ० ६१ । नत्वतर्हि किं मरणे जननेपिसर्व्वेपु * सपिण्डेषु छत्वा पुनिर्गुणेषु * सगुणेषुच यथोक्तमशौचं भव * तीत्यतउच्यते सर्व्वेषामित्याह । १ । ० । ६२ । ० ।

**सर्व्वेषांशावमाशौचं मातापित्रोस्तुसूतकम्। सूतकंमातुरेवस्यादुपस्पृश्यपिताशुचिः॥ ६२ ॥**

शावमाशौचं सर्व्वेषां *सपिण्डानां भवतिसूतकन्तु*जाताशौचं सपिण्डानां मध्ये माता*पित्रोरेवनत्वन्यसपिण्डानाम् ।१। तत्रापिमातुरेवसूतकं भवेत्*पितात् पस्पृश्य स्नात्वा*शुचिर्भवतियावच्च*नोपस्पृशतितावदशुचिःस्यात् ।२। कस्मात्पुरूर्वसूतकं जातोपायमितिचेन्न*जनने खलु शौचकारणद्वतं *मातुरेव नान्यस्यनारा*एवसम्भवतिनान्यामिति ।३। तस्याःस्पर्शनं चेत्करोतितदा*षडङ्गवेदविद्*पायश्चिरेवभवति । ४ । प्रमादिनस्तुवदन्ति* संवर्त्तोक्तमेवेदं*जाते पुत्रे पितुःस्नानं सचेलन्तुविधीयते । मातायदा दशाहेन स्नानात्स्पर्शनं पितुरिति।५। तेनपितुरस्पृशात्व*उपगमःस्नानमात्रेणनशौचापगमःस्यादिति ।६। तन्नस्पर्शनं पिवरितानेन*पितुरशुचित्वउपगमएवैतत्कदतरथावशिष्ठादि* वचनविरोधोभवेत् ॥७। सूतकं मातरेवस्यो*दितानेनपितुःसूतकं व्याहत्त*मेतन्मनुर्थ विरुद्ध*भवति । ८ । वशिष्ठेनह्युक्तं यथा*जनने मातापित्रोरेवाशौचं वीजनिमित्तात् । ९ । नाशौचं सूतके

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः। यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥७२॥

स्त्रीणामित्यादि। ७२। असंस्कृतानामनूढानां स्त्रीणां तु * प्राक् सप्तपदीगमनात् * मरणे बान्धवा माता * पित्रादयो बान्धवाः त्र्यहाच्छुध्यन्ति। १। स्वगोत्राद्भ्रश्यते नारी * विवाहात् सप्तमे पदे * इति लिखितवचनात्। २। उपसंहरति यथोक्तेनैव * सनाभीनां सपिण्डानां * येषां यत्कालमशौचं * उक्तं ते सनाभयस्तेन * कल्पेन कालेन शुध्यन्ति ३ ॥ ० ॥ ७२ ॥

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम्। मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥७३॥

नन्वेवमशौचे कथं * सपिण्डा वर्त्तेरन्नित्यत आह * अक्षारलवणेत्यादि। १। ०। ७३। ते सपिण्डा बान्धवा अशौचं यावत् * यावदशौचमक्षार * लवणान्नाः स्युः त्र्यहं तु * नद्यादिषु निमज्जेयुः मांसाशनं च यावदशौचं ते * नाश्नीयुः क्षितौ पृथक् च * शयीरन् न खट्टायां नैकत्र। २। विष्णुवचनदर्शनात् यावदशौचं तावत् प्रेतस्योदकं * पिण्डमेकं च दद्युः। १। क्रीतलब्धाशना भवेयुः * अक्षारमांसाशनाश्च * स्थण्डिलशायिनः पृथक्शायिनश्च। २। क्षारश्च लवणं च ते यत्र तदक्षारलवणं * क्षारादि पृथग्लवणं * न तु लवणेषु क्षारो * विद्वद्भिर्गण्यते क्वचित्। ३। तस्मात् पांशुलवणं यवक्षारादि * सैन्धवादिलवणाक्तं * नान्नमन्नमश्नीयात्। ४। एतद्विद्वान् क्षारलवणं पांशु * लवणं वर्जयित्वा सैन्धवादिलवणं व्यवस्थापयति। ५। तदसाधु क्षारादिभिः सहितत्वे कृतनिर्देशमविशेषः ० । ७३।

सन्निधावेष वै कल्पः शावाशौचस्य कीर्त्तितः। असन्निधावयं ज्ञेयो विधिः सम्बन्धिबान्धवैः ॥७४॥

उक्ताशौचं यत्र स्थानां * भवति तदुच्यते च * सन्निधावेष इत्यादि। १। ७४। शावाशौचस्य एष उक्तः कल्पः सर्व्वैः * सन्निधावस्थितानां * कीर्त्तितः सम्बन्धिबान्धवैः * असन्निधौ स्थितैरयं * वक्ष्यमाणो विधिर्ज्ञेयः। १। ७४।

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्। यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ७५॥

विगतमित्यादि। ७५। विदेशस्थं सपिण्डं विगतं मृतं * सपिण्डोऽनिर्दशं * दशाहाभ्यन्तरं शृणुयात्। १। स दशरात्रस्य शेषं * यावद्दिनं तावद्दिनं * अशुचिर्भवेदिति। २। ७५।

अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत्। संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥ ७६॥

अतिक्रान्ते चेत्यादि। ७६। अतिक्रान्ते दशाहे प्राक् * संवत्सरपूरणात्तु * विदेशस्थं विगतं यः शृणुयात् स * त्रिरात्रमशुचिर्भवेत्। १। संवत्सरे व्यतीते तु * यो विदेशस्थं सपिण्डं * विगतं शृणुयात् सोऽपः * स्पृष्ट्वा स्नात्वा विशुध्यति। १। ७६। ०।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ ७७ ।

निर्दशमित्यादि । ७७ । दशाहादूर्द्ध ज्ञातिमरणं श्रुत्वा*पुत्रस्य च जन्म श्रुत्वा*सवासा जलमाप्लुत्य*स्नात्वा शुद्धो भवतीति ॥ १ ॥ सन्निधौ चपश्चात्तायामसंस्पर्श स्नानाच्छुद्धिरुक्तापूर्वं ७७ ॥

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥ ७८

बाले इत्यादि ॥ ७८ ॥ बाल इत्यत्र जाते जाता*दन्तप्रागदन्तो स्थिते : * संस्थिते सन्निधौ मृते सपिण्डः*सद्य एव विशुध्यति ।१। दन्तजाते हि बाले कृणामकृत*चूडानां विशुद्धिर्नैशिकी उक्ता *देशान्तरस्थे वा बाले संस्थिते । २ । जलमाप्लुत्य सद्य एव शुध्यति * पृथकपिण्डे प्रपितामहादूर्द्ध * पुरुषे प्रपौत्रादधः*पुरुषे च संस्थिते । ३ सवासा ज*लमाप्लुत्य*सद्य एव*विशुध्यति ॥ ४ ॥ ७८ ॥

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी । तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ७९ ॥

अन्तर्दशाहे स्यातामित्यादि ।७९। सपिण्डस्य मरणेऽन्तर्दशाहे *दशाहाभ्यन्तरे यदि *पुनः सपिण्डस्य मरण* मथवा जन्म स्यात्तदा ।१। विप्रो यावत्तत्पूर्वाशौचं निर्दशं *न स्यात्तावदशुचिः स्यात् न तूपवाशौचकालात्यये ॥२॥७९॥

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति । तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ८० ॥

त्रिरात्रमित्यादि । ८० । आचार्ये संस्थिते मृते * सति स्वस्य शिष्यस्य त्रिरात्र * मशौचं धर्मज्ञा आहुः ।१। तस्याचार्यस्य पुत्रे च*संस्थिते पत्न्यां चाचार्यस्य मृतायां *दिवारात्रमहोरात्र*माशौचमाहुरिति स्थितिः ॥ २ ॥ ८० ॥

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् । मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥ ८१ ॥

श्रोत्रिये इत्यादि । ८२ । छन्दोऽधीते इति श्रोत्रिय इति स*एव यथा स्यात्तदुक्तं* मत्रिसंहितायां यथा ।१। जन्मना ब्राह्मणो ज्ञेयः*संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च । २ । उपसम्पन्ने समीपे *स्वगृहे स्थिते संस्थिते *मृते त्रिरात्रमशुचिर्भवेदिति । ३ । मातुले संस्थिते मृते *पक्षिणीं रात्रिमशुचिः* शिष्यर्त्विजि बान्धवे च मृते *पक्षिणीं रात्रिमशुचि*बान्धवोऽत्र मित्रं ज्ञेयं । ४ । विष्णुनाप्याचार्यपुत्रा * दिम रणे त्रिरात्र*मशौचमुक्तं तद्यथा । ५ । आचार्यपत्नीपुत्रोपाध्याय* मातुलश्वशुरश्वशुर्यसखा * शिष्यमरणे त्रिरात्रेण ॥ ६ ॥ ८१ ॥

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः । अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥ ८२ ॥

मशौचं। ४। सर्व्वाग्निषुक्रियाहोमं नप्रवृाहे * होमविघ्नं नकुर्व्वीत * शुष्कान्नेन फलेन वा * होममदग्धा कुर्व्वीत। ५। तत्रहितात् कालिकशुद्धेरेनखापितं पञ्च * यज्ञसन्ध्योपासनादि * कर्म्माणि न तस्मिन् दिने कुर्य्यादिति। ५। कात्यायनेनह्युक्तंच* मृतकेकर्म्मणां त्यागः * सन्ध्यादीनां विधीयते। होमःश्रौतस्तु कर्त्तव्यः शुष्कान्नेनापि वा फलैरिति। ६। संवर्त्तेनाप्युक्तं यथा*होमस्तत्रतुकर्त्तव्यः शुष्कान्नेन फलेन वेति। ७। तथाविसंहितायाञ्च* महायज्ञविधानन्तुनकुर्य्यान्मृतजन्मनोः। होमं तत्रप्रकुर्व्वीत शुष्कान्नेन फलेन वा। इति। ८। निरग्नेःकेवलवेदादेः स्वाहा* दशौचमगन्याभावात्*होमादिपञ्चयज्ञान्* सन्ध्येत्सन्ध्योपासना*दीनितेचनैवकुर्युःरिति ६। ननुतर्हि तस्याग्निवेदमा*सपिण्डाःपुत्रादयोनिरग्नित्वात्*ब्राह्मणाशौचभाजःस्युः*रितातञ्चाह नचेत्यादि। १०। तत्कर्म्मकुर्व्वाणःहुताग्निषुतत्*कर्म्मकुर्व्वाणःसाग्निकः * साग्निकस्यतस्यसनाभोऽपिसर्व्वः* सपिण्डस्तेनाग्निनैव*शुचित्वान्नाशुचिर्भवेत्। ११। इत्येवं तेषामप्यशुचित्वाभावा*दशक्तौतैरपिहोमः * कार्य्यइत्युक्तं जाबालेन। १२। जन्महान्योर्वितानस्य कर्म्मलोपोनविद्यते। शालाग्नौकेवलो होमःकार्य्योऽन्यैर्वाप्यशौचजैः। इति। १३। एतद्व्याख्यानमविद्वान्*प्रमादोचेन्निरग्निकः *नाथाद्याचष्टे तद्यथा। १२। शौनाग्निको वहोमाय विधानपेत्*स्वयं कर्य्यादशक्तौ*पुत्रादीनेवकारयेत्। १४। यत्वेत्तदुक्तं समाह *तत्कर्म्माग्निहोत्रकर्म्म *कुर्व्वाणःपुत्रादिःसपिण्डो*नाशुचिर्भवतीति नत्र*मनाभ्यानां निरग्निके * नाशौचाभावानुक्तापत्तेः। १५। यों नौ प्रमादिनोव्याचष्टेचैवं*यदेकाहाद्यशौचवचनं तत्*तात्कालिकशुद्धिज्ञापकमग्निषु * होमार्थं सर्व्वथा शुद्धिदं शाह इत्याह। १। तत्प्रमादेनव्याख्यातं*यतःकेवलवेदादेः * स्वाहेत्यशौचभागिनोनास्त्याग्नि * कस्मिन् कर्म्मणि तात्कालिक शुद्धिरुपपद्यते ॥ १७ ॥ तेषां तात्कालिकशुद्धि * व्याख्यानानुपपत्तेस्तु*प्रमादादेवतद्व्याख्यातम् ॥ १८ ॥ अङ्गस्पर्शनञ्चैषामेकाहाद्यशौचभागिना*तत्तदशौचसमाप्तौ*यां शास्त्रेये। दशाहाद्यशौचे*त्रिनः पञ्चदशाहः * तायेतन्नोपपद्यते ॥ १६ ॥ तद्यथाग्निपुराणे च * सर्व्वेषामेव वर्णानां त्रिभागात्स्पर्शनं भवेत्। त्रिचतुःपञ्चदशभिःशुद्धावर्णाःक्रमेण तु। इति। २०। चतुर्थेचदिने कार्य्यस्तथास्थ्नां चैवसञ्चयः। अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते। ८४। अपरञ्चाग्निपुराणे * भार्गवरामं प्रतियत् * पुष्करउवाचेत्यादिदम्। १। प्रेतशुद्धिं प्रवक्ष्यामि सूतिकाशुद्धिमेवच॥ दशाहं शावमाशौचं सपिण्डेषु विधीयते। २। जनने चतथाशुद्धिर्ब्राह्मणानां भृगूत्तम। द्वादशाहेनराजन्यः पक्षाद्वैश्यो यमासतः। शूद्रोऽनुलोमतो दासो स्वामितुल्यमशौचकम्। ४। षड्भिस्त्रिभिस्तथैकेन क्षत्रविट्शूद्रयोनिषु * ब्राह्मणःशुद्धिमाप्नोति क्षत्रियस्तथैवच। विट्शूद्रयोनौ शुद्धिःस्यात् क्रमात् परशुरामक। षड्रात्रेणत्रिरात्रेण षड्भिःशूद्रेतथाविशः॥ इति सवर्णयोनिषुसपिण्डेषु * शावमाशौचं ब्राह्मणाणां दशाहं * राजन्योद्वादशाहं वैश्यापक्षात् परं। १। शूद्रेमासतःपरमनुलोमतो * दासस्वामितुल्यःशूद्रे * ऽशौचं स्वामिमरणे स्यात्। २। तथाचब्राह्मणस्वामिमरणे * दासेशूद्रे दशरात्रं * क्षत्रियस्वामिमरणेशूद्रेदासे द्वादशाहं* वैश्यस्वामिमरणे पक्षः। ३। क्षत्रविट्शूद्रयोनिषु * सपिण्डेषु ब्राह्मणः * क्रमात्षड्रात्रेण त्रिरात्रेणैकेनाह्ना * रात्रेणशुद्धिमाप्नोति॥ ४। क्षत्रियस्यविट्शूद्रयोनौसपिण्डे*मृते शावमाशौचं क्रमात्*षड्रात्रेण त्रिरात्रेण * शुद्धिःस्यात्तदायोच्यते। ५। षड्रात्रेणात्रैश्ययोनौ*मृते त्रिरात्रेणशूद्र * योनौमृते क्षत्रियस्यशुद्धिः

स्यात्। ६। विप्रार्त्ते मासत्रयादूर्द्ध्वं सपिण्डमरणे *षड्भिर्दिनैः शुद्धिर्भवेत्। ७। मन्वादिभिरेतदुक्तं * तेन दशाहाशौचं *दुर्गोदे धर्मसमृतिर्व्वरेणोक्तेरिति । ८ । अपरञ्चाग्निपुराणे*जनत्रिवार्षिके शूद्रे पञ्चाहाच्छुद्धिरिष्यते द्वादशाहेन शुद्धिःस्यादितीत्येवन्मरणे । १ । गतेःसंवत्सरे षड्भिः शुद्धिर्मासेन कीर्त्तिता। स्त्रीणामकृतचूडानां विशुद्धिर्नैगिकी स्मृता। तथा वक्रचूडानां त्र्यहाच्छुद्धिर्बान्धवाः। विवाहात्तु पुराशौचं पितृपक्षे विधीयते । २ । पितृगेहे मृतानाञ्च विशुद्धिर्नैगिकी स्मृता। सूतिकादशरात्रेण शुद्धिमाप्नोति नान्यथा। ४। विवाहितापि चेत्कन्या म्रियते पितृवेश्मनि। तस्यास्त्रिरात्रं पित्रादिबान्धवे स्यादशौचकम्। ५। अग्निपाशकार्यादिभिर्मृतानामात्मघातिनाम्। पतितानाञ्च नाशौचं विद्युच्छस्त्रहताश्च ये। ६। परिव्राजो ब्रह्मचारी नृपकारुकदीक्षिताः। राजाज्ञाकारिणो ये च स्नापयेत् प्रेतकानपि। मैथुने कटधूमे च सद्यः स्नानं विधीयते ७॥ रात्रिभिर्मासतुल्याभिः गर्भस्रावे त्र्यहे भवेत्। चातुर्मासिके पाते स्याद्दशाहं पञ्चमासतः॥ ८॥ राजन्ये च त्रिरात्रं स्यात् द्विजाय च्चाहमेव च। अष्टाहेन च शूद्रस्याद्द्वादशाहादतः परं। ९। स्त्रीणां विशुद्धिरुद्दिता स्नानमात्रेण वै पितुः। न स्नानं हि सपिण्डे स्यात् त्रिरात्रं सप्तमेऽष्टमे ॥ १० ॥ इति। गर्भस्रावो यावन्मासे तावन्ति दिनानि ब्राह्मणाः* अशौचं चातुर्मासिके*गर्भपाते त्र्यहेण*शुद्धिर्ब्राह्मणा भवति*पञ्चमासतो दशाहम् ११। एवं राजन्ये चत्रियायाश्चातुर्मासिकगर्भपाते*त्रिरात्रमेवाशौचं स्यात्। ११। वैश्ये च चतुर्मासिकगर्भपाते *तु वैश्यात्वर्द्धं पञ्चमासार्द्धे*मध्ये चिःस्याच्छुद्धःस्यात्स्त्री*चातुर्मासिकगर्भपाते* त्वष्टाहेन शुद्धातीति ।१२। अतः परं पञ्चमासतो राजन्या*देःस्त्रीणां गर्भपाते द्वादशाहादि*यथोक्तमशौचं भवेत् * दशाःस्त्रीणां शुद्धिरुक्ता। १३। स्नानमात्रेण पितुः शुद्धिः*सपिण्डे स्नानमपि न विधीयते*सप्तमेऽष्टमे मासे*गर्भपाते सपिण्डे त्रिरात्रं स्यात् । १४। इति तत्स्त्रीसर्वं। अपरञ्चाग्निपुराणे*सद्यःशौचं सपिण्डानामादन्तजननात्तथा। आचूडादेकरात्रं स्यादाचूडान्ते तु त्रिरात्रकम्। दशरात्रं भवेदस्मान्मातापित्रोस्त्रिरात्रकम्। जातदन्ते मृते बाले कृतचूडार्भके तथा। त्र्यहं गत्वा त्रियोगाद्विस्त्रिर्भवेन्मृते तथा। शुद्धिः शूद्रे पञ्चभिश्च प्राग्विवाहाद्दिषट्त्र्यहः। नात्रिवर्षेऽग्निसंस्कारो मृते तं निखनेद्भुवि। न चोदकक्रियातस्य नाम्नि चापि न कीर्त्तयेत्। एकाहाच्छुध्यति विप्रो योऽग्निवेदसमन्वितः। हीने हीनतरे चैव त्र्यहं चतुरहं तथा। पञ्चाहं नाग्निहीनस्य दशाहाद्ब्राह्मणब्रुवः। क्षत्रियो नवसप्ताहाच्छुचि विप्रो गुणैर्युतः। दशाहान्नगुणैर्वैश्यो विंशाहाच्छूद्र एव स्वगुणात्कर्म दशाहेऽष्टौ त्र्यहमेकाऽह। काहे। एकहेतु सद्यःशौचं सर्वत्रैवं समुद्दिशेत्। दासाश्चान्तःसम्भूताश्च शिष्याश्चैकत्रवासिनः। स्वामितुल्यमशौचं स्यान्मृते नैव पृथग्भवेत्। मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निभिः। दाहादूर्द्ध्वमशौचं स्यात् यस्य वैतानिको विधिः। चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा। अस्थिसञ्चयनं कार्यं वर्णानामानुपूर्व्वतः। अहस्त्वदत्तकन्यासूपदत्तासु त्र्यहं भवेत्। पक्षिणी संस्कृतास्वेव स्वस्रादिषु विधीयते। पितृगोत्रं कुमारीणामूढानां भर्तृगोत्रता। जलप्रदानं पितुश्चोद्वाहे चोभयत्र च। दशाहोपरि पित्रोश्च दुहितुर्मरणे त्र्यहम। सद्यःशौचं सपिण्डानां पूर्व्वं चूडाकृते द्विज। एकाहं विवाहादर्व्वाक् मृते दत्तोदकात्त्र्यहम्। पक्षिणी भ्रातृपुत्रस्य सपिण्डानाञ्च सर्व्वशः। दशाहाच्छुध्यते विप्रो जन्महानौ स्वयोनिषु। षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु। एतज्ज्ञेयं सपिण्डानां वक्ष्येऽनौरसादिषु। अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। परपूर्व्वासु भार्यासु त्रिरात्राच्छुद्धिरिष्यते। मातृकया

द्विपितृकौ भ्रातरावन्यमातृकौ। एकाहं सूतके तत्र मृतके तु त्र्यहं भवेत्। सपिण्डानामशौचं हि समानोदकमृते। दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतके। त्रिरात्रेण सकुल्यास्तु स्नाताः शुध्यन्ति गोत्रिणः। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तते चतुर्दशात्। जन्मनामस्मृतेरेतत् तत्परं गोत्रमुच्यते। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च। मृते जामातरि प्रेते दौहित्रे भगिनीसुते श्यालके तत्सुते चैव स्नानमात्रं विधीयते॥ मातामह्यां तथाचार्य्ये मृते मातामहे त्र्यहम्॥ दुर्भिक्षे राष्ट्रसंपाते आगतायां तथापदि उपसर्गमृतानान्तु दातृब्रह्मविदां तथा। यतिव्रतीब्रह्मचारी संग्रामे देशविप्लवे। दाने यज्ञे विवाहे च सद्यःशौचं विधीयते। असाध्यव्याधियुक्तस्य स्वाध्याये चाक्षमस्य च। प्रायश्चित्तमनुज्ञातमग्नितोयप्रवेशनम्। अपमानाद्भयात् क्रोधात् स्नेहात् परिभवाद्भयात्। उद्बध्य म्रियते नारी पुरुषो वा कथञ्चन। आत्मघाती चैकलक्षं वसेत् स नरकेऽशुचिः। अशौचस्मृतिलुप्तः परित्यजति यस्तु तान्। त्रिरात्रं तस्य चाशौचं द्वितीये चास्थिसञ्चयः। तृतीये तूदकं कार्य्यं चतुर्थे श्राद्धमाचरेत्। विड्दादिहतानाञ्च त्र्यहाच्छुद्धिः सपिण्डके। शूद्रायाश्च प्रसवे गेहे शूद्रस्य मरणे तथा। भाण्डानि परित्यजेत् त्र्यहाद्भूमेः पतः शुचिः। सर्व्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः। पुत्त्रजन्मदिने श्राद्धं कर्त्तव्यमिति निश्चितम्। तदहस्तत्प्रदानञ्च गोहिरण्यादिवाससाम्। मरणे मरणेनैव सूतकं सूतकेन च। उभयोरपि यत् पूर्व्वं तेनाशौचेन शुध्यति। सूतके मृतकं चेत् स्यान्मृतके वापि सूतकम्। तत्राधिकृत्य मृतकं शौचं दद्यात् सूतकम्। समानं लघुशौचन्तु प्रथमेन समापयेत्। असमानं द्वितीयेन धर्म्मराजवचो यथा। शावान्तः शावमापाते पूर्व्वाशौचेन शुध्यति। गुरुणा लघु बाध्येत लघुना नैव तद्गुरु। मृतके सूतके वापि रात्रिमध्ये न दाहयेत्। तच्छेषेण न शुध्यन्ति रात्रिशेषे द्व्यहादिकात्। प्रभाते यद्यशौचं स्याच्छुद्धिरेकदिनैः। उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। इति। अथ कालीपुराणे। विशेषतः शिवापूजां प्रमीते पितृकोनरः। यावद्वत्सरपर्य्यन्तं मनसापि न चाचरेत्। महागुरुनिपाते च काम्यं किञ्चिन्न चाचरेत्। आर्त्विज्यं ब्रह्मयज्ञञ्च श्राद्धं देवयुतं च यत्। इति। अत्र यावद्वत्सरपर्य्यन्तमिति * सपिण्डीकरणपर्य्यन्ताभिप्रायं * मातापितृनिपाते महागुरुनिपाते॥ १॥ सपिण्डीकरणादूर्द्ध्वं * न देहाशुद्धिरुच्यते * पुराणाद्यप्रेतत्वाभावात्॥ २॥ ८४॥ प्रेतशुद्धिविशेषात् प्रेतस्पर्शी * शौचं शुद्धिमाहदिनैरिति॥ १॥ ८५॥

**दिवाकीर्त्तिमुदक्यांश्च पतितं सूतिकान्तथा। शवं तत्स्पर्शिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥ ८५॥**

दिवाकीर्त्तिश्चाण्डाल उदक्या * रजस्वला पतितो ब्रह्महा * प्रभृतिपापी सूतिका * प्रसवावध्यशौचान्ता॥ २॥ शवः मृतदेहेन * शवस्पर्शशौचयुक्ता * मिहासवर्णसापि शवं * स्पृष्टवांश्च स्पृष्टीच सर्व्वः॥ २॥ एतान् स्पृष्ट्वा स्नानेन शुध्यति * रजस्वलादक्यां स्पृष्ट्वा यथा * शुध्यतितत्पूर्व्वमुक्तं मतिनोक्तं॥ ४॥ सूतिकाश्च सपिण्डादन्याः स्पृष्ट्वा * स्नानेन

द्व्यतिनव*सपिण्डास्तेदिव्हतिकाया अशौचातायें यदेन्ति ॥ ५ ॥ ८५ ॥

प्राचमत्प्रयतोनित्यं जपेदशुचिदर्शने । सौरान्मन्त्रान्यथोत्साहं पावमानीश्चशक्तितः॥८६॥

आचमेतादि ॥ ८६ ॥ विष्ठाद्या शुचिद्रव्यादर्शने कृते *प्रयतःसन्नाचमत्सौरान्मन्त्रा * उदुत्यं जातवेदस* त्यादीन्यथोत्साहं । १ । पावमानीश्चशक्तितस्तच्छुद्व्यर्थं *जपेदिति प्रायश्चित्तम् ॥ २ ॥ ० ८६ ॥

नारंस्पृष्ट्वास्थिसस्नेहंस्नात्वाविप्रोविशुद्ध्यति।आचमैवतुनिःस्नेहंगामालभ्यार्कवीक्षणात्८७

नारमित्यादि ॥ नरस्यास्थिसस्नेहमा*युक्तं स्पृष्ट्वा विप्रःस्नात्वाविशुद्ध्यति*निःस्नेहं शुष्कं नरास्थि* स्पृष्ट्वा मत्विशुद्ध्यति । गामालभ्यस्पृष्ट्वार्कवीक्षणादर्कं*वीक्ष्याविप्रोविशुद्ध्यति । २ । ० । ८७ । ० ।

आदिष्टीनोदकं कुर्य्यादाव्रतस्यसमापनात्। समाप्ते तूदकं कृत्वाचिरात्रेणैवशुद्ध्यति॥८८

आदिष्टीत्यादि । ० । ८८ । व्रतादेशनमादिष्टं *तदस्यास्तीत्यादिष्टी*ब्रह्मचर्य्याश्रमी ।१। सपिण्डीकरण* श्राद्ध*उदकादिकं कर्म्मपित्रादेः *न कुर्य्यात् यावद्व्रतस्यसमापनात् । २ । समाप्ते ब्रह्मचर्य्यव्रते *गुरुणानुमतः त्वा * यथाविधि समावृत्तः । ३ । उदकं तर्पनं कृत्वा * त्रिरात्रेणैवशुद्ध्यति * शुद्धःसं*वत्सर्यादिनि पिण्डीकरणान्तं कर्म्मकुर्य्यात् । ४ । ० । ८८ ।

वृथासङ्करजातानां प्रव्रज्यासुचतिष्ठताम्। आत्मनस्त्यागिनाञ्चैवनिवर्त्ततोदकक्रिया॥८९॥

वृथेत्यादि । ८९ । वृथाजातानां प्रायेणातःकधर्म्म * कर्म्मणा सङ्करजातानां * प्रतिलोमजातादीनां * त्यादीनां प्रव्रज्यासु*चतुर्थाश्रमे तिष्ठतां । १ । आत्मनस्त्यागिनां विधिं * विनात्मघातिनाञ्चैव * मृतानां दकक्रिया*पिण्डश्राद्धादिकं सर्व्वं निवर्त्तेत । २ । ० । ८९ । ० ।

पाषण्डमाश्रितानाञ्चचरन्तीनाञ्चकामतः। गर्भभर्तृद्रुहाञ्चैवसुरापीनाञ्चयोषिताम्॥ ९०॥

पाषण्डेत्यादि । ९० । योषितां पाषण्डजन * माश्रितानां कामतश्च * व्यभिचरन्तीनां गर्भ *द्रुहां भर्तृ हां सुरा*पानशीलानामेवच* पिण्डोदकादि निवर्त्तेत । १ । ० । ९० ।

आचार्य्यंस्वमुपाध्यायंपितरंमातरंगुरुम्। निर्हृत्यतुव्रतीप्रेतान्नव्रतेनवियुज्यते॥९१॥

आचार्य्यमित्यादि । ९१ । व्रतीब्रह्मचर्य्याश्रमस्थः* आचार्य्यादीन्प्रेतान्निर्हृत्यव्रतेन * नवियुज्यते त्याग्रहीत् । १ । ममार्ह्यैवउपदिष्टे*निर्हृत्येति दाहद्वयाह्रपिण्ड*षोडशश्राद्धादिसकलप्रेत * कृत्यस्योपदर्श र्थम् । २ । इतितदुक्तं पूर्व्वं *ह्यादिष्टीत्याने नव्रतस्यासमाप्ति* पर्य्यन्तमुदकक्रिया * प्रतिषेधकरणात् । ३ ।

तेनव्हाच्छ्राशानपर्यन्तं * निर्हरणमेवनत * तदुष्क्रियादि । ४ । ८१ । ० । तन्निर्हरणमाहदक्षि नेतयादि । १ । ८२ । ० ।

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः॥ ९२

दक्षिणेनपुरद्वारेण* शूद्रं मृतं निर्हरेत् * पश्चिमेनवैश्यं मृत * उत्तरेण क्षत्रियं मृतं * पूर्व्वद्वारेण ब्राह्मणं मृतं निर्हरेत् । १ । ० । ८२ ।

नराज्ञामघदोषोऽस्तिव्रतिनां नचसत्रिणाम्। ऐन्द्रं स्थानमुपासीनाब्रह्मभूताहिते सदा ॥९

नराज्ञामितयादि । ८३ । राज्ञामभिषिक्तक्षत्रियनृपाणां * सपिण्डमरणेऽघदोषोनास्तीति नतत्क्षि मात्रस्य* । १ । व्रतिनां ब्रह्मचारिणां * चान्द्रायणादि व्रतकारिणामपिच * सत्रिणां यज्ञदीक्षिताः *पित्रादिमरणेऽघदोषोनास्ति* ।२।कस्मात्हिदस्ता ते राजव्रतिसत्रिणः *ऐन्द्रमिन्द्रस्य स्थान*उपासीनाब्रह्मभू भवन्तीति । ३ । ऐन्द्रमिन्द्रस्य परमेश्वरस्य * स्थानं राजासनं ब्रह्म*चार्य्यासनं सत्रिस्थानञ्च । ५ । ० । ८ कथमैन्द्रं स्थानं राजासनमिता* तत्राहराज्ञइत्यादि । १ ८४ ।

राज्ञोमाहात्मिकेस्थानेसद्यःशौचं विधीयते। प्रजानांपरिरक्षार्थमासनञ्चात्रकारणम्॥९

माहात्मिके महात्मनः* परमेश्वरस्य स्थाने * प्रजापरिरक्षणार्थमासीनस्य * राज्ञोऽभिषिक्तक्षत्रिय खलु* । १। सपिण्डमरण* जननयोःसद्यः * शौचं विधीयते * नतत्पूर्णाशौचं । २ । अतसद्यःशौचे प्रजाना रि*रक्षणार्थं राजासनं *कारणं नतक्षत्रियत्व* जातिःकारणं दृश्यते । ३ । प्रमादेनवाचर्ये सर्व्व जाति*रेव जे तितन्नयतऐन्द्र*मासनं धर्म्मेणक्षत्रियस्यैव । २ । ० । ८४ । सद्यःशौचप्रसङ्गादाह*डिम्बाहवेत्यादि ।१। ९

डिम्बाहवहतानाञ्चविद्युतापार्थिवेनच । गोब्राह्मणस्य चैवार्थे यस्यचेच्छतिपार्थिवः॥ ९५

डिम्बानां मिथुनां आहवहतानां चविद्युताचहतानां * पार्थिवेन राज्ञादण्डार्थं * मपराधविशि हतानां * गोरक्षणार्थं ब्राह्मणस्य * त्राणार्थं हतानां । २ । पार्थिवोऽभिषिक्तःक्षत्रियो * राजा कर्म्मकरणार्थं यस्यच*शौचमिच्छतितस्यच*सद्यःशौचं विधीयते । ३ । ० । ८५ ।नतुप्रजानां परिपालनार्थं राज्ञआसनं कथं माहात्मिकं * स्थानमितातत्राहसोमेत्यादि । १ । ० । ८६ ।

सोमाग्न्यर्क्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्यच। अष्टानांलोकपालानां वपुर्धारयतेनृपः॥९

सोमश्चाग्निश्चार्क्कश्चानिलश्चेन्द्रश्च * वित्तपतिश्चाप्पतिश्च* यमश्चेताष्टानां लोकपालानां * वपुर्नृपो धारयते । १ । ० । ८६ । ० ।

लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते। शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययम् ॥९७॥

लोकेशेत्यादि। ९७। अष्टभिर्लोकेशैरधिष्ठितो राजा*नास्याशौचं विधीयते* कस्मात् हि यस्मात् मर्त्यानां* शौचाशौचं लोकेश प्रभवाप्ययम्। १। लोकेशेभ्यः प्रभवति*लोकेशेषु प्रविलीयते तेषु * लोकेशैरधिष्ठितो राजा। २। ०। ९७। ०। नन्वाहवहतानां कथं सद्यःशौचमित्यत आह * उद्यतैरित्यादि। १। ०। ९८

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च। सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥९८॥

उद्यतैः शस्त्रैराहवे*क्षत्रधर्मेण हतस्य*यज्ञो रणात्मकः सद्यः सन्तिष्ठते* तथा सति शौचमिति स्थितिर्न त्वशौचमिति। १। ०। ९८। नन्वशौचदिनेऽतीते * किं स्नानादेव शुध्यति * किं क्रियान्तरेणेत्यत * आह विप्र इत्यादि। १। ०। ९९।

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम्। वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥९९॥

अशौचान्तदिनेऽतीते* कृतक्रियो स्नानादिक्रिया*कृत्वा स्नात्वा च विप्रोऽपः*स्पृष्ट्वा शुध्यति। १। क्षत्रियो वाहनायुधं*स्पृष्ट्वा शुध्यति वैश्यः प्रतोदं रश्मीन्*वा स्पृष्ट्वा शुध्यति शूद्रो*यष्टिं स्पृष्ट्वा शुध्यतीति। २। ०। ९९। उपसंहरति एतदित्यादि। १००।

एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः। असपिण्डेषु सर्वेषु प्रेतशुद्धिं निबोधत ॥१००॥

भो द्विजोत्तमाः सपिण्डेषु एतच्छौचं वः युष्माभ्य * मभिहितं मया सर्वे * षु असपिण्डेषु प्रेतेषु * शुद्धिं मत्तो निबोधत। १। ०। सपिण्डेषु निमित्तपरागिव * ह्वचनेन * नपुंसकवचनं * नदूर्ध्वं तीत्यावधेयम। २। १००। ०।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥१०१॥

असपिण्डमित्यादि। १। १०१। विप्रो ब्राह्मणमसपिण्डं* प्रेतं बन्धुवन्निर्हृत्य*तदन्नमदन्न तद्गृहे वसन्* इत्येतद्वा त्रिरात्रेण विशुध्यति*। १। मातुराप्तान् बान्धवान् *भ्रात्रादीन् निर्हृत्य च*त्रिरात्रेण शुध्यति। २। १०१।

यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति। अनदन्नन्नमह्नैव न चेत्तस्मिन्गृहे वसेत् ॥१०२॥

यद्यन्नमत्तीत्यादि। १०२। एवमसपिण्ड प्रेत*निर्हारकोयदि प्रेतं*निर्हृतवतां तेषां मध्ये*सपिण्डानामन्नमत्ति*तदा दशाहेनैव हि*तेषामशौचात्ययेशुध्यति। १। यद्यसपिण्डं प्रेतं निर्हृत्य तदन्नं नादन्*तद्गृहे वसेत्तदा त्वह्नैकेन*शुध्यतीत्यनेनपूर्वं*शौक्तं तदन्नमदन्नद्गृहे वसं स्त्रिरात्रेणशुध्यतीति ख्यापितं। २। ० १०२। ०।

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा। स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥१०३॥

अनुगम्येत्यादि। १०३। ज्ञातिमज्ञातिं वा प्रेतं *स्वेच्छयाऽनुगम्याऽस्मर्य* वहनदहनादिकं *विना पिसहैव गत्वा* सचेलः स्नात्वाग्निं स्पृष्ट्वा * घृतं प्राश्य विशुध्यति। १। १०३।

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता॥१०४

न विप्रमित्यादि॥ १०४। मृतं विप्रं स्वेषु ज्ञातिषु विप्रेषु* वा तिष्ठत्सु वर्त्तमानेषु* न शूद्रेण नाययेत्। १। कस्मात् हि यस्माच्छूद्रसं*स्पर्शदूषिता सा शव*सात्म्याहुतिरस्वर्ग्या स्यात्। २। तर्हि क्षत्रियवैश्याभ्यां *किं नयने दोषो नास्ति * तथैवासत्सु विप्रेषु* किं शूद्रेण नयने दोषो नास्तीति चेत्। ३। शूद्रसंस्पर्शदुष्टविप्रशवस्य *ग्न्याहुतेरस्वर्ग्यत्व*मेव क्षत्रियवैश्याभ्यां * नाययेदिति ज्ञापनार्थं *स्वेषु तिष्ठत्स्वित्युक्तं। ४। ०। १०४ शुद्धेः कारणान्याह* ज्ञानं तप इत्यादि। १। ०। १०५। ०।

ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम्। वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम्॥१०५

ज्ञानादिकं किञ्चित्कर्त्तृ*देहिनां शुद्धेः कर्तृ स्यात्*तद् यथाक्रमादुदाहरति। १। बुद्धिर्ज्ञानेन शुध्यति*तपसा वेदवित्तमा शुध्यन्ति*पुनः पाकेन मृन्मयं*पात्रं शुध्यतीत्यग्निः। २। पञ्चगव्येन शुद्धिरित्याहारः*एका लिङ्गे गुदे तिस्र* इति मृदथ मनःपूतं*समाचरेदित्युक्तं। ३। वारि यथा पुनः प्रक्षालनात् क्रमशः*शुध्यन्तीत्युक्तमुपाञ्जनं यथा*मार्जनालेपनैर्वेश्म शुध्यतीत्युक्तं चेतिभिः। ४। यथा वातेन शुध्यतीति वायुः* कर्म यथा यज्ञेनवाश्वमेधेनेति*गामालभ्याऽर्कं वीक्ष्येत्युक्तमत्र * कालो यथा शुद्धो विप्रो दशाहेनेति। ५। ०। १०५। ०।

सर्व्वेषामेव शौचानामर्थशौचं परं स्मृतम्। योऽर्थे शुचिर्हि स शुचिर्न मृद्वारि शुचिः शुचिः॥१०६

सर्व्वेषामित्यादि*। १०६। अर्थशौचं धनप्रतिग्रहशौचं *सर्व्वेषां शौचानां मध्ये *परं श्रेष्ठ शौचं स्मृतम्। १ कस्मात् हि यस्मादर्थं धनप्रति*ग्रहे शुचिः स शुचिः स्यात्*मृद्वार्यादिशुचिस्तु न* शुचिः श्रेष्ठशुचिर्भवेत्। २। १०६।

क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्यकारिणः। प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः॥१०७॥

क्षान्त्येत्यादि। १०७। विद्वांसः शास्त्रमिरूपद्रुताः सन्तः*क्षान्त्या तत्कृत प्रतिकारापकार *निवृत्त्या शुध्यन्ती तेषां*भाविपापाशौचशुद्धिः। १। अकार्याकारिणो वेद*विधिविपर्ययेण तु*कर्मकारिणो दानेन शुध्यन्तीति। २। प्रच्छन्नपापा अप्रकाशित पाप * कारिणो जप्येन गायत्रीजप्येन * शुध्यन्ति वेदवित्तमा * अकार्याकारिणस्तपसा ३। ०॥ १०७।

त्तोयैः शुद्ध्यते शोधं नदी वेगेन शुद्ध्यति। रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥१०८

ब्तोयै रित्यादि। १०८। शोधं मलादाक्तं यत्पात्रादिकं तत्*सर्व्वं ब्तोयैः शुद्ध्यति*नदीपुरीषादिदुष्टा नद्यपि तमाद्यति। १। मनोदुष्टामनसान्य*पुरुषरतीच्छया*दुष्टामनसा दुष्टाच* याःस्त्रीस्वेच्छा विनापर* हविषसं भुक्तासा। २। रजसामासान्ते त्व सेवरक्तेन*प्रवृत्ते न शुद्ध्यति*तदुक्तमुशनसि चिताम्। ३। नस्त्रीदु जारेणात्राह्मणोऽवेदकर्म्मणा। नापोमूत्रपुरीषाभ्या नाग्निर्दहतिकर्म्मणा। ४। पूर्व्वं स्त्रियःसुरै भुक्ताः* गन्धर्व्व वह्निभिः। भुञ्जते मानवाः पश्चान्नता दूष्यन्तिकर्हिचित्। ५। स्वयं विप्रतिपन्ना यायदिवापि प्रता ता। वलान्नारी प्रभुक्ता वा चौरभुक्तातथापि वा। ६। नत्याज्यादूषितानारी नकामोऽस्याविधीयते। ऋकाले उपासीत पुष्पकालेन शुद्ध्यति। ७। असवर्णैस्तुयोगर्भः स्त्रीणां योनौ निषिच्यते। अशुद्धासाभवे रीयावद्गर्भं नमुञ्चति। ८। विमुक्ते ततःशल्ये रजश्चापि प्रदृश्यते। तदासाशुद्ध्यते नारी विमलं काञ्चनं यथा। ९। इति। याज्ञवल्क्ये नचोक्तं*सोमःशौचं ददौतासां गन्धर्व्वाश्च शुभां गिरम्। पावकः सर्व्वमेध्य मेधावै योषितोह्यतः। १०। इति। संवर्त्तेनचोक्तं यथा*लोभिन्द्रियं नसं प्राप्ते सोमोभुङ्क्तेच्छिकणाकाम्। दृष्टा वगन्धर्व्वः कचौ दृष्टा वपावकः इति। ११। तेनाकामतो जारदोषो नस्त्रीणां* भवतितथाविधजारभु हि*रजसैव शुद्ध्यतीति*प्रायश्चित्तान्तरमस्ति। १२। संन्यासेनकामाकर्म्म* त्यागेनसकलपापा*द्विजोत्तमो शुद्ध्यति॥ १२॥ ०॥ १०८॥

द्भिर्गात्राणि शुद्ध्यन्ति मनःसत्येन शुद्ध्यति। विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति१०९॥

अद्भिरित्यादि। १०९। गात्राणि मलादद्भिःशुद्ध्यन्ति मनः*सत्येनवाक्यं न शुद्ध्यति*विद्यातपोभ्यां भूतात्मा* तिबुद्धिर्ज्ञानेन*शुद्ध्यतिबुद्धिरहङ्कारः। १। ०। १०९।

शौचस्य वः प्रोक्तः शारीरस्य विनिर्णयः। नानाविधानां द्रव्याणां शुद्धेः शृणुत निर्णयम्॥ ११०॥

उपसंहरति एष इत्यादि। ११०। शारीरस्य शौचस्यैष* विनिर्णयो वो युष्मभ्यं *मयाप्रोक्तोऽथ द्रव्याणां * नाविधानां शुद्धेः*निर्णयं मत्तः शृणुतः। १। ०। ११०।

जसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च। भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः॥ १११॥

तैजसानामित्यादि*। १११। तैजसानां तेजोभूत * वहुलपञ्चभूतारब्ध*द्रव्याणां नवतैघटितानां * प्रभृतीनां भस्मनाशुद्धि * मणीनामद्भिःशुद्धिः। १। सर्व्वस्याश्ममयस्य प्रस्तर*घटितस्य पात्रादेर्मृदैव* उक्तामनीषिभिः*मन्वादिभिःशुद्धिविद्धि। २। ०। १११।

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुद्ध्यति। अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम्॥ ११२

निर्लेपमित्यादि। ११२। काञ्चनं भाण्डं निर्लेपं * स्वर्णभाण्डश्चेत् नचिदशुचिना * द्रव्येणानुस्पृष्टं निर्लिप्तसाधकं * रद्भिरेव भवतीति। १। अनुपस्कृतं कृत्रिमे* रेखादिभिरभूषितं* मञ्जं शङ्खादिकम्* अश्मस्तरमयं। २। राजतं रजतमयञ्चाद्भिरेव* शुद्ध्यतिसर्व्वत्रानुपस्कृतमि*त्यस्यायोजनाविशेषया। १।०। ११ ननुकथं रजतं स्वर्णञ्चाद्भिः शुद्ध्यतीत्यत आह* अपामग्नेश्चेत्यादि। १।०। ११३।

अपामग्नेश्च संयोगाद्धेमरूप्यञ्च निर्वभौ। तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः॥ ११

हेमरूप्यञ्चापामग्नेः स*संयोगान्निर्वभौजज्ञे* तस्मात्तयोर्हेमरूप्ययोः स्वयोनौ * जले ननिर्णेकः शुद्धिर्गुणवत्तरः श्रेष्ठः। १। ११२

ताम्रायःकांस्यरैत्यानांत्रपुणःसीसकस्य च। शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः॥ १

ताम्रेत्यादि। ११४। ताम्रादीनात् शौचं शुद्धिः* क्षारेणाम्लोदकेनवा * वारिणावायथार्हं कर्त्तव्यं रैत पित्तलमयं त्रपुरङ्गं। १। ११४।

द्रवाणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम्। प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम्॥ ११

द्रवाणामित्यादि। ११५। सर्व्वेषां द्रवाणां दुग्ध* घृततैलादीनां काक*कीटाद्युपहतानां शुद्धि * रुत्प्लवनं कुशपत्रे *नोत्क्षेपणावक्षेपणम्। १। संहतानां राशिकृता*न्नशय्यादीनां काकाद्यशुचिद्रव्यै*रुपहतानां जलेन*प्रोक्षणं शुद्धिर्भवति। २। दारवाणां काष्ठमय*द्रव्याणामशुचिद्रव्यै*रुपहतानां शुद्धिस्तक्षणं स्यात्॥ ३॥ ११

मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि। चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु॥ ११६

मार्ज्जनमित्यादि। ११६। यज्ञकर्म्मणि यज्ञपात्राणां *चमसानां संदंशादीनां ग्रहाणां * पाणिनामार्ज्जनतः*प्रक्षालनेन शुद्धिः स्यात्॥ १॥ ०॥ ११६॥

चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा। स्फ्यशूर्पशकटानाञ्च मुषलोलूखलस्य च॥ ११७

चरूणामित्यादि। ११७। चरूणां स्रुक्स्रुवाणामशुचौवारि*णोष्णेन शुद्धिर्भवति*स्फ्यादीनाञ्चवारि*शुद्धिर्भवतीतिबोध्यम्। १। ०। ११७।

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते॥ ११

अद्भिरित्यादि। ११८। बहूनां धान्यानां वाससामद्भिः * प्रोक्षणं शौचं विधीयते। १। स्वल्पानां धान्यानां*वाससाञ्चाद्भि स्तु*प्रक्षालनेनतु*शौचं विधीयते। २। ११८।

चैलवच्चर्म्मणां शुद्धिर्वैदलानां तथैव च। शाकमूलफलानाञ्च धान्यवच्छुद्धिरिष्यते ॥११९॥

चैलेत्यादि। ११९। चर्म्मणां चैलवत्* बहूनामद्भिस्तु* प्रोक्षणं शुद्धिः स्यात्* दलानां चर्म्मनाम्। १। अद्भिः प्रक्षालनेन शुद्धिस्तथैव* वैदलानां बहूनामद्भिः प्रोक्षणं* अल्पानां प्रक्षालनेन शुद्धिः स्यात् ॥ २॥ शाकादीनां धान्यवद्बहूनामद्भिः* प्रोक्षणमल्पानामद्भिः* प्रक्षालनेन शुद्धिः स्यात् ॥ ३॥ ०॥ ११९॥

कौषेयाविकयोरूषैः कुतपानामरिष्टकैः। श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥१२०

वाससां विशेषाणां* शुद्धिविशेषमाह च* कौषेयाविकेत्यादि ॥ १॥ १२०॥ कोशजतवाससामाविकानाञ्च* वाससां मूषैश्चारमृत्तिकाभिः* शुद्धिर्भवतीति पूर्व्वेणायोजना। १। कुतपानां मेषलोम* कृतानामासनानां* कम्बलादीनामरिष्टकैः* निम्बफलकैः शुद्धिर्भवेत्। २। अंशुपट्टानां पट्टवस्त्राणां शुभैः* श्रीफलकल्कैर्भवति* क्षौमाणामतसीवल्कल* कृतवस्त्राणान्तु* श्वेतसर्षपकल्कैः शुद्धिः ॥ ३॥ ०॥ १२०॥

क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च। शुद्धिर्विजानता कार्य्या गोमूत्रेणोदकेन वा ॥ ॥१२१॥

क्षौमेत्यादि ॥ १२१॥ शङ्खशृङ्गाणां क्षौमवच्च * गौरसर्षपकल्केरेव* शुद्धिर्भवतीति। १। शुद्धिज्ञानवता जने* नास्थिदन्तमयं यद्द्रव्य* तत्पात्रादिकं तस्य शुद्धिर्गोमूत्रेणोदकेन वा कार्य्या स्यात् ॥ २॥ ०॥ १२०॥

प्रोक्षणात्तृणकाष्ठञ्च पलालञ्चैव शुध्यति। मार्ज्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृण्मयम् ॥ १२२ ॥

प्रोक्षणादित्यादि। १२२। तृणकाष्ठं पलालं धान्योज्झितं यत्* तृणं तच्च प्रोक्षणादद्भिः शुध्यति* मार्ज्जनोपाञ्जनैर्वेश्म शुध्यति ॥ १। मृण्मयं स्थालीकलस* शरावादिकमशुचि* स्पर्शनेन दुष्टं पुनः* पाकेन दाहेन शुध्यति ॥ २॥ ०। १२२। तत्रापवादमाह। मद्यैरित्यादि ॥ १२३।

मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः। संस्पृष्टं नैव शुध्येत पुनःपाकेन मृण्मयम् ॥१२३॥

मद्यादिभिः संस्पृष्टं मृण्मयं पात्रा * दिकं पुनःपाके * न शुध्येतेति त्यजेत् ॥ १२३॥ ०॥ मार्ज्जनेत्यादि। १२४।

सम्मार्ज्जनोपाञ्जनेन सेकेनोल्लेखनेन च। गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः ॥ १२४ ॥

मार्ज्जनञ्चोपाञ्जनञ्च * जलैः सेकश्च कुद्दालादिभिर्मृदा * उल्लेखनञ्च गवां परिवासश्च * पञ्चभिरेतैर्भूमिः शुध्यति। १। ०। १२४।०।

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्। दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥

मूत्रमुत्सृज्य उपस्थे * एकाल्लिङ्गे दातव्या * पुरीषं विसृज्य तच्छुद्ध्यर्थं गुदे * तिस्रोऽन्यस्मिन् दातव्याः * एके करे इति ॥१॥ येन करेण लिङ्गग्रहणं * पायुशौचं करोति * तस्मिन् वामे करे * दश दातव्याः मृदोऽपि मृदः देयाः ।२। उभयोः करयोर्मिलितयोः सप्त * वा तिस्रः * चर्मभीप्सता जन देया ।३।१३६ विस्तरेण पादयोश्च शौचविधानं * पर्वतोऽध्याये मेऽपि प्रसाधनमिति श्लोकेन पूर्वं प्रदर्शितम् । ४ । ० । १३६ ।

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम् १३७

एतच्छौचमित्यादि । १३७ । स्पष्टार्थोऽयं श्लोकः । १३७ ।

कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् । वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्व्वदा ॥१३८।

कृत्वेत्यादि । १३८ । मूत्रं कृत्वा पुरीषं वा * कृत्वा गन्धलेपादि * विधिना शौचं विधाय * चान्तः खानियथोक्तं विधिनोपस्पृशेत् ।१। वेदमध्येष्यमाणश्च * पूर्वमाचान्तः खान्युपस्पृशेदन्नाद्यश्चाशुभ गणारम्भे * मुखाचान्तः खानिस्पृशेदिति सर्व्वदा स्पृशेत् । २ । ० । १३८ । कथमाचामेदित्यत आह * ।

त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम्। शारीरं शौचमिच्छन् हि स्त्री शूद्रश्च सकृत्सकृत् १३९

त्रिराचामेदित्यादि । १ । ० । १३९ । शारीरं शौचमिच्छन् हि * द्विजः पूर्वं ब्राह्मणादिना * तीर्थेनापस्त्रिराचामेत् । १ । ततो मुखमोष्ठौ द्विः प्रमृज्यात्ततः * खान्युपस्पृशेदित्याह * मननविधानं प्रागुक्तं * स्त्री शूद्रश्च पूर्वमप * सकृत्सकृदाचामेत् । २ । ० । १३९ । इदानीं शूद्राणां धर्ममाह * ।

शूद्राणां मासिकं कार्यं वपनं न्यायवर्त्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम् १४०

शूद्राणामित्यादि । १४० । शूद्राणामशौचे मासिकं वपनं * कार्यं न्यायवर्त्तिनां शूद्राणामिति * ब्राह्मणसुश्रूषासेवनं धर्मार्थं । १ । वृत्त्यर्थं क्षत्रियसेवनं * धनार्थं च वैश्यसेवनं * ये शूद्राः कुर्व्वन्ति तेषाम् * वैश्यवच्छौचकल्पश्च स्यात् । २ । पञ्चमं वर्णाशौचं * स्त्रीणां सूतिकाशौचञ्च * न मासाशौचमन्येषां * मासाशौचं न वैश्यवत् * पक्षाशौचं द्विजोच्छिष्टं च भोजनं । ३ ।१४० ।

नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गं पतन्ति याः। न श्मश्रूणि गतान्यास्यं न दन्तान्तरधिष्ठितम् १४१

नोच्छिष्टमित्यादि । १४१ । मुखान्मुखान्निःसृता या * विप्रुषः मुखाद्द्रवकणा अङ्गे * पतन्ति ता विप्रुषस्तु * इदमुच्छिष्टं न कुर्व्वते । १ । आस्यं गतानि श्मश्रूणि * नोच्छिष्टं कुर्व्वते दन्तान्त * दन्तमध्ये अधिष्ठितं च * तच्चोच्छिष्टं न कुरुते । २ । ० । १४१ ।

मृशन्ति बिन्दवः पादौ यआचामयतः परान। भौमिकैस्तेसमाज्ञेयानतैरप्रयतोभवेत् ॥ १४२ ॥

स्पृशन्तीत्यादि ।१४२। आचामतोजनतास्यात्*पतन्तो*ये जलसाबिन्दवस्तौ*पादौपरान्वास्पृशन्ति । १ । ...तितास्ते बिन्दवस्तुभौमिकै*जलबिन्दुभिःसमाज्ञेयाः*तैर्नरोनाप्रयतोभवेत् । २ । १४२ ।

उच्छिष्टेनतुसंस्पृष्टोद्रव्यहस्तःकथञ्चन । अनिधायैवतद्द्रव्यमाचान्तःशुचितामियात् ॥ १४३ ॥

उच्छिष्टेनेत्यादि । १४३ । द्रव्यहस्तोद्विजःकथञ्चनकेन*चिदुच्छिष्टेनजनेन*संस्पृष्टस्तद्द्रव्यं भूमौ* ननि...धायतद्द्रव्यहस्तएवचान्तःएव*शुचितामियादिति । १ । ० । १४३ ।

वान्तोविरिक्तःस्नात्वातुघृतप्राशनमाचरेत् । आचामेदेवभुक्त्वान्नंस्नानंमैथुनिनःस्मृतम् १४४

वान्तोविरिक्त इत्यादि* । १४४ । वान्तोवाविरिक्तोवाचे* तदास्नात्वाघृतप्राशनमाचरे * दन्नं भुक्त्वाचामे...मैथुनिनःस्नानं*मैथुनं कृत्वास्नायादितिः । १ । १४४ ।

सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वानृतानिच।पीत्वापोऽध्येष्यमाणश्चआचामेत्प्रयतोऽपिसः।१४५

सुप्त्वेत्यादि । १४५ । द्विजःसुप्त्वाचक्षुत्वाच*भुक्त्वाचनिष्ठीव्यचानृतानिचोक्त्वा *पीत्वाचापोऽध्येष्यमाणश्च*प्र...वं प्रयतोपिसआचामेदिति । १ । १४५ ।

एषशौचविधिःकृत्स्नोद्रव्यशुद्धिस्तथैवच । उक्तोवःसर्ववर्णानांस्त्रीणांधर्मान्निबोधत ॥१४६॥

उपसंहरतिएषइत्यादि । १४६ । सष्टार्थोऽयंश्लोकः ॥ १४६ ।

बालयावायुवत्यावावृद्धयावापियोषिता। नस्वातन्त्र्येणकर्त्तव्यंकिञ्चित्कार्यंगृहेष्वपि ॥१४७॥

बालयेत्यादि । १४७ । बालयायोषितापिवा* दानवयाम्बस्वे ष्वपिस्वगृहे *परगृहे पिनकिञ्चित्स्वातन्त्र्येण ...कार्यंकर्त्तव्यं । १ । युवत्यायोषितावास्वातन्त्र्येण*भर्त्रादानवयाश्चस्वगृहेषु* परगृहे ष्वपिनकिञ्चित्कार्यं ।२। ...वृद्धयायोषितावास्वातन्त्र्येण * पुत्रादानवयाश्चस्वगृहे वा * परगृहे वानकिञ्चित् कार्यंकर्त्तव्यम् । ३ । १४७ ।

...णांवशेतिष्ठेदित्याहबाल्य*बाल्यइत्यादिश्लोकेन । १ ।१४८ ।

बाल्येपितुर्वशेतिष्ठेत्पाणिग्राहस्ययौवने । पुत्राणांभर्त्तरिप्रेतेनभजेत्स्त्रीस्वतन्त्रताम् १४८

पाणिग्राहस्यभर्त्तुरिति । १४८ ।

पतापावप्रजापते *यंम्नः समपदीगममान्त *क्रियाप्रयुज्यते ।२ । तस्मान्नारीजीवतः*पत्या:शुश्रूषा कार्या*अ,त
त्यासयात् । १ । क्वचित्पुस्तके स्वामाकारणमिति * पाठोऽस्माते तस्मिन् पाटे * प्रदाने वस्त्रामित्व‌ व्य
। पुनःप्रजापतियज्ञः*प्रयुज्यते इत्याभिस्तु*वाचौभवतीतिशेयं । यद्वे वंव्याख्यायते *आसां मङ्गलार्थं
।*सर्वे कालमतासगोत्रतासपिण्डतासद्धर्माचरणतादिमङ्गलार्थं * प्रजापतेर्यज्ञःसप्तपदीगमनान्तं कर्मस्वस्त्य
यनार्थं युज्यते । वरस्यस्वामाकारणं पित्रादिभिरासां प्रदानं प्रयुज्यते इतितदास्वामी तिपाठोयुक्तःस्यादिति ।
ारीणां ताभ्यां किं स्यादितातयाह ।

:तावृतुकाले चमन्त्रसंस्कारकृत्पतिः। सुखस्यनित्यंदातेहपरलोके चयोषितः॥ १५३॥

अनृताविलादि । १ । १५१ । मन्त्रसंस्कारकृदिति*विवाहमन्त्रैर्योषितः*संस्कारकतस्वेनस्वं * काली
दिगुणाधान कृत्पतिः । १ । अनृतौच ऋतुकालेचेहनिता * सुखस्य दातापरस्मिं * लोकेच सुखस्य
।।।१५३।

ोलःकामवृत्तोवागुणैर्वापरिवर्जितः। उपचर्यःस्त्रियासाध्व्यासततंदेववत्पतिः ॥१५४॥

तस्मादाहविशीलइत्यादि । १५४। यस्माद्योषितइह* लोकेपरलोके*सुखस्यदातापतिस्तस्मा*द्विशीलोवास्व
इत्तोयथे ष्टवृत्तोवाखौजनयादिभिर्गुणैर्विर्जितोवापतिः । १ । साध्व्यास्त्रियासततं देववदुप*चर्यः सेवाभिरा
।।२।१५४।

नास्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषितम्। पतिं शुश्रूषते येनतेनस्वर्गेमहीयते ॥ १५५॥

नास्तीत्यादि । १५५ । स्पष्टार्थोऽयंश्लोकः । १५५ ।

ाणिग्राहस्यसाध्वीस्त्रीजीवतोवामृतस्यवा।पतिलोकमभीप्सन्तीनाचरेत्किञ्चिदप्रियम्॥१५६

पाणिग्राहस्येत्यादि । १५६। पतिलोकमभीप्सन्ती*साध्वीस्त्रीपाणिग्राहस्य*पत्युर्जीवतोवामृतस्यवाकिञ्चि*
िन्नाचरेत् । १ । १५६ । नवमृते पत्यौकार्य *देहं क्षपयेदित्यत*आह ।

ामंतुक्षपयेद्देहंपुष्पमूलफलैःशुभैः। नतुनामापिगृह्णीयात्पत्यौप्रेतेपरस्यतु ॥ १५७॥

कामन्त्वित्यादि ।१।१५७। पत्यौप्रेते साध्वीस्त्रीकामन्तु*पुष्पफलादिभिःशुभैराहारै*र्देहं क्षपयेत्कृशं कुर्यात्
न्यतोपुनः । १ । परस्यपुरुषस्यनामापिकिञ्चिन्न*गृह्णीयादिति निश्चयः । २ । १५७ ।

ोतामरणात्क्षान्तानियताब्रह्मचारिणी। योधर्मएकपत्नीनांकाङ्क्षन्तीतमनुत्तमम्॥१५८

यथापतिर्यथावर्त्तिनी ॥ १२ ॥ छायेवानुगता स्वच्छा सखीव हितकर्म्मसु । दासीवादिष्टकार्य्येषु भार्य्या भ
र्त्तुः सदा भवेत् ॥ १३ ॥ ततोऽन्नसाधनं कृत्वा पतये विनिवेदयेत् । वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत्
१४ ॥ पतिञ्चैतदनुज्ञाता शिष्टमन्नाद्यमात्मना । भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया ॥ १५ ॥ पुनः सायं
पुनः प्रातर्गृहशुद्धिं विधाय च । कृतान्नसाधना साध्वी सभृत्यं भोजयेत् पतिम् ॥ १६ ॥ नातितृप्ता स्वयं भुक्त्वा गृह
नीतिं विधाय च । आस्तीर्य्य साधुशयनं ततः परिचरेत् पतिम् ॥ १७ ॥ सुप्ते पत्यौ तदभ्याशे स्वपेत्तद्गतमानसा ।
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥ १८ ॥ नोच्चैर्वदेन्न परुषं न बहु पत्युरप्रियम् । न केनचिद्वि
वदेच्च अप्रलापविलापिनी ॥ १९ ॥ न चातिव्ययशीला स्यान्न धर्म्मार्थविरोधिनी । प्रमादोन्मादरोषेर्षा वञ्चनञ्चाति
मानिताम् ॥ २० ॥ पैशुन्यहिंसाविद्वेषमोहाहङ्कारधूर्त्तताः । नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत्
२१ ॥ एवं परिचरन्ती सा पतिं परमदैवतम् । यशः शमिह यात्येव परत्र च सलोकताम् ॥ २२ ॥ योषितो नित्य
कर्म्मोक्तं नैमित्तिकमथोच्यते । रजोदर्शनतो दोषात् सर्व्वमेव परित्यजेत् ॥ २३ ॥ सर्व्वैरलक्षिता शीघ्रं लज्जि
तान्तर्गृहे वसेत् । एकाम्बरावृता दीना स्नानालङ्कारवर्जिता ॥ २४ ॥ मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला ।
अश्नीयात् केवलं भक्तं नक्तं मृन्मयभाजने ॥ २५ ॥ स्वपेद्भूमावप्रमत्ता क्षिपेदेवमहस्त्रयम् । स्नायीत च त्रिरात्रान्ते
सचेलमुदिते रवौ ॥ २६ ॥ विलोक्य भर्त्तृवदनं शुद्धा भवति धर्म्मतः । कृतशौचा पुनः कर्म्म पूर्व्ववच्च समाचरेत् ॥ २७ ॥
रजोदर्शनतो याः स्यू रात्रयः षोडशार्त्तवाः । ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥ २८ ॥ चतस्रश्चादिमा रात्रीः
पर्व्ववच्च विवर्जयेत् । गच्छेद्युग्मासु रात्रीषु पौष्णपित्र्यर्क्षराक्षसाः ॥ २९ ॥ प्रच्छादितादितायथे पुमान्गच्छेत्
स्वयोषितः । क्षामालङ्कृतवाप्नोति पुत्रं पूजितलक्षणम् ॥ ३० ॥ ऋतुकालेऽभिगामी वै ब्रह्मचर्य्ये व्यवस्थितः ।
गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत् ॥ ३१ ॥ भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः । सा त्ववाप्या
न्यतो गर्भं त्याज्या भवति पापिनी ॥ ३२ ॥ महापातकदुष्टा च पतिगर्भविनाशिनी । आशुद्धेः संयमाद्दूरं स्थिताया
मलचिन्तया ॥ ३३ ॥ व्यभिचारेण दुष्टायां पतिसन्दर्शनादृते । धिक्कृतायामवाच्यायामन्यत्ववास्ये स्तुताम्
३४ ॥ पुनस्तामार्त्तवस्नातां पूर्व्ववद्व्यवहारयेत् ॥ धूर्त्तां च धर्म्मकामघ्नीमपुत्रां दीर्घरोगिणीम् ॥ ३५ ॥ सुदुष्टां
व्यसनासक्तामहितामधिवेदयेत् । अधिविन्नामपि विभुः स्त्रीणां तु समतां नयेत् ॥ ३६ ॥ सहचारिणी पत्नी
त्यक्ता पतति धर्म्मतः । महापातकदुष्टोऽपि सम्प्रतीक्ष्यस्तया पतिः ॥ ३७ ॥ विवर्णा दीनवदना देहसंस्कारवर्जिता ।
पतिव्रता निराहारा शोष्यते प्रोषिते पतौ ॥ ३८ ॥ मृतं भर्त्तारमादाय ब्राह्मणी वह्निमाविशेत् । जीवन्ती चेत्त्य
क्तकेशा तपसा शोषयेद्वपुः ॥ ३९ ॥ सर्व्वावस्थासु नारीणां न युक्तं स्यादरक्षणम् । तदेवानुक्रमात् कार्य्यं पितृ
भर्त्तृसुतादिभिः ॥ ४० ॥ जाताः सुरक्षिताया ये पुत्रपौत्रप्रपौत्रकाः । ते यजन्ति पितॄन् यज्ञैर्मोक्षप्राप्तिमहोदयैः
४१ ॥ मृतां तामग्निहोत्रेण दाहयेद्विधिपूर्व्वकम् । दाहयित्वा ऽविलम्बेन भार्य्यान्याश्चाग्निं व्रजेत्सः ॥ ४२ ॥
॥ ४३ ॥ इति व्यासोक्तस्त्रीधर्म्मः । दक्षेणोक्तं यथा । सा भार्य्या या वहेदग्निं सा भार्य्या या पतिव्रता । सा भार्य्या या
पतिप्राणा सा भार्य्या या प्रजावती ॥ १ ॥ लालनीया सदा भार्य्या ताडनीया तथैव च । लालिता ताडिता चैव स्त्री श्री
र्भवति नान्यथा ॥ २ ॥ इति दक्षसंहितायामप्युक्तं * पत्नीमूलं गृहं पुंसां यदि च्छन्दोऽनुवर्त्तिनी । गृहाश्रम
समं नास्ति यदि भार्य्या वशानुगा ॥ १ ॥ तया धर्म्मार्थकामानां त्रिवर्गफलमश्नुते । प्राकाम्ये वर्त्तमाना वे ह्य

अनेनविधिनानित्यं पञ्चयज्ञान्नहापयेत्। द्वितीयमायुषोभागं कृतदारोगृहे वसेत् ॥ १६९ ॥

अनेनेत्यादि । १६९ । अनेनोक्तेनविधिना*नित्यं पञ्चयज्ञान्न त्यजेत्*द्वितीयमायुषो भागं *कृतदारः सन्धर्मेण *वाचरन्गृहे वसेदिति । १ । १६९ ।

॥ * * ॥ इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां शौचादिविधिःपञ्चमोऽध्यायः॥ * *॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां । श्रीवैद्य गङ्गाधर कविराज कृतायां प्रमादभञ्जन्यां पञ्चमाध्यायस्य प्रमादभञ्जनीव्याख्यापञ्चमाध्यायः ।*।५।*।*।

---

गृहाश्रमधर्म्मंउक्त्वा* वनाश्रमधर्म्मं वक्तुं षष्ठ.*मध्यायमारभते एवं*गृहाश्रमे स्थित्वेत्यादि ।१।०।१।

एवंगृहाश्रमे स्थित्वाविधिवत्स्नातकोद्विजः। वनेवसेत्तु नियतोयथावद्विजितेन्द्रियः ॥ १ ॥

स्नातकोद्विजःखलुद्विसुतब्रह्म*चर्य्या स्नात्वासमावृत्तोब्राह्मणादि*रेव अक्रमप्रकारेण । १ । * विधिवद्गृहाश्रमे स्थित्वा *नियतोविजितेन्द्रियः * सन्यथावद्वनेवसेत् । २ । ० । १ । ० । ननुकति पर्य्यन्तयावद्वने वसे* दित्यतआह गृहस्थ * स्तुयदापश्येदित्यादि । १ । ० । २ ।

गृहस्थस्तु यदापश्येद्वलीपलितमात्मनः। अपत्यस्यैवचापत्यं तदारण्यं समाश्रयेत् ॥ २ ॥

गृहस्थोद्विजोयदात* खल्वात्मनोवलीपलितं पश्येत्*तदारण्यं समाश्रयेत् । १ । अपत्यस्य'चापत्यं पौत्रं पश्ये* दात्मनोवलीपलितं* पश्येत्तदापश्येत्तदा*चारण्यं समाश्रयेदि*त्यन्वयप्रोद्विजीयाश्रातार्थ ।२।०। कथंवसेदित्यतआहसंत्यज्य ग्राम्येत्यादि* । १ । २ ।

सन्त्यज्यग्राम्यमाहारं सर्व्वञ्चैवपरिच्छदम्। पुत्रेषुभार्य्यांनिक्षिप्यवनंगच्छेत्सहैववा ॥३॥

पुत्रेषुभार्य्यांनिक्षिप्य* भार्य्यया स्वयातयासहैववापाग्म्य * माहारं सर्व्वञ्चपरि * च्छदं सन्त्यज्यवनं गच्छेदिति । १ । २ । ० । नन्वग्निहोत्रादिकं किं*पुत्रेषुनिक्षिप्य वनंगच्छेदि*त्यतआहअग्नीत्यादि ।१।०। ३।

वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः। पुरोडाशांश्चरूंश्चैव विविधवन्निर्वपेत् पृथक्॥११॥

वासन्तेत्यादि। ११। स्वयमाहृतैर्मेध्यैर्वासन्तैः* शारदैश्च मुन्यन्नैर्निष्पन्नान्* पुरोडाशांश्चरूंश्चैव* विधिवत्पृथक्निर्वपेत्। १। ०। ११।

देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः। शेषमात्मनि युञ्जीत लवणञ्च स्वयं कृतम्॥१२॥

देवतेत्यादि। १२। तद्वन्यं वासन्तं शारदं* मेध्यतरं हविर्देवताभ्यो* हुत्वा शेषमात्मनि च*भार्यायाञ्च युञ्जीतेति। १। लवणञ्च तत्रपद्देशे*तदपि स्वयं कृतमप*युञ्जीतनपरकृतम्। २। ०। १२। ०।

स्थलजौदकशाकानि पुष्पमूलफलानि च। मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसम्भवान्॥१३॥

स्थलजेत्यादि। १३। स्थलजानि चौदकानि च शाकानि* मेध्यवृक्षोद्भवानि च* पुष्पमूलफलान्यद्यात्* फलसम्भवांश्च स्नेहांस्*तैलादीनद्यान्नघृतादीन्। १। ०। १३। ०।

वर्जयेन्मधु मांसञ्च भौमानि कवकानि च। भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च॥ १४॥

वर्जयेदित्यादि। १४। भौमानि कवकानि चेति * पूर्व्वं द्विजानामभक्ष्येषु* कवकमात्रमभक्ष्यमुक्तं न*वनस्थानां। वनस्थानां भौम*कवकमभक्ष्यमेवेदं* वृक्षजं भक्ष्यमिति। १। यमेनेव* प्रकरणे [illegible] भूमिजं वृक्षजं वापि श्वेताकं भक्षयन्तिये। ब्रह्मघ्नांस्तान्विजानीयाद्ब्रह्मवादिषु गर्हितान्। इति। २। प्रमादोक्ते वर्मविद्वान्* नन्याख्यावयाचष्टे तन्न भौमानीति विशेषणात्। ३। ०। १४।

त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम्। जीर्णानि चैव वासांसि शाकमूलफलानि च॥१५॥

त्यजेदित्यादि। १५। आश्वयुजे मासाश्विने * ग्रामाद्भारभिन्न पूर्व्वं * सञ्चितं वनान्नं जीर्णानि वासांसि शाकमूलफलानि च*वनस्थो द्विजस्त्यजेत्। १। १५।

न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित्। न ग्रामजातान्यार्त्तोऽपि मूलानि च फलानि च॥ १६॥

न फालकृष्टमित्यादि। १६। वनाश्रमी द्विजः फाल*कृष्टं सस्यं नाश्नीयादन्न*केनचिदुत्सृष्टं त्यक्त*मपि चाश्नीयात्ग्राम*जातानि मूलफलान्यार्त्तोऽपि नाश्नीयात्। १। ०। १६।

अग्निपक्वाशनो वा स्यात्कालपक्वभुगेव वा। अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा॥ १७॥

अग्नीत्यादि। १७। अग्निपक्वाशनो वा स्या * दितिजलं विनाकेवलेनाग्निना*पक्वं यद्वन्यं द्रव्यं तदाशी वा

श्नात्*कालपक्कफलभुग्वास्यात्। १। अश्मकुट्ट इति प्रस्तरेणाकुट्ट* यित्वाश्नीयाअग्रखण्डेण * दन्तोलूखलिकी वास्यात् * दन्तैश्चर्म्म यित्वोदूखलेन*आकुट्टयित्वाभचयेत्*। २। ०। १७।

सद्यःप्रचालकोवास्यान्मासस्सञ्चयिकोपिवा। षण्मासनिचयोवास्यात्समानिचयएववा॥१८॥

सद्यइत्यादि। १८। तद्दिनाहारोप* युक्तसञ्चयीत* सद्यःप्रचालक*उच्यते*मासाहारोपयुक्तद्रव्यसञ्चयी* षण्मासनिचयीवास्यात्। १। समानिचयःसंवत्सराहारोप*युक्तद्रव्यसञ्चयीवास्यात्। २। १८। ०।

नक्तञ्चान्नंसमश्नीयाद्दिवावाहृतयशक्तितः। चतुर्थकालिकोवास्यात्स्याद्वाप्यष्टमकालिकः॥१९॥

नक्तञ्चेत्यादि। १९। अन्नमप्यामात्तकं य* नक्तमश्नीयाद्यशक्तितोदिवापाहृत्य* तदन्नमश्नीयादथवा* चतुर्थयामार्द्धेऽश्नीया*दथवाष्टमयामार्द्धे। १। १९।

चान्द्रायणविधानैर्वाशुक्लेकृष्णेचवर्त्तयेत्। पक्षान्तयोर्वाप्यश्नीयाद्यवागूंक्वथितांसकृत्॥२०॥

चान्द्रायणेत्यादि। २०। अथवाचान्द्रायणविधानेःशुक्ले*पक्षेक्रमादेकैकग्रासंवर्द्धयेत् *कृष्णे चैकैकग्रासंक्रमाद्ह्रासयेत्। इत्येवंचान्द्रायणविधानै* वर्त्तयेद्दिनंयापयेत्। २। अथवापक्षान्तयोः पौर्णमासामा*वास्ययोरश्नीयादथवायवागूंक्वथितांसिद्धक*षहितांसकृदेकवारमश्नीयात्। १। २०।

पुष्पमूलफलैर्वापिकेवलैर्वर्त्तयेत्सदा। कालपक्वैःस्वयंशीर्णैर्वैखानसमतेस्थितः॥२१॥

पुष्पेत्यादि। वानप्रस्थोद्विविधस्तत्रैकतरो * द्वितीयस्तुवैखानस*स्तस्यमतेस्थितःकाल*पक्वैःस्वयंशीर्णैः पुष्पादैः* केवलैःसदावर्त्तयेत्। १। २१। ०।

भूमौविपरिवर्त्तेत तिष्ठेद्वाप्रपदैर्दिनम्। स्थानासनाभ्यांविहरेत् सवनेषूपयन्नपः॥ २२॥

अपरञ्चाहभूमावित्यादि। २२। वैखानसमतेस्थितो * द्विजोभूमौविपरिवर्त्तेतपार्श्वात्पार्श्वपरिवर्त्तं कुर्य्यात्॥ १॥ प्रपदैर्वाप्रपदाग्रैणाग्निहोत्रा*तिष्ठेत्स्थानासनाभ्यां*कश्चित्स्थितिःकश्चिदुप*वेशनमित्येवंविहरेत्* ।२। सवनेषुसायंप्रगेमध्याह्ने च*स्नानेषूपउपयन्नदीतडागादि*षूपउपगच्छन् भवतीतिशेषः। ३। ०। २२। ०।

ग्रीष्मेपञ्चतपास्तुस्याद्वर्षास्वभ्रावकाशिकः। आर्द्रवासास्तुहेमन्ते क्रमशोवर्द्धयंस्तपः॥ २३॥

ग्रीष्मेइत्यादि। २३। ग्रीष्मकालेपञ्चतपाः*चतसृषुदिक्षुग्नीन्*कृत्वामध्येत्वाग्नीनऊर्द्धमातप*सेवेतेति पञ्चतपाः। १। वर्षास्वभ्रमाकाशमवकाश*माश्रित्यावर्त्तनाच्छादितदेशे*हेमन्तेजलार्द्रवासाः* क्रमशस्तपोवर्द्धयेत्। २। ०। २३। ०।

उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत्। तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः ॥ २४ ॥

उपस्पृशन्नित्यादि। २४। त्रिषवणं सायं प्रातर्मध्याह्ने च*स्नानं कुर्व्वन् पितॄन्देवांश्च तर्पयेत् *देवं उग्रतरं तप *श्चरन्नात्मनो देहं शोषयेत्। १।०।२४।

अग्नीनात्मनि वैतानान् समारोप्य यथाविधि। अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥ २५ ॥

अग्नीनित्यादि। २५। वैखानसमते स्थितो वानप्रस्थो*द्विजो वैतानानग्नीन् सम्यगात्मनि*यथाविधि वैखानस*शास्त्रोक्तविधानेनैव। १। समारोप्यानग्निः सन्*निकेतनहीनश्च सन्*मूलफलाशनोऽग्नि* मौनव्रत एव भवेत्। २।०।२५।

अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः। शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ २६ ॥

अप्रयत्न इत्यादि। २६। सुखार्थेषु प्रयत्नशून्यः स्यात् *ब्रह्मचारी मनोवाक्कायसंयुत* तथा गोशय्यादिशायी*भूमिशायी* सोऽच्छरणेषु ममः स्यात्। १। यत्नवस्तुत्ममताहीनः स्यात् *वृक्षमूलनिकेतः स्यात्। २।।०।२६।

तापसेष्वेव विप्रेषु यात्रिकं भैक्षमाहरेत्। गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ २७ ॥

तापसेष्वित्यादि।०।२७। तापसेषु विप्रेषु जीवनयात्रा*करं भैक्षं भिक्षित्वा गृहमेधिषु* चान्येषु वनवासिषु द्विजेषु वा भैक्षमाहरेत्। १।०।२७।

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन्। प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ २८ ॥

ग्रामादित्यादि। २८। ग्रामादष्टौ ग्रासान् पत्र*पुटेन पाणिना अथवा*खण्डिकादिशकलेन*वा प्रतिगृह्य आहृत्य* वने वसन्नश्नीयादिति। १।०।२८।

एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन्। विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ २९ ॥

एतादित्यादि ॥ २९ ॥ वैखानसमते स्थितो वने वसन्*विप्र एताश्चान्याश्च दीक्षाः सेवेत * विविधाश्चौपनिषदीः *श्रुतीरात्मसिद्धये सेवेत। १।०।२९।

ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः। विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३० ॥

ऋषिभिरित्यादि। ऋषिभिः सेविता एव*या औपनिषद्यः श्रुतयः*गृहस्थैर्ब्राह्मणैरेव च संसेविता*या औपनिषद्यः श्रुतयः। १। विद्यातपोविवृद्ध्यर्थं शरीरस्य शुद्ध्यर्थं च*ता औपनिषदीः श्रुतीः*विविधाः सेवेतेति। २।०।३०।

**अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः । आनिपाताच्छरीरस्य युक्तो वार्य्यनिलाशनः ॥३१॥**

अपराजितामित्यादि ।३१। अथ वा वैखानसमतस्थितो*द्विजो युक्तो वार्य्यनिलाशनः सन् * शरीरस्यानिपतनपर्य्यन्तम् ।१। अपराजितामुत्तरां *दिशमास्थायाजिह्मगः*ऋजुगमनशीलः सन् दक्षिणां दिशं व्रजेदिति ।२। हारीतेनोक्तं हि * अग्निं स्वात्मनि कृत्वा प्रव्रजेद् दक्षिणां दिशमिति ।३। एतदविद्वान् प्रमादी वा व्याख्यातवा*नपराजिता मैशानीं दिशमिति तदसाधु ।४।०।३१।

**आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते ॥३२॥**

आसामित्यादि ।३२। आसां महर्षिचर्य्याणामन्यतमया चर्य्यया* तनुं त्यक्त्वा वैखानसो * विप्रो वीतशोकभयः*सन् ब्रह्मलोके महीयते इति ।१। इत्येवं कर्म्मणैवापवर्गसिद्धिवचनेनापवर्गप्रतिषेध* वादिनां सवादो निरस्तः कृतः ।२। स च वादो गौतमेन न्यायभाष्ये ऽपवर्ग* परीक्षायामुक्तस्तद् यथा ।३। ऋणक्लेशप्रवृत्त्यनु*बन्धादपवर्गाभावः । इति सूत्रमस्य वात्स्यायनभाष्यं ।४। ऋणानुबन्धान्नास्त्यपवर्गो यतः* उक्तो जायमानो ह वै*त्रिभिरृणैः * ऋणवानेव जायते । ब्रह्मचर्य्येणर्षिभ्यो यज्ञेन*देवेभ्यः प्रजया पितृभ्यश्च*भवत्यनृणो ह वै*तेषामनुबन्धः सदा ।२। स्वकर्म्मभिर्हि सम्बन्धो* जरामर्य्यं वा एतत् सत्रं *यदग्निहोत्रं दर्शपौर्णमासौ च ।३। जरया ह वा एष तस्मात्* सत्राद्विमुच्यते मृत्युना*वेत्यृणानुबन्धादपव* र्गानुष्ठानकालो नास्तीव ।४। तस्मादपवर्गाभावः*क्लेशानुबन्धाच्च नास्त्यपवर्गः क्लेशा*नुबन्धस्यैव जायते ।५। नास्य क्लेशानुबन्धविच्छेदो विद्यते *प्रवृत्त्यनुबन्धाच्च*नास्त्यपवर्ग इति ।६। जन्मप्रभृत्ययं यावत् प्रायणं हि*वाग्बुद्धिशरीरारम्भे*णाविमुक्तः सुगृह्यते ।७। तत्राभिधीयते ।०। प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ।२। इति सूत्रमस्य वात्स्यायनभाष्यं *ऋणैरिति नायं प्रधानशब्दः* ऋणैरिव ऋणैरिति गुणशब्दः ।१। यत्र खलु एकः प्रत्यादेयं ददाति* द्वितीयः प्रतिदेयं गृह्णातीति तत्र*प्रधानऋणशब्दो लोके दृश्यते ।२। न चैतदिहोपपद्यते देवादिभिः प्रत्यादेयस्य* दानाभावाद्देयग्रहणाभावाच्च ।३। प्रधानशब्दानुपपत्तेः*गुणशब्देनानुवादोऽयं * ऋणैरिव ऋणैरितीव*यथाग्निर्माणवक इति ।४। कथं गुणशब्देनानुवादः*अतो*निन्दाप्रशंसोपपत्तेः ।५। कर्म्मलोपे ऋणीवेति*ऋणादानान्निन्द्यते ऽथ*कर्म्मानुष्ठाने चानृण *इवेति ऋणदानात् प्रशस्यते ।६। जायमान इत्यत्र गुणशब्दो*गृहस्थः सम्पद्यमानो* जायमान इवोच्यते ।७। यदायमागृहस्थो जायते तदा * कर्म्मभिरधिक्रियते* मातृतो जायमानस्य*कर्म्मस्वनधिकारादर्थि* शक्तयोश्चाधिकारात् ।८। अर्थिनः कर्म्मस्वधिकारः * कर्म्मविधौ कामसंयोगस्मृतेः*अग्निहोत्रं जुहुयात् स्वर्ग*काम इत्येवमादिर्यथा ।९। शक्तस्य च प्रवृत्तिसम्भवात् कर्म्म*स्वधिकारः शक्तः खलु*विहितकर्म्माणि कामात्* प्रवर्त्तते नैवेतरः ।१०। एतदुभयाभावस्तु * प्रधानशब्दार्थे मातृ*तो जाय

माने कुमारे । ११ । नभिद्यते चलौकिका * द्वाक्याद्वैदिकं वाक्यं प्रे * च्चापुरुषकारिपुरुषप्रणीतत्वात् । १२ । तत्रलौकिकस्वाव * दपरीचकोपिन * जातमात्रं कुमार * मेवं कदापिब्रूयात् ॥ १३ ॥ अधीष्वज्रजस्वब्रह्मचर्यं चरेति * तस्मुरूपिरुपपन्नानवद्य * वादीत पदेशाय प्र * युक्तएवसपदिश्येत् ॥ १४ ॥ नखलुवै नर्त्तकोऽन्धेषुनृत्य * दर्शना - यावर्त्तते * गायनोबधिरेषुिति ॥ १५ ॥ उपदिष्टार्थविज्ञानं * ह्युपदेशस्य विषयः । यश्चोपदिष्टमर्थं वि * जानाति तं प्रत्युपदेशः क्रियते ॥ १६ ॥ नचैतदस्तिजायमाने कुमारे * गृहस्थलिङ्गमन्त्रं ब्राह्मणं कर्म्माभिवदति ॥ १७ ॥ तन्मौञ्जीबन्धपलाशादि * सम्बन्धेनब्रह्मचर्यं * गार्हस्थलिङ्गं नोपपन्नं भवति ॥ १८ ॥ तस्मादयं गृहस्थोजायमानइ * तो वाभिधीयत इति । १९ । अर्थित्वस्याचाविपरिणामे जरा * मर्यात्ववादोपपत्तिः । २० । यावच्चास्याफले नार्थित्वं * नाविपरिणामात्ते ताव * दनेन कर्म्मानुष्ठेयमि * त्युपपद्यते तं प्रत्येव । २१ । नतजरामर्यवाद * स्तं प्रत्यापपद्यते य * स्यार्थित्वं विपरिणतं ।२२। जरयाहवाएषतस्मात् * सत्रादिमुच्यते इतिहि * गृहस्थस्ययदापश्येद्वलीपलितमात्मनः।२३। इत्यारण्यप्रस्थानं विहितं * तत्रापियावदर्थित्वं * नैवविपरिणमते * तावदग्निहोत्रादिककर्मोक्तं । २४ । परिणते त्वस्यार्थित्वे * पञ्चयज्ञादिकर्म्मेव * प्रवृत्तिपरमोभवे * त्ततःप्रवृत्त्यावस्य * नाशस्ततःक्रमाद्वयन्निवृत्तिः । २५ । ततोऽनन्तरमपवर्गानुष्ठान * कालउपपद्यते त * दायं वैखानसमते स्थित * श्चात्मन्यग्नीन्समारोप्य * निरग्निर्यथोक्तं कुर्यात् ॥ २६ ॥ ११ ॥ नयथैवं वैखानस * मते स्थितोपियावत् * नतावजतिकरोतिचोपनिषद * श्रुतिर्सेवना त्मकर्म्म * सोऽयकिं कर्म्मकुर्वीत । १ । तत्रोच्यते ।

**वने षु तु विहृत्यैवं तृतीयं भागमायुषः। चतुर्थमायुषोभागं त्यक्त्वासङ्गान्परिव्रजेत् ॥३३॥**

वने ष्वित्यादि । ३३ । एवमुक्तप्रकारेण * कर्म्मणायुषस्तृतीय * भागं वने षु विहृत्य * चतुर्थमायुषोभागं * सङ्गांस्त्यक्त्वा परिव्रजे * दित्यन्यादौ स्यात्त्वा ब्रजेत् ।१। नीच्यचेदं बात्स्यायनेनोक्तं यथा * जरयाहवाएषतस्मात् सत्रा * दिमुच्यतइत्यायुष * स्तुरीयभागे प्रव्रज्यावचनात् ।२। तदायुषस्तुरीयभागोजरेवा * च्यतेतच्चहिप्रव्रज्या * विहिताततदापवर्ग * नुष्ठानकालइत्यस्त्यापवर्गः ।३। तत्रोक्तं गौतमेनवादिविप्रतिपत्तिषु * तद्यथा * अधिकाराच्चविधानं विद्यान्तरवत् ।३। तत्रवात्स्यायनभाष्यं * यथाशास्त्रान्तराणिस्वे * स्वेऽधिकारेप्रत्यासत्ती * विधायकानिनार्थान्तरेष्वभावात् । ३ । एवमिदमृग्ब्राह्मणं * गृहस्थशास्त्रंस्वे स्वे * त्वधिकारे प्रत्यासत्ती * विधायकं नाश्रमान्तराणामभावात् । ४ । ऋग्ब्राह्मणस्यवेदं द्रष्टव्यः । यथाप्रगौतमेनसिद्धान्तस्तत्र * समारोपणादात्मन्यप्रतिषेधः ।१। वात्स्यायनभाष्यं * प्राजापत्यामिष्टिं निरूप्यतस्यां * सार्ववेदसं हुत्वात्मन्यग्नीन्समा * रोप्यब्राह्मणःप्रव्रजेत् । २ । ३३ । नन्वायुषश्चतुर्थभागश्चेत्परि * व्रज्याकालस्तदाब्रह्म * चर्यं चरित्वाकस्मान्न * परिव्रजेदित्यत आह * ।

सार्व*वेदसदक्षिणां प्राजा*पत्यामिष्टिं निरूप्याग्नी*नात्मनिसमारोप्य * वनं नैवगत्वागृहात्। प्रव्रजेदिति ॥ २॥ वनाश्रमेपिपञ्चयज्ञाः कर्त्तव्या*स्तान्गृहाश्रमेप्यायुष*स्तृतीयभागपर्य्यन्तं कृत्वावनाश्रमवास* तत्फलभागभवतीति । ४ । तेनाश्रम*व्यतिक्रम*दोषोनास्य*भवतीति ।५। इतीवं व्याख्यानमविद्वान्कश्चित्*प्रमादीव्याचष्टे गृहादित्यभिधानाद्वानप्र*स्थाश्रमसत्वंस्थायच*त्वयाश्रममनुतिष्ठेदिति । ४ । तदसाधुपरस्तोकेपिप्रव्रज*त्यभयं गृहादित्युक्तेः । वनस्थस्याभयदानासम्भवात्* वक्ष्यते चागारादभिनिष्क्रान्तइति ॥ ५ ॥ याज्ञवल्क्येनचोक्तं वनाद्गृहाद्वाकृत्वेष्टिं सार्ववेदसदक्षिणां । प्रजापत्यामित्यादि ॥ ३८ ॥

## योदत्त्वासर्व्वभूतेभ्यःप्रव्रजत्यभयंगृहात्। तस्यतेजोमयालोकाभवन्तिब्रह्मवादिनः॥ ३९ ॥

योदत्त्वेत्यादि ॥ ३९ ॥ योगृहस्थआयुषस्तृतीयभाग*पर्य्यन्तं वेदाध्ययनादिकर्म्माणि • कृत्वासर्व्वभूतेभ्याभयं दत्वा॥ १ ॥ गृहात्प्रव्रजतितस्य• ब्रह्मवादिनस्तेजो • मयालोकाभवन्त्येव । २ ॥ ३९॥ कस्मादित्यपेक्षायस्मादित्यादि ॥ ४० ॥

## यस्मादण्वपिभूतानांद्विजान्नोत्पद्यतेभयम्। तस्यदेहाद्विमुक्तस्यभयंनास्तिकुतश्चन ॥ ४० ॥

अण्वपिभयंभूतानां •॥ यस्माद्द्विजान्नोत्पद्यते • तस्माद्द्विजस्यदेहाद्विमुक्तस्य०भयदस्याकुतश्चन भयंनास्तिनभवतीति ॥

## अगारादभिनिष्क्रान्तःपवित्रोपचितोमुनिः। समुपोढेषुकामेषुनिरपेक्षःपरिव्रजेत् ॥ ४१ ॥

आगारादित्यादि । ४१ । एवमायुषस्तृतीय * भागपर्य्यन्तं यथाविधिगृहस्था * श्रमेवसन्भूतेभ्याभयं दत्वा * चागारादभि निष्क्रान्तः । १ । पवित्रैर्दण्डकमण्ड * लादिभिरुपचितःसन् * मुनिस्तूष्णीं अयद्रिचकामेषु*काचित्कामनासमागु*पोढासमीपमूढाते * । २ । मनमाततसिद्धिःस्यान्नवा*तन्निरपेक्षःसन्परि*सर्व्वतोव्रजेद्गच्छेदिति । २ । ० । ४१ । ० । एकएवेत्यादि । ४२ ।

## एकएवचरेन्नित्यंसिद्ध्यर्थमसहायवान्। सिद्धिमेकस्यसंपश्यन्नजहातिनहीयते ॥ ४२ ॥

एवमागारान्निष्क्रान्त* एकएवासहायवान्*सिद्ध्यर्थं नित्यं चरेत् । १ । कस्मादेकएवेत्यत्राहसिद्धि*मेकस्यसम्पश्यन्नित्यादि । २ । अपरस्यैकस्यसिद्धिं संपश्यन्न * जहात्यपित्वकलं*जहातिमनहीयते *ऽपिवसर्व्वैर्नहीयते*इतिमिरस्थालननञ्ज । २ । ० । ४२ ।

## अनग्निरनिकेतःस्याद्ग्राममन्नार्थमाश्रयेत्। उपेक्षकोऽसङ्कुसुकोमुनिर्भावसमाहितः ॥ ४३ ॥

नवतर्हि किमाहारोवर्त्तेत * आत्मन्यग्नीनसमारोप्य*गृहागारात्प्रव्रजतिकिं *फलमूलाशनोवर्त्ते* तेत्यत

आहानमिरित्यादि । १ । ० । ४३ । ० । अनग्निर्वैवाहिकाग्निहोत्राग्निरहितः* भैक्ष्यमाद्धन्नार्थं ग्राममाश्रयेत्* असङ्गमकःस्थिर* चित्तउपेक्षकोऽशयन । १ । मुनिभावसमाहितो* मौनेनचित्तं समादध * दिनान्ते ग्राममाश्रयेत् । २ । ० । ४३ । ० । कपालमित्यादि । ४४ ।

कपालं वृक्षमूलानि कुचेलमसहायता । समता चैव सर्व्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ४४ ॥

कपालं भग्नघटादि * खर्परं भिक्षापात्रं वृक्षमूलानिस्थित्यर्थं कुचेलं कौपीनादिअसहायतात्वे कलतासर्व्वस्मिन् समतायत्र*तदेतन्मुक्तस्य लक्षणं भवति । १ । ४४ । नाभिनन्देतेत्यादि । ४५ ।

नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत निर्द्देशं भृतको यथा ॥ ४५ ॥

मरणं नाभिनन्देत*जीवितञ्चनाभिनन्देत* कालमेवमरणसमयप्रतीक्षेत । १ । यथाभृतकोवेतन*प्राहीदासो वेतनस्य*प्राप्तौनिर्द्देशं तं कालं प्रतीक्षते । २ । ० । ४५ ।

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ४६ ॥

दृष्टिपूतमित्यादि । ४६ । मशकादिकीटक्षुद्रजन्तुकीटादिविनाश*भयाद्दृष्टिपूतं पादं न्यसेत्* पिबन्जलं कीटादि नाशः*भयाद्वस्त्रपूतं पिबेत् । १ । वाचं वदेत्सत्यपूतां * वाचं वदेत्कर्म्माणिवा*चरन्मनःपूतं कर्म्मसमाचरेत् २ । ० ४६ ।

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन । न चेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥ ४७ ॥

अतिवादांश्चेत्यादि । ४७ । अतिवादान्समतिक्रमापरेय*दुरुक्तितांस्तितिक्षेत*क्षमां कुर्व्वीत कञ्चन* जनं नावमन्येत च । १ । इमञ्चपरिव्राजक*देहमाश्रित्य तानकेनचित्सहवैरं वाकुर्व्वीत । २ । ० । ४७ ।

क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥ ४८ ॥

क्रुद्ध्यन्तमित्यादि । ४८ । स्वस्मै क्रुद्ध्यन्तं जनं न*प्रतिक्रुद्ध्येत् परैश्चाक्रुष्टःसन्नपि*कुशलमिति वा वदेत् । १ । सप्तद्वारावकीर्णामितिस्वस*द्वाभ्यां चक्षुर्द्वाराभ्यां दृष्टविषये*द्वाभ्यां घ्राणद्वाराभ्यां भ्रातविषये*।२। द्वाभ्यां कर्णद्वाराभ्यां श्रुतिविषये*एकद्वारेणैकेनास्वादविषये*वाचमनृतामसत्यां न वदेत् । २ । ० । ४८ ।

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः । आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४९ ॥

अध्यात्मेत्यादि । ४९ । सुखार्थी परिव्राजको*निरामिषोनिर्विषयः* सन्नात्मनैवसहायेन*नासीनोनिरपेक्षःसन्नध्यात्मरतिरात्मान * मधिकृतारतिमान्सन् । १ । इहलोके विचरेद * तोऽन्यथाव * नविचरेत् ।

नचोत्पातनिमित्ताभ्यां ननक्षत्राङ्गविद्यया। नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥५०॥

नचोत्पातेत्यादि। ५०। परिव्राजको ब्राह्मणः कर्हिचित्* उत्पातं प्रकृत्य भिक्षां *नलिप्सेत निमित्तं वा *तवेदं करिष्यामीति* प्रकृत्य भिक्षां लिप्सेत। १। उत्पातनिमित्ताभ्यामितिलाक्षेपे *पक्षभीनक्षत्रादिविद्याज्योतिः शास्त्रविद्यया न भिक्षां लिप्सेत्। २। अनुशासनवादाभ्यां * शास्त्रानुशिष्या भिक्षां नैव लिप्सेत *पक्षप्रतिपक्षान्तरमाश्रित्य* वादेन न भिक्षां लिप्सेत्। ३। ०। ५०।

नतापसैर्ब्राह्मणैर्वा वयोभिरपिवाश्वभिः। आकीर्णं भिक्षुकैर्वान्यैरागारमुपसंव्रजेत्॥५१॥

नतापसैरित्यादि। ५१। परिव्राजको ब्राह्मण* स्तापसैर्वभिक्षुभिर्ब्राह्मणैर्वाकीर्णं *मागारं भिक्षार्थं नोपसंव्रजेत् *वयोभिः पक्षिभिर्वक्षुभिर्वाकीर्णं। १। बहुभिः श्वभिर्व्वाकीर्णं * मनोवेक्षुभिर्भिक्षुकैराकीर्णं *मागारं गृहस्थगृहं *भिक्षार्थं नोपसंव्रजेत्। २। ५१।

कॢप्तकेशनखश्मश्रुःपात्रीदण्डीकुसुम्भवान्। विचरेन्नियतोनित्यं सर्व्वभूतान्यपीडयन्॥५२

कॢप्तेत्यादि। ५२। कॢप्तान्यल्पानिकेशादीनियस्य* सक्षौरकर्म्मविहीनः* कमण्डलुस्थालीपात्री* दण्डीदण्डवान् भवन्। १। कुसुम्भवान् कन्थासीवनार्थं सूची* पिप्पलवानन कषायः* कमण्डलुस्तस्य जल* पात्रत्वेनपात्रपदेनोक्तत्वात्। २। सर्व्वभूतान्यपीडय* मीदृगनियतएव* सन्नित्यं विचरेदिति। ३। ५२। नतकानिपात्राणि* कीदृशस्वरूप* इत्य* तत्राहातैजसानीत्यादि। १। ५३।

अतैजसानिपात्राणितस्यस्युर्निर्व्रणानिच। तेषामद्भिःस्मृतंशौचं चमसानामिवाध्वरे॥५३॥

तस्यपरिव्राजकस्य* पात्राण्यतैजसानि* निर्व्रणान्यच्छिद्रादीनिस्युः १। तस्यतेषामतैजस* पात्राणामद्भिः प्रक्षालनेनशौचं *भवेद् यथाप्रक्षालनादध्वरे तु* चमसादीनिशुचीनिस्युः। २। ०। ५३। इति। नन्वतैजसानिकानि* पात्राणीत्यत उच्यते * अलाबुमित्यादिश्लोकं ॥ ५४ ॥

अलाबुंदारुपात्रञ्चमृन्मयंवैदलंतथा। एतानियतिपात्राणिमनुःस्वायम्भुवोऽब्रवीत्॥ १५४ ॥

अलाबुं दारुमयं मृण्मयं *वैदलं वंशपर्व्व निर्म्मितं *यतिपात्राण्येतानि* स्वायम्भुवोमनुरब्रवीत्। १। ५४।

एककालंचरेद्भैक्षंनप्रसज्येतविस्तरे। भैक्षेप्रसक्तोहियतिर्विषयेष्वपिसज्जति॥ १५५ ॥

एककालमित्यादि। ५५। एककालं मध्याह्ने भैक्षं चरेत् * विस्तरेऽन्नेप्रसज्येत् * कस्मात् हि यस्मादिति भैक्षे प्रसक्तो* विषयेषु सज्जतीति। १। ०। ५५। नन्वेककालं कदेत्यत उच्यते * विधूमेसन्नेत्यादि। १। ५६।

विधूमे सन्नमुषले व्यङ्गारे भुक्तवज्जने। वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ ५६

यदा गृहस्थस्य गृहं विधूमं स्यात्* मुषलश्चाभिहननं शब्दान्निवृत्तं भवति * यदा ज्वलदङ्गाररहितं भवति। १ सर्व्वो जनो यदा भुक्तवान् शरावसम्पातो निवृत्तश्च यदा भवति* तदा यतिर्नित्यं भिक्षां चरेदिति। २। ०। ५६।

अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्। प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥ ५७

अलाभ इत्यादि। ५७। तदा यदि भिक्षां न लभेत ततो* न विषादी स्यात् यदि वा * लभेत न ततो हृष्येत्। १ कस्मात् यस्मात् प्राणयात्रिकमात्रः स्यात् * तस्मात् अधिकाशामात्रात् * पुंसक्तितो विनिर्गतः * स तदासक्तिरहितः स्यात्। २। ५७। ०।

अतिपूजितलाभांस्तु जुगुप्सेतैव सर्व्वशः। अतिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ॥ ५८

अतीत्यादि। ५८। अतिपूजितानां श्रेष्ठानां भिक्षाणां *लाभान् सर्व्वशो जुगुप्सेत् कस्मात् * मुक्तोऽपि यतिः* अतिपूजितलाभैर्बध्यते। १। ५८।

अल्पान्नाभ्यवहारेण रहःस्थानासनेन च। ह्रियमाणानि विषयैरिन्द्रियाणि निवर्त्तयेत् ॥ ५९

अल्पान्नेत्यादि। ५९। अल्पस्यान्नस्य अतिपूजित* स्यान्नस्याभ्यवहारेण *रहःस्थाने चासनेन* विषयैर्ह्रियमाणानीन्द्रियाणि निवर्त्तयेत्। १। ०। ५९।

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च। अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ६०

इन्द्रियाणामित्यादि। ६०। ०। यतिरिन्द्रियाणां निरोधेन तथा*रागादीनां क्षयेणापि* भूतानामहिंसया च*अमृतत्वाय मोक्षाय कल्पते। १। ०। ६०।

अवेक्षेत गतीर्नृणां कर्म्मदोषसमुद्भवाः। निरये चैव पतनं यातनाश्च यमक्षये ॥ ६१

अवेक्षेतेत्यादि। ६१। निजस्यापि तथा गति* सम्भवमायङ्गान् नृणां* कर्म्मदोषसमुद्भवा * गतीः प्रतिरवेक्षेत। १। काका गतिरित्यादि तत्र चान्ते निर*ये चैव पतनमित्यादि। २। यमक्षये यमालये *नरके पतनं तत्र यादृश्यो यातना एव* भवन्ति तत्सर्व्वमालोचयेदिति। ३। ०। ६१। अपरांश्च नृणां गतीर्दर्शयति*विप्रयोगमित्यादि। १। ०। ६२।

विप्रयोगं प्रियैश्चैव संयोगञ्च तथाऽप्रियैः। जरया चाभिभवनं व्याधिभिश्चोपपीडनम् ॥ ६२।

नृणां प्रियैः सह विप्रयोगं च* संयोगञ्चाप्रियैः सह*जरया चाभिभवं च*व्याधिभिः पीडनञ्चावेक्षेतेति। १। ६२

देहादुत्क्रमणञ्चास्मात्पुनर्गर्भे च सम्भवम्। योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः॥६३॥

देहादित्यादि। ६३। शुणामस्मा देहादुत्क्रमणं मृत्युं पुनर्गर्भे च सम्भवं * योनिकोटिसहस्रे पुन्तरात्मनं * गमनागतीःरवेक्ष्येत। १। ६३।

अधर्मप्रभवञ्चैव दुःखयोगं शरीरिणाम्। धर्मार्थप्रभवञ्चैव सुखसंयोगमक्षयम्॥६४॥

अधर्मेत्यादि॥ ६४। शरीरिणां दुःखयोगं * मधर्मप्रभवञ्चावेक्षेततथा * धर्मार्थप्रभवमक्षयं सुखसं * संयोगमवेक्षेतेति॥ १॥ ६४॥

सूक्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः। देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च॥६५॥

सूक्ष्मताञ्चेत्यादि। ६५॥ यतिर्योगेन परमात्मनः सूक्ष्म * भावमन्ववेक्षेतायं * उत्तमाधमे देहेषु * समुत्पत्ति मवेक्षेत्। ६५।

दूषितोऽपि चरेद्धर्मं यत्रतत्राश्रमे रतः। समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम्॥६६॥

दूषितोऽपीत्यादि। ६६। नरो यत्र यत्राश्रमे * रतस्तत्रतत्र दूषितोऽपि धर्मं * चरेत् सर्वेषु भूतेषु समो भवेत् *। १। लिङ्गं परिव्राजकस्य चिह्नं दण्डादिधारणमात्रं न * धर्मस्य कारणं न भवति॥ २॥ ०॥ ६६॥ कस्मान्न लिङ्गं धर्म कारणं भवतीत्यत आह फलमिति। १। ६७।

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्। न नामग्रहणादेव तस्य वारि प्रसीदति॥६७॥

यद्यप्यम्बुप्रसादकं * कतकवृक्षस्य फलं * तस्य नामग्रहणादेव वारि न * प्रसीदति तत्संयोगादेव निर्मलं भवति। १। तथा दण्डादिलिङ्गस्य * धारणमात्रं धर्मस्य * न कारणं तत्तत्कर्म्मा * चरणं हि कारणं मतात्॥ २॥ ६७॥

संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा। शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत्॥६८॥

संरक्षणार्थमित्यादि॥ ६८॥ परिव्राजको जन्तूनां * कीटादिसर्व्वप्राणिनां * संरक्षणार्थं प्राणबाधादुःखाय * स्वस्य शरीरात्ययेऽपि रात्रावहनि समीक्ष्य। १॥ सम्यगवधानपूर्व्वं * वसुधां पृथिवीं चरेत्॥ ६८।

अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः। तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत्॥६९॥

अह्नेत्यादि। ६९॥ यतिरज्ञानतोऽह्ना रात्र्या च यान् * जन्तून् हिनस्ति तेषां जन्तूनां हिंसा * दोषमाः

विग्रहार्थं । १ । सन्ध्योपासनोक्तेनैव*विधिनाषट् प्राणायामा*नस*यतिः*समाचरेत् । २ । ६९ । कस्मादि त्यतआह प्राणायामाइत्यादि । ७० ।

प्राणायामाब्राह्मणस्य त्रयोपिविधिवत्कृताः। व्याहृतिप्रणवैर्युक्ताविज्ञेयंपरमंतपः ॥ १७०॥

ब्राह्मणस्यत्रयोपिप्राणायामा*व्याहृतिप्रणवैर्युक्ता*विधिवत् कृताःपरमं*तपोविज्ञेयं विद्वद्भिः ॥ १ ॥ ७०।
कथं प्राणायामएवं*तपोभवतीत्यतआह*दह्यन्तइत्यादि श्लोकं । १ । ७१ ।

दह्यन्ते ध्मायमानानां धातूनां हियथामलाः। तथेन्द्रियाणां दह्यन्ते दोषाःप्राणस्यनिग्रहात् १७१

स्वर्णादीनां धातूनां हि*यस्मादग्नौध्मायमानानां मला*यथास्वयमेवदह्यन्ते । १ । तथाप्राणस्यनिग्रहात् प्राणायामादिन्द्रियाणां*दोषा स्वयमेवदह्यन्ते ॥ २ ॥ ७१ ॥ प्रसङ्गाद्धारणादिमभावानाह*प्राणायामैरित्या दिकम ॥ १ ॥ ७२ ॥

प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बिषम्। प्रत्याहारेणसंसर्गान्ध्यानेनानिश्वरान्गुणान् ॥ १७२ ॥

यतिःप्राणायामैरिन्द्रियदोषान् * दहेद्धारणाभिरिव* किल्बिषंदुरितंदहेत् । १ । ध्येयदेशेमनसोनि श्चलत्वेन*स्थितिकरणंधारणा*प्रत्याहारेणविषयेभ्यइन्द्रिय* निवृत्त्याऽथसंसर्गान्दहेत्* ॥ २ ॥ ध्याने नतदीश्वराकारचिन्तया*तदाकाराभावादस्य * चात्मनस्तुनीश्वरानुगुणा*ननितान्नितांदुःखसुख*मितानम गैनुदहेत् । १ । ७२ ।

उच्चावचेषुभूतेषुदुर्ज्ञेयामकृतात्मभिः। ध्यानयोगेनसम्पश्येद्गतिमस्यान्तरात्मनः ॥ १७३ ॥

उच्चावचेष्वित्यादि । ७० । अकृतात्मभिर्मदुर्ज्ञे * यस्यान्तरात्मनउच्चा * वचेषुभूतेषुगतिं * ध्यान योगेनसंपश्येत् । १ । ७३ ।

सम्यग्दर्शनसम्पन्नः कर्मभिर्नानिबध्यते । दर्शनेनविहीनस्तु संसारंप्रतिपद्यते ॥ १७४ ॥

सम्यगित्यादि । ७४ । अन्तरात्मनोगतेस्तु*सम्यग्दर्शनसम्पन्नः* कर्मभिर्ननिबध्यते ॥ १ । अन्तरात्मनो गतेस्तु*दर्शनविहीनोजनः*संसारंप्रतिपद्यते । २ । ७४ ।

अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैवकर्मभिः। तपसश्चरणैश्चोग्रैः साधयन्तीहतत्पदम् ॥ १७५ ॥

अहिंसयेत्यादि ॥ ७५ ॥ अहिंसयातावधहिंसात्यागेन*इन्द्रियासङ्गैरिन्द्रिय* कर्मस्वनासक्तिभिश्च* वैदिकैःकर्मभिश्च*तपसउग्रैश्चरणैः । १ । तत्पदंब्रह्मपदमिहास्मिँल्लोके*सर्वेजनाःसाधयन्ति । २ । ७५ ।

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्। चर्म्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः॥ ७६॥
जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्॥ ७७॥

अस्थिस्थूणामित्यादिद्वौ*शोकावर्ज्जितावेकत्याजिक्रियया* भूतावासमिमं देहमस्थि*स्थूणादिरूपं त्यजेत्।१। जराशोकसमाविष्ट*मितिजराशोकौसमा*विष्टौ यस्मिन्नित्यधि* करणेक्तः शोकश्चमता*गात्मनिवर्त्तते नत्व*देहे जराद्वदेह इति।२। देहाद्वेषेनचमानसरोगोपि*भवतिनत्वदेहाद्वेषादित्यतो * रोगायतनमातुरो*पिदेहोनात्माविकारी।३। रजस्वलमितिस्त्रीदेहाभिप्रायं*शोकामनित्यं नश्वरम्।४।७७। कथं त्यजेदित्यतआह नदीत्यादि।७८।

नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा। तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते॥७८॥

नदीयथाकूलं पुलिने त्यजति*कूलस्थ*वृक्षः कूलं* त्यजतियथावाशकुनि*वृक्षं त्यजतितथेमं*देहं त्यजन्पापरूपात्*कृच्छ्रा दुःखाद्विमुच्यते।१।७८। ननुपूर्व्वकृतशुभाशुभकर्म्म* फलानिवर्त्तन्तएव * कथं देहं त्यजन्कृच्छ्रा*द्विमुच्यते इत्यतआह प्रियेषु स्वेष्विन्त्यादि।१।७६।

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्। विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्॥ ७९॥

यतिरुक्तरूपेणाचरित्वा देहं*जिह्वाशः सुकृतं स्वेषु*प्रियेषु दुष्कृतमपि* चाप्रियेषु विसृज्यैव ध्यानयोगेनेमं देहं*त्यजन्सनातनं ब्रह्म*परमेश्वरमभ्येति।२। वेदेह्येतदुक्तं यथा * अथतस्यपुत्रा*दायमुपयन्ति* सुहृदःसाधुकृत्यां*द्विषन्तःपापकृत्याम।३।इति। अपरञ्च। सुकृतदुष्कृते विधुनुते तस्य*प्रियाज्ञातयःसुकृत*मुपयन्त्यप्रियादुष्कृतम्।४।इति।०। ननुतर्हिं चायुषश्शेषं भागे*प्रव्रजीवं वं देहत्यागाद्यतिः*कृच्छ्राद्विमुच्यतेऽभ्येति*सनातनञ्चब्रह्मैव।१। सुकृतदुष्कृते चकदा*प्रियाप्रियावुपेयात्*इत्यतआहयदेत्यादि।२।८०।

यदा भावेन भवति सर्व्वभावेषु निस्पृहः। तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम्॥ ८०॥

यतिर्यदासर्व्वभावेषु निस्पृहः*सर्व्ववस्तुवासना*शून्यः सन्भावेन भावः*सत्तासत्तामात्रेणैव*वर्त्तते तदाजीवन्नेव।१। सत्वाएवेहचशाश्वतं सुख*मवाप्नोतिप्रेत्यच*स्वेच्छयादेहं त्यक्त्वातदास्वे*सुकृतदुष्कृते लभे * प्रियाप्रियौतुगच्छतः।१। निर्व्वाणं प्राप्नुवन् शाश्वतमेश्वरं * सुखमवाप्नोतिनतु देहमत्यक्त्वा।२।८०। एतच्चविवृणोमिश्चनेनेत्यादि।१।०।८१।

अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गाञ्छनैः शनैः। सर्व्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते॥८१॥

अनेनोक्तेनविधिना* प्रव्रज्यासर्व्वान्सङ्गांस्त्यक्त्वा तान्त्यजन्* शनैःशनैः सर्व्वं* द्वन्द्वं विच्छेद ब्रह्मणि ततः स्थितः। एषा* प्रव्रज्या निःसुख* दुःखेतानि यमादिभिः।१। विनिर्मुक्तः सन्द्वन्द्वैस्ताभ्यां निर्मुक्तः स * ब्रह्मण्येवावतिष्ठते।२।०।८१।

ध्यानिकं सर्व्वमेवैतद्यदेतदभिशब्दितम्। नह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते॥८२॥

ध्यानिकमित्यादि।८२। यदेतदध्यात्ममात्मानमधि* कृत्याभिचेतनतीन्द्रियगामिता * दिभिरिह मया शब्दितम्।१। तदेतत्सर्व्वमेवाध्यात्मिकं सर्व्वैः* कर्म्मभिर्ध्यानिकं ध्यानेन विक्षेप* कस्मादित्यतउच्यते * नह्यनध्यात्मविदित्यादिकम्।२। यस्मादनध्यात्मवित्कश्चित्* क्रियाफलमुपाश्नुते।३। एतदविद्वानुत्तमात्मा * मोक्षोत्सहन्त्याने* वातकर्षेतियदेतत्* दितिमन्द्रेनतदसत्* अनध्यात्मविदितिहिनसङ्गच्छते।४।८२।

अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च। आध्यात्मिकञ्च सततं वेदान्ताभिहितञ्च यत्॥८३॥

अधियज्ञमित्यादि।८३। नकेवलमध्यात्मं ध्यानिकं ध्याये* दधियज्ञञ्च यज्ञमधिकृत्य* ब्रह्मवेदं जपेदधि* वैकञ्च देवानधि* कृत्य ब्रह्मवेदं जपेत्।१। वेदान्ताभिहितञ्च * दाध्यात्मिकं ब्रह्मवेद* ञ्च सततं जपेत्।२।८३।

शरणमज्ञानामिदमेव विजानताम्। इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम्॥८४॥

इदमित्यादि।८४। इदमितित्रय्याख्यमे* यदिहोक्तं शास्त्रं ततस्य * लब्धानां विज्ञानां सर्ग *मन्विच्छतां आनन्त्य* मिच्छतां शरणं श्रेयम्॥१॥८४॥

अनेन क्रमयोगेन परिव्रजति यो द्विजः। स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति॥८५॥

अनेनेत्यादि।८५॥ अनेनोक्तेनक्रमयोगेनैवर्यो* द्विजः परिव्रजतिस* इहपाप्मानं विधूय * परं ब्रह्माधिगच्छति।१।८५। उपसंहरति।

एष धर्म्मोऽनुशिष्टो वो यतीनां नियतात्मनाम्। वेदसंन्यासिकानान्तु कर्म्मयोगं निबोधत॥८६॥

एषइत्यादि।८६। यतीनां नियतात्मना* मे षधर्म्मो वो युष्मभ्यं* मयानुशिष्टोऽयवेद * संन्यासिकानां तवेदोक्तकर्म्म* त्यागिनां नत्ववेदाध्ययनत्यागिनां *वेदाभ्यासस्यविधानात्। कर्म्मयोगं निबोधत।१।८६।

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥८७॥

ब्रह्मचारीत्यादि।८७। एते ब्रह्मचार्य्यादय* श्चत्वारश्चाश्रमाः पृथक* गृहस्थप्रभवाएषा* मादौमकाश्रमे इदं द्व।१। गृहस्थएवस्त्रियां धर्म्मतः* पुत्रानुत्पादयतिनब्रह्म* चारीनवानप्रस्थोन* यतिः कृतोऽन्याश्रमाः।२।

गृहस्थोत्पादिताः पुत्राः चोपनीता*ब्रह्मचारिणोभूत्वैव*गृहस्थाभवन्तिततो*वनाश्रमिणःतस्ततः * परिव्रजन्तो तिष्ठन्ति।१। गृहस्थप्रभवाःपृथकचत्वारए*वाश्रमानानाप्रभवाः।४।८७।

सर्व्वेपिक्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथोक्तकारिणं विप्रं नयन्तिपरमां गतिम्॥ ८८॥

सर्व्वेपीत्यादि।८८। सर्व्वेपेते ब्रह्मचारिप्रभृतयः * आश्रमाःयथाशास्त्रंतु* निषेविताःयथाश्रम * युक्तकर्म्मकारिणंतु*विप्रं परां गतिं नयन्ति।१।८८।

सर्व्वेषामपिचैतेषां वेदस्मृतिविधानतः। गृहस्थउच्यते श्रेष्ठःसत्रीनेतान्सबिभर्त्ति हि॥८९॥

सर्व्वेषामित्यादि।८९। सर्व्वेषामेतेषां ब्रह्म*चर्य्यादाश्रमाणांमध्ये*गृहस्थोवेदस्मृत्युक्त*कर्म्मविधानतःश्रेष्ठउच्यते।१। कस्मात्हियस्मादेतांस्त्रीन्*ब्रह्मचारिवनाश्रमि*यतीन्गृहस्थोविभर्त्ति।२।८९।

यथानदीनदाःसर्व्वे सागरे यान्तिसंस्थितिम्। तथैवाश्रमिणःसर्व्वे गृहस्थेयान्तिसंस्थितिम्॥९०॥

यथेत्यादि।९०। यथासर्व्वे नदीनदाः*सागरे संस्थितिं यान्ति*तथासर्व्वएवाश्रमिणःगृहस्थे*संस्थितिं यान्त्यतःश्रेष्ठः।१।९०।

चतुर्भिरपिचैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणकोधर्म्मःसेवितव्यःप्रयत्नतः॥९१॥

चतुर्भिरित्यादि।९१। एतैर्ब्रह्मचर्य्यादयाश्रमिभिरेव*चतुर्भिर्द्विजैर्दशलक्षणोधर्म्मो * नित्यंप्रयत्नतः सेवितव्यएव।१।९१। कानिधर्म्मस्यदशलक्षणानीत्य*तआह।

धृतिःक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्यासत्यमक्रोधोदशकं धर्म्मलक्षणम्॥९२॥

धृतिरित्यादि।१।९२। स्पष्टार्थोऽयंश्लोकः।९२।

दशलक्षणानिधर्म्मस्यये विप्राःसमधीयते। अधीत्यचानुवर्त्तन्तेते यान्तिपरमांगतिम्॥९३॥

दशलक्षणानीत्यादि।९३। धर्म्मस्यधृत्यादीनिदश*लक्षणानिये विप्राःसम्य*गधीयते नकेवल* मधीयत एवेत्येवं।१। अधीत्यचदशलक्षणानिधर्म्म * स्यानुवर्त्तन्ते तदुक्त * कर्म्माणिकुर्व्वन्तितेतु* विप्राःपरमांगतिं यान्ति।२।९३। अथैवंपरिव्राजकप्रव्राजक*धर्म्मावक्ताऽसंन्यासप्रकार*माह।

दशलक्षणकं धर्म्ममनुतिष्ठन्समाहितः। वेदान्तं विधिवच्छ्रुत्वासंन्यसेदनृणोद्विजः॥ ९४॥

दशलक्षणकमित्यादि।१।९४। द्विजोदशलक्षणकं*धर्म्ममायुषस्तृतीय* भागपर्य्यन्तमनुतिष्ठन्वेदान्तं *

समाहितः सन् विधिवत्* गुरुमुखाच्छ्रुत्वैव। १। ऋणानि देवर्णं पितृणामृणानि* विशोध्य कर्म्म संन्यसेत्। २। २। ९४। ननु वेदं संन्यस्य कर्माणि च त्यक्त्वा* कथं जीवनयात्रां कुर्य्यात्* इत्यत आह।

**संन्यस्य सर्व्वकर्म्माणि कर्म्मदोषानपानुदन्। नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत्॥९५॥**

संन्यस्येति। १। १। ९५। द्विज एवमनृणः सन्* सर्व्वकर्म्माणि संन्यस्य* कर्म्मदोषांश्चापानुदन्* नियतो वेदमभ्यस्य* पुत्रैश्वर्ये सुखं वसेत्। १। ०। ९५।

**एवं संन्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः। संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम्॥९६॥**

एवमित्यादि। ९६। एवमनेन प्रकारेण* द्विजः सर्व्वाणि कर्म्माणि संन्यस्य* स्वकार्य्यपरमः सन्नस्पृह एव* संन्यासेन धर्म्मेणैव। १। एनः पापमपहत्यैव परमां गतिं प्राप्नोतीति। २। ९७। इति साग्निकानां गृहाश्रमधर्म्मादिविधस्य* वानप्रस्थस्य चैव* वासधर्म्मवैखानसधर्म्माश्चोक्ताः। १। यतीनां त्रिविधानाञ्च* परिव्राजक प्रव्राजक* सन्यासिनां धर्म्माश्चोक्ताः। २। निरग्नीनां गृहाश्रमधर्म्माः स्पष्टं* नोक्ताश्चापि तैः पञ्चयज्ञानसन्ति* पक्वान्नेन च नास्ति* पितृदेवानामर्च्चनेन। ३। केवलं वेदस्यानग्नेः* स्वाध्यायेन ब्रह्मयज्ञः* सम्भवेऽपि विवाहाद्यग्न्यभावेन* लौकिकाग्निपक्वान्नेन* होमादिविधानाभावात्। ४। असंस्कृतत्वाल्लौकिकाग्निपक्वानां* वृथापाकत्वमाभक्ष्यत्वं तैर्देव* पितृवैश्वदेवातिथ्या* च नसाग्निभिरिति। ५। उक्तं ह्यत्रिसंहितायां* योऽग्न्यन्नीत्वाविवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः। ६। वृथापाकश्च भुञ्जानः प्रायश्चित्तं चरेद्द्विजः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यतीति। ७। इति एवं लौकिकाग्निपक्वानां वृथा* पाकत्वेन साग्निकानां* लौकिकाग्नौ कर्म्मप्रति* षेधः कात्यायनेनोक्तः॥ ८॥ स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन। न ह्याहिताग्नेः स्वं कर्म्म लौकिकेऽग्नौ विधीयत। ९। ९। तेन निरग्नीनां लौकिकाग्नौ पक्वे* न पितृश्राद्धदेवार्च्चनादिकर्म्म* कर्त्तव्यमामान्नेनैव* कर्त्तव्यं प्रचेतसोक्तं। १०। आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा। आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि। ११। इति। अत्रानग्न्यावितिविवाहाग्न्यभावे* न तु लौकिकादिसर्व्वाग्न्यभाने तत्सम्भवाभावात्। १२। सर्व्वाग्न्यभावे श्राद्धेत* धूपदीपदानानुपपत्तेः श्राद्ध* मेवनसम्भवतीति। १३। नितरां निरग्नीनां वानप्रस्थ* यत्याश्रमीनस्तत्कृण* त्रयमोक्षाभावादग्नौ* स्वात्मनि समारोपणासम्भवाच्च॥ १४॥ स्वाध्यायहोमाभावादृषिदेवर्ण* मोचनसम्भवाभावाच्चैतन्मनूक्तवान* प्रस्थाश्रमयत्याश्रम* धर्म्मणाविरोधाभाव* प्रदर्शनार्थमधिकार्थं ज्ञापयितुं॥ १॥ अत्र मया विष्ण्वादिप्रोक्तवानप्रस्थ* यतिधर्म्मो लिख्यते॥१६॥ तद्यथा विष्णुसंहितायां* गृहीवलीपलित* दर्शने वनाश्रमी* भवेदपत्यस्य चा* पत्यदर्शनेन वा॥ १॥ पुत्रेषु भार्य्यां निक्षिप्य* तयानुगम्यमानो वा* तत्राप्यग्नीनुपचरेत्॥२॥ अफालकृष्टेन* पञ्चयज्ञान्न हापयेत्* स्वाध्यायञ्च न जह्यात्

ब्रह्मचर्य्यं पालयेत् । ३ । चर्म्मचीरवासाः स्या*न्नित्यं जटाश्मश्रुलोमनखांश्च बिभृयात् * त्रिषवणस्नायी स्यात्
४ । कपोतवृत्तिर्मासनिचयः* संवत्सरनिचयो वा संवत् * सरनिचयी पूर्व्वनि * चितमाश्वयुज्यां जह्यात् । ५ ।
ग्रामादाहृताशनो वा ग्रामादष्टौ ग्रासान् वने वसन् । पुटेनैव पलाशेन पाणिना शकलेन वा । ६ । इति वानप्रस्थधर्म्म
*सक्षावैखानसधर्म्म*उक्तास्तद् यथादर्श्यते । ७ । वानप्रस्थस्तपसा शरीरं *शोषयेद् ग्रीष्मे पञ्चतपाः स्यात् *दाका
शशायी प्रावृषि*स्यादार्द्रवासा हेमन्ते । १ । नक्तमाशी स्याद्दैकान्तर*द्व्यन्तरत्र्यन्तराशी वा स्यात्*पुष्पाशी फला
शी शाकाशी*पर्णाशी मूलाशी वा भवेत् । २ । यवागूं पक्षान्तयोर्वा सकृद् *वाश्नीयाच्चान्द्रायणैर्व्वा वर्त्तेत * अश्म
कुट्टो दन्तोलूखलिको वा । ३ । तपोमूलमिदं सर्व्वं दैवमानुषजं जगत् । तपोमध्यं तपोऽन्तञ्च तपसा च तथा धृतम्
४ । यद् दुस्तरं यद् दुरापं यद् दूरं यच्च दुष्करम् । सर्व्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् । ५ । इति वैखानसध
र्म्मउक्ता यतिधर्म्मउक्ता* स्तद् यथाऽथ प्रदर्श्यते । ६ । अथ त्रिष्वाश्रमेषु पक्वकषायः * प्राजापत्यामिष्टिं कृत्वा *
सर्व्ववेदसं दक्षिणां * दत्त्वा आत्मन्यग्नीनारोप्य*विप्रः प्रव्रज्याश्रमी स्यात् । १ । भिक्षार्थं ग्राममियात् सप्तागारि
कं*भैक्षमाददीतालाभे न व्यथेत*न भिक्षुकं भुक्तवति च भिक्षेत् । २ । न भुक्तवति जनेऽतीते पात्र * संपाते
भैक्षमाददीत । ३ । मृन्मये दारुपात्रेऽलाबूपात्रे वा*तेषाञ्च तमाद्भिः शुद्धिः* स्यादभिपूजितलाभादुद्विजेत*
शून्यागारनिकेतः स्यात् । ४ । वृक्षमूलनिकेतनो वा न ग्रामे *द्वितीयां रात्रिमावसेत् * कौपीनाच्छादनमात्र*
संवसनमाददीत । ५ । दृष्टिपूतं न्यसेत् पादं * वस्त्रपूतं जलमाददीत*सत्यपूतं वदेद्वाचं मनःपूतं समाच
रेत् । ६ । मरणं नाभिकामयेत*जीवितञ्च नाभिनन्देत् । अतिवादांस्तितिक्षेत*न कञ्चनावमन्येत* निरा
शीः स्यान्निर्नमस्कारो वा भवेत् । ७ । स्वस्य कं तक्षतो वाङ्गं चन्दनेनैकमुक्षतः । नाकल्याणं कल्याणं वा तयो
रपि च चिन्तयेत् । ८ । प्राणायामधारणाध्याननित्यः स्यात्* नित्यं संसारस्यानित्यतां पश्येत*शरीरस्याशुचि
भावं *जरया रूपविपर्य्ययम् । ९ । शारीरमानसागन्तु*व्याधिभिश्चोपतापं सहजैश्च * नित्यान्धकारे गर्भे च *
वसतिं मूत्रपुरीषमध्ये च । १० । तत्र च शीतोष्णदुःखानुभवनं *जन्मसमये च योनिसङ्कुचित*निर्गमनान्महद् दुःखा
नुभवनं *बाल्ये मोहं गुरुपरवश्यतां च । ११ । अध्ययनादेन क्लेशं *यौवने च विषयप्राप्ता* दमार्गगतद्वाशौ*
विषयसेवने नरकपतनम् । १२ । अप्रियैः सहवसतिं *प्रियैश्च विप्रयोगं न* रोगेषु महद् दुःखं *संसारसंसृतौ तिर्य्य
ग्योनिषु च । १३ । एवमस्मिन् सततपापिनि*संसारे न किञ्चित्करं किञ्चित्* यदपि किञ्चिद् दुःखापेक्षया * सुखसं
ज्ञकं तदप्यनित्यम् । १४ । तत्स्वेवासक्तौ तस्याथा* लभने वा महद् दुःखं * शरीरञ्चेदं सप्तधातुकं पश्येत् । १५ ।
रसरुधिरमांसास्थि*मेदोमज्जाशुक्रात्मकं * चर्म्मावनद्धं दुर्गन्धि*विविधमलायतनम् । १६ । सुखशतैरपि दत्तं वि*
कारि ... तमपि* विनाशि कामक्रोधलोभ* मोहमदमात्सर्य्यास्थानम् । १७ । पृथिव्यप्तेजोवाय्वाकाशात्मक
मस्थिसिराधमनिस्नायुयुतं *रजस्वलं षट्त्वकं पञ्चाश्रयं त्रिभिः*शतैःषष्ट्यधिकैः सन्धार्य्यमाणम् । १८ । इत्यादि ॥
हारीतेन चोक्तं । अतःपरं प्रवक्ष्यामि वानप्रस्थस्य सत्तमाः । धर्म्माश्रमं महाभागाः कथ्यमानं निबोधत । १ ।
गृहस्थः पुत्रपौत्रादीन् दृष्ट्वा पलितमात्मनः । भार्य्यां पुत्रेषु निक्षिप्य सह वा प्रविशेद्वनम् । २ । नखरोमाणि च तथा
ऽसितगात्रत्वगादि च । धारयन् जुहुयादग्निं वनस्थो विधिमास्थितः । धान्यैः स्ववनसम्भूतैर्नीवाराद्यैरनिन्दितैः
शाकमूलफलैर्व्वापि कुर्य्यान्नित्यं प्रयत्नतः । ४ । त्रिकालस्नानयुक्तस्तु कुर्य्यात्तीव्रं तपस्तदा । पक्षान्ते वा समश्नीया

वृत्ता। १। तथाश्रमविकल्पमेके ब्रुवते *ब्रह्मचारीगृहस्थो*भिक्षुर्वैखानस इति॥ १॥ तेषां गृहस्थो योनिर*
प्रजनत्वादितरेषां *तत्रोक्तमित्यादिनाथ * ब्रह्मचारिकृत्यमुक्तो*क्तमत्तरं प्राक् तदविरोधीति॥ २॥ भिक्षुकत्य
चोक्तं यथा*अनिचयोभिक्षुरूर्ध्वं *रेताध्रुवशीलोवर्षा*सुभिक्षार्थं ग्राममियात्।३। जघन्यमनिवृत्तश्चरे *न्निरन्ना
शीतांकचक्षुःकर्मस यतः*कौपीनमाच्छादनार्थं * वासोबिभृयात्प्रहीणमेकेलाङ्कः।४। निर्गुंजनाविप्रयुक्त*
मोषधिवनस्पतीना*मङ्गमुपाददीतेति।५। नद्वितीयां भिक्षामुप*इत्तु रात्रिं ग्रामे वसेत् * मुण्डः शिखीवात
न्यसेज्जीववधम्*समोभूतेषुहिंसात्त * ग्रहयोरनारम्भीस्यात्।६। वैखानसोवने मूलफलाशीस्यात्*तपःशील
श्रामणके*नाग्निमाधायाग्राम्यभोजी।१। देवपितृभूतर्षिपूजकःसर्व्वा*तिथिःप्रतिषिद्धवर्ज्जं * भैक्षमप्युपयु
ञ्जीत।२। नफालकृष्टमधितिष्ठेद्ग्रामञ्च*नप्रविशेज्जटिलःकृञ्चुनखश्मश्रु*रा जिनवासानातिशय भुञ्जीत॥ १॥
ऐकाश्रम्यं*त्वाचार्य्याः*प्रत्यक्षविधा*नाद्गार्हस्थ्यस्य॥ ४॥ इति वशिष्ठसंहितायां*वानप्रस्थोजटिलश्ची
राजिनवासाग्रामं*नप्रविशेत्*नफालकृष्टमधितिष्ठेत् *मूलफलं सञ्चिन्वीत॥ १॥ ऊर्द्ध्वरेताःक्षपाशयः*मूल
फलभैक्षेणाश्रम * मागतमतिथिमर्च्चयेत्॥ २॥ दद्यादेवनप्रतिगृह्णीयात्त्रि* षवणमुदकमुपस्पृशेत्श्रामणकेनाग्नि
माग्निमाधायायाहि*ताग्निःस्याद्वृक्षमूलिकः॥ २॥ ऊर्द्ध्वंषड्भ्योमासेभ्यो*ऽनग्निरनिकेतोदद्यात् * देवपितृ
मनुष्येभ्यः*सगच्छेदानन्त्यमानन्त्याम्।४। इति परिव्राजकःसर्व्वभूताभयं दक्षिणां दत्वा प्रतिष्ठेत॥ १॥
अथाप्युदाहरन्ति * अभयं सर्व्वभूतेभ्योदत्वा चरतियोद्विजः। तस्यापिसर्व्वभूतेभ्यो नभयं जातुविद्यते॥ २॥
अभयं सर्व्वभूतेभ्यो दत्वायस्तु विवर्त्तते। हन्तिजातानजातांश्च प्रतिगृह्णाति यश्च॥ ३॥ संन्यसेत् सर्व्वकर्म्माणि
वेदमेकं नसंन्यसेत्। वेदसंन्यासतः शूद्रस्तस्माद्वेदं नसंन्यसेत्॥ ४॥ एकाक्षरं परं ब्रह्म प्राणायामः परं तपः।
उपवासात् परं भैक्ष्यं दयादानाद्विशिष्यते॥ ५॥ मुण्डोऽममत्वं परिग्रहःसप्ता* गाराण्यसङ्कल्पितानि * चरेद्भैक्षं
विधूमे॥ ६॥ सन्नमुसले एकशाटी*परिवृतोऽजिनेनवा *गोप्रलूनैस्तृणैर्वेष्टितशरीरः॥ ७॥ स्थण्डिलशायी
नित्यांवसतिं वसेत्*ग्रामान्तेदेवगृहे शून्यागारे* वृक्षमूलेवामनसा * तत्त्वज्ञानमधीयानः॥ ८॥ अरण्यनित्योनग्राम्य
पशूनां सन्दर्शने विहरेत्॥ ९॥ अथाप्युदाहरन्ति॥ ०॥ अरण्यनित्यस्य जितेन्द्रियस्य सर्व्वेन्द्रियप्रीतिनिवृ
त्तकस्य। अध्यात्मचिन्तागतमानसस्य ध्रुवाह्यनावृत्तिरुपेक्षकस्य॥ १०॥ अव्यक्तलिङ्गोव्यक्ताचारोऽनुन्मत्त*उन्मत्त
वेषोविहरेत्।११। अथाप्युदाहरति। नशब्दशास्त्राभि रतस्यमोक्षोनचापि लोकेऽग्रहणे रतस्य। नभोज
नाच्छादनतत् परस्य नचापिरम्यावसथप्रियस्य।१२। नचोत्पात निमित्ताभ्यां ननक्षत्राङ्गविद्यया। अनुशासन
वादाभ्यां भिक्षां लिप्सेतकर्हिचित्।१३। अलाभे नविषादीस्याल्लाभेचैव नहर्षयेत्। प्राणयात्रिकमात्र
स्स्यान्मात्रासङ्गाद्विनिर्गतः।१४। नकुट्यांनोदके सङ्गे नचैले नत्रिपुष्करे। नागारेनासने नान्ने यस्यवै मोक्ष
वित्तमः।१५। ब्राह्मणकुलेवायल्लभेततद्भुञ्जीतसायं * मधुमांसमपिवर्ज्जम।१६। यतीन्साधून्वागृह
स्थान्सायं प्रातश्चतर्पयेत्। ग्रासेवावसेदजिह्मोऽशरणोऽसङ्कुसुकः।१७। नचेन्द्रियसंयोगं कुर्य्यात्केनाच
दुपेक्षकः सर्व्वभूतानां * हिंसानुग्रह परिहारेण।१८। पैशुन्यकाममत्सरा*भिमानाहङ्काराश्रद्धा * नार्ज
वात्मस्तवपर * गर्हादम्भ लोभमोह * क्रोधासूयाविवर्ज्जनम्।१९। सर्व्वाश्रमिणां धर्म्मिष्ठो*ऽयज्ञोपवीता
दकम * ण्डलुहस्तःशुचि र्ब्राह्मणो * वृषलान्नपानवर्जी * नहीयते ब्रह्मलोकात्।२०। *। इति।*।६।*।

एषवोऽभिहितोधर्म्मोब्राह्मणस्यचतुर्विधः। पुण्योऽक्षयफलःप्रेत्यराज्ञांधर्म्मंनिबोधत॥९७॥

उपसंहरतिएषइत्यादि।९७। एषचतुर्विधोब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थयति*धर्म्मभेदाद्ब्राह्मणस्य* धर्म्मोधर्म्मावश्यकर्म्म।१। पुण्यःपुण्यजनकःप्रेत्यचपरलोकंगतस्याक्षय*फलदोवायुष्माभ्यंमया*ऽभिहितोराज्ञांधर्म्मंशृणुत।२।०।९७।

॥ * ॥ इति मानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायांषष्ठोऽध्यायः समाप्तः ॥ ६ ॥ * ॥

इति मानवेधर्म्मशास्त्रेभृगुप्रोक्तायां संहितायां वैद्यगङ्गाधर कविराज कृतायां प्रमाद्भञ्जन्यांषष्ठाध्यायःप्रमाद्भञ्जनीषष्ठाध्यायः ॥ ० ॥ ६ ॥

---

राज्ञांधर्म्मं निबोधतेतियत्प्रति*ज्ञातं तद्व्युत्पादयितुमाह*राजधर्म्मान प्रवक्ष्यामीत्यादि॥१ ॥ ० ॥ १ ॥

राजधर्म्मान् प्रवक्ष्यामि यथावृत्तोभवेन्नृपः। सम्भवश्चयथातस्य सिद्धिश्च परमायथा ॥ १ ॥

नृपःक्षत्रियोयथावृत्तोभवे *त्तथाराजधर्म्मान राजाधिपति * क्षत्रियधर्म्मानहं प्रवक्ष्यामि ॥ १ ॥ तस्यक्षत्रियस्य यथायं न*प्रकारेणसम्भवउत्पत्ति*र्यथाचपरमासिद्धिः*स्याात्तदपिप्रवक्ष्यामि ॥ २ ॥ यस्यायःक्षत्रियस्याय*धर्म्मप्रवर्त्तनार्ते नाहिकं स्या*त्तत्रामाब्राह्मणस्याराज्ञो*नैवर्वे यस्याचराधर्मःप्रवृद्धस्यात ॥ ४ ॥ १ ॥

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेणयथाविधि। सर्व्वस्यास्ययथान्याय्यं कर्त्तव्यं परिरक्षणम् ॥२ ॥

ब्राह्ममित्यादि॥२॥क्षत्रियेणयथाविधि*ब्राह्मं वैदिक संस्कारं *जातकर्म्मादुपनय*नान्तं प्राप्तेनसमावर्त्तनेन ।सर्व्वस्यास्ययथान्याय्यं *परिरक्षणं कर्तव्यम् ॥ २ ॥२॥ नतकस्मादेवं क्षत्रियेणराज्ञा * सर्व्वस्यास्यलोकस्यपरिरक्षणं *कर्त्तव्यमितातःक्षत्रिय*नृपसम्भवउच्यते ॥१॥ अराजक*इत्यादिभ्यां * द्वाभ्यामन्वि*तपूर्णाभ्यां ॥१॥॥२॥४॥

अराजके हिलोकेऽस्मिन् सर्व्वतोविद्रुते भयात्। रक्षार्थमस्यसर्व्वस्यराजानमसृजत्प्रभुः॥३॥

इन्द्रानिलयमार्काणामग्नेश्ववरुणस्यच। चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः ॥ ४ ॥

हियस्मादस्मिँल्लोके ख* ल्वराजके यदात्वयं * लोकोऽराजकएवासीत् * तदासर्व्वतोभयाद्विद्रुतोऽभवत् ॥ तदासर्व्वस्यास्यलोकस्यरक्षार्थं * प्रभुर्ब्रह्माप्रजापति* रिन्द्रादीनामष्टानां लोकपालानां * शाश्वतीर्मात्रा ॥ १ ॥ अंशानिर्हृत्यक्षत्रियं *राजानमसृजत्क्षत्रियं ...तोधि*कारान्नमाह्मणं *...

राजानं* ताभिर्मात्राभिरसृजत् ।१। यद्यस्मात्पार्थिवोर्व्वाशो वा* शूद्रो वा राजा भवति * सर्व्वतत्कर्म्मफलेन तथा * बलवान जातो राजाख्या* न्तत्सो न्द्रादिमात्राः सन्ति ॥२॥ यस्माद्यस्मात् राजानं * मम क्षतिरिति यो भूपालो भवति* तमेवेन्द्रादिमात्राभिरसृजदिति* तदग्रे ववात्ख्यानं ।३। यदितयाऽसृष्टत्तदा*क्षत्रियेषु यथाविधी*ति गौत्र्या भूपालेन तावदादिति ।४।४।

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्म्मितो नृपः। तस्मादभिभवत्येष सर्व्वभूतानि तेजसा॥५॥

तेषामं यशक्तिधर्म्मान् दर्शयति*यस्मात्पार्थिवादिकम् ।१।५। तेभ्योऽभिमाविद्वरेन्द्राणां मात्राभ्यो* नृपः क्षत्रियो निर्म्मित * स्तस्मादेषक्षत्रियो राजा सर्व्वाणि*तेजसाभिभवतीव ॥१॥५॥ तदभिभवकारिधर्म्मं दर्शयति*तपत्यादितावदित्यादि ॥१॥६॥

तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च। न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥६॥

एष क्षत्रियोराजास्व*सूर्य्यादित्यवत्तपत्यसौ*चक्षूंषि मनांसि चादित्यवत्तपन्ति।१। यत एनमस्य भुवि*कश्चिदपि नाभि* वीक्षितुं शक्नोतीति ।२।०।६।

सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्म्मराट्। स कुबेरः स वरुणः स महेन्द्रः प्रभावतः॥७॥

स इत्यादि ॥७॥ स क्षत्रियो राजा प्रभावतएव*ह्यग्न्यादयष्टदेवरूपो*भवतिनत्वन्यो राजा* तथाविधप्रभावः स्यात्॥१॥०॥७॥

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति॥८॥

बालोपीत्यादि॥८॥ बालोप्यकादशादिवर्षं यथा * उपनीतः क्षत्रियो भूमिपो राजा* मनुष्य इति बुद्ध्याकै* र्पिनावमन्तव्यः ।१। क्षत्रियभूपतिनररूपेणैषा*महती देवतातिष्ठति।२।८।

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्। कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम्॥९॥

एकमेवेत्यादि।९। अग्निर्दुरुपसर्पिण* मेकमेव नरं दहति नेतरं * राजाग्निर्दुरुपसर्पिणं सपशु* द्रव्यसञ्चयं कुलं दहति॥१॥९॥

कार्य्यं सोऽवेक्ष्य शक्तिञ्च देशकालौ च तत्त्वतः। कुरुते धर्म्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः॥१०॥

कार्य्यमित्यादि॥१०॥ यदिन्द्रादिमात्राभिर्निर्म्मितः क्षत्रियो * राजा प्रजानां कार्य्यं शक्तिञ्चावेक्ष्य * देश

कालौ च तत्त्वतोऽवेक्ष्य ॥ १ ॥ धर्मसिद्ध्यर्थं तत्त्वतः स्वं रूपं * पुनः पुनर्विश्वरूपं * प्रतिक्षणं विकुरुते । २ । १० ॥

यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ११ ॥

यस्येत्यादि ॥ ११ ॥ यस्य क्षत्रियस्य राज्ञः प्रसादे पद्मालक्ष्मीर्वसति यस्य * पराक्रमे श्रीः शोभा यस्य * त्रिवर्गं च विजयश्च । १ । यस्य च क्रोधे मृत्युर्वसति स हि * अग्नियोराजे वसर्व * तेजोमयो नाम्नोराजा ॥ २ ॥ ११ ।

तं यस्तु द्वेष्टि संमोहात् स विनश्यत्यसंशयम् । तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ १२ ॥

तमित्यादि ॥ १२ ॥ तं क्षत्रियं राजानं संमोहाद्यो * द्वेष्टि सोऽसंशयमाशु विनश्यति । १ ॥ कस्माद्धि यस्मात् तस्याशु विनाशाय * राजा मनः प्रकुरुते । २ ॥ १२ ॥

तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः । अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ १३ ॥

तस्मादित्यादि ॥ १३ ॥ तस्मात् क्षत्रियस्य राज्ञ एवंविध * प्रभावात् स नराधिपः * इष्टेषु यं धर्मं व्यवस्येदनिष्टे * चानिष्टं यश्च व्यवस्येत् ॥ १ ॥ तं धर्मं न * कदाचन * कोऽपि जनो * विचालयेत् ॥ २ ॥ ० ॥ १३ ॥ न तु राजा कथमेवं कर्त्तुं प्रभुः स्यात् * इत्यत आह तस्येत्यादि ॥ १ ॥ १४ ॥

तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् । ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥ १४ ॥

तस्य क्षत्रियस्य राज्ञोऽर्थे निमित्ते * ईश्वरः पूर्वमात्मजं * स्वस्य पुत्रं धर्ममेव ॥ १ ॥ सर्वभूतानां गोप्तारं * रक्षितारं ब्रह्मतेजोमयं दण्डं * शासनं विशेषमसृजत् ॥ २ ॥ इति ॥ १४ ॥ न तु दण्डेन किं भवतीत्यत आह * तस्य सर्वाणीत्यादि ॥ १ ॥ १५ ॥

तस्य सर्वाणि भूतानि स्थावराणि चराणि च । भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥ १५ ॥

तस्य दण्डस्य भयात् स्थावराणि * सजीवपर्वतादीनि * चराणि मनुष्यादीनि * सर्वाण्येव भूतानि । १ । स्वस्वनियमात् भोगाय कल्पन्ते * कल्पमानि वर्त्तन्ते नान्य * भोगाय बलात् प्रवर्त्तन्ते न च * तस्मात् धर्माच्चलन्ति । २ । १५ ।

तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः । यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥ १६ ॥

तमित्यादि । १६ । तं दण्डमन्यायवर्त्तिषु नरेषु * देशकालौ शक्तिं च विद्यामपि च * तत्त्वतोऽवेक्ष्य राजा च * यथार्हतः सम्प्रणयेत् ॥ १ ॥ १६ ॥

सराजापुरुषोदण्डःसनेताशासिताचसः। चतुर्णामाश्रमाणाञ्चधर्म्मस्यप्रतिभूःस्मृतः॥१७॥

सराजेत्यादि। १७। सदण्डएवराजापुरुषः* स्तद्दण्डकार्य्यत्वात्सच* दण्डेनेतानायकःस * एवचदण्डःशासिता। १। चतुर्णामाश्रमाणां च* धर्म्मस्यप्रतिभूःसएतदण्डो * यथाधर्म्मस्यायत्फलंतस्यदाता* ऽस्यमितिस्त्रीकर्त्ता वास्ति। २। १७।

दण्डःशास्तिप्रजाःसर्व्वादण्डएवाभिरक्षति। दण्डःसुप्तेषुजागर्त्तिदण्डंधर्म्मंविदुर्बुधाः॥१८॥

दण्डःशास्तीत्यादि॥ १८॥ सर्व्वाःप्रजादण्डःशास्ति* दण्डएवसर्व्वाःप्रजारक्षति* चतुर्षु सर्व्वेषु दण्डो * जागर्त्तितस्माद्बुधास्तु* दण्डमेवधर्म्मंविदुः॥ १॥ १८॥

समीक्ष्यसधृतःसम्यक्सर्व्वारञ्जयतिप्रजाः। असमीक्ष्यप्रणीतस्तुविनाशयतिसर्व्वतः॥१९॥

समीक्ष्येत्यादि। १९॥ सदण्डःसम्यक्समीक्ष्य* राज्ञादेशकालौयक्तिं * विद्याद्यापराधश्चालोच्यधृतः सन्* सर्व्वाःप्रजारञ्जयति। १॥ सएवदण्डस्तुसमीक्ष्य* तत्सर्व्वंनालोच्यराज्ञा* प्रजासुचेत्प्रणीतःस्यात्तदासर्व्वतोराजनंविनाशयति। २। १९।

यदिनप्रणयेद्राजादण्डंदण्ड्येष्वतन्द्रितः। शूलेमत्स्यानिवापक्ष्यन्दुर्व्वलान्बलवत्तराः॥२०॥

यदीत्यादि। २०। यदिराजादण्ड्येषुजनेषुदण्डं* मतन्द्रितःस्यात्तन्द्राविहीनःसन्नप्रणयेत्। १। ततबलवत्तराःजनाद्दुर्व्वलान्* जनान्शूलेमत्स्यानिवा* ऽपक्ष्यन्भिक्षयातिपर्व्वीसन्॥ २॥ २०॥ अपिच।

अद्यात्काकःपुरोडाशंश्वाऽवलिह्याद्धविस्तथा। स्वाम्यञ्चनस्यात्कस्मिंश्चित्प्रवर्त्तेताधरोत्तरम्॥२१॥

अद्यादित्यादि॥ २१॥ यदिराजादण्ड्येषु* दण्डंनप्रणयेत्तदा * काकःपुरोडाशमद्यात्। १। श्वाहविरवलिह्यात्* कस्मिंश्चित्कस्यचित्स्वाम्यं* नस्यात्तदाधरोत्तरंप्रवर्त्तेत। २। अधरोऽधमउत्तरःश्रेष्ठःप्रवर्त्ततस्य* भावेनकोपिनवर्त्तेत। १। २१।

सर्व्वोदण्डजितोलोकोदुर्लभोहिशुचिर्नरः। दण्डस्यहिभयात्सर्व्वंजगद्भोगायकल्पते॥२२॥

सर्व्वइत्यादि। २२। सर्व्वोलोकोदण्डजितो* हियस्मात्स्वभावतःपवित्रोऽपापो * जनोदुर्लभोभवति। १। तस्मात्सर्व्वंजगद्दण्डस्यैवभयात्* स्वस्वभोगायकल्पते॥ २॥ २२॥

देवदानवगन्धर्व्वारक्षांसिपतगोरगाः। तेपिभोगायकल्पन्तेदण्डेनैवनिपीडिताः॥२३॥

दुष्येतादि । २१ । देवादयोऽपि के वित्तेऽपि*दण्डेनैवनिपीडिताः*स्वस्वविहितभोगाय कल्पन्ते । १ । २१ ।

दुष्येयुःसर्व्ववर्णाश्चभिद्येरन्सर्व्वसेतवः । सर्व्वलोकप्रकोपश्चभवेद्दण्डस्यविभ्रमात् ॥२४ ॥

दुष्येयुरित्यादि । २४ । दण्डस्यविभ्रमाद्व्यतिक्रमात्सर्व्वेच *वर्णादुष्येयुःसर्व्वसेतवोयमा*यस्यायोयोधर्म्मनिर्द्धा*नियमस्तत्तद्भङ्गा ।१। विधर्म्माचरणवारणास्तपस्तु*सेतवस्तेसर्व्वेभिन्देरन् *सर्व्वलोकप्रकोपःस्यात् ॥ २४॥

यत्रश्यामोलोहिताक्षोदण्डश्चरतिपापहा । प्रजास्तत्रनमुह्यन्तिनेताचेत्साधुपश्यति ॥२५ ॥

यत्रेत्यादि ।२५। यत्रपापहाश्यामोलोहिताक्ष*५* दण्ड*५ चरतितत्रदण्डमानेता*नायकोराजासाधुयथार्थं चेत् पश्यति * तत्रप्रजाःकदाचिन्नमुह्यन्ति । १ । २५ ।

तस्याहुःसम्प्रणेतारंराजानंसत्यवादिनम् । समीक्ष्यकारिणंप्राज्ञंधर्म्मकामार्थकोविदम् २६

कःप्रणेतेत्यतआह * तस्याहुरित्यादि श्लोकं । १ । तस्यादण्डस्यप्रणेतारंमीदृश * राजानमाहुर्मनीषिणः । १ । २६ ।

तंराजाप्रणयन्सम्यक्त्रिवर्गेणाभिवर्द्धते । कामात्माविषमःक्षुद्रोदण्डेनैवनिहन्यते ॥२७॥

तमित्यादि । २७ । सत्यवादीसमीक्ष्यकारी*धर्म्मार्थकामकोविद*५*राजातंदण्डंदण्ड्येषु *सम्यक्प्रणयन् युञ्जानः । १ । त्रिवर्गेणाभिवर्द्धते*सराजायदिकामात्मा*स्वकामसाधनपरः*सत्रिविषमोभवति । २ । सर्व्वास प्रजासुसमानमात्*सक्षुद्रोराजादण्डेनैव*दण्डेनसनिहन्यते । ३ । २७ । कतःसराजादण्डेन*निहन्यतइत्यतआह दण्डोहीत्यादिश्लोकम् । १ । २८ ।

दण्डोहिसुमहत्तेजोदुर्द्धरश्चाकृतात्मभिः । धर्म्माद्विचलितंहन्तिनृपमेवसबान्धवम् ॥ २८ ॥

हियस्माद्दण्डोऽसंसुमहत्तेजः*स्वरूपोऽकृतात्मभिस्तु*जनैर्दुर्द्धरोधर्म्माद्विचलितं*नृपंसबान्धवंहन्ति ।२८ ।

ततोदुर्गंश्चराष्ट्रञ्चलोकञ्चसचराचरम् । अन्तरीक्षगतांश्चैवमुनीन्देवांश्चपीडयेत् ॥ २९॥

ततइत्यादि ॥ २९ ॥ ततःसबान्धवनृप*हननादनन्तरंस*दण्डोदुर्गादीन्पीडयेत् । १ । २९ ।

सोऽसहायेनमूढेनलुब्धेनाकृतबुद्धिना । नशक्योन्यायतोनेतुंसक्तेनविषयेषुच ॥ ३० ॥

सोऽसहायेनेत्यादि ॥ ३० ॥ सखलुदण्डोमूढेन*लुब्धेनासहायेनाकृतबुद्धिना*विषयेषुसक्तेनच*राज्ञानेतुं न्यायतःप्रणेतुंनशक्यःस्यात् । १ । ३० । केनशक्यःप्रणेतुमित्यतआह शुचिनेत्यादिश्लोकम् । १ । ३१ ।

विद्याउपनिषद्धि द्वातेभा*एवममागातिष्ठेदय * लोकतोवार्त्तानां पशु*पालनकृषिवाणिज्या *दीनामारम्भान्
।पसमातिष्ठेत् ॥ ४ । ४२ ॥ इन्द्रियाणां जयेयोग*महर्निशं समवगातिष्ठेत्* कस्मा।द्धियस्माज्जितेन्द्रियोनृप
तिः * प्रजाःस्ववशेस्थापयितुंशक्नोतीति । १ । ४४ । एवंकृत्वाकिंकुर्यादित्यतोवर्जनाहदशे
त्यादि । ४५ ।

**दशकामसमुत्थानितथाष्टौक्रोधजानिच। व्यसनानिदुरन्तानि प्रयत्नेनविवर्ज्जयेत् ॥ ४५॥**

कामसमुत्थानिदश * दुरन्तानिव्यसनानि * तथाष्टौक्रोधजानिच * दुरन्तानिव्यसनानि*यत्नविशेषःप्रयत्नेनविवर्जयेत् । १ । ४५ । कस्मादित्यतआह कामजेषु*प्रसक्तोहीत्यादिकम । १ ।४६।

**कामजेषुप्रसक्तोहिव्यसनेषुमहीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैवतु ॥ ४६ ॥**

महीपतिःकामजेषु* दशस्वासक्तोहियस्मा दर्थधर्माभ्यांवियुज्यते । १ । क्रोधजेनव्यसनेनात्मनैव वियुज्यतेम्रियते । २ । ४६ । कानिकामजानिदश * व्यसनानिक्रोधजानिचाष्टावित्यतआह * मृगयेत्यादि । १ । ४७ ।

**मृगयाक्षोदिवास्वप्नःपरिवादःस्त्रियोमदः। तौर्य्यत्रिकंवृथाट्याचकामजोदशकोगणः ॥ ४७ ॥**

मृगयादीनिदशवत्* कामजानिव्यसनानि * तौर्य्यत्रिकमितिनृत्यं * गीतंवादित्रमिति त्रयं * वृथाट्याच याटनं । १ । ४७ ।

**पैशुन्यंसाहसंद्रोहईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्चपारुष्यंक्रोधजोपिगणोऽष्टकः॥४८॥**

पैशुन्यमित्यादि । ४८ । पैशुन्यादीन्यष्टौक्रोध*जानिव्यसनानितत्र*अर्थदूषणंपरार्थापहरणम * वाक्पारुष्यंदण्डजं*पारुष्यञ्चेतिद्वयं । १ । ४८ । कामक्रोधयोःकारणमाहद्वयो* रपीत्यादि ॥ १ ॥ ४६ ॥

**द्वयोरप्येतयोर्मूलं यंसर्व्वेकवयोविदुः। तंयत्नेनजयेल्लोभं तज्जावेतावुभौगणौ ॥ ४९ ॥**

कवयःपण्डिताएतयो* र्द्वयोरपिकामक्रोधयोर्मूलन्तुयं*लोभंविदुस्तंलोभञ्च * जयेत्तत।भिजावेतौ भौगणौ ॥ १ ॥ ४६ ॥ तत्रापितिर्दोषमाह*पानमक्षादृत्यादि ॥ ५० ॥

**पानमक्षाःस्त्रियश्चैवमृगयाचयथाक्रमम्। एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे ॥ ५० ॥**

कामजेदशकेगणे * पानंमद्यमक्षाद्यूतक्रीडा * प्रसङ्गश्चमृगयाच * इतोतच्चतुष्कंयथा * क्रमंकष्टतमं विद्यात् ॥ १ ॥ ० ॥ ५० ॥ क्रोधजगणेऽतिदोषानाह*दण्डस्येत्यादि । ५१ ।

दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा ॥ ५१ ॥

क्रोधजेऽष्टके गणेऽपि * दण्डस्य पारुष्येण पातनं तथा * वाक्पारुष्यमर्थदूषणञ्चेति * त्रिकं सदा कष्टं विद्यात् ॥ १ ॥ ५१ ॥

सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ ५२ ॥

सप्तकस्येत्यादि ॥ ५२ ॥ मृगयाक्षस्त्रीपानानाञ्चतुर्णां मृगयादण्डपारुष्यवाक्पारुष्यार्थदूषणात्मक* वर्गस्य सर्वत्रैवानुषङ्गिणः । १ । पूर्वं पूर्वं व्यसनं गुरुतरं * आत्मवान् नृपतिर्विद्यात् । २ । ५२ ।

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ ५३ ॥

व्यसनस्येत्यादि । ५३ । व्यसनमृत्वोर्मध्ये * द्वयोर्मध्ये व्यसनं तु * कष्टमुच्यते विद्वद्भिः । १ । कस्मात् यस्मात् व्यसनी मृतः * स्वधोऽधो नरकं व्रजति * अव्यसनी मृतः स्वर्याति ॥ २ ॥ ५३ ॥ अथैवं क्षत्रियस्तु राजा * भूत्वा यत्कार्यं तदाह * मौलानित्यादिकम् । १ । ५४ ।

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान् । सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ ५४ ॥

उक्तरूपेण व्यसनत्यागानन्तरं समावृत्तः * क्षत्रियो राजा भूत्वा सप्त चाष्टौ वा * शास्त्रविदः शूरान् वीरान् । १ । लब्धलक्षान् शस्त्रास्त्रे लब्धलक्ष्यान् * तान् कुलोद्गतान् सद्वंश* जातान् परीक्षितान् मोहलोभादिदोषविहीन* तथा दृष्टभोजनादीन् । २ । मौलान् स्वराज्यरक्षणे बीज * भावमर्हन्ति ये तांस्तु * सचिवान् मन्त्रिणः सहायान् कुर्यात् ॥ ३ । ५४ । सहायप्रयोजनमाह * अपि यदित्यादि । १ । ५५ ।

अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् । विशेषतोऽसहायेन किन्तु राज्यं महोदयम् ॥ ५५ ॥

सुकरमपि यत्कर्म * तदपि कर्म खलु एकेन दुष्करं * किन्तु महोदयं राज्यं * राज्यपालनं कर्म । १ । असहायेन एकेन विशेषतो दुष्करं तस्मात् * सचिवान् सहायान् कुर्यात् । ५५ । सचिवान् कृत्वा किं कुर्यादित्यत* आह तैः सार्द्धमित्यादि ॥ १ । ५६ ॥

तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम् । स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ ५६ ॥

क्षत्रियो राजा तैः सचिवैः सार्द्धं * नित्यं यत्सामान्यं समत्वं यस्मिन् येन * सह सन्धिः कार्यो विग्रहो वा * कर्त्तव्य स्तच्च चिन्तयेत् । १ । स्थानं धनकोषं दण्ड* नीयञ्च नित्यं चिन्तयेत् * समुदयं धनानामुदयो यस्मात् * तज्जनाकरं

चिन्तयेत्। २। एतिं प्रजादीनां रक्षां * पुनयथासावञ्चचिन्तयेत् * यद्वर्ष्यं यानिप्रथमनामिदं वां * तानि सर्व्वाणिचिन्तयेत्। १। ०। ५३।

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक्पृथक्। समस्तानाञ्च कार्य्येषु विदध्याद्धितमात्मनः॥५७॥

तेषामित्यादि। ५७। तेषां सप्तानामष्टानां वा * सचिवानां स्वं स्वं पृथ * गभिप्रायं तान् समस्ता * नात्माभिप्रायञ्चोपलभ्य * कार्य्येष्वात्मनोहितं राजाविदध्यात्। १। ५७।

सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता। मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥५८॥

सर्व्वेषामित्यादि। ५८। सर्व्वेषां मन्त्रिणां मध्ये * विशिष्टेन विपश्चिता * ब्राह्मणेन सह राजा * परमं मन्त्रं षाड्गुण्यसंयुतं मन्त्रयेत्। १। यानुत्कृष्टासामान्यसन्धिविग्रह * स्थानसंहृदयगुप्ति * लब्धप्रशमनानातयषड्गुण युक्ता * तां मन्त्रणां मन्त्रयेत्। २। ५८।

नित्यं तस्मिन् समाश्वस्तः सर्व्वकार्य्याणि निःक्षिपेत्। तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत्॥ ५९॥

नित्यमित्यादि। ५९। तस्मिन् विशिष्टे विपश्चिति ब्राह्मणे * सचिवे समाश्वस्तः सम्यगाश्वस्तः * सन् सर्व्व कार्य्याणि राजा विनिःक्षिपेत्। १। तेन विपश्चिता विशिष्टेन खलु * ब्राह्मणेन सचिवेन * सार्द्धं मन्त्रणया सर्व्वं विनिश्चित्य * ततः कर्म्म समारभेत्। २। ५९।

अन्यानपि प्रकुर्व्वीत शुचीन् प्राज्ञानवस्थितान्। सम्यगर्थसमाहर्त्तॄनमात्यान् सुपरीक्षितान्॥६०

अन्यानपीत्यादि। ६०। मन्त्रणार्थमेवं सचिवान् सप्त * साष्टौ वा विधायान्यान * प्राज्ञानवस्थितान् * शुचीन् प्राज्ञान् परीक्षितान्॥ १॥ सम्यगर्थ समाहरणार्थमर्थ * समाहर्त्तॄन् प्रकुर्व्वीत॥ २॥ ६०॥

निर्व्वर्त्तेतास्य यावद्भिरितिकर्त्तव्यता नृभिः। तावतोऽतन्द्रितान् दक्षान् प्रकुर्व्वीत विचक्षणान्॥६१

निर्व्वर्त्ततेत्यादि॥ ६१॥ अस्यार्थ समाहरणा * सा इतिकर्त्तव्यता नृभि * र्यावद्भिर्निर्व्वर्त्तेत * तावतो नृन् विचक्षणान्॥ १॥ तन्द्रितानधीनान् दक्षा * नथ समा * हर्त्तॄन् राजा प्रकुर्व्वीत॥ २॥ ६१॥

तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान्। शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने॥ ६२॥

तेषामित्यादि॥ ६२॥ तेषामर्थ समाहर्त्तॄणां रक्षण * स्यार्थे दक्षान् कुलोद्गतान् * शूरान् पुरुषान्नियुञ्जीत १। अर्थ समाहरणेष्वाकराणां * स्वर्णादिखनीनां धान्यादिक्षेत्राणां * कर्म्मान्ते तत्स्वर्णादिधा * न्यादीना

मन्त्रनिर्वेशने ॥ २ ॥ तत्तदर्थं आपनस्थाने गृह्णीत *विद्याचरणमतिविरहितान्*भीरूंस्तत्तद्वाविद्य *भयशीलान् नृन् नियुञ्जीत ॥ २ ॥ ६२ ॥

**दूतञ्चैव प्रकुर्वीत सर्वशास्त्रविशारदम्। इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥६३॥**

दूतञ्चैवेत्यादि ॥ ६३ ॥ राजा दौत्यकार्यं तं *दूतं प्रकुर्वीत यः * सर्वशास्त्रविशारदः * परेषामिङ्गितानि च*आकारोऽङ्गप्रत्यङ्ग*चेष्टाश्च यो जानाति ॥ १ ॥ शुचिश्च*दक्षश्च सत्कुले *चोद्गतश्च भवति । २ । ६३ ।

**अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित्। वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥६४॥**

अनुरक्तइत्यादि ॥ ६४ ॥ अनुरक्तादिर्दूतो राज्ञः*प्रशस्यते सद्वक्ता वाग्मी*सुवपुर्वपुष्मान । १ । ६४ ।

**अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया। नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्ययौ ॥६५॥**

अमात्ये दण्डइत्यादि । ६५ । अमात्ये राज्ञः स्वगुणे *आयत्तोऽधीनो दण्डो*दण्डे कर्त्तव्ये नृपता*वायत्ता वैनयिकी*विशिष्ट नीतिक्रिया । १ । कोषराष्ट्रे चैव नृपतावायत्ते *दूते सन्धिविग्रहावायत्तौ ॥ २ ॥ ६५ ॥ कथं दूते सन्धिविपर्ययावुभा*वायत्तौ स्यातामित्यत * आह दूतएवेत्यादि । १ । ६६ ।

**दूतएवहि सन्धत्ते भिनत्त्येव च संहतान्। दूतस्तत्कुरुते कर्म भिद्यन्ते येन वा न वा ॥६६॥**

दूतएव परैः सह यथा सन्धि*स्यात्तथा वदन् संहितान् सन्धत्ते *यथा च भेदः स्यात्तथा*वदन् संहितान् भिनत्ति ॥ दूतस्तत्कर्म कुरुते *येन कर्मणा संहिता*भिद्यन्ते येन कर्मणा वा न भिद्यन्ते ॥ २ ॥ ६६ ॥ कथमित्यत आह स*विद्यादस्य*कर्तेष्वित्यादि ॥ १ ॥ ६७ ॥

**सविद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः। आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥६७॥**

यस्मात् स दूतोऽस्य परस्य निगूढैः * रिङ्गितचेष्टितैः कृत्येषु कर्त्तव्ये * पाकारमिङ्गितं चेष्टां च विद्यात्तस्मात् भृत्येषु चिकीर्षितं तदा * यथायद् यत्तत्सर्वं च * दूतो विद्यात्तस्मात् दूता*यत्तौ सन्धिविपर्ययौ । १ । ३७ ।

**बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम्। तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥६८॥**

बुद्ध्वा चेत्यादि ॥ ६८ ॥ राजा दूतेन सर्वं परराजचिकीर्षितं तत्त्वेन बुद्ध्वा *यथात्मानं स न पीडयेत् *तथा प्रयत्नमातिष्ठेत् ॥ १ ॥ ६८ ॥ परराजेन पीडनवारणार्थं *राज्ञो वासयोग्यस्थान*माह जाङ्गलमित्यादि । ६९ ।

**जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्। रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥६९॥**

जाङ्गलं सस्यसम्पन्नं आर्यप्रायं *ब्राह्मणबहुलं* देशं*अल्पजलमतालपूरमपूरं वा* ऽनाविलं मलादानाविल

हीन। १। रमा मनोरममानतसामन्त*समाङ्गतःसारथिय तत्स्वाजीवा हम्चाजीवा*जीवनोपायद्रवा यव*
राजात द्रेसमावसेत्। २। २॥ ६६॥ यथापुर कत्वावसे तदाह*धन्वदुर्गमितयादि। १। ७०।

**धन्वदुर्गं महीदुर्गमब्दुर्गं वार्च्छमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्॥ ७०॥**

धन्वदुर्गं मरुपृ * दिक्चतुष्टयनाभूमि * भागःपञ्चयोजनादुदकोयत्र* तेनदुर्गं दुर्गमं पुरं *समाश्रित्यरा
जावसेत्। १। अथवामहीदुर्गं चन्मयेन* विस्तारोतसेधवज्जलेनागमा*प्राकारेणाहतं पुरं*माश्रित्यराजाव
सेत्। २। अथवाब्दुर्गं सजलपरिखा* कत्वामध्ये पुरंकत्वा* तदाश्रित्याराजावसेत्॥ ३॥ अथवावार्च्छं स
कण्ट * कात्च्छेदामहावृक्षादि * परिवृतत्वेनदुर्गं * पुरमाश्रित्याराजावसेत्। ४। अथवानृदुर्गं सेना*रतं
पुरमाश्रित्यावसेत्*अथवागिरिदुर्गं पु*रमाश्रित्याराजावसेत्। ५। ७०।

**सर्व्वेणतुप्रयत्नेनगिरिदुर्गं समाश्रयेत्। एषांहिवहुगुण्येन गिरिदुर्गं विशिष्यते॥ ७१॥**

सर्व्वेणेतयादि। ७१। सर्व्वेणप्रयत्नेन*गिरिदुर्गं *पुरं राजासमाश्रये *देषां दुर्गाणां मध्येहि* गिरि
दुर्गं विशिष्यते *वहुगुणत्वेनेवेति॥ २॥ ७१॥

**त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्त्ताश्रयाप्चराः। त्रीण्युत्तराणिक्रमशःप्लवङ्गमनरामराः॥ ७२॥**

त्रीण्याद्यानीतयादि॥ ७२॥ आद्यानित्रीणिधन्वदुर्गं महीदुर्गं*ब्दुर्गाणिमृगगर्त्ताश्रयादयःसर्पादि * गर्त्ता
श्रयप्लवाश्रा श्रिताः॥ १॥ एषामुत्तराणित्रीणि*वार्च्छदुर्गं नृदुर्गं गिरिदुर्गाणि*प्लवङ्गमोवामरोवाद्या *नरोनृ
दुर्गममरो* गिरिदुर्गं समाश्रितः॥ २॥ ७२॥

**यथादुर्गाश्रितानेतान्नोपहिंसन्तिशत्रवः। तथारयोनहिंसन्तिनृपं दुर्गसमाश्रितम्॥ ७३॥**

यथेतयादि॥ ७३॥ यथामृगादीन्शत्रवोनोपहिंस*न्तोवमरयोदुर्गाश्रितं*नृपंनहिंसन्तीति॥ ७३॥
नत्वेवंदुर्गं गाकिंस्यादितयत*आह।

**एकःशतंयोधयति प्राकारस्थोधनुर्द्धरः। शतंदशसहस्राणित स्माद्दुर्गं विधीयते॥ ७४॥**

एकःशतमितयादि। ७४। प्राकारस्थोधनुर्द्धर* एकःशतं धनुर्द्धरान्*योधयतिशतं धनुर्धराणां * दशसह
स्राणिधनु*र्द्धराणां योधयतीति। १। तस्माद्दुर्गं राज्ञोवासार्थं विधात्रा*स्वयमेवविधीयते। २। ७४। ०।

**ततस्यादायुधसम्पन्नं धनधान्येनवाहनैः। ब्राह्मणैःशिल्पिभिर्यन्त्रैःयवसेनोदकेनच॥ ७५॥**

ततस्यादितयादि। ७५। तद्दुर्गं राज्ञःपुरमायुधैःशस्त्रैः* स्त्रैश्चसम्पन्नं कार्यं *स्याद्धनधान्यैर्वाहनैः*हस्त्यश्व

रथादिभिश्च सम्पन्नं कार्य्यं । १ । ब्राह्मणैर्वेदविद्भिः * शिल्पिभिः कारुभिर्यन्त्रैः * स्तैलपीडनादियन्त्रैर्यवसेन * ग्रासेन चोदकेन च * सम्पन्नं राज्ञा कर्त्तव्यं । २ । ७५ ।

**तस्य मध्ये सुपर्य्याप्तं कारयेद्‌गृहमात्मनः । गुप्तं सर्व्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥ ७६ ॥**

तस्येत्यादि । ७६ । तस्य दुर्गस्य पुरस्य * मध्ये नृपश्चात्मनः सुपर्य्याप्तं * सुन्दरं पर्य्याप्तं भागशः स्त्रीगृहं * रन्धनगृहमग्निगृहं । १ । इत्येवं पृथक् पृथक् गृहं गुप्तं * रक्षकै रक्षितं सर्व्वर्त्तुकं शुभ्रं * जलवृक्षसमन्वितं कारयेत् । । २ । ७६ । ० ।

**तदध्यास्योद्वहेद्भार्य्यां सवर्णां लक्षणान्विताम् । कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥ ७७ ॥**

तदध्यास्येत्यादि ॥ ७७ ॥ तद्‌गृहमध्यास्य * राजा हृद्यां रूपगुणान्वितां लक्षणान्वितां च * महति कुले सम्भूतां ॥ १ ॥ भार्य्यां क्षत्रियकन्यां वा * वैश्यकन्यां वा मन्त्रेण * विवाहाद्या सवर्णा स्यात् * तां सवर्णामुद्वहेत् ॥ २ ॥ पूर्व्वमुक्ता शूद्रैव भार्य्या शूद्रस्येति वचनेन क्षत्रियस्य भार्य्या * स्वा शूद्रकन्या वैश्या * कन्या क्षत्रियकन्या च ॥ ३ ॥ न ब्राह्मणकन्या तस्य * ब्राह्मणकन्यां नोद्वहेत * तर्हि किं शूद्रकन्यामपि उद्वहेत् * इति तन्निरासार्थन्तु * सवर्णामिति विशेषणम् ॥ ४ ॥ शूद्रकन्यायाममन्त्रेण * विवाहविध्यभावान्न * सावर्ण्यसम्भवोऽस्तीति ॥ ५ ॥ क्षत्रियकन्याया जन्मतः सावर्ण्यं * वैश्याकन्यायामन्त्रेण * विवाहात् सावर्ण्यसम्भवः ॥ ६ ॥ तेन क्षत्रियः क्षत्रियकन्यां वैश्याकन्यां वा उद्वहेदिति ॥ ७ ॥ ७७ ॥

**पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजः । तेऽस्य गृह्याणि कर्म्माणि कुर्य्युर्वैतानिकानि च ॥ ७८ ॥**

पुरोहितञ्चेत्यादि ॥ ७८ ॥ एवमुद्वाहं कृत्वा यथर्व्वणिक * क्रियायामथर्व्ववेदवेत्तारं * ब्राह्मणं पुरोहितं च कुर्व्वीत ॥ १ ॥ ऋत्विजश्चत्रयीवेत्तॄन् वृणुयात् * यस्मात्तौ यजन्ति तस्मादृत्विजः * तत्र च व्याकरोति होत्रादिना ॥ २ ॥ यस्मादृत्विजोऽस्य * राज्ञो गृह्याणि वैतानिकानि च * सर्व्वाणि कर्म्माणि कुर्य्युः ॥ ३ ॥ ७८ ॥

**यजेत राजा क्रतुभिर्विविधैर्भूरिदक्षिणैः । धर्म्मार्थञ्चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥ ७९ ॥**

यजेतेत्यादि ॥ ७९ ॥ राजा भूरिदक्षिणैर्विविधैरश्वमेधादिभिः क्रतुभिस्तु * यजेत धर्म्मार्थञ्चैव * विप्रेभ्यो भोगान् भूम्यादि * वस्त्रौघधनानि च दद्यात् ॥ १ ॥ ७९ ॥

**सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् । स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ॥ ८० ॥**

नाधीतेऽसमवेदे ब्राह्मणब्रुवः । २ । अग्निहोत्रीतपस्वीचवेदमध्यापयेश्वयः । सकल्पं सरहस्य*तमाचार्य्यं प्रचक्षते । । इष्टिभिःपशुबन्धैश्चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येनचेष्टं सइष्टवान् ॥ मीमांसतेचयो वेदान्षड्भिरङ्गैःसविस्तरैः । इतिहासपुराणानिसभवेद्वेदपारगः । ४ । इति । यद्दानसायत्फलसङ्क्तं तत्फलं समब्राह्मणे दत्तं स्यात्*तत्तोद्विगुणादिफलं *ब्राह्मणब्रुवादिषुदत्तं फलति । ५ । ८५ ।

पात्रस्यहिविशेषेण श्रद्धधानतयैव च । अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥ ८६ ॥

पात्रस्येत्यादि । ८६ । द्वियस्माद्दानस्यपात्रस्य*ब्राह्मणस्यविशेषेणैव* श्रद्धधानतया । १ । अल्पं वा बहु वा प्रेत्य*दानस्यफलमवाप्यते । २ । ८६ ।

समोत्तमाधमै राजात्वाहूतःपालयन्प्रजाः । ननिवर्त्तेतसंग्रामात्क्षात्रं धर्म्ममनुस्मरन् ॥ ८७॥

समोत्तमेत्यादि । ८७ । प्रजाःपालयन्राजा*समेनापरेणोत्तमे *नाधमेनवायोद्धुमे* वाहूतःसन्क्षात्रं धर्म्मं*मनुस्मरन्संग्रामान्ननिवर्त्तेत । १ । ८७ ।

संग्रामेष्वनिवर्त्तित्वं प्रजानाञ्चैवपालनम् । शुश्रूषाब्राह्मणानाञ्चराज्ञांश्रेयस्करं परम् ॥ ८८

संग्रामेष्वित्यादि ॥ ८८ । राज्ञां संग्रामेष्वनिवर्त्तित्वं * प्रजानाञ्चपालनं ब्राह्मण*शुश्रूषाचेतित्रयं न्तु* परं श्रेयस्करं स्यात् । १ । ८८ ।

आहवेषुमिथोऽन्योऽन्यं जिघांसन्तोमहीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ८९ ॥

आहवेष्वित्यादि । ८९ । आहवेषु महीक्षितो*राजानःशक्त्यामिथः*जिघांसन्तोऽन्योऽन्यं पर * शक्त्या युध्यमानाश्च*पराङ्मुखाःस्वर्गं यान्ति । १ । ८९ ।

नकूटैरायुधैर्हन्याद्युध्यमानोरणेरिपून् । नकर्णिभिर्नापिदिग्धैर्नाग्निज्वलिततेजनैः ॥ ९० ॥

नेत्यादि । ९० । राजारणेयुध्यमानः*कूटैरायुधैर्गोपन*स्याल्पशस्त्रैर्न रिपून्हन्यात् । १ । कर्णिभिः कर्णिकाकार*फलैर्बाणैर्नरिपून्हन्यात्* विषदिग्धैरायुधैः * नरिपून्हन्यात्।अग्नि*ज्वलिततेजनैरायुधैर्न हन्यात् । २ । ९० ।

नचहन्यात्स्थलारूढं नक्लीबं नकृताञ्जलिम् । नमुक्तकेशंनासीनं नतवास्मीतिवादिनम् ॥ ९१॥

नचे त्यादि । ९१ । रथस्थोराजाहस्त्याश्वरथारूढ़ः*स्थलारूढं नहन्यात्*क्लीवं प्रकृतिहीनं हन्या* नक्तताञ्ज लिं चहन्यात् । १ । मुक्तकेशं परं नहन्या*न्नचासीनं हन्यात्तथा*स्मीतिवादिनं नहन्यात् । २ । ९१ ।

नसुप्तंनविसन्नाहं ननग्नंननिरायुधम् । नायुध्यमानं पश्यन्तंनपरेण समागतम् ॥ ९२॥

नसुप्तमित्यादि । ९२ । राजायुध्यमानोनसुप्तं हन्यात्*विसन्नाहं युद्धे सन्नद्धो* योनभवतितं नहन्यात् । १ । युध्यमानं नग्नं जनं *नहन्या*न्निरायुधमयुध्यमानं नहन्यात् * युध्यमान°निरायुधन्तयुध्यमानोहन्यादिति । २ । युद्धं पश्यन्तमयुध्यमानं *सायुधं निरायुधं वान*हन्यात्परेणसहच*युद्धे समागतं नहन्यात् । ३ । ९२ ।

नायुधव्यसनप्राप्तं नार्त्तंनातिपरिक्षतम् । नभीतंनपरावृत्तं सतांधर्म्ममनुस्मरन् ॥ ९३॥

नायुधेत्यादि । ९३ । आयुधव्यसनप्राप्तं* युध्यमान°मस्त्रास्त्रव्यये नैवाव*सादप्राप्तं नहन्यान्न * शोकास्व स्थतादिनार्त्तं हन्यात् । १ । नचास्त्रैरतिपरिक्षतं हन्यान्न*भीत°हन्यान्न*परावृत्तं* पराङ्मुखं हन्यात्सतां* वीराणां धर्म्ममनुस्मरन् । २ । ९३ ।

यस्तुभीतःपरावृत्तःसंग्रामे हन्यते परैः । भर्त्तुर्यद्दुष्कृतं किञ्चित्तत्सर्व्वं प्रतिपद्यते ॥९४ ॥

यस्त्वित्यादि । ९४ । यस्तुसंग्रामे भीतःसन्*परावृत्तःपराङ्मुखः*परैर्हन्यते प्रक्रियते *सभर्त्तुःपोषण कर्त्तुः*र्यत्किञ्चिद्दुष्कृतं तत्सर्व्वं प्राप्नोति । १ । ९४ ।

यच्चास्यसुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्त्तातत्सर्व्वमादत्ते परावृत्तहतस्यतु ॥९५॥

अपरञ्चयच्चास्येत्यादि । ९५ । यःसंग्रामे भीतःपराङ्मुखःपरै*र्हन्यते तस्यास्यपरावृत्तहत*स्यामुत्राथं परलोका*र्थमुपार्जितं यत्किञ्चित् । १ । सुकृतं तत्सर्व्वं भर्त्ता*युद्धस्वामीआदत्ते तस्मात्संग्रामे * सेनासेना पत्यादिकः*कोपिपराङ्मुखोनस्यात् । २ । ९५ ।

रथाश्वंहस्तिनंछत्रंधनंधान्यंपशून्स्त्रियः । सर्व्वद्रव्याणिकुप्यञ्चयोयंजयतितस्यतत् ॥९६ ॥

रथाश्वमित्यादि । ९६ । योयंजयतितस्यरथाश्वादिकं* यत्किञ्चद्द्रव्यं तत्सर्व्वं*तज्जेतुस्तस्यैवभवति।९६ तर्हि किं तस्यस्वामीराजाकिञ्चिन्न*प्राप्नुयादित्यत्राह ।

राज्ञश्चदद्युरुद्धारमित्येषावैदिकीश्रुतिः । राज्ञाचसर्व्वयोधेभ्योदातव्यमपृथग्जितम् ९७

राज्ञउद्धारित्यादि । १ । ९७ । जेतारोजितानां रथाश्वादीनि * गृहीत्वास्वामिनोराज्ञ*उद्धारं तद्यथा श्रादि * मुत्तमं यत्किञ्चित्तद्दद्युः । १ । राज्ञाचापृथग्जितमेकत्रजितं * यत्किञ्चिद्द्रव्यजातं तत्*सर्व्वयोधे भ्योदातव्य°*पृथग्जितं तुनदेयं । २ । ९७ ।

एषोऽनपष्कृतः प्रोक्तो योधधर्म्मः सनातनः। अस्माद्धर्म्मान्नच्यवेत क्षत्रियो घ्नन्रणे रिपून् ९८

एष इत्यादि। ९८। एष सनातनो नित्यः अनुपस्कृतोऽस्खलितः अनिन्दितो योधधर्मः प्रोक्तः। १। क्षत्रियः युधि रिपून् घ्नन् अस्माद्धर्मान्न च्यवेत्। २। ९८।

अलब्धञ्चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः। रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥ ९९ ॥

अलब्धञ्चेत्यादि। ९९। राजा यद्लब्धं तत् लिप्सेत लब्धं रक्षेत्। १। रक्षितं वर्द्धयेत् वृद्धं पात्रेषु निक्षिपेत्। ९९।

एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्। अस्य नित्यमनुष्ठानं सम्यक्कुर्य्यादतन्द्रितः॥१००॥

एतदित्यादि। १००। धनस्यालब्धस्य लाभेच्छा लब्धस्य रक्षा रक्षितस्य वृद्धिः वृद्धस्य पात्रेषु निक्षेपणम्। १। पुरुषार्थप्रयोजनं विद्यात् अस्य अनुष्ठानं नित्यं अतन्द्रितः सम्यक् कुर्य्यात्। १००।

अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया। रक्षितं वर्द्धयेद्वृद्ध्या वृद्धं दानेन निक्षिपेत् ॥ १०१॥

तत् राजा कथं कुर्य्यादित्यत आह अलब्धमित्यादि। १। १०१। राजा अलब्धं धनं दण्डेन इच्छेत् दण्डेन लब्धं धनं अवेक्षया सर्व्वदा दृष्ट्या रक्षेत्। १। रक्षितं वृद्ध्या वर्द्धयेत् वृद्धं धनं दानेन निक्षिपेत्। २। १०१।

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। नित्यं संवृतसंवार्य्यो नित्यं छिद्रानुसार्य्यरेः॥१०२

नित्यमित्यादि। १०२। उद्यतो दण्डः यस्य तथा विवृतपौरुषो नित्यं स्यात्। १। संवृतसंवार्य्यः नित्यं अरेः छिद्रानुसारी स्यात्। २। १०२।

नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत्। तस्मात्सर्व्वाणि भूतानि दण्डेनैव प्रसाधयेत्॥१०३

एतेः किं स्यादित्यत आह नित्यमित्यादिकम्। १। १०३। नित्यमुद्यतदण्डस्य राज्ञो भयात् कृत्स्नं जगत् उद्विजते तस्मात् दण्डेन सर्व्वाणि भूतानि प्रसाधयेत्। १। १०३।

अमाययैव वर्त्तेत न कथञ्चन मायया। बुद्ध्येतारिप्रयुक्ताञ्च मायां नित्यं सुसंवृतः ॥ १०४ ॥

अमायर्यवेत्यादि। १०४। राजानित्यममायया*छद्मभावं विनात्मीये *वर्त्तेतवमायया* षसंवृतःसन्नरि प्रयुक्तां मायां *छद्मतां नित्यं बुद्धेत। १। १०४।

**नास्यच्छिद्रं परोविद्याद्विद्याच्छिद्रं परस्य तु। गूहेत्कूर्म्मइवाङ्गानि रक्षेद्विवरमात्मनः॥१०५॥**

नास्येत्यादि॥ १०५। अस्यराज्ञश्छिद्रं परो यथा*नविद्यात्तथावर्त्तेत * परस्यचछिद्रं विद्यात्। तद् यथा। कूर्म्मोयथाऽङ्गानिगूहेत्*संवृणुयात्तथात्मनो*विवरंछिद्रं राजा रक्षेत्। १। १०५।

**वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्। वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत्॥ १०६॥**

वकवदित्यादि। १०६। वकोयथा नैपुण्येन* मत्स्यग्रहणार्थं चिन्तयेत्तथा*राजाऽर्थान्नैपुण्येन * चिन्तयेत्*सिंहोयथापराक्रमे*तथाराजापराक्रमेत्। १। वृकःपशुरवाघ्रोयथाऽवलुम्पेत् * रक्षकरक्षितपशून् अप्रमत्ता*हठात्कश्चिद्गृहीत्वा विनाशयति। १। तथाखगणरक्षितं*अर्थं राजाऽवलुम्पेत्* शशोयथाव्याघ्रं वीक्ष्य स्थानाद्विनिष्पतेत्तथा*प्राणघातकं वीक्ष्यैव*राजास्थानाद्विनिष्पतेत्। २। १०६।

**एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः। तानानयेद्वशं सर्व्वान् सामादिभिरुपक्रमैः॥१०७॥**

एवमित्यादि। १०७। एवमुक्तप्रकारेण*विजयमानस्यास्यराज्ञोयेऽन्ये ये: * परिपन्थिनःशत्रवः *। १। तानपिसामादिभिः*सामदानभेददण्डैः*उपायैर्वशमानयेत्। २। १०७।

**यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः। दण्डेनैव प्रसह्यैतांश्छनकैर्वशमानयेत्॥ १०८॥**

तदाह यदीत्यादि। १०८। ते राज्ञःशत्रवोयदि*प्रथमैस्त्रिभिरुपायैः*शान्तौ न तिष्ठेयुरादौ*साम्नाशान्तप्रणय न*दानेनवशमानयेत्। १। ते नयदि शान्तौनतिष्ठेयु*स्तदा तेषामीप्सितार्थ*दानेन तान् वशमानयेत् २ ते नयदि न ते वशे तिष्ठेयु*स्तदा तेषां सहायैः*सह भेदं जनयित्वा* तान् वशमानयेदेव। ३। एवं त्रिभिर्यदि न ते *वशे तिष्ठेयुस्तदैतान्*अवनम्रसह्य विग्रह्य*दण्डेनैव वशमानयेत्॥ ४॥ १०८।

**सामादीनामुपायानां चतुर्णामपि पण्डिताः। सामदण्डौ प्रशंसन्ति नित्यं राष्ट्राभिवृद्धये॥१०९॥**

सामादीनामित्यादि। १०९। सामादीनामुपायानां*चतुर्णां मध्ये राष्ट्राभि* वृद्धये सामदण्डौ * पण्डिता नित्यं प्रशंसन्ति। १। १०९।

**यथोद्धरति निर्द्दाता कक्षं धान्यं च रक्षति। तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः॥११०॥**

यथेत्यादि। ११०। निर्दोताधान्येनजातधासादि* चक्षुः धान्यमध्यजात धाम *हरतिधान्य घृतं रचति। १। तथानृपःपरिपन्थिनोहननात्*स्वराष्ट्रं रचेत् ॥ २ ॥ ११० ॥

मोहाद्राजास्वराष्ट्रंयःकर्षयत्यनवेचया। सोऽचिराद्भ्रश्यते राज्याज्जीविताच्चसबान्धवः॥१११॥

मोहादित्यादि। १११। योराजाऽनवेचयास्वराष्ट्रं रचा * दृष्टि नजनस्वराष्ट्रं * मोहात्कर्षयतिसख* लचिराद्राज्यात्सवा*न्धवश्चजीविताद्भ्रश्यते ॥ १ ॥ १११ ॥

शरीरकर्षणात्प्राणाःचीयन्तेप्राणिनांयथा। तथाराज्ञामपिप्राणाःचीयन्तेराष्ट्रकर्षणात्॥११२॥

शरीरेत्यादि। ११२। यथाप्राणिनां शरीर * कर्षणात्प्राणाःचीयन्ते * तथाराज्ञामपिराष्ट्र * कर्षणात् प्राणाःचीयन्ते ॥ १ ॥ ११२ ॥

राष्ट्रस्यसंग्रहेनित्यं विधानमिदमाचरेत्। सुसंगृहीतराष्ट्रोहिपार्थिवःसुखमेधते ॥ ११३ ॥

राष्ट्रस्येत्यादि। ११३। राजाराष्ट्रस्यसंग्रहे *नित्यमिदं वच्यमाणं विधानं तसमाचरेत्*हियस्मात्सुसं गृहीत*राष्ट्रःपार्थिवोराजासुखमेधते ॥ १ ॥ ११३ ॥

द्वयोस्त्रयाणांपञ्चानांमध्ये गुल्ममधिष्ठितं। तथाग्रामशतानाञ्चकुर्याद्राष्ट्रस्यसंग्रहम्॥११४॥

द्वयोरित्यादिनाराष्ट्ररचाविधि* माह। ११४। द्वयोर्ग्रामयोर्मध्ये ऽथ* त्रयाणां ग्रामाणां मध्ये * ऽथवा पञ्चानां ग्रामाणां *मध्ये ग्रामशतानां*मध्ये राष्ट्रस्यसंग्रहं *गुल्मं सैन्यमधिष्ठितं कुर्यात् ॥ १ ॥ ११४ ॥

ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिंतथा। विंशतीशंशतेशञ्च सहस्रपतिमेवच ॥ ११५ ॥

ग्रामस्येत्यादि। ११५। प्रत्येकं ग्रामस्याधिपतिमेकैकं *कुर्यात्तेषां दशानां ग्रामपतीनां* मेकमधिपतिं कुर्यात्*सहिदशग्रामपतिः। १। तयोर्द्वयोर्द्वयोर्दशग्रामपत्यो * रधिपतिमेकं विंशतीशं कुर्यात् * पञ्चानां विंशतीशानां * मेकमधिपतिं शतेशं कुर्यात्। २। दशानां शतेशानामेकमधि * पतिं सहस्रपतिं कुर्यात् ॥ ३ ॥ ११५ ॥

ग्रामेदोषान्समुत्पन्नान् ग्रामिकःशनकैःस्वयम्। शंसेद्ग्रामदशेशायदशेशोविंशतीशिनम् ॥ ११६ ॥

ग्रामइत्यादिनाग्रामाधिपति * करणप्रयोजनमाह * । १ । ११६ । ग्रामे प्रजादीनां विवादादीन्दोषान् *

सहस्रपञ्चानग्रामिकः स्वयं ग्रामके*ग्रामदशेशायापसंसेद्दिशापयेत्*ग्रामदशेशो विंशतीशिनं शंसेत् ॥ १ ॥ ११६ ॥

विंशतीशस्तु तत्सर्व्वं शतेशाय निवेदयेत्। शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ ११७ ॥

विंशतीशस्त्वितादि। ११७। विंशतीशस्तत्सर्व्वं तु*शतेशाय निवेदयेत्*ग्रामशतेशस्तु सर्व्वं* ततसहस्रपतये स्वयं शंसेत् ॥ १ ॥ ११७ ॥

यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ११८

एषां किं वेतनमित्याह*यानीत्यादि। १। ११८। ग्रामवासिभिःप्रत्यहं* राजप्रदेयानि यानि* खल्वन्नपानेन्धनादीनि*नतु संवत्सरं राज*प्रदेयानि तानि सर्व्वं*ग्रामिक एवाप्नुयात् ॥ १ ॥ ११८ ॥ ग्रामाधिपतेर्वेतनमुक्तं दश-ग्रामाधिपत्यादेर्वेतनमुच्यते।

दशी कुलन्तु भुञ्जीत विंशी पञ्च कुलानि च। ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम ॥ ११९ ॥

दशीत्यादि। १। ११९। दशीदग्रामपतिः* कुलं वावहारिकं षड्गवविहलवाहाचेव* सम्भवं ग्रामं भुञ्जीत। १। हलं धर्म्मो व्यावहारिकं नृशंसो*गोहिंसाय स्वयमुक्तं*मविसंहितायां यथा। अष्टागवं धर्म्महलं षड्गवं व्यावहारिकं। चतुर्गवं त्वानृशंसं द्विगवं गोवधाय कम्। १। द्विगवं वाहयेत् पादं मध्याह्नन्तु चतुर्गवम्। षड्गवन्तु त्रिपादाह्नं पूर्णाहन्त्वष्टभिः स्मृतं। इति। २। आपस्तम्बेनचोक्तं*हलमष्टागवं धर्म्मं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं गोजिघांसिनाम्। इति। परागरे गापो तद्वचनसक्तं विंशीविंशतिग्रामाधि*पतिः पञ्चकुलानि भुञ्जीतयामं* ग्रामशताध्यक्षो भुञ्जीत। ५। सहस्राधिपतिः पुरं* सहस्रग्राममध्ये*साध्यमेकं नगरं*वर्त्तते तन्नगरं भुञ्जीत ॥ ६ ॥ ११९ ॥

तेषां ग्रामगणिकाकार्य्याणि पृथक्कार्य्याणि चैव हि। राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥ १२० ॥

तेषामित्यादि। १२०। तेषां ग्रामाधिपतिप्रभृतीनां ग्रामाणि ग्रामसम्बन्धीनि हिता*हितानि प्रजानां यानि कार्य्याणि। १। पृथगपराणि च यानि कार्य्याणि*तानि राज्ञोऽन्यो यः स्निग्धः*स्नेहवानतन्द्रितश्च* सचिवो मन्त्री सपश्येत। २। १२०।

नगरे नगरे चैकं कुर्य्यात्सर्व्वार्थचिन्तकम्। उच्चैःस्थानं घोररूपं नक्षत्राणामिव भुवम् ॥ १२१

तदल्पं च*प्राचुर्ये मासः करादानं * नगर्द्यो नेदिराज्ञोधर्मकरदा* राजाचप्रजाभोक्तृ * मदुक्तं तस्यांप्रभाक् इति ॥ ५ ॥ २२ ॥ श्रोत्रियस्योक्षुधायांदोषमाह *राज्ञःकिंस्यादित्यतआह ।

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा । तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥१३४॥

यस्य राज्ञ इत्यादिकम् । १ । १२३ । यस्य राज्ञो विषये वसन् श्रोत्रियः * क्षुधा सीदति तस्यापि * श्रोत्रियस्य तया क्षुधा*राज्ञो राष्ट्रमचिरेणैव सीदति । १ । १२४ । नतर्ह्यतिथिः किं राज्ञो विषये * निष्कं वा स्वनिवसेत्* कथं जीवेदित्यत आह ।

श्रुतवृत्ते विदित्वास्य वृत्तिं धर्म्यां प्रकल्पयेत् । संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥१३५॥

श्रुतवृत्ते इत्यादि । १ । १२५ । श्रुतं वेदं वृत्तं * वर्तमानव्यापारं श्रोत्रियस्य जीव * नोपायं विदित्वा धर्म्यां *वृत्तिं राजा प्रकल्पयेत् । १ । एवं श्रोत्रियमौरस*पुत्रमिव पितेव* राजा सर्वतः संरक्षेत् । २ । १२५ । एतेन किं स्यादित्यत आह ।

संरक्ष्यमाणो राज्ञायं कुरुते धर्ममन्वहम् । तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ १३६ ॥

संरक्ष्य*माण इत्यादि । १ । १२६ । राज्ञा संरक्ष्यमाणः श्रोत्रियोयं *धर्ममन्वहं कुरुते * तेन धर्मेण राज्ञ आयुर्वर्द्धते *द्रविणं राष्ट्रञ्च वर्द्धते । १ । १२६ ।

यत्किञ्चिदपि वर्षस्य दापयेत्करसंज्ञितम् । व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥१३७

यत्किञ्चिदित्यादि । १२७ । उत्तमादन्यो न व्यवहारेण राष्ट्रे *जीवन्तं पृथग्जनां च*जनं वर्षस्य करसंज्ञितं यत्* किञ्चिदल्पं दापयेत् । १ । १२७ ।

कारुकाञ्छिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः । एकैकं कारयेत्कर्म मासि मासि महीपतिः ॥१३८

कारुकानित्यादि । १२८ । महीपतिः कारुकान् कर्मकारादीन्*शिल्पिनो वस्त्रसीवनचित्रकार*प्रभृतीन् शूद्रांश्च तथा स्वेनात्मना*भारवहनादिभिरुपजीविनः । १ । स्वराष्ट्रे वसतः करार्थं * मासि मासि एकैकं दिनं *तत्र तत्कर्म कारयेत् । २ । १२८ ।

नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया । उच्छिन्दन्ह्यात्मनो मूलमात्मानं तांश्च पीडयेत् ॥१३९

नोच्छिन्द्यादित्यादि । १२९ । राजा परेषां चातितृष्णया तेषां *उपकारार्थमात्मनां* मूलं धनादिकं नोच्छिन्द्यात् । १ । कस्मात् । येषामतितृष्णानिवृत्त्यै *त्वात्मनो मूलमुच्छिन्द्यात् * तदात्मनो मूलमुच्छिन्दन् हि यस्मात्*दात्मानं तांश्च पीडयेत्*ते कर्माश्रिता जीवेरन् । २ । १२९ ।

तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः । तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः ॥ १४० ॥

तीक्ष्ण इत्यादि । १४० । महीपतिः कार्यं वीक्ष्य * यस्मिन्कार्ये तीक्ष्णभावो युक्तः स्यात् * तस्मिंस्तीक्ष्णः स्याद् यस्मिन् कार्ये मृदुत्वं * युक्तं स्यात्तस्मिन्मृदुः स्यात् । १ । इत्थं तीक्ष्णश्च मृदुश्च राजा * सर्वसम्मतो भवति । २ । १४० ।

अमात्यमुख्यं धर्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् । स्थापयेदासने तस्मिन्खिन्नः कार्येक्षणे नृणाम् ॥ १४१ ॥

अमात्येत्यादि । १४१ । राजा नृणां कार्येक्षणे खिन्नश्चेत्स्यात् * तदा धर्मज्ञादिगुणममात्यमुख्यं * तस्मिन् नृणां कार्येक्षणासने स्थापयेदिति । १ । १४१ ।

एवं सर्वं विधायेदमितिकर्त्तव्यमात्मनः । युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ १४२ ॥

एवमित्यादि । १४२ । एवमनेन प्रकारेण राजा * सर्वमात्मन इदमितिकर्त्तव्यं * विधाय अप्रमत्त एव * इमाः प्रजाः परिरक्षेत् । १ । १४२ ।

विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः । संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥ १४३ ॥

विक्रोशन्त्य इत्यादि । १४३ । यस्य राज्ञः सभृत्यस्य * सेनादिसहितस्य * पश्यतः प्रजाः क्रोशन्त्यो * दस्युभी राष्ट्राद्ध्रियन्ते * स राजा मृत एव न तु जीवति । १ ॥ १४३ ॥

क्षत्रियस्य परो धर्मः प्रजानामेव पालनम् । निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ १४४ ॥

कस्मादित्यत आह क्षत्रियस्येत्यादि । १४४ । यस्मात्प्रजापालनं * क्षत्रियस्य राज्ञः परो * धर्मस्तत्प्रजापालनं राजा निर्दिष्टफलस्य * राजकरस्य भोक्ता चेत् * तदा धर्मेण युज्यते । १ ॥ १४४ ॥

उत्थाय पश्चिमे यामे कृतशौचः समाहितः । हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥ १४५ ॥

अथाह्निककर्ममाह उत्थायेत्यादि । १४५ । स च नियोगी राजा रात्रेः * पश्चिमे यामे निद्रातः * उत्थाय कृतशौचः स्यात् । १ । प्राक्कृतविधानेन मूत्रपुरीषोत्सर्ग * दन्तधावनादि * शौचं कृतवान् समाहितो हुताग्निः * हुतो अग्निर्येन विधाय । २ । ब्राह्मणांश्च पूजार्हाणामर्च्य * समागत्य प्रत्युत्थाय सभां * धर्मतो विचारस्थलीं सभां प्रविशेत् । ३ । १४५ ॥

तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् । विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥ १४६ ॥

तत्रेत्यादि । १४६ । तत्र सभायां स्थितो राजा समागताः प्रजाः सर्वाः * स्वं नन्दयन्तीः प्रतिनन्द्य * विसर्जयेद् गन्तुमादिशेत् । १ । सर्वाः प्रजाश्च विसृज्य * मन्त्रिभिः सह मन्त्रयेत् * यत्किञ्चिन्मन्त्रणायोग्यं वर्त्तेत ॥ २ ॥ १४६

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः । अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥ १४७ ॥

अथ मन्त्रयेदित्याह* गिरिपृष्ठमित्यादि । १४७ । गिरिपृष्ठं समारुह्य* रहोगतः सन् प्रासादं वा* समारुह्य रहोगतः सन् । १ । निःशलाके मनुष्याद्याघातकर*भावहीनेऽरण्ये वा रहोगतः स* अविभावितः परैर* विज्ञातः सन् मन्त्रयेत् । २ ॥ १४७ ॥

यस्य मन्त्रं न जानाति समागम्य पृथग्जनाः । स कृत्स्नां पृथिवीं भुङ्क्ते कोषहीनोऽपि पार्थिवः ॥ १४८ ॥

यस्येत्यादि । १४८ ॥ पृथग् ये जनाः समागम्य यस्य* राज्ञो मन्त्रं न जानन्ति* स पार्थिवः कोषेऽर्थहीनोऽपि कृत्स्नां* पृथिवीं स राजा भुङ्क्ते ॥ १ ॥ १४८ ॥

जडमूकान्धबधिरांस्तिर्यग्योनान्वयोगतान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकालेऽपसारयेत् ॥ १४९ ॥

जडेत्यादि ॥ १४९ ॥ राजा मन्त्रकाले जडादीनपसारयेत् ॥ १४९ ॥

भिन्दन्त्यवमता मन्त्रं तैर्यग्योनास्तथैव च । स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतो भवेत् ॥ १५० ॥

भिन्दन्तीत्यादि ॥१५०॥ अवमता जडादयो* मन्त्रं भिन्दन्ति तथैव* तैर्यग्योनाः स्त्रियश्च विशेषेण* परे पुरस्कृत्य भिन्दन्ति तस्मात्* तेषामपसारणे समादृतः स्यात् ॥ १ ॥ १५० ॥

मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो विगतक्लमः । चिन्तयेद्धर्मकामार्थान् सार्द्धं तैरेक एव वा ॥१५१॥

मध्यन्दिन इत्यादि ॥ १५१ ॥ राजा मन्त्रिभिः सार्द्धं मे कोवा धर्म*कामार्थान् मध्याह्नेऽर्द्धरात्रे वा श्रमा*विश्रान्तो विगतक्लमः सं श्चिन्तयेत् ॥ १ ॥ १५१ ॥

परस्पराविरुद्धानां तेषाञ्च समुपार्जनम् । कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम् १५२

परस्परेत्यादि ॥ १५२ ॥ तेषाञ्च धर्म्मकामार्थानां *परस्परमविरुद्धानां *उपार्जनं राजा चिन्तयेदिति पूर्व्वेणान्वयः** यथा धर्म्मादीनां मिथो विरोधो न स्यात् ॥ १॥ एतद्विरुद्धमप्याह * परस्परविरुद्धानां * मिति पठित्वा व्याचष्टे ॥२॥ प्रति कविरोधवतां *धर्म्मकामार्थानां विरोधपरि*हारेणोपार्जनं *चिन्तयेदिति यत्तत्र ।३। तथाविधपाठे हि त मर्थ स्याव*गमो न भवतीति नहि*परस्परविरुद्धानां तेषामुपार्जनमि * तावता बोधो भवति ।४। कन्यानां सत्पात्रे सम्प्रदानं* * चिन्तयेत् कुमाराणां* * रक्षणं यथाशास्त्रं चिन्तयेत् ॥ ५ ॥ १५२ ॥

दूतसंप्रेषणञ्चैव कार्यशेषं तथैव च । अन्तःपुरप्रचारञ्च प्रणिधीनाञ्च चेष्टितम् ॥ १५३ ॥

**अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः। प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः॥१५७॥**

अमात्येत्यादि ॥ १५७ ॥ अपराश्च पञ्च प्रकृतयोऽमात्य*राष्ट्र दुर्गार्थ दण्डाख्याः * ताः प्रत्येकं कथिता* द्वादशमध्यमादयः*सप्तत्रिषष्टिर्भवन्ति । १ । तद्यथा । मध्यमविजिगीषूदासीन* शत्रु गूढमित्रारिमित्र*गूढमित्रमित्रारिमित्र*मित्रपार्ष्णिग्राहाक्रन्दाश्च । २ । शेषपार्ष्णिग्राहासाराक्रन्दासाराः*विस्तरेण चाद्यमात्य* द्वादशराष्ट्राणि द्वादशदुर्गाणि*द्वादशार्थकोशा द्वादशदण्डाश्च । ३ । इत्येताः षष्टिस्ताभिश्च*मध्यमादिद्वादशभिः*सह संक्षेपेणैताः द्वि*सप्ततिः प्रकृतयः स्युः ॥ ४ ॥ १५७ ॥

**अनन्तरमरिं विद्यादरिसेविनमेव च। अरेरनन्तरं मित्रमुदासीनं तयोः परम्॥ १५८॥**

अनन्तरमित्यादि ॥ १५८ ॥ अरिसेवी यस्तं * अरिसेविनमेतं भां* ऽनन्तरमरिं विद्यात् ॥ १ ॥ अरि संपिनस्तु मित्र*मरेरनन्तरं मित्रं *विद्यात् तयोः परमुदासीनं विद्यात् ॥ २ ॥ १५८ ॥

**तान् सर्वानभिसन्दध्यात् सामादिभिरुपक्रमैः। व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च॥१५९॥**

तानित्यादि । १५९ । तान् सर्वानरीन् सर्वान् *व्यस्तैः समस्तैश्च सामादिभिरुप*क्रमैः सामदानसन्धिविग्रहैर्वा राजा*पौरुषेण वस्तुतः * पुरुषकारेण तथा*नयेन चाभिसन्दध्यात् । १ । १५९ ॥

**सन्धिं च विग्रहं चैव यानमासनमेव च। द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत् सदा॥ १६०॥**

सन्धिं चेत्यादि । १६० । राजा सन्धिं च विग्रहं च*विग्रहाय यानं गमनं *आसनं *विपक्षात्रिवृत्तिः * विजिगीषोर्गुणास्तथा द्वैधीभावः स नाम नायकान्तरे द्विधा*कृतास्तु ग्रामे स्थापनं *मिति षड्गुणां चिन्तयेत् ।२ । १६० ।

**आसनं चैव यानं च सन्धिं विग्रहमेव च। कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च॥१६१॥**

आसनमित्यादि ॥ १६१ ॥ आसनादीनि षट् कार्यं वीक्षमाणस्य *कर्तव्यं तदीक्षया प्रयुञ्जीत । १ । १६१ ।

**सन्धिं तु द्विविधं विद्याद्राजा विग्रहमेव च। उभे यानासने चैव द्विविधः संश्रयः स्मृतः॥ १६२॥**

सन्धिन्त्वित्यादि । १६२ । सन्धिं च विग्रहं च यानं चासनं च संश्रयं च द्वि*विधं प्रत्येकं द्विधा विद्यात् ।१।१६२।

**समानयानकर्मा च विपरीतस्तथैव च। तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः॥ १६३॥**

समानेत्यादि । १६३ । एकः शत्रुः सन्धिकरणं धर्ममेव * समानगमनकर्मा * तदात्वकालसंयुक्तः आयतिकालसंयुक्तो वा । १ । द्वितीयो विपरीतो यः * पृथग्गमनकर्मा सन् तदात्वकालसंयुक्तः * आयतिकालसंयुक्तो वा * इति द्विलक्षणः सन्धिः । २ । १६३ ।

यदामन्येतभावेनहृष्टं पुष्टंबलंस्वकम्। परस्यविपरीतञ्च तदायायाद्रिपुंप्रति॥१७१॥

यदेतादि।१।१७१। राजायदास्वकंबलंहृष्टंपुष्टं*भावेनमन्येतपरस्यचबलं *विपरीतंहृष्टपुष्टाभ्यां विलोमं*मन्येततदैवरिपुं*प्रतियायात्।१ १७१।

यदातुस्यात्परिक्षीणोवाहनेनबलेनच। तदासीतप्रयत्नेनशनकैःसान्त्वयन्नरीन्॥१७२॥

यदात्वसौ।दित्यादिना।*स्वस्यविपक्षप्रवृत्तौ*गमनान्निवृत्ति*माह॥१॥१७२॥ राजायदावाहनेनबलेनच* क्षीणःस्यात्तदाप्रयत्नेनशनकैः*अरीन्सान्त्वयन्नासीत*विग्रहायनैवगच्छेत्।१।१७२।

मन्येतारिंयदाराजासर्व्वथाबलवत्तरम्। तदाद्विधाबलंकृत्वासाधयेत्कार्यमात्मनः१७३

अथबलवद्द्वैधीभावंयदा*कुर्यात्तदाहमन्येतेति॥१॥१७३॥ राजायदासर्व्वथाबलवत्तर*मरिंमन्येत तदास्वं*बलंद्विधाकृत्वात्मनः*कार्यंविग्रहसाधयेत्।१।१७३। यदासंश्रयं कुर्यात्तदाह्यते।

यदापरबलानान्तुगमनीयतमोभवेत्। तदातुसंश्रयेत्क्षिप्रंधार्म्मिकंबलिनंनृपम्॥१७४॥

यदापरबलेत्यादि।१।१७४। यदाराजावाहनबलाभ्यांपरि*क्षीणःपरबलानामतिशयेन*गमनीयतमोभवेत् तदा*क्षिप्रंधार्म्मिकंबलिनमन्यं*नृपंसहायंसंश्रयेत्॥१॥१७४॥

निग्रहंप्रकृतीनाञ्चकुर्याद्योऽरिबलस्यच। उपसेवेततंनित्यंसर्व्वयत्नैर्गुरुंयथा॥१७५॥

निग्रहमित्यादि॥१७५॥ राजायंसंश्रयेत्सयः*खलुदुष्टःप्रकृतीनाञ्च * बलस्यचनिग्रहंकुर्यात्नित्यंतं* संश्रयंगुरुमिवोपसेवेत॥१॥१७५॥

यदितत्रापिसंपश्येद्दोषंसंश्रयकारितम्। सुयुद्धमेवतत्रापिनिर्विशङ्कःसमाचरेत्॥१७६॥

यदीत्यादि॥१७६॥ राजायदितत्रापिपरे॥*प्रकृतीनांचबलस्यच * निग्रहंसंश्रयकारितंदोषं* सबे माहेवसम्पश्येत्*तदातत्रापिचस्वयम्॥१॥ निःशङ्कःसन्सुयुद्धमेवस्वबलतः*समाचरेन्ननिवर्त्तेत॥२॥१७६॥ कथंचतुरंकुर्यादित्यतआह*।

सर्व्वोपायैस्तथाकुर्यान्नीतिज्ञःपृथिवीपतिः। यथास्याभ्यधिकानस्युर्मित्रोदासीनशत्रवः१७७

सर्व्वोपायैरित्यादि॥१॥१७७॥ संश्रयकारितंदोषं*संदृश्यापि नीतिज्ञःपृथिवीपतिस्तथा*सर्व्वोपायैः कुर्यात् यथा*मित्रादयोनाधिकाःस्युः॥१॥१७७॥

आयतिं सर्व्वकार्य्याणांतदात्वञ्चविचारयेत्। अतीतानाञ्चसर्व्वेषांगुणदोषौचतत्त्वतः॥१७८

आयतिमित्यादि। १७८। राजासर्व्वकार्य्याणामायतिं दीर्घ*कालं तदात्वञ्चतात्कालिकत्व*मतीतानाञ्च सर्व्वेषां गुणदोषौ*तत्त्वतोयाथार्थ्यतोविचारयेत्। १७८।

आयत्यांगुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः। अतीते कार्य्यशेषज्ञः शत्रुभिर्नाभिभूयते॥१७९॥

आयत्यामित्यादि॥ १७९॥ योराजाआयत्यांदीर्घकाले*सिद्धगुणदोषज्ञ्जानाति*तदात्वे क्षिप्रनिश्चयः *क्षिप्रं कर्त्तव्यमिति वं॥ १॥ निश्चयबुद्धिःस्यादतीते कार्य्ये*सतकार्य्यशेषं जानातिसराजा* कदापिनशत्रुभिरभिभूयते। २। १७९।

यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः। तथासर्व्वं संविदध्यादेष सामासिको नयः॥१८०॥

यथैनमित्यादि। १८०। राजाखलु नं परं राजानं स्वस्मा*परं मित्रोदासीनशत्रवोयथा*नाभिसन्दध्युरभिसन्धिं कुर्त्तुं न*शक्नुयुस्तथासंविदध्यात्तथा॥ १॥ स्वस्मात्परं भावस्तु नभाः* मित्रोदासीनशत्रु भावार्थदानं * सामकरणं भेदश्चेति*एषसंक्षेपतोयुक्तेनयउक्तः। २। १८०।

यदातुयानमातिष्ठेदरिराष्ट्रंप्रतिप्रभुः। तदानेनविधानेन यायादरिपुरं शनैः॥ १८१॥

अथपरराष्ट्राक्रम*विधानमचाते यदेत्यादि। १। १८१। प्रभुर्न्नृपोयदाऽरिराष्ट्रंप्रति * यानं गमनमाक्रमार्थमातिष्ठेत्*तदावक्ष्यमाणेनानेनविधानेन*नारिपुरं शनैर्धीरं धीरं यायात्। १। १८१।

मार्गशीर्षेशुभे मासियायाद्यात्रांमहीपतिः।फाल्गुणंवाथचैत्रं वामासौप्रतियथाबलम्॥१८२

मार्गशीर्षेत्यादि। १८२। शुभेमार्गशीर्षेमासि*महीपतिररिराष्ट्रं * प्रतियात्रां यायाद्यथा*बलं फाल्गुणं वाचैत्रं वामासौप्रतियात्रां यायात्। १। १८२।

अन्येष्वपितुकालेषुयदापश्येद्ध्रुवंजयम्। तदायायाद्विगृह्यैवव्यसने चोत्थिते रिपोः १८३

अन्येष्वपीत्यादि। १८३। यदाराजाध्रुवंजयंपश्येत्तदा*ऽन्येष्वपिकालेषुयायात्*रिपोस्तत्राचापरेण*व्यसनेचोत्थिते*धनक्षयपरिभ्रमे। १। जातेसत्यन्येष्वपिकालेराजा*रिपुराष्ट्रंप्रतियायात्॥ २ ॥१८३।

कृत्वाविधानंमूले तुयात्रिकञ्चयथाविधि। उपगृह्यास्पदंचैवचारान्सम्यग्विधायच॥ १८४॥

कल्पेत्यादि। १८४। राजामूले स्वपुरे रक्षाविधानं*यथाविधिकल्पितया* यात्रिकविधानं यथाविधि* कल्पयित्वा परराष्ट्रः। १। आसन्नं पुरमुपमन्त्रासं हता*पञ्चवर्गान् विचारान्। २। कापटिकोदास्थित*गृहपति वैदेहक*तापसवेषधारिणः संविधाय। ३। १८३।

संशोधयित्वा त्रिविधं मार्गं षड्विधञ्च बलं स्वकम्। साम्परायिककल्पेन यायादरिपुरं शनैः॥१८५॥

संशोधेत्यादि॥ १८५॥ मार्गं रिपुपुरे गमनपथं* त्रिविधं संशोध्य कण्टकलता * दिदूरीकृतानिम्नोच्च भूभागं च*समीकृता विषादिदोषं हृत्वा॥ १॥ स्वकं बलं षड्विधञ्च*हस्त्यश्वरथपदाति*सेनापतिकर्मान्ताश्च* संशोधादिविचार्य १*दौर्बल्यादिदोषां हित्वा*॥२॥ साम्परायिककल्पेन*सांग्रामिककल्पेनारि*परं शनैः शनैः गायात्। ३। १८४॥

मलसंविनिर्मितेच गूढयुक्ततरो भवेत्। गतप्रत्यागते चैव सहिकष्टतरो रिपुः॥ १८६॥

मलसंविनीत्यादि। १८६। मल्पदे निविष्ट स्व*वान्धवं गूढं वै रक्षयित्वा तव*मित्रे गतप्रत्यागते * राजा युक्ततरः सावधानो भवेत्॥ १॥ कस्मादित्यतउच्यते सहीत्यादि*हियस्मात् समित्रं गूढं वै कष्ट*तरो दुःखदायि तरो रिपुर्भवेत्यः॥ २॥ १८६॥

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा। वराहमकराभ्यां वा सूच्या वा गरुडेन वा॥ १८७॥

दण्डव्यूहेनेत्यादि॥ १८७॥ रिपुपुरं गन्तुं तस्य मार्गं *दण्डव्यूहेन सेनाभिर्दण्डा* कारव्यूहं कृत्वा तेन* व्यूहेनविशिष्टो यायात्। १। अथवा शकटे नव्यूहेन याया*दथवा वराहव्यूहे* नाथवा मकरव्यूहे *नाथवा सूचीव्यूहेना*थवा गरुडव्यूहेन। २। १८७।

यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम्। पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्॥ १८८॥

यतश्चेत्यादि। अथवा स परो राजा* यतो भयमाशङ्केत्*ततो व्यूहाद्बलं विस्तारयेत् स्वयं स*मध्ये पद्मव्यूहेनैव*तत्र सदा निविशेत्। १। १८८।

सेनापतिबलाध्यक्षौ सर्व्वदिक्षु निवेशयेत्। यतश्च भयमाशङ्केत्प्राचीं तां कल्पयेद्दिशम् १८९

सेनापतीत्यादि॥ १८९॥ सर्व्वदिक्षु सेनापतिबलाध्यक्षौ*निवेशयेत् यतश्च भयमाशङ्केत्* तां दिशं प्राचीं कल्पयेदिति शेषः। १। १८९।

गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः। स्थाने युद्धे च कुशलानभीरूनविकारिणः॥१९०॥

सामदानेनभेदेनसमस्तैरथवापृथक्। विजेतुं प्रयतेतारीन्नयुद्धेनकदाचन॥ १९८॥

सामेत्यादि॥ १९८॥ राजाप्रबलानरीन्सामदानेन*भेदेनवेतिवेत्यथ*अथवासमस्तैः सामदानभेदैर्विजेतुं प्रयतेत।१। युद्धेनतान् प्रबलारीन्विजेतुं*कदाचित्किमपिप्रयतेत।२।१९८। कस्मादित्यतआह अनित्यइत्यादि॥ १९९॥

अनित्योविजयोयस्माद्दृश्यतेयुद्ध्यमानयोः। पराजयश्चसंग्रामेतस्माद्युद्धंविवर्जयेत्॥१९९॥

संग्रामे यस्माद् युध्यमानयोर्द्वयोः* एकस्यविजयोऽन्यस्यपरा* जयो * दृश्यते तस्मादनित्यो*विजयःपराजयश्च।१। तस्मात्प्रबलेनसहसाहसात्*धीमान्युद्धं विवर्जयेत्॥२॥१९९॥

त्रयाणामप्युपायानांपूर्व्वोक्तानामसम्भवे। तथायुद्ध्येतसंयत्तोविजयेतरिपून्यथा॥२००॥

त्रयाणामित्यादि॥२००॥ पूर्व्वोक्तानां त्रयाणामुपायानां*सामदानभेदानामसम्भवे* यथारिपून्संग्रामे विजयेत्॥१॥ तथासंयत्तःसमागततूर्वान्सन्*महोत्साहितःयुध्येत॥२॥२००॥

जित्वासंपूजयेद्देवान्ब्राह्मणांश्चैवधार्म्मिकान्। प्रदद्यात्परिहारांश्चख्यापयेदभयानिच॥२०१

जित्वेत्यादि॥२०१॥ राजापरराष्ट्रं*जित्वा*देवान्सम्पूजयेत्तथा*धार्म्मिकान्ब्राह्मणान्सम्भूमिगोहिरण्यादानेनदत्वा*सम्पूजयेत्॥१॥ परिहारांश्च*तद्राष्ट्रवासिभ्योदद्यात्*सर्व्वान्प्रजाश्चभयानिख्यापयेत्।२।२०१

सर्व्वेषान्तुविदित्वैषांसमासेनचिकीर्षितम्। स्थापयेत्तत्रतद्वंश्यंकुर्य्याच्चसमयक्रियाम्॥२०२

सर्व्वेषामित्यादि॥२०२॥ एषां सर्व्वेषां तद्राष्ट्रवासिनां*समासेनचिकीर्षितं*विदित्वातत्रराष्ट्रे*तस्यदत्तस्य*राज्ञोवंश्यं*राजानंकृत्वास्थापयेत्॥१॥ यं राजानंस्थापयेत्तेनसह*समयक्रियां कुर्य्यात्* यथोक्तराजधर्म्मंवर्त्ततेति*वर्मादिरूपांस्थितां॥२॥२०२॥

प्रमाणानिचकुर्व्वीततेषांधर्म्मान्यथोदितान्। रत्नैश्चपूजयेदेनंप्रधानपुरुषैःसह॥२०३॥

प्रमाणानीत्यादि॥२०३॥ तेषां तद्देशवासिनां*येषां ये धर्म्मास्तान्यथोदितान्धर्म्मान्*प्रमाणानीव कुर्व्वीत*नतदतिक्रमं कुर्य्यात्॥१॥ एनन्तद्राष्ट्रेऽभिषिक्तं तद्वंश्यं*तद्राष्ट्रस्थैःप्रधानपुरुषैःसह * रत्नैश्च पूजयेन्नत्वगृह्णीयात्॥२॥२०३॥ कस्मादित्यतआह। आदानमित्यादि॥२०४॥

आदानमप्रियकरंदानञ्चप्रियकारकम्। अभीप्सितानामर्थानांकालेयुक्तंप्रशस्यते॥२०४॥

आदानमप्रियकरं धनादेः*स्वस्वपरजनेन*चक्षाते तस्मादप्रिय* करं स्यादप्रदिहीयते * तच्चाप्रियकरं स्यात्॥१॥ तस्मादभीप्सितार्थानां यथाकाले*युक्तं दानं प्रशस्यते॥२॥२०४॥

सर्व्वंकर्म्मेदमायत्तंविधानेदैवमानुषे। तयोर्दैवमचिन्त्यन्तुमानुषेविद्यतेक्रिया॥२०५॥

वाक्पारुष्यं स्तेयञ्च ॥ ६ ॥ साहसं प्रसह्य धनदारादि * हरणं स्त्रीसंग्रहणं * परपुरुषसम्पर्कं * दायसा विभागः द्यूत * समाह्वयश्च प्राणिकरणं ॥ ७ ॥ आह्वयःपणपूर्वकं * हस्त्यश्वमेषादिप्राणि * योधनमिताष्टादश * व्यवहारस्थि तिप दानि भवन्ति ॥ ८ ॥ ७ ॥

एषुस्थानेषुभूयिष्ठं विवादञ्चरतांनृणाम्। धर्मंशाश्वतमाश्रित्यकुर्यात्कार्यविनिर्णयम् ८॥

एषुइत्यादि ॥ ८ ॥ एषुष्टादशस्थानेषु भूयिष्ठं * विवादं चरतां नृणां * शाश्वतं धर्ममाश्रित्य * कार्याविनि र्णयं कुर्यात् ॥ १ ॥ ८ ॥

यदास्वयंनकुर्यात्तुनृपतिःकार्यदर्शनम्। तदानियुञ्ज्याद्विद्वांसंब्राह्मणंकार्यदर्शने ॥९॥

यदेत्यादि ॥ ९ ॥ नृपतिर्यदास्वयं कार्यदर्शनं * न कुर्यात् तदा तत्कार्य * दर्शने विद्वांसं वेद * विदं ब्राह्म णं नियुञ्ज्यात् ॥ १ ॥ ९ ॥

सोऽस्यकार्याणिसम्पश्येत्सभ्यैरेवत्रिभिर्वृतः। सभामेवप्रविश्याग्र्यामासीनःस्थितएववा१०

सोऽसावित्यादि ॥ १० ॥ नृपतिनाकार्यदर्शने नियुक्तः * सर्व दविद्ब्राह्मणस्तु * त्रिभिःसभ्यैःसहैवाग्र्यां * सभां प्रविश्यासीनोवा * दण्डवत्स्थितएववा ॥ १ ॥ असावनुपमेव व्यवहारे कार्याणि * सम्यग्विमृश्य विचारयेत् ॥ १० ॥ के पुनःसभ्याउच्यन्त इत्यत * उच्यते ।

यस्मिन्देशेनिषीदन्तिविप्रावेदविदस्त्रयः। राज्ञश्चाधिकृतोविद्वान्ब्राह्मणस्तांसभांविदुः११

यस्मिन्नित्यादि । १ । ११ । वेदविदस्त्रयोविप्रायस्मिन्देशे * निषीदन्तिसन्निहिता * भवन्तिविद्वान् ब्राह्मणः * राज्ञाकार्याधिकृतः ॥ १ ॥ वेदविद्भिस्त्रयराजाधिकृत * विद्वद्ब्राह्मणविशिष्टो * योऽसौदेशस्तां स भां पण्डिताविदुः * स्तत्तद्वास्ते सभाः ॥ २ ॥ ११ ॥

धर्मोविद्धस्त्वधर्मेणसभांयत्रोपतिष्ठते। शल्यञ्चास्यनकृन्तन्तिविद्धास्तत्रसभासदः ॥ १२ ॥

धर्मोविद्धइत्यादि॥ १२॥ अधर्मेणविद्धस्सधर्मोयत्र * खलु वादानादिषु सभाउप * तिष्ठतेउपस्थितोभवति ॥ १ ॥ यस्य धर्मस्यावेधकरणं शल्यं * कण्टकभूतमधर्मं * तत्राधर्मेणविद्धास्तु * सभासदोनकृन्तन्ति ॥ २ ॥ इत्यर्थस्यापदान्तरे * त्वधर्मेण विद्धास्ते * सभासदोभवन्तिते * चाधर्मं शल्यं कृन्तति ॥ ३ ॥ प्रमादोद्भवात्तद्वै भाःप्रकामस्तथा श्रवर्त्तत इति * विद्वत्संपति

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥२५॥

बाह्यैरित्यादि।२५। नृणां कार्य्यं सादृष्टाविचारको*नृणां साक्षिणां कार्य्यार्थिनां चान्तर्गतं *भावं बाह्यैर्लिङ्गैः स्वर*वर्णेङ्गिताकारैरेवं।१। चक्षुषा चेष्टितेन च स्वसाक्षिवृद्ध्या*नुमानेन विभावयेत्।२।२५।

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥२६॥

आकारैरित्यादि।२६। नृणामन्तर्गतं मन*आकारादिभिर्लक्षणैः*बुद्धिमताज्ञिगृह्यते।१।२६।

बालदायादिकं रिक्थं तावद्राजानुपालयेत्। यावत्स स्यात्समावृत्तो यावच्चातीतशैशवः ॥२७॥

बालेत्यादि।२७। बालस्य पितरि मृते*मृतायाञ्च मातरि यस्*पितृमातृरिक्थमन्यो पाप्स्य*ये प्राप्तवतां धनाधि*कारी नाय बालो भवेत्।१। तद्रिक्थं बालदायादिकं राजात* तावत्कालमनुपालयेत्।२। सवालो यावत्कालं स*ब्रह्मचर्य्यं चरित्वैव*समावृत्तः स्यात् समावृत्तोऽपि स*द्विजबालः शूद्रबालश्च यावच्चातीतशैशवः*षोडशवर्षातीतवयस्कः स्यात्*तावत्तद्रिक्थं राजानुपालयेत्।४। यदि कश्चिन्मेधावीच*बालोऽर्व्वाक् षोडशवर्षात्*वयसोर्व्वं दमेकमधीतो वा* समावृत्तः स्यात्तदर्थं।५। शूद्रबालकधनरक्षार्थं दमतीतशैशवइतिपुनरुक्तं।६।२७। अपरञ्च

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च। पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥२८॥

वशेत्यादि॥२८। वशावन्ध्यास्त्रीयस्या अपत्यं भवतो नास्ति* अपुत्रास्तु मृतपुत्राः।१। निष्कुलसपिण्डहीनाः पतिव्रतायाः स्त्रियाः*विधवाया आतुराया यतावद्धनरक्षणं स्यात्।२।२८।

जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः। तांच्छिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः॥२९

जीवन्तीनामित्यादि।२९। जीवन्तीनां तासां वशादीनां स्त्रीणां*तद्रिक्थं ये स्वबान्धवा* उत्तराधिकारिणो*हरेयुर्धार्म्मिकोराजा* तांश्चौरदण्डेन शिष्यात्।१। यस्तु यावद्रिक्थं हरेत्तावत्कृतचौरस्यो दण्डस्तेन दण्डेन शिष्यात्।२।२९।

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्। अर्व्वाक्त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ॥३०॥

प्रणष्टेत्यादि ॥ ३०॥ यस्यरिक्थस्य स्वामी नष्टस्तद्रिक्थं * राजा वर्षत्रयं निधापयेत् * स्थापयेद्रक्षकं त्र्यब्द * रिक्थं यस्वामी यः सतद्धनं हरेत् ॥ १ ॥ त्र्यब्दादूर्द्ध्वं राजा तद्धनं हरेत् * यद्यायदि तत्स्वामी त्वा * गच्छेत् तत्प्राप्नुयात् । २ । ३० ।

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि। संवाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति॥३१॥

ममेदमित्यादि ॥ ३१ ॥ अर्व्वाक्त्र्यब्दाद्यः कश्चिदागत्य * ममेदं रिक्थमिति ब्रूयात् * सयथाविधानुयोज्य * स्तस्य रिक्थस्य रूपादीनजिज्ञासा: ॥ १ ॥ तान् संवादाकथयित्वा तत्स्वामी सम * स्तद्द्रव्यं नेतुमर्हति ॥२॥३१॥

अवेदयानो नष्टस्य देशं कालञ्च तत्त्वतः । वर्णं रूपं प्रमाणञ्च तत् समं दण्डमर्हति ॥ ३२ ॥

अवेदयानइत्यादि ॥ ३२ ॥ नष्टस्य स्वामिनो देशादीं स्तत्त्वता * ज्ञापयन् वर्णादीं श्चाज्ञापयन् सद्य * तस्य समं दण्डमर्हतीति ॥ १ ॥ ३२ ॥ न तु राजा तद्रिक्थं य * त्वायदब्दं रक्षेत् तत्कर्मार्थं मे बार्थकि * लाभार्थमित्यत आह * आददीतेत्यामेनोभयार्थं मे वेति ॥ १ ॥ ३२ ॥

आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः । दशमं द्वादशं वापि सतां धर्म्ममनुस्मरन् ॥ ३३ ॥

अथप्रनष्टाधिगतात् * प्रणष्टस्वामिकं रिक्थं * राज्ञा रक्षितमर्व्वाक्त्र्यब्दान्रिक्थ * स्वामिने वागतादि * कालादिसर्व्वंमार्गे दा ॥ १॥ गृहीत्वा मध्यात्तद्रिक्थात् षड्भागादिकं * सतां धर्म्ममनुस्मरन्नाददीत * तदवशिष्टं तत्स्वामिने प्रदद्यात् ॥ २ ॥ भागविकल्पश्चाद्द्रव्यमाच्छादिया * भिप्राय णागुरुसयत * रिक्थात् षड्भागं वर्षस्य * दशमं भागं द्वियस्य * द्वादशमाददादत्र्यब्दस्यं नाददात् ॥ ३ ॥ ३३ ॥

प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम्। यांस्तत्र चौरान्गृह्णीयात्तान्राजेभेन घातयेत् ॥३४॥

प्रणष्टाधिगतमित्यादि ॥ ३४ ॥ प्रणष्टाधिगतं द्रव्यं राज्ञा युक्तै * र्नियुक्तैर्जनैरधिष्ठितं सन्तिष्ठेत् * तत्र द्रव्ये चौरान्यान्राज * पुरुषोगृह्णीयादय ॥ १ ॥ राजा तांश्चौरानिभेन हस्तिनैव * सम्पीड्य घातयेन्मारयेत् ॥ १॥३४॥

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः । तस्याददीत षड्भागं राजा द्वादशमेव वा ॥ ३५ ॥

ममायमित्यादि ॥ ३५ ॥ निधिर्भूम्यादावन्तर्निहितं धनं * स्वामिरहितं केनचित् * दृष्टिमापाते निधिं * ममायमिति सत्येन * वाक्येनममायं नच ॥ १ ॥ यो मानवो ब्रूयात्तस्य * निधेः षड्भागं वैश्याच्छूद्राद्वा राजा * क्षत्रियाद्द्वादशं भागमाददीत * न ब्राह्मणस्य गुणविशेषेण । २ । ३५ ।

**अनृतन्तु वदन् दण्ड्यः स्ववित्तस्यांशमष्टमम् । तस्यैव वा निधानस्य संख्यायाल्पीयसीं कलाम् ॥३६॥**

अनृतन्त्वित्यादि ॥ ३६ ॥ अनृतन्तु वदन् स निधिलिप्सुः * स्ववित्तस्याष्टममंशं * राज्ञा दण्ड्यः स्यादथवा । १ । तस्यैव निधानस्य निधेः * स्वल्पीयसीं कलां भागं * संख्याय दण्ड्यो भवति । २ । ३६ ।

**विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्व्वोपनिहितं निधिम् । अशेषतोऽप्याददीत सर्व्वस्याधिपतिर्हि सः ॥३७॥**

विद्वांस्त्वित्यादि ॥ ३७ ॥ विद्वान् ब्राह्मणः पूर्व्वोप*निहितं निधिं दृष्ट्वा सर्व्वमेव * निःशेषतः आददीत * स यस्मात् सर्व्वस्य जगतोऽधिपतिः । १ । ३७ ।

**यन्तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ । तस्माद्द्विजेभ्यो दत्त्वार्द्धमर्द्धं कोषे प्रवेशयेत् ॥३८॥**

यन्त्वित्यादि । ३८ । यन्तु राजा क्षितौ निहितं पुराणं * निधिं स्वयं पश्येत् स तु * तस्मान्निधेरर्द्धं ब्राह्मणेभ्यो दत्त्वा * स्वकोषेऽर्द्धं निवेशयेत् । १ । ३८ ।

**निधीनान्तु पुराणानां धातूनामेव च क्षितौ । अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥३९॥**

निधीनामित्यादि । ३९ । धातूनां स्वर्णादीनां निधीनां क्षितौ * स्थितानां पुराणानामन्यैर्दृष्टानां * मर्द्धभाग्राजा प्राप्नुयात् * रक्षणात् हि यस्मात् स तु राजा भूमेरधिपतिस्तस्मादर्द्धभाक् स्यात् । १ । ३९ ।

**दातव्यं सर्व्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् । राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम् ॥४०॥**

दातव्यमित्यादि । ४० । सर्व्ववर्णानां येषां चौरैरपहृतं * धनं चौरेभ्य आहृत्य * तेभ्यः सर्व्ववर्णेभ्यो राज्ञा दातव्यं * राजा तच्चौरादाहृत्य स्वयमुपयुञ्जानश्चौरस्य तस्य * किल्बिषं पापमाप्नोति । १ । ४० ।

**जातिजानपदान् धर्म्मान् श्रेणीधर्म्मांश्च धर्म्मवित् । समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं तु प्रतिपादयेत् ॥४१॥**

जातीत्यादि ।४१। धर्म्मविद्राजा ब्राह्मणक्षत्रियवैश्य*शूद्राणां जातिधर्म्मान् जानपदधर्म्मान् * श्रेणी * धर्म्मान् कुलधर्म्मांश्च * समीक्ष्य तस्य तस्य धर्म्मं प्रतिपादयेत् । १ । ४१ ।

**स्वानि कर्म्माणि कुर्व्वाणा दूरे सन्तोऽपि मानवाः । प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्यवस्थिताः ॥४२॥**

स्वानीत्यादि । ४२ । मानवाः स्वानि कर्म्माणि * कुर्व्वाणाः स्वस्वकर्म्मण्यवस्थिता * दूरे सन्तोऽपि लोकस्य * प्रिया भवन्ति नाप्रियाः । १ । ४२ ।

अपदिश्येत्यादि ॥ ५४ ॥ यस्तु पूर्वमपदिष्टं यो*ममनष्टं वर्मा दमं वाभितपत* व्यविषयमपदिश्यात्मीयं व*कारणेनपोवापुन * स्वदपनात्सु‍भावविति ॥ १ ॥ समाकप्रणिहितश्चार्थं *पृष्टःसन्याऽभियोक्तार्थं* प्रापानं वाभिनन्दति ॥ २ ॥ ५४ ॥

असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः। निरुच्यमानं प्रश्नञ्च नेच्छेद्यश्चापि निष्पतेत् ॥ ५५ ॥

असम्भाष्ये इत्यादि ॥ ५५ ॥ यः साक्षिभिः सह भाषितुमनर्हे *देशे गोपनादिस्थाने *आवं मिथः सम्भाषते ॥ यश्च निरुच्यमानं प्राड्विवाकेन *मिथ्यं च नोक्तियमाणं *प्रश्नं नेच्छेत् स्थानाच्च* निष्पतेत् निर्गच्छेदिति । २ । ५५ ।

ब्रूहीत्युक्तश्च न ब्रूयादुक्तञ्च न विभावयेत्। न च पूर्व्वापरं विद्यात्तस्मादर्थात्स हीयते ॥ ५६ ॥

ब्रूहीत्यादि ॥ ५६ ॥ प्राड्विवाकेन ब्रूहीत्युक्तोऽभियोक्ता न*ब्रूयादुक्तञ्च साक्षिभिर्न विभावयेत् * न च पूर्व्वापरं *न*विद्यात् सतस्मादर्थाद्धीयते इति । १ । ५६ ।

साक्षिणः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः। धर्म्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥ ५७ ॥

साक्षिण इत्यादि । ५७ । साक्षिणो मम सन्तीत्युक्त्वा यस्तु*प्राड्विवाकेन त्वं दि*शेत्युक्तो न*कञ्चिद्दिशेत् । १ । एतैः कारणैस्त*माभियोक्तारं *सर्व्वाहीनं धर्म्मस्थो*विचारको निर्दिशेत् ॥ २ ॥ ५७ ॥

अभियोक्ता न चेद्ब्रूयाद्बध्यो दण्ड्यश्च धर्म्मतः। न चेत्त्रिपक्षात्प्रब्रूयाद्धर्म्मं प्रति पराजितः ॥ ५८ ॥

अभियोक्तेत्यादि ॥ ५८ ॥ मम साक्षिणः सन्तीत्युक्त्वाभियोक्ता*प्राड्विवाकेन दिशेत्युक्तो यदि न*सतां ब्रूयात् तदासौ *बध्यो दण्ड्यश्च धर्म्मतः स्यात् । १ । बधो दण्डेनाताडयित्वा राज्ञा* यथार्ह दण्ड्यो भवति * त्रिपक्षाच्च तु सतां स * प्रब्रूयात् तदा स धर्मं * प्रतिपराजितो भवेत् । २ । ५८ । नवसंकियन्तरं दण्डः साक्षिता * तत्राह योयावदित्यादि । १ । ५९ ।

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत्। तौ नृपेण ह्यधर्म्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥ ५९ ॥

योऽधमर्णः यावदर्थं *निह्नुवीत यो वाधनिको यावति*चार्थं मिथ्या वदेत् तौ द्वौ त्वधर्म्मज्ञौ तद्द्विगुणं * धनं दमं नृपेण दाप्यौ भवतः । १ । ५९ ।

पृष्टोऽपव्ययमानस्तु कृतावस्थो धनैषिणा। त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ॥ ६० ॥

स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा। शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ ७० ॥

स्त्रियं तीत्यादि। ७०। स्त्रीणां विवादे साक्ष्यं स्त्रियस्साक्ष्यं कार्य्यं * स्त्रियोऽसम्भवे इति * बालादिभिः साक्ष्यं कार्य्यं। १। ७०।

बालवृद्धातुराणाञ्च साक्ष्येषु वदतां मृषा। जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥ ७१ ॥

बाले त्यादि। ७१। साक्ष्ये पुवदतां बाल * वृद्धातुराणां वचनं * मृषा जानीयादुत्सिक्त * मनसामस्थिरचित्त नामदवतां * वाचं मृषा जानीयात्॥ १॥ ७१॥

साहसेषु च सर्व्वेषु स्तेयसंग्रहणेषु च। वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ ७२ ॥

साहसेष्वित्यादि। ७२। स्वहत्यादिषु साहसीर्षु पुस्तेय * संग्रहणे पुचौरग्रहणे षु च * वाक्पारुष्ये दण्डपारुष्ये च * साक्षिणः परीक्षेत तवद्वाक्यं तद्ग्राह्यं ॥ १॥ ७२॥

बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ७३

बहुत्वमित्यादि ॥७३॥ नराधिपः साक्षिणां साक्ष्यवाक्यामान्यद्वैधे द्विप्रकारे भूते * बहुत्वं बहूनां साक्षिणां यद्वाक्यं * वाक्यं तत्परिगृह्णीयात्॥ १॥ समेषु साक्षिषु द्वैधे * सति वाक्यं गुणोत्कृष्टान् परिगृह्णीयात्* गुणिद्वैधे द्विजोत्तमान् * परिगृह्णीयात्तद्वैधे गुणोत्कृष्टान्। २। ७३। न तु साक्षिणः साक्षित्वं किन्त्वावदि * तोत्तयाह समक्षतादि॥ १॥ ७४॥

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति। तत्र सत्यं ब्रुवन्साक्षी धर्म्मार्थाभ्यां न हीयते ॥७४॥

समक्षं चक्षुषा दर्शनादिभ्यो * कृतानां तत्तद्वाक्यप्रतिवाक्यानां * श्रवणाच्च साक्ष्यं साक्षिणां सिद्ध्यति ॥ १॥ मतपरत्वात्तत्तद्वाक्यप्रति * वाक्यानां श्रवणात्साक्ष्यं * साक्षिणां सिद्धतीति ॥ २॥ तत्र साक्षी * सत्यं ब्रुवन् * धर्म्मार्थाभ्यां * न हीयते। २। ७४ अन्यथा * वचने तु * दोषमाह। साक्षीत्यादि॥ १॥ ७५॥

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि। अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥७५॥

साक्षी स्वचक्षुषा यथा * दृष्टात्स्वकर्णेन यथा * श्रुतात् द्वयोर्वाक्यमध्ये प्रीत्यादिभ्यामन्यत् * आर्य्याणां सभामध्ये * विब्रुवन् सद्विब्रुवन् ॥१॥ प्रेत्य नरकमवाङ्भ्येति स्वर्गाच्च * हीयते न स्वर्गं याति। ७५।

यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन। पृष्टस्तत्रापि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥७६॥

लोभादित्यादि । ११८ । लोभादितोयत्साक्ष्यं साक्षिभि * रुच्यते तदितथं स्यात् । १ । ११८ । तत्तद्दण्डं वक्तुं प्रति * जानीते ॥

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः॥११९॥

एषामित्यादि । १ । ११९ । स्पष्टार्थोऽयं श्लोकः । ११९ । लोभादितः साक्ष्ये ऽनृतवादिनो दण्ड * माह ।

लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम्। भयाद्द्वौ मध्यमौ दण्ड्यौ मैत्रात्पूर्वं चतुर्गुणम् १२०

लोभादित्यादि । १ । १२० । अर्थप्राप्तिलोभात्समाख्यां * ब्रुवन्साक्षीपणानां सहस्रं दण्ड्यः स्यात् * स्वर्णरूपाणां तस्मिन् * धर्म्मशास्त्रे कल्पनीया निवर्त्तन्ते । १ । तानियथासम्भवं कल्पयेत्पण * सादृश्यादिमानं वचनं । २ । मोहात्साक्ष्यं ब्रुवन्साक्षी * पूर्वं प्रथमसाहसं * दण्ड्यो भवतिभयात् * मिथ्यासाक्ष्यं ब्रुवन् साक्षी द्वौमध्यमौसाहसौदण्ड्यौभवति ॥ ३ ॥ मैत्रान्मिथ्यासाक्ष्यं ब्रुवन्साक्षी * चत्वारिप्रथमसाहसानिदण्ड्यो भवेत् ॥ ४ ॥ १२०॥

कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्। अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु॥१२१॥

कामादित्यादि । कामान्मिथ्यासाक्ष्यं ब्रुवन् * साक्षी दशप्रथमसाहसानिदण्ड्यः स्यात् ॥ १ ॥ क्रोधान्मिथ्यासाक्ष्यं ब्रुवन् * साक्षीत्रिगुणं प्रथम * साहसं दण्ड्यः स्यादज्ञानान्मिथ्या * साक्ष्यं ब्रुवन्साक्षी । पूर्णे * द्वे शते पणानां दण्ड्यः ॥ २ ॥ बालिश्याद्वालभावान्मूर्खत्वान्मिथ्या * साक्ष्यं ब्रुवन्साक्षीपण * शतमेव दण्ड्योभवेत् ॥ ३ ॥१२१॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः। धर्मस्याव्यभिचारार्थमधर्मनियमाय च१२२

एतानित्यादि ॥ १२२ ॥ मनीषिभिः कौटसाक्ष्ये प्रोक्तान्दण्डाः * न्तान् धर्मस्याव्यभिचार * दोषार्थमधर्म्मनियमाय * सर्व्वमहर्षयआहुः । १ । १२२ ।

कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः। प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्१२३

कौटसाक्ष्यन्तित्यादि । १२३ । धार्मिकोनृपः कौटसाक्ष्यं कुर्वाणां * स्त्रीन्वर्णान्क्षत्रियवैश्य * शूद्रान् उक्तं वक्ष्यमाणं दण्डं * दण्डयित्वा स्वराज्यात्प्रवासयेत् ॥ १ ॥ ब्राह्मणन्तु कौटसाक्ष्यं * कुर्वाणं स्वराज्याद्विवासयेत् गृह * हरणादिना न तु दण्डयेत् । २ । १२३ । अथदश दण्डस्थानानिधाभिर्धातानाह * ।

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्। त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत्॥१२४॥

दशस्थानानीत्यादि ।१।१२४। त्रिषु वर्णेषु क्षत्रियवैश्यशूद्रेषु * कौटसाक्ष्यादौ दैहिकादैहिकस्य * दण्डस्य स्थानानि यानि तानि * दश स्वायम्भुवो मनुरब्रवीत् ।१। ब्राह्मणस्त्वक्षतो व्रजेत् * दशस्थानेषु क्षतं न * कृत्वा ब्राह्मणं विवासयेत् ।२।१२४। कानि तानि दशस्थानानीत्यत आह ।

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥१२५॥

उपस्थमित्यादि ।१।१२५। उपस्थोदरजिह्वाहस्तपाद * चक्षुर्नासाकर्णदेह * धनानीति दश दण्ड * स्थानानि दैहिकादैहिकानि ।१।१२५। नन्वस्मिन्नपराधे * कस्मिन् स्थाने दण्डः कार्य्य इत्यत आह ।

अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः । सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥१२६॥

अनुबन्धमित्यादि ।१।१२६। अनुबन्धं प्राप्तसमये पितृ * तथा सत्कर्म्मणि प्रवृत्तिं परि * ज्ञाय सर्व्वं याथात्म्याद् देशकालौ च * तत्त्वतो यथार्थतः यस्मिन् देशे यस्मिन् काले ।१। सत्कर्म्मणि तत्त्वतः सम्यग् यथार्थत्वात् * सारापराधौ च सारादीनष्टौ * सारानपराधांश्चालोक्य * दण्ड्येषु दण्डं पातयेत् ।२।१२६।

अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम् । अस्वर्ग्यञ्च परत्रापि तस्मात्तत् परिवर्जयेत् ॥१२७॥

अधर्म्मेत्यादि ॥१२७। स्पष्टार्थोऽयं श्लोकः ।१२७।

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥१२८॥

अदण्ड्यानित्यादि ॥ १२८ ॥ श्लोकोऽयं स्फुटार्थः ।१२८।

वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम् । तृतीयं धनदण्डन्तु वधदण्डमतः परम् ॥१२९॥

वाग्दण्डमित्यादि ।१२९। यः कश्चिदसत्कर्म्मणि प्रवर्त्तते * राजा प्रथमं वाग्दण्डं * तस्य कुर्य्यात् त्वमिदं * कर्म्म परित्यज इति * तेनानिवृत्तस्य धिक्कारं कुर्य्यात् * तेनानिवृत्तस्य धनं दण्डयेत् * तेनानिवृत्तस्य वधं दण्डं कुर्य्यात् ॥१॥१२९॥

वधेनापि यदा त्वेतान्निगृह्णीतुं न शक्नुयात् । तदैषु सर्व्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥१३०॥

वधेनापीत्यादि ।१३०। वधेनोपस्थादिषु दण्डेनापि * यदैतान् दण्ड्यान् निग्रहीतुं न राजा * शक्नुयात् तदैतच्चतुष्टयं सर्व्वं युगपदेवैषु समस्तं प्रयुञ्जीत ॥१॥१३०। ननु दण्डे यत्साक्ष्यादिकं * तत्किं स्थानमित्यत आह श्लोकेत्यादि ।

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि । ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥१३१

व्यवहारेत्यादि ॥ १ ॥ १३१॥ सर्व्वद्रव्याणां लोकस्य*सम्यग्व्यवहारार्थं परिभाषाणां *प्रसिद्धाएवयाः संज्ञाः *भुवि प्रथिता विख्याताः ॥ १ ॥ ताः संज्ञास्ताम्ररूप्यसुवर्णानां *धर्म्मशास्त्रे व्यवहारार्थं कथ्यमानाः *ताः संज्ञा अशेषतोऽहं प्रवक्ष्यामि ॥ २ ॥ १३१ ॥

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥१३२ ॥

जालान्तरेत्यादि ॥ १३२ ॥ जालवच्छिद्रसमूहान्तर्गते *सूर्य्यस्य भानौ किरणे *यत् सूक्ष्मं रजो दृश्यते *तत् प्रमाणानां स्वरूपाणां*परिमाणानां प्रथमं *परिमाणं त्रसरेणुं प्रचक्षते*परमाणुद्व्यणुकानां*मतीन्द्रियत्वादग्रहणात्वं ॥ १३२ ॥

त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः । ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥१३३॥

त्रसरेणव इत्यादि ॥ १३३ ॥ अष्टौ त्रसरेणव एका लिक्षा*परिमाणतो विज्ञेया तिस्रस्ता*लिक्षा एको राजसर्षपस्त्रयो*राजसर्षपा एको गौरसर्षपः ॥ १ ॥ १३३ ॥

सर्षपाः षड् यवो मध्यस्त्रियवं त्वेककृष्णलम् । पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥ १३४ ॥

सर्षपा इत्यादि ॥ १३४ ॥ षड्गौराः सर्षपा एको मध्यो यव*स्त्रियवन्तु मध्यो यवा * एकं कृष्णलं रक्तिकम् ॥ १ ॥ पञ्चकृष्णलको माषस्ते *षोडश माषा एकः *सुवर्णः कर्षः कोलक इति समादि* पर्य्यायैरभिधेयः स्यात् ॥ २ ॥ तत्र चत्वारो माषा एक आणाः स्यात्*द्वौ आणौ तोलकमाक्कः ॥ ३ ॥ १३४

पलं सुवर्णाश्चत्वारः पलानि धरणं दश । द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥ १३५ ॥

पलमित्यादि ॥ १३५ ॥ चत्वारः सुवर्णाः एकं पलं स्मृतं *दशपलानि धरणं* तत्र विज्ञेयमुच्यते ॥ १ ॥ द्वे कृष्णले रक्तिके समधृते *येन तौल्यौ समरौप्यमाषक*साम्यं पञ्चकृष्णलको*रौप्यमाषक उच्यते ॥ २ ॥ १३५ ॥

ते षोडश स्याद्धरणं पुराणश्चैव राजतम् । कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥ १३६ ॥

ते षोडशेत्यादि ॥ १३६ ॥ ते रौप्यमाषकाः षोडश राजतं *धरणं पुराणश्च स्यात्* स दशपलानि राजतं धरणं स्यात् ॥ १ ॥ ताम्रिकस्ताम्रस्य कार्षिकः षोडश*माषाः कार्षापणः*पण*इति पर्य्यायैरभिधेयः ॥ २ ॥ लोके हि सर्व्वद्रव्याणां *गण्डकानाममीतिः पण इति*व्यवहारस्तु वर्त्तते ॥ ३ ॥ १३६ ॥

धरणानि दश ज्ञेयः शतमानस्तु राजतः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥ १३७ ॥

धरणानीत्यादि । १३७ । द्वात्रिंशत्कृष्णलानि रौप्यं धरणं * तानि दश धरणानि * विंशत्युत्तरत्रिशतकृष्णलो * राजतः शतमानः स्यात् । १ । चतुःसौवर्णिको निष्कः * षोडशमाषाः सुवर्णः * उक्तास्तैश्चतुर्भिर्निष्पन्नः सर्व्वेषां * द्वाविंशत्युत्तरत्रिशतकृष्णलो निष्कः । २ । १३७ ॥

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥ १३८ ॥

पणाइत्यादि ॥ १३८ ॥ पणोऽशीतिरक्तिकस्तेषां पणानां * सार्द्धे द्वे शते प्रथमः साहसः स्यात् * सचतुष्पञ्चाशत्पणानां विंशति * सहस्रकृष्णलपरिमाणं भवेत् । १ । पणानां पञ्चशतानि प्रथमः * साहसो द्विगुणो मध्यमः स्वः पणानां सहस्रं मध्यमसाहसाद्द्विगुण * उत्तमः साहसः संज्ञया भवति । २ । १३८ ।

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति । अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥ १३९ ।

ऋणइत्यादि ॥ १३९ ॥ अधमर्णेन समाया * ऋणं मया देयं प्रतिज्ञाते सति * यथावत्काले न दत्ते * तदर्थं पञ्चकं शतं दण्डमर्हति । १ । अपह्नवे साहसमेव * धारय इत्यो वचके * तद्द्विगुणमुत्तमसाहसं दण्ड * मर्हतीति मनोरनुशासनं । २ । १३९ ।

वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् । अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते १४

वशिष्ठेत्यादि । १४० । ऋणदाने वशिष्ठविहितां वित्त * विवर्द्धिनीं वृद्धिं सृजे * दशीतिभागं कभागं शतं मासा * दूहं वार्द्धुषिकोऽपि गृह्णीयादिति । १ । १४० ।

द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् । द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्विषी ॥ १४१

द्विकमित्यादि । १४१ । अथवा वार्द्धुषिकः शतं शताय * सोकां प्रं द्विकं द्विगुणं * पञ्चाशद् ग्रसीकां शं सतां धर्ममनुस्मरन् * मासाद् द्विं गृह्णीयात् । १ । द्विकं द्विशतां प्रवृद्धिं * गृह्णानो वार्द्धुषिकोन * तदर्थकिल्विषी भवति । २ । १४१ ।

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् । मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्व्वशः ॥ १४२

द्विकमित्यादि । १४२ । वार्द्धुषिको वर्णानामनुपूर्व्वशो * मासस्य वृद्धिं दत्तधनस्य * शतं शताशसीकां प्र द्विकं ब्राह्मणाद् गृह्णीयात् । १ । त्रिकं त्रिगुणं क्षत्रियात् * चतुष्कं चतुर्गुणं वैश्यात् पञ्चकं * पञ्चगुणं शूद्राद् गृह्णीयात् । २ । १४२ ।

यत्किञ्चिद्दशवर्षाणिसन्निधौप्रेचते धनम्। भुज्यमानंपरैस्तूष्णींनसतल्लब्धुमर्हति॥१४७॥

यत्किञ्चिदित्यादि।१४७। परैर्हीनाधुपनिधिभिर्जनै*यत्किञ्चित्क्षेत्रह्यकादिधनं*दशवर्षाणिभुज्यमानं यस्तुतद्धनस्वामीसन्निधौ * तूष्णीमवारयन्प्रेचते । १ । सतद्धनस्वामीतत्क्षेत्रधनं * नलब्धुमर्हतिभोगात् । २ । १४७ । अपरञ्चाह ।

अजडश्चेदपोगण्डोविषये चास्यभुज्यते । भग्नंतद्व्यवहारेणभोक्तातद्द्रव्यमर्हति॥१४८॥

अजडश्चेतादि । १४८ । धनस्वामीयःसचेदजडोव्याधि* विशेषे क्रियाक्षमयाहीनो * नसोऽप्यथार्तो रोगी*पापोगण्डोबालोनस्यात् । १ । अस्यविषये चदृष्टिगोचरे*परैस्तत्समर्थयत्किञ्चिदाधुपनिधिवन्यद्व्रव्यं * भुज्यते नचसनाजडेनापोगण्डेनस्वामिनानिवार्यते । २ । तस्य द्व्यवहारेणतद्भोगेन*भग्नंस्यात् द्रव्यंभो*क्तैवार्हतिनचतत्स्वामी । बालआषोडशाद्वर्षात्पोगण्डश्चापिशब्दितः । इति । नारदः । २ । १४८ जडेनाथवापोगण्डेन यद्धितद्दत्तमार्गेणभुज्यमानंपश्यतानिवार्यते ऽथतद्भोगेन भग्नंस्यात्तद्भोक्ताद्व्रव्यमर्हति ।

आधिःसीमाबालधनंनिक्षेपोपनिधिस्त्रियः। राजस्वंश्रोत्रियस्वञ्चनभोगेनप्रणश्यति॥१४९॥

आधिरित्यादि॥ १४९ ॥ आधिप्रभृतिःपरैर्भोगेननैव*नश्यतिपुनःप्राप्यःस्यात् । १ । १४९ । तत्राधिः

यःस्वामिनाननुज्ञातमाधिंभुङ्क्तेऽविचक्षणः। तेनार्द्धवृद्धिर्मोक्तव्यातस्यभोगस्यनिष्कृतिः॥१५०॥

स्वामिनेत्यादि । १५० । योऽविचक्षणोमूर्खआधिंतदाधि*स्वामिनाननुज्ञातंभुङ्क्ते । तेनवार्द्धिकेनार्द्ध वृद्धिर्मो*क्तव्या पापक्षय*वृद्धिस्तस्यभोगस्यनिष्कृतिर्ज्ञेया । २ । १५० ।

कुसीदवृद्धिर्द्वैगुण्यंनात्येतिसकृदाहृता। धान्येसदेलवेवाह्येनातिक्रामतिपञ्चताम्॥१५१॥

कुसीदेत्यादि । १५१ । कुसीदवृद्धिर्व्याजधनपर्यायः*कुसीदंतस्यावृद्धिर्मासिमासि * नाहृताऽसकृदाहृतायदि स्यात् । १ । तदामूलधनात्*द्वैगुण्यंनाति*क्रामतिद्वैगुण्य*पर्यन्तंप्राप्नोति । १ । धान्येसदेवृक्षफले *लवेच्छेदाचौमार्णादि*कृषिवस्तुनिवलावर्दे । ३ । वाह्ये ऽश्वगवादौ*यदिसकृदाहृताचेत्* पञ्चतांतस्यापञ्चगुणंमूलं* नातिक्रामतीतिपञ्चगुणीकृतंमूलपर्यन्तमर्हतिनत्वाधिकंस्याय । ४ । १५१ ।

कृतानुसारादधिकाव्यतिरिक्तानसिध्यति । कुसीदपथमाहुस्तंपञ्चकंशतमर्हति॥ १५२॥

कृतादित्यादि। १५२। धनप्रयोगकाले वृद्धिर्यावती* नियता कृता ततोऽधिका न्यूना वा * न सिध्यति कुसीदपथं तमाहुः* यद्वृत्तं पञ्चगुणं शतसङ्ख्यं भवति। १। १५२।

**नातिसांवत्सरीं वृद्धिं न चादृष्टां पुनर्हरेत्। चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या॥१५३॥**

नातीत्यादि।१५३। वार्षिकः सांवत्सरी वृद्धिमतिक्रमा* अधिकां न सकृद्ग्रहणं गृह्णीयात्* तदधिककालस्य वृद्धिं न प्राप्नुयात्। १। अदृष्टां शास्त्रे निर्दिष्टम्* दृष्टिरहितां यतोऽसौ* तां पञ्चकां वृद्धिं लिखितः* पश्चात् यो भागोऽधिकां वृद्धिं न हरेत्। २। यावत्कृतं वृद्धेर्ग्रहणं क्रियाकाल* वृद्धिर्नियत्कालातीये सकृद्* वृद्धिग्रहणं देयगुणाधिका भवेत्। ३। या वृद्धिरधमर्णेनापदग्रस्तेना* न्यप्रकाराऽसम्भवादा*धुत्तमर्णपीडनेन वा* स्वयं शास्त्रे अधिका कृता वृद्धिः* सा वृद्धिः कारिताख्या। ४। या च कायिका शकटादि* वाहनप्रदादिबन्धककृता* तां तां वृद्धिं वार्द्धुषिको न हरेत्। ५। वृद्ध्यपतिना पुत्रस्य* कायिका कायसंयुक्ता कालाधिका चक्रालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता कथिता भवतीति। १५३।

**ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत्पुनः क्रियाम्। स दत्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत्॥१५४॥**

ऋणमित्यादि। १५४। योऽधमर्णो नियतकालमध्ये ऋणं* दातुमशक्तः सन्पुनः * क्रियां दानकालवृद्धिं* कर्तुमिच्छेत् स दानिर्जितां *वृद्धिं दत्वा परिवर्तयेत्। १। १५४। पूर्वलेखादिपरिवर्तनं विशेष*माह।

**अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत्। यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति॥१५५॥**

अदर्शयित्वेत्यादि। १।१५५। तत्राधोऽर्वं क्रियापरिवर्त्तने *कर्तव्ये यद्बन्धकं तदधमर्णं *नदर्शयित्वा पूर्वलेखादिक्रियां परिवर्त्तयेत्। १। तत्र बन्धकं हिरण्यं *मदर्शयित्वैव परिवर्त्तयेत्* ऋणमुनावन्तं कालं* यावती सम्भवेत् तावतीं दातुमर्हति। २। १५५।

**चक्रवृद्धिं समारूढो देशकालव्यवस्थितः। अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात्॥१५६॥**

चक्रवृद्धिमित्यादि। १५६। यस्मिन्देशे यस्मिन्काले च वृद्धेर्वृद्धिर्व्यवस्थिता सा देशकालव्यवस्थितां वृद्धिं समारूढो* वार्द्धुषिकश्चक्रवृद्धिं *देशकालौ * अतिक्रामंस्तत्फलं *चक्रवृद्धिं वृद्धेर्वृद्धिं नावाप्नुयात्। १। १५६।
तत्रव्यवस्थामाह।

**समुद्रयानकुशला देशकालार्थदर्शिनः। स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति॥१५७॥**

समुद्रेत्यादि। १५७। समुद्रयानकुशला* ये समुद्रगमने गमनागमनविज्ञाः *कल्पयन्ति नानादेशकालार्थानां *दर्शनशीला भवन्ति। १। ते तत्र वक्रवृद्धौ या *वृद्धिमधिगमं प्राप्तिं* प्रतिस्थापयन्ति सैव *तत्र वृद्धेरधिगमः॥ ॥ २॥ १५७॥

योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन्स तं तस्य प्रयच्छेत्स्वधनादृणम्॥ १५८॥

योयस्येत्यादि। १५८। इह ऋणादाने यो मानवो यस्य *अधमर्णस्य दर्शनाय* प्रतिभूः स्वीकारी तिष्ठेत्। १। स तमधमर्णमदर्शयं स्तस्य*उत्तमर्णस्य स्वधनात्प्रयच्छेत्॥ २॥ १५८॥

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्। दण्डशुल्कावशेषञ्च न पुत्रो दातुमर्हति॥ १५९॥

प्रातिभाव्यमित्यादि। १५९। यस्माद्वृथादानं यः प्रतिभूः स्यात् यादर्शयस्यात्तत्क्रीडायां * दानप्रतिभूर्भवति *वरा मूल्यादाने प्रतिभूर्भवेत्। १। दण्डावशेषप्रदाने वा *शुल्कावशेषप्रदाने वा *प्रतिभूर्भवेत्तस्य* मृतस्य प्रातिभाव्यं * प्रतिभूनिमित्तं वृथादानादिकं दायं पुत्रो नार्हति। २। १५९।

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः। दानप्रतिभुवि प्रेते दायादानपि दापयेत्॥ १६०

दर्शनेत्यादि॥ १६०॥ प्रतिभुवां द्विविधो दर्शनप्रतिभूः *दानप्रतिभूश्च तत्र *दर्शनप्रातिभाव्ये तु *पूर्वोक्तो विधि र्भवति॥ १॥ यत्प्रागुक्तमदर्शयन्स तं तस्य *प्रयच्छेत्स्वधनादृणम्। २। इति। दानप्रतिभुवि प्रेते *खलु वृथा दानाक्षिकसौरिकादण्डशुल्काव * शेषेभ्योऽन्यत प्रातिभाव्ये *तद्दानप्रतिभुवो दायादान्दापयेत्॥ २॥ १६०॥ अत्र विप्रतिपत्तिवचनमाह॥

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्। पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना॥ १६१॥

अदातरीत्यादि॥ १६१॥ दाता धनस्योत्तमर्णः *खलु जानीते ऽयमस्य *ऋणदानप्रतिभूरिति *प्रकृतिं तु विज्ञातवान्॥ १॥ तस्मिन्विज्ञातप्रकृतावदातरि *प्रतिभुवि प्रेते पश्चात् *केन हेतुना तदृणं * परीप्सेज्जीवति तस्मिन्* परिविद्वायामुमिच्छेत्॥ २॥ १६१॥ इतरो वं वि*प्रतिपत्ता*वाह॥

निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः। स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः॥१६२॥

निरादिष्टेत्यादि॥ १६२ प्रतिभूश्चेन्निरादिष्टधनो *निरादिष्टं यतो यत्प्रापणीय *द्रव्यं स्मै देयं तत्सर्व्वं *निःशेषमादिष्टं येन। १। दायादेभ्यस्तत्तं येन *सोऽलन्धनो निधनः स्यात् *तदा निरादिष्टोऽसौ च *दायादः स्वधनादेव *तत्

बलाद्दत्तमित्यादि। १६८। बलाद्दत्तं भुक्तं लेखितं वा यच्च * तान्बलकृतान्सर्व्वान् * वार्थान्मनुरकृतानब्रवीत्। १। १६८।

त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्। चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः॥१६९॥

त्रय इत्यादि। १६९। धर्म्मताव्यवहारे साक्षिणः प्रतिभूः * कुलञ्च त्रितयं परार्थे क्लिश्यन्ति * विप्र आढ्यो वणिङ्नृप * इति चत्वार उपचीयन्ते॥ १॥ विप्रो राजाधिकृतो ब्राह्मणो * दण्डधनाद्युपायागमवर्द्धते * आढ्यो धनी * ऋणाद्वणिक * वन्धकादिक्रयणेन २। १६९।

अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः। न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत्॥१७०॥

अनादेयमित्यादि। १७०। स्पष्टार्थोऽयं श्लोकः। १७०। तद्दोषमाहानादेयेत्यादि।

अनादेयस्य चादानादादेयस्य च वर्ज्जनात्। दौर्ब्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति॥१७१॥

अनादेयमित्यादि॥१७१॥ अनादेयग्रहणे राज्ञो धनतो * दौर्ब्बल्यं लोके ख्याप्यते * आदेयानादाने राजा प्रेत्येह नश्यति। १॥ १७१॥

स्वादानाद्वर्णसंसर्गात्त्वबलानाञ्च रक्षणात्। बलं सञ्जायते राज्ञः स प्रेत्येह च वर्द्धते॥१७२॥

स्वादानादित्यादि। १७२। स्वकीयाद्याधनस्यादानाद्वर्णस्य * स्वस्ववर्णमात्रसंसर्गात् * दुर्बलानां रक्षणाच्च राज्ञो बलं सञ्जायते * राजा प्रेत्येह च वर्द्धते। १। १७२।

तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये। वर्त्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः॥१७३॥

तस्मादित्यादि। १७३। तस्मादुक्तदोषगुणात् * स्वामी राजा प्रियाप्रिये * हित्वा स्वयं यम इव * जितक्रोधो जितेन्द्रियः * सन्याम्यया वृत्त्या वर्त्तेत। १। १७३।

यस्त्वधर्म्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः। अचिरात्तं दुरात्मानं वशे कुर्व्वन्ति शत्रवः॥१७४॥

यस्त्वित्यादि॥ १७४। यस्तु नराधिपो मोहा * दधर्म्मेण कार्य्याणि कुर्य्यात्तं दुरात्मानं नराधिपं * अचिराच्छत्रवो वशे कुर्व्वन्ति। १। १७४

कामक्रोधौ तु संयम्य योऽर्थान्धर्म्मेण पश्यति। प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः॥ १७५॥

कामेत्यादि । १७५ । यो नराधिपस्तु कामक्रोधौ संयम्य धर्म्मेण सर्व्वानर्थान् प्रपश्यति तं नराधिपं सर्व्वाः प्रजा अनुवर्त्तन्ते सिन्धवः नद्यः समुद्रमिवेति । १ । १७५ ।

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे। स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनं ॥ १७६ ॥

यः साधयन्तमित्यादि । १७६ । धनिकं उत्तमर्णं छन्देन स्वेच्छया अधमर्णात् स्वकं धनं साधयन्तं नृपे यस्तु अधमर्णो वेदयेत् । १ । राज्ञा स दाप्यः धनिकप्रापा अधमर्णो यावद्धनं तच्चतुर्थभागैकभागं दण्डं तद्दाप्यस्तस्य च धनिकस्य तद्धनं स्यात् ॥ २ ॥ १७६ ॥

कर्म्मणापि समं कुर्य्याद्धनिकायाधमर्णिकः। समोऽवकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः॥१७७॥

कर्म्मणापीत्यादि ॥ १७७ ॥ समः समजातिरवकृष्टजातिश्च अधमर्णिको धनं दातुमशक्तो धनिकाय कर्म्मणापि समं कुर्य्यात् स्वस्वजातिविहितकर्म्मणिकुर्य्यात् ॥ १ ॥ श्रेयानुत्कृष्टजातिस्त्वधमर्णिकः शनैः क्रमेणैव दद्यात् । २ । १७७ ॥

अनेन विधिना राजा मिथो विवदतां नृणाम्। साक्षिप्रत्ययसिद्धानि कार्य्याणि समतां नयेत्॥१७८

अनेनेत्यादि ॥ १७८ ॥ मिथो विवदतां विवादं कुर्व्वतां उत्तमर्णाधमर्णानां नृणामनेनोक्तेन विधिना राजा साक्षिप्रत्ययसिद्धानि । १ । साक्षिप्रमाणेन सिद्धानि निर्णीतानि कार्य्याणि तथा समतां सामञ्जस्यं नयेदिति समाप्रमाणादानमिति । २ । १७८ । अथोद्दिष्टक्रमान्निक्षेपमुच्यते । ।

कुलजे वृत्तसम्पन्ने धर्म्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद् बुधः ॥ १७९॥

कुलजेत्यादि । १ । १७९ ॥ बुधो धननिक्षेपमिच्छन् धनिनि सत्कुलजे सद्वृत्तसम्पन्ने सत्यवादिनि धर्म्मज्ञे महापक्षे बहुपरिवारे । १ । आर्य्ये ब्राह्मणे क्षत्रिये वैश्ये वा निक्षेपं स्थाप्यं धनं निक्षिपेत् स्थापयेदिति ॥ २ ॥ १७९ ॥ निक्षेपप्रकारमाह यो यथानिक्षिपेदित्यादि । १ । १८० ।

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः। स तथैव ग्रहीतव्यो यथादायस्तथाग्रहः ॥ १८० ॥

यो मानवो यस्य हस्ते यमर्थं यथा निक्षिपेत् सोऽर्थस्तेन ग्रहीता तथैव तस्मात् निक्षेप्तुर्ग्रहीतव्यः स यथादायस्तथाग्रहः ॥ १ ॥ यथादायशब्दो भावे दानार्थो दानं यथा निक्षेपस्य तथैव ग्रहणं कार्य्यम् ॥ २ ॥ १८० ।

[illegible]विवादमाह ।



अस्वामिना कृतो यस्तु दायो विक्रय एव वा । अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ॥ १९९ ॥

अस्वामिनेत्यादि । १९९ । अस्वामिना जनेन यस्तु स्वामस्व* दायो दानं कृतो विक्रयो वा कृतः * स कृतोऽपि न कृतो विज्ञेयो यथा* व्यवहारे विवादे तथा स्थितिरियं व्यवस्था । १ । १९९ ।

सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् । आगमः कारणं तत्र न सम्भोग इति स्थितिः ॥ २०० ॥

सम्भोग इत्यादि ॥ २०० ॥ यत्र परद्रव्ये सम्भोगः* दृश्यते निजागमो दानं* पत्रलिपिः क्वचिद् भाति* तत्रागमः कारणं सत्वे* न तु सम्भोगः कारणं । १ । २०० ।

विक्रयाद्यो धनं किञ्चिद्गृह्णीयात्कुलसन्निधौ । क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥ २०१ ॥

विक्रयादित्यादि । २०१ । यः कुलानां विक्रेतॄणां* सन्निधौ विक्रयात् किञ्चि* द्द्रव्यं मूल्येन गृह्णीयाद्धनं* क्रयेण तस्माद्विशुद्धं* न्यायात् स न्यायतो लभते । १ । २०१ ।

अथ मूलमनाहार्यं प्रकाशक्रयशोधितः । अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥ २०२ ॥

अथेत्यादि । २०२ । इत्यर्थे अगतश्चेत्यादिकमस्य* अन्यस्माद्द्रव्यमस्वामिना विक्रीतं* यत्तस्य मूल्यं विक्रयः* अनाहार्यं मानुषं सम्यक् । १ । तत्प्रकाशक्रयशोधितः क्रेता* राज्ञा अदण्ड्य एव मुच्यते नाष्टिकः* नष्टद्रव्यो द्रव्यस्य* स्वामी तद्धनं नाष्टिकाधिकारी लभते । २ । २०२ ।

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति । न चासारं न च न्यूनं न दूरेण तिरोहितम् ॥ २०३ ॥

नान्यदित्यादि । २०३ । अन्येन संसृष्टरूपं * मन्यद्द्रव्यं विक्रयं नार्हति असारं * सारहीनं कर्मानर्ह * द्रव्यं विक्रयं नार्हति । १ । न्यूनं मूल्यात् न्यूनं यद्द्रव्यं दूरे *देशे नागोचरदेशे * अतितिरोहितं पिहितं *तन्न विक्रयमर्हति । २ । २०३ । कन्याविक्रयमाह ।

अन्यां चेद्दर्शयित्वान्या वोढुः कन्या प्रदीयते । उभे त एकशुल्केन वहेदित्यब्रवीन्मनुः ॥ २०४ ॥

अन्यामित्यादि ॥ २०४ ॥ कन्या विवाहयितुकामेनान्यां *कन्यां दर्शयित्वा अन्या कन्या वोढुः * प्रदीयते तेन द र्शिता कन्या च* दत्ता कन्या च ते उभे एकशुल्केन वहेत् ॥ १ । २०४ ॥

अतद्दृत्यादि ॥ २१५ ॥ भृतोभृतिनियमेन*यत्कर्म्मणियोनियुक्तः * सयोऽनार्त्तो यथोदितं * कर्म्मदर्पान्न कुर्य्यात् । १ । सकर्म्मवेतनयोस्तत्त्वरूपेण*स्वर्णाद्यरूपायास्तास्तु सावाग्यैः*अष्टालानिदण्डः:स्या * दशावेतनश्च नेयं । २ । २१५ ।

आर्त्तस्तुकुर्यात्स्वस्थःसन्यथाभाषितमादितः। सदीर्घस्यापिकालस्यतल्लभेतैववेतनम्२१६

आर्त्तस्त्वित्यादि । २१६ । आर्त्तस्तुभृतःस्वस्थःस * द्वितीययथाभाषितं *कर्म्मतत्कुर्य्याद्दीर्घस्यापितदर्थः* कालस्यवेतनं सर्व्वं लभेतैव । १ । २१६ ।

यथोक्तमार्त्तःस्वस्थोवायस्तत्कर्म्मनकारयेत्। नतस्यवेतनंदेयमल्पोनस्यापिकर्म्मणः॥२१७॥

यथोक्तमित्यादि ॥ २१७ ॥ योभृतोयथोक्तानियुक्तः*सयदिस्वस्थोवार्त्तो वा*तत्कर्म्मस्वेच्छयानकुर्य्यात्*कर्त्ता च तदातं नकारयेच्चदा । १ । तस्यकर्म्मणोऽल्पोनस्यापिअल्पावशेषस्यापि*वेतनं नदेयंभवेत् । २ । २१७ ।

एषधर्म्मोऽखिलेनोक्तोवेतनादानकर्म्मणः। अतऊर्द्ध्वंप्रवक्ष्यामिधर्म्मंसमयभेदिनाम्॥२१८

एषइत्यादि ॥ २१८ ॥ स्पष्टार्थोयंश्लोकः ॥ २१८ ॥ समयभेदविधानमाह ।

योग्रामदेशसङ्घानांकृत्वासत्येनसंविदम्। विसंवदेन्नरोलोभात्तंराष्ट्राद्विप्रवासयेत्॥२१९

योग्रामइत्यादि । २१९ । योग्रामस्यदेशस्यसङ्घस्याच*सत्येनसंविदंकृत्वाइत्यादिवाक्यं *कृत्वापुनर्लोभादेव* विसंवदेत् * तनाथाभाषितं नतथाचरति । १ । तं नरंराजाराष्ट्राद्विप्रवासयेत् * स्वदेशप्रवासाद्बहिष्कुर्य्यात् ॥ २ ॥ २१९ ।

निगृह्यदापयेच्चैनंसमयव्यभिचारिणम्।चतुःसुवर्णान्षण्णिष्कांश्छतमानञ्चराजतम्॥२२०

नकेवलंविप्रवासयेद्दण्डञ्च*कुर्य्यात्तदाहनिगृह्येति । १ । २२० । एनंसमयव्यभिचारिणंनरं*राजानिगृह्य यत्नात्*स्वरूपंषट्स्वर्णस्वरूपासा*तान्सावतःसुवर्णान्*षण्णिष्कान्राजादापयेत् ।१। राजतंशतमानञ्चतंसमय*व्यभिचारिणंदापयेत् । २ । २२० ।

एतंदण्डविधिंकुर्य्याद्धार्म्मिकःपृथिवीपतिः। ग्रामजातिसमूहेषुसमयव्यभिचारिणाम्२२१

एतमित्यादि । २२१ । ग्रामजातिसमूहेषु*समयव्यभिचारिणां* मध्येतंदण्डविधिं * धार्म्मिकोभूपतिः कुर्य्यात् । १ । २२१ ।

ऋषीणां वाक्येनापि गम्भीरमत्र वर्तितव्यमन्त्रप्रवृत्तिरस्ति यथा कन्येरपामाता। गान्धर्वविवाहे ऽग्निसाक्षिकत्वात्* मन्त्रास्त्वपि मन्त्रप्रवृत्तिः । ७ । २२६ । कन्यादिमन्त्रविवाहे धर्मविधि र्नास्तीत्यत*आह ।

पाणिग्रहणिकामन्त्रानियतं दारलक्षणम् । तेषांनिष्ठातुविज्ञेयाविद्वद्भिःसप्तमे पदे ॥२२७॥

पाणिग्रहेत्यादि । १ । २२७ । पाणिग्रहणिकामन्त्राएव दार*लक्षणं नियतं नत्व*मन्त्रकविवाहक्रिया* तेषां मन्त्राणां समाप्ति*सप्तमे पदे गत्याभात् । १ । २२७ ।

यस्मिन् यस्मिन् कृते कार्य्ये यस्येहानुशयोभवेत् । तमनेनविधानेनधर्म्येपथिनिवेशयेत् ॥२२८

यस्मिन्नित्यादिनाउक्तसमय * भेदे विधानातिदेशः ॥ १ ॥ २२८ ॥ संविद्व्यतिक्रमसुक्त्वापशूनां * स्वामिपालविवाद व्यक्त*उपक्रमते पशुष्वित्यादि ॥ १ ॥ २२८ ॥ स्पष्टार्थोऽयंश्लोकः । २२९ ।

पशुषुस्वामिनाञ्चैवपालानाञ्चव्यतिक्रमे । विवादंसंप्रवक्ष्यामियथावद्धर्म्मतत्त्वतः ॥ २२९ ॥

दिवावक्तव्यतापाले रात्रौ स्वामिनितद्गृहे । योगक्षेमेऽन्यथाचेत्तु पालोवक्तव्यतामियात् ॥ २३० ॥

दिवेत्यादि ॥ २३० ॥ गोमहिषाजाविप्रभृतिपशूनां *योगक्षेमे चारणादौ*पाले रक्षके दिवानाशानां दिवा व्यतिक्रमे जाते सति । १ । पाले रक्षके वक्तव्यता*गृहे नादिकर्त्तव्यता * रात्रौस्वामिनितद्गृहे व्यतिक्रमे वक्तव्यता । २ । अन्यथा स्वामिगृहादन्यत्रवा*यदि व्यतिक्रमे पालो*वक्तव्यतामियान्नस्वामी । ३ । २३० ।

गोपःक्षीरभृतोयस्तुसदुह्याद्दशतोवरां । गोस्वाम्यनुमते भृत्यःसास्यात्पाले भृते भृतिः ॥२३१॥

गोपइत्यादि । २३१ । यस्तुगोपःक्षीरभृतः*सदशतोगोमध्येवरां गां * गोस्वाम्यनुमते दुह्यात्*सापाले भृते भृतिःस्यात् ॥ १ ॥ २३१ ।

नष्टं विनष्टं क्रिमिभिःश्वहतं विषमे मृतम् । हीनंपुरुषकारेण प्रदद्यात्पालएवतु ॥ २३२ ॥

नष्टमित्यादि । २३२ । नष्टादिकं गवा*दिपशुं तस्य*पालएवतत्पशु*स्वामिने दद्यात् । १ । २३२ ।

विघुष्यतुहृतंचौरैर्नपालोदातुमर्हति । यदिदेशेचकालेचस्वामिनःस्वस्यशंसति ॥२३३॥

विघुष्येत्यादि । २३३ । पालस्ततपशुरक्षकोविघुष्यचौरैरसौपशुर्हृत इत्येवं घोषणां लोके कृत्वा * यदि दूरे चादूरे वादेशे ॥ १ ॥ काले ज्ञापनकालानतीते स्वस्य*स्वामिन प्रशंसति वदति*तदातत्पालस्तं नदातुमर्हति । २

प्रमादीवाचष्टे चौरैः *पटहादिना विघुष्य *हृतमिति तन्न साधु *नहि विघुष्य हृतं त *चौर्यं कर्म भवतीति ।२।२३२

कर्णौ चर्म च वालांश्च वस्तिं स्नायुं च रोचनाम्। पशुषु स्वामिनां दद्यान्मृतेष्वङ्कानि दर्शयेत् ॥२३४॥

कर्णावित्यादि। २३४। पशुषु मृतेषु तेषां * कर्णादीनि तत्स्वामिना पालो दद्यात् * तेषामङ्कानि च दर्शयेत्। १। २३४।

अजाविके तु संरुद्धे वृकैः पाले त्वनायति। यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥२३५॥

अजाविकमित्यादि। २३५। अजाविके चरति सति *वृकैः संरुद्धे तत्र * तत्पाले नागच्छति। १। तदा ...यामजामविं वा हननात् *तद्द्वयकिल्बिषं पाले स्यात् ॥ २३५।

तासां चेदवरुद्धानां चरन्तीनां मिथो वने। यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥२३६॥

तासाञ्चेत्यादि। २३६। पालेनावरुद्धानां रक्षितानां *तासामजानामवीनां * वने मिथः सञ्चरन्तीनां मध्ये ...उत्प्लुत्य हननात् *पालस्तत्र न किल्बिषी। १। २३६।

धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः। शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु ॥ २३७॥

धनुःशतमित्यादि।२३७। चतुर्हस्तमानं धनुः *तेषां शतं चतुःशतहस्तमानं *ग्रामस्यैकैकासा रभ्य समन्ततश्चतुर्दिक्षु। १। धनुःशतं चतुःशतहस्तमानं प्रतिदिशं शतहस्तमानं स्यात् शम्यापातात्समाक्षेपणात्परिहारः कार्यः। वर्धावारादिचतुर्दिक्षु * ग्रामान वर्तन्ते तिसृषु दिक्षु *वर्तन्ते तदा त्रयस्तिसृषु दिक्षु *शतहस्तमानं त्रयः परीहारा ...कार्याः। २। नगरस्य तु समन्ततस्त्रिगुणः* परीहारः कार्य इति। १। २३७। ननु च ग्रामस्य नगरस्य च... चतुर्दिक्षु परित्यागे तु किं प्रयोजनं स्यादित्यत *आह।

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥ २३८॥

तत्रापरीत्यादि। १। २३८। तत्र तावत्प्रमाणत्यागे भूमिश्चेत्तत्र धान्यं शस्यं वपेत् *परिवृतञ्च न कुर्यात् ...तदपरिवृतं तद्धान्यं पशवो हिंस्युः। १। तदा तत्र पशुरक्षिणां दण्डं नृपतिर्न प्रणयेदिति। २। एतेनोक्तं तावत्परिमितं स्थानं त्यक्त्वा शस्यानि वपेत् परिवृतानि च कुर्यादिति॥२३८। तर्हि तावत्प्रमाणत्यागेऽपि *परिवृतं कुर्यात् कथं *कुर्यादित्यत आह* ।

वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत्। छिद्रं च वारयेत्सर्वं श्वसूकरमुखानुगम् ॥ २३९ ॥

इति तत्तेत्यादिश्लोकं । १ । २३९ । तत्रतावत्प्रमाणादेशतागेन*क्षेत्रधान्यादिवपने* यदि पशुनविलोकयेत्*तावद्रक्षता इति प्रकृतीति । १ । तत्रवृत्तौष्ट्रखरशूकरमुखादृतं*छिद्रञ्चसर्व्वं वारयेत् । २ । २३९ ।

पथिक्षेत्रे परिवृते ग्रामान्तीयेऽथवापुनः। सपालःशतदण्डार्होविपालान्वारयन्पशून्॥२४०॥

पथीत्यादि । २४० । पथिग्रामान्तीये प्रागुक्तमितद्धे शतागे क्षेत्रे परिवृते वापि*सपालःपशून्विपालान् रक्षकहीना वारयन्पणशतदण्डार्हो भवति । १ । । २ । २४० ।

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति। सर्व्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा॥२४१॥

क्षेत्रेष्वन्येष्वित्यादि । २४१ । पथपरिहार्यादि ग्रामतथा*ग्रामनगरपरिवृत*क्षेत्राण्यान्येष्विति क्षेत्रेषु*सपालपशुश्चारयन्नेव । १ । सपादं पणं तामसारमिति * पालोदण्डम र्हतीति २ । सर्व्वत्रसदो दण्डधनं दाण्डिभिः क्षेत्रिकस्यदेयोनराग्नः । २ । २४१ ।

अनिर्दशाहां गांसूतांवृषान्देवपशूंस्तथा। सपालान्वाविपालान्वानदण्ड्यान्मनुरब्रवीत्॥२४२

अनिर्दशाहामित्यादि । २४२ । सूतां गामनिर्दशाहां *वृषानन‌डुहोदेवपशूनदेव*सेवार्थं नियुक्तान्गोमहिषादीश्च*सपालान्विपालान्वा । १ । क्षेत्रे पथिचचरतो*नदण्ड्यास्तेषां पालाश्च*रुमिनशतदर्थं न*दण्ड्यान्मनुरब्रवीत् । २ । २४२ ।

क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणोभवेत् । ततोऽर्द्धदण्डोभृत्यानामज्ञानात्क्षेत्रिकस्य तु ॥ २४३ ॥

क्षेत्रिकस्येत्यादि ॥ २४३ ॥ क्षेत्रिकस्यक्षेत्रोत्पन्न*शस्यं स्वराजकर*प्रदस्यक्षेत्रकर्षण * वपनादिकालात्यये । १ । कर्षणवपनादिकरणे शस्य*नाशात्त्वे राज्ञोभागात्*दशगुणोदण्डोभवेत् । २ । क्षेत्रिकस्याज्ञानादत्यये भृत्यानां *तत्रनियुक्तानां ततो*दशगुणादर्द्धदण्डः । ३ । २४३ ।

एतद्विधानमातिष्ठेद्धार्म्मिकःपृथिवीपतिः । स्वामिनाञ्चपशूनाञ्चपालानाञ्चव्यतिक्रमे ॥२४४॥

एतदित्यादिनास्वामिपशुपाल* पशुव्यतिक्रमोविधानमिति*स्पष्टार्थोयं श्लोकोसम्यः ॥ १४४॥ अथोद्देशक्रमं सीमाविवाद*माहसीमां प्रतीत्यादि । १ । २४५ ।

सीमांप्रतिसमुत्पन्ने विवादे ग्रामयोर्द्वयोः। ज्यैष्ठे मासिनयेत्सीमांसुप्रकाशेषुसेतुषु॥२४५

द्वयोर्ग्रामयोःसीमांप्रतिविवादे * समुत्पन्ने ज्यैष्ठेमासि*सुप्रकाशेषुसेतुषु * सीमांसीमांसांनयेत्प्राप येदिति॥१॥२४५॥

सीमावृक्षांश्च कुर्व्वीतन्यग्रोधाश्वत्थ किंशुकान्। शाल्मलीन्शालतालांश्च क्षीरिणश्चैवपादपान्॥२४६॥

सीमावृक्षांश्चेत्यादि।२४६। न्यग्रोधादीन्पादपान्*सीमावृक्षान्कुर्य्यात्*तथासीमाननश्यति*यद्वा क्षीरिणःत्वग्नेषांवृक्षाणाम्॥१॥२४६॥

गुल्मान्वेणूंश्चविविधान्शमीवल्लीस्थलानिच।शरान्कुब्जकगुल्मांश्चतथासीमाननश्यति॥२४७

गुल्मानित्यादि।२४७। स्थलानिनिम्नोन्नतानि*सेतुस्थपाणिवद्भ्रकगुल्मान्नृतम*इत्यविभ्यप्रानिति।१।२४७।

तडागान्युदपानानिवाप्यःप्रस्रवणानिच। सीमासन्धिषुकार्य्याणिदेवतायतनानिच॥२४८॥

तडागानीत्यादि।२४८। सीमासन्धिषुतडागादीनियथा*सम्भवंकार्य्याणिवा।१।२४८।

उपच्छन्नानिचान्यानिसीमालिङ्गानिकारयेत्। सीमाज्ञानेनृणांवीक्ष्यनित्यंलोकेविपर्य्ययम्॥२४९॥

उपच्छन्नानीत्यादि।२४९। उपच्छन्नानान्यानिच*सीमालिङ्गानिवक्ष्यमाणानिनृणां*सीमाज्ञानेलोके नित्यं*विपर्य्ययंवीक्ष्यकारयेत्।१।२४९।

अश्मनोऽस्थीनिगोबालांस्तुषान्भस्मकपालिकाः।करीषमिष्टकाङ्गारांश्शर्करावालुकास्तथा२५०
यानिचैवंप्रकाराणिकालाद्भूमिर्नभक्षयेत्। तानिसन्धिषुसीमायामप्रकाशानिकारयेत्॥२५१

अश्मनोऽस्थीनीत्यादि।२५०।२५१। अश्मादीनितत्प्रकाराणियानिद्रव्याणि * भूमिर्मृत्तिकाकालाच नभक्षयेत् * तानिद्रव्याणि*ग्रामयोः * सन्धिषुसीमायामेव।१। भूमौगर्त्तंकृत्वातत्रसंस्थापयेत् * प्रकाशानि कारयेत्।२।२५०।२५१।

एतैर्लिङ्गैर्नयेत्सीमांराजाविवदमानयोः। पूर्व्वभुक्त्याचसततमुदकस्यागमेनच॥२५२॥

एतैरित्यादि। २५२। इत्येवं प्राक्कृतसीमालिङ्गे ग्रामे* सीमां प्रतिविवादे तु* राजा यथाकार्य्यं ज्ञात्वा* एतैर्लिङ्गै रित्यादि। १। २५२। एतैर्लिङ्गै राजा सीमां* प्रतिविवदमानयोः* सीमां नयेत् प्रापयेत्। १। पूर्व्वभुक्त्या पूर्व्वं ययोः सीमां भुङ्क्ते* तयोः सीमां राजा नयेत्* उदकस्य सततमागमेन च* राजा सीमां नयेत् प्रापयेत्॥ २५२॥

यदि संशय एव स्याल्लिङ्गानामपि दर्शने। साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः॥२५३॥

यदीत्यादि। २५३। यद्येवं सीमालिङ्गदर्शने राज्ञः* संशयः स्यात्तदा साक्षि* प्रत्ययः सीमावादस्य* विनिर्णय एव स्यात्। १। २५३। कथं साक्षी नयेदित्यत आह*।

ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥२५४॥

ग्रामीयकेत्यादि। १। २५४। ग्रामीयजनसमूहस्य समक्षं साक्षिणः सीम्नि विषये तयोर्विवादिनोः सीमा* ... प्रष्टव्याः। १। २५४।

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम्। निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः॥२५५॥

ते पृष्टास्त्वित्यादि। २५५। ते समस्ताः सीम्नि साक्षिणो निश्चयं* यथा ब्रूयुस्तथा सीमां* तांश्च साक्षिणो नामतो* निबध्नीयात् लिखित्वा लिखेत्। १। २५५।

शिरोभिस्ते गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः। सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्॥२५६॥

साक्ष्यग्रहणप्रकारमाह* शिरोभिरित्यादिश्लोके॥१॥०॥२५६॥०॥ ते सीम्नि साक्षिणो मृद्भिः* पुष्पमाल्याः स्रग्विणो रक्तवाससः* सन्त ऊर्व्वीं लोष्ट्रं शिरोभिर्गृहीत्वा* स्वैः स्वैः सुकृतैः शापिताः॥१॥ यद्यानृतं ब्रूयुस्तदा* सर्व्वं सुकृतं वो निष्फलं भवेदित्येवं शपथं कारिता* सीम्नि समञ्जसं नयेयुः। २॥ २५६॥

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्॥ २५७॥

यथोक्तेनेत्यादि। २५७। ते सत्यसाक्षिणो यथोक्तेन समञ्जसं नयन्तः पूयन्ते* विपरीतं नयन्तस्ते* द्विशतपणानां दण्डं* तान् दापयितव्या इति। १। २५७।

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः। सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ२५८

साक्ष्याभाव इत्यादि। २५८। समन्तभवाः सामन्ताः* साक्ष्यभावे तस्य ग्रामस्य* चतसृषु दिक्षु ये च। १। चत्वारो ग्रामास्तेषु च* सामन्तवासिनो* राजसन्निधौ प्रयताः* सन्तस्ते सीमाविनिर्णयं कुर्युः। २। २५८।

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्। इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥२५९

सामन्तानामित्यादि ॥ २५९ ॥ तद्ग्रामसीमाभिज्ञानां *सामन्तानां समन्ताद्भवानां नृणां*मभावे तद्ग्राम स्थौ*मूलभूतानां साक्षिणामप्यभावे ॥ १ । वनगोचरानिमान्वक्ष्यमाणान्*पुरुषाननुयुञ्जीत ॥ २ ॥ २५९ ॥

व्याधाञ्छाकुनिकान् गोपान्कैवर्त्तान्मूलखानकान्। व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ॥ २६० ॥

व्याधानित्यादि । २६० । स्पष्टार्थोऽयं श्लोकः ॥ २६० ॥

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्। तत्तथा स्थापयेद्राजा धर्म्मेण ग्रामयोर्द्वयोः॥२६१॥

ते पृष्टा इत्यादि ॥ २६१ ॥ ते व्याधादयः पृष्टाः सीमासन्धिषु*लक्षणं यथा ब्रूयुः तत्*तथा राजा धर्म्मेण व* ग्रामयो द्वयोः सीमां स्थापयेदेव १ । २६१ ।

क्षेत्रकूपतडागानामारामस्य गृहस्य च। सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः॥ २६२ ॥

क्षेत्रेत्यादि । २६२ । क्षेत्रादीनां सीमासेतुविनिर्णयः*सामन्तप्रत्ययो ज्ञेयः । १ । २६२ ।

सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम्। सर्व्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम् २६३

सामन्ताश्चेदित्यादि । २६३ । क्षेत्रादीनां सेतौ विवदतां नृणां *सामन्ताः स्वबुद्धिगुणसिमोद्या* चेद् ब्रूयुस्तदा ते पृथक् पृथक्प्रत्येकं *सर्व्वे राज्ञा मध्यमसाहसं दण्ड्याः । १ । विवदतामिति परस्मैपदं * तद्विवादिनामनित्यत्वमा*वाचित्वद्योतनार्थं*ज्ञानुबन्धेनज्ञापितत्वात् । २६३ ।

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ २६४ ॥

गृहमित्यादि २६४ । गृहादीनि भयजनन*व्यापारेण ज्ञानतो हरन् * ताम्रपणानां शतानि*पञ्च राज्ञा दण्ड्यो भवति । १ । अज्ञानाद्गृहादीनि हरन् द्विशती * दमस्ताम्रपणानां व*शतद्वयं दण्ड्यः स्यात् । २ । २६४ ।

सीमायामविषह्यायां स्वयं राजैव धर्म्मवित्। प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः२६५

सीमायामित्यादि । २६५ । सीमायां लिङ्गसाक्ष्याद्यभावे ख*ल्वविषह्यायां निर्णेतु* मशक्यायां सत्यां धर्म्म* वित् राजा स्वयमेवैषां *विवादिनामुपकारात् । १ । यावन्तं भूमिं वादि*स्तावतीं भूमिमनात *प्रदिशेत्प्रदद्या दिति व्यवस्थितिः । २ । २६५ ।

एषोऽखिलेनाभिहितो धर्म्मः सीमाविनिर्णये । अत ऊर्द्ध्वं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयम् ॥ २६६ ॥

एष इत्यादि । सीमाविवादमपसंहरति एषो * ऽखिलेनाभिहित इति * अत ऊर्द्ध्वं दुष्टं वाक्पारुष्यनिर्णयं वक्ष्यामि ।१। २६६ ।

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति । वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥२६७॥

शतमित्यादि । २६७ । यथायथावचनेन * वाक्युद्धार्थं तमाह * इत्यनेन वाक्पारुष्यं स्यात् । १ । क्षत्रियो ब्राह्मणस्याक्रोशमभ्यस्य * वाचोच्चैः कृत्वा ताम् * पणानां शतं दण्डमर्हति ।२। वैश्योऽप्यर्द्धशतं सार्द्धं * शतं ताम् सार्द्धपणानां * द्वे वा शते दण्डमर्हति । ३ । शूद्रस्तु वधं वधस्थानं पुनः * छिद्रं पारुष्यानुरूपं छेदनादि * कारणमर्हति ॥ ४ ॥ २६७ ।

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने । वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥२६८॥

पञ्चाशदित्यादि । २६८ । ब्राह्मणः क्षत्रियस्याभिशंसने वाक्पारुष्ये कृते ताम्रमयानां पणानां पञ्चाशद्दण्ड्यः ।१। वैश्यस्याभिशंसने ब्राह्मणोऽर्द्धपञ्चाशत् * शतपणानिदण्ड्यः स्यात् * शूद्रेऽभिशंसने ब्राह्मणस्य दमः * स च द्वादश पणाः । २ । २६८ ।

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे । वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥ २६९ ॥

समवर्ण इत्यादि । २६९ । द्विजातीनां समवर्णे * वाचा व्यतिक्रमे ताम्र * पणानि द्वादश दमः ॥ १ ॥ समवर्णे द्विजातीनां * अवचनीये पुमाता * भगिन्यादीनामश्लील * शब्दैर्वादे पूर्वदण्डं पुनरपि च । २ । प्रथमसन्निदिष्टं शतं * मे वर्द्धिगुणं ताम्रमापणशतद्वयं दण्डः स्यात् । ३ । २६९ ।

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् । जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ २७०

एकजातिः शूद्रो वाचा * दारुणयाऽत्युत्कटया * श्रुतिविरुद्धया निष्ठुरया द्विजातीन् ब्राह्मणक्षत्रियवैश्यान् * नाक्षिपन् तिरस्कुर्वन् । १ । जिह्वायाश्छेदमाप्नुयात् कस्मादिति * हि यस्मात् स जघन्यान् पादाच्छूद्रोत्पन्न * अतः स्वामिनो भवन्ति । २ । २७० ।

नामजातिग्रहं त्वेषामभिद्रोहेण कुर्व्वतः । निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ २७१ ॥

नामेत्यादि। २७१। एषां ब्राह्मणादीनां द्विजातीनां *अभिद्रोहेणाभिभवेन * नामजातिग्रहं कुर्व्वतः ॥ दशाङ्गुलायामो वह्नितप्तः शङ्कुः मुखाभ्यन्तरे। १। अर्थादयोमयशङ्कुः *ज्वलन्नग्निना ज्वलन्नपि* दीप्यमानो निक्षेप्यः स्यात्। २। २७१।

धर्म्मोपदेशं दर्पेण विप्राणामस्य कुर्व्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥ २७२॥

धर्म्मोपदेशमित्यादि। २७२। अस्य एकजातेः शूद्रस्य *दर्पेणाभिमानेन विप्रान् *प्रति धर्म्मोपदेशं कुर्व्वतोऽस्य वक्त्रे श्रोत्रे च तप्तं तैलं तु *पार्थिवो नृपः आसेचयेत्। १। २७२।

श्रुतं देशञ्च जातिञ्च कर्म्म शारीरमेव च। वितथेन ब्रुवन्दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥२७३॥

श्रुतमित्यादि। २७३। देशञ्च जातिञ्च शारीरं कर्म्म च *यथाश्रुतं तद्वितथेनानृतेन * ब्रुवन् सवर्णएव दमं *पणानां द्विशतं दाप्यः। १। २७३।

काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम्। तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम् २७४

काणमित्यादि। २७४। काणादिकं तमितान् जनान् तथ्येनापि* काणादीन् ब्रुवन् मनुष्यः सर्व्व * एव कार्षापणावरं न्यूनकल्पेनावमं कार्षापणमिति एकं दण्डं दाप्यः स्यात्। १। २७४।

मातरं पितरं जायां भ्रातरं तनयं गुरुम्। आक्षारयञ्छतं दाप्यः पन्थानं चाददद्गुरोः ॥२७५॥

मातरमित्यादि। २७५। ...दुष्टं *मातादिकं ततएवाक्षारयन् *आक्षारणम्* यन... * तथाक्रुष्टः ...पणानां शतं दाप्यः। १। ...आक्रोशमैथुनं प्रति। इति। गुरोर्गच्छतः पन्थानञ्च न ददत्* पणानां शतं दाप्यः स्यात्। २। २७५।

ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता। ब्राह्मणे साहसः पूर्व्वः क्षत्रिये त्वेव मध्यमः ॥२७६॥

ब्राह्मणेत्यादि। २७६। ब्राह्मणक्षत्रियाभ्यां वाक*पारुष्ये ब्राह्मणे क्षत्रियसापेक्षे साहसः *क्षत्रिये ब्राह्मणापेक्षे मध्यमः साहसो दण्डः *दण्डं विजानता राज्ञा कार्य्य एव। १। २७६।

विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः। छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः ॥ २७७॥

विडित्यादि। २७७। विट्शूद्रयोर्मिथो वाक्पारुष्ये *विशि शूद्रापेक्षे साहसः शूद्रे विशोऽपेक्षे मध्यमः *साहसो दण्डो राज्ञा

अवनिष्ठीवतइत्यादि ।२८२। अपकृष्टजइतिविभक्तिविपरिणामादनुवृत्तिः ।१। उत्कृष्टस्यगात्रे दर्पा*दव ष्ठीवतोऽपकृष्टस्यशूद्रस्य*द्वावोष्ठौ नृपश्छेदयेत् ॥ २॥ उत्कृष्टस्यब्राह्मणादे * गात्रेऽवमूत्रयतोऽपकृष्टजस्य* शूद्रस्यमेढ़ं नृपश्छेदयेत् ॥ ३॥ उत्कृष्टस्यब्राह्मणादेर्गात्रे पायु*नावशब्दयतोऽपकृष्टजस्य * शूद्रस्यगुदं नृपतिश्छेदयेत् ॥ ४॥ २८२॥

केशेषुगृह्णतोहस्तौच्छेदयेदविचारयन्। पादयोर्दाढिकायाञ्चग्रीवायांवृषणेषुच ॥ २८३॥

केशेष्वित्यादि॥ २८३॥ उत्कृष्टस्यब्राह्मणादेः*हिंसार्थं केशेषुद्वयोः*पादयोर्दाढिकायांवा*ग्रीवायां वृषणेषुवा*गृह्णतोऽपकृष्टजस्य*शूद्रस्यहस्तौछेदयेत् ॥ १॥ २८३।

त्वग्भेदकःशतंदण्ड्यो लोहितस्यचदर्शकः। मांसभेत्तातुषण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः॥ २८४॥

त्वग्भेदकइत्यादि ।२८४। उत्कृष्टस्यब्राह्मणादे*र्विनारक्तपातं त्वग्भेदकोऽथवा* लोहितस्यदर्शको योऽपकृष्टजःशूद्रःसपणशतंदण्ड्यः ।१। योमांसभेत्तासषण्णिष्कान्दण्ड्यःस्यात् * योऽस्थिभेदकःसराष्ट्रात् * प्रवास्यः ।२। इतिवाक्पारुष्यादण्डपारुष्ययो*र्विद्विजशूद्रयोर्दण्ड*उक्तःसमाधीतवेद*पारगेच ब्राह्मणेस्व*कर्म्मस्थेचक्षत्रियेवैश्येच ।३। नवममब्राह्मणेब्राह्मणब्रुवेच*तत्रयथायोगंदण्ड*उन्नेयोनत्वयोमय *शङ्कुतप्ततैलाङ्गच्छेदाः ।४। २८४।

वनस्पतीनांसर्व्वेषामुपभोगोयथायथा। तथातथादमःकार्य्योहिंसायामितिधारणा॥२८५॥

वनस्पतीनामित्यादि ।२८५। वनस्पतीनां वटादीनांयथा*यथोपभोगस्तथातथादमः* कार्यइतिहिंसा यामवधारणम् ।१। २८५।

मनुष्याणांपशूनाञ्चदुःखायप्रहृतेसति। यथायथामहद्दुःखंदण्डंकुर्य्यात्तथातथा ॥ २८६॥

मनुष्याणामित्यादि ।२८६। द्विजातिवर्ज्जं मनुष्याणां*पशूनाञ्चदुःखायकृते*प्रहारे यथायथादुःखं*तथा तथादण्डंकुर्य्यात् ।१। २८६।

अङ्गावपीड़नायाञ्चव्रणशोणितयोस्तथा। समुत्थानव्ययंदाप्यःसर्व्वदण्डमथापिवा ॥२८७॥

अङ्गावपीड़नायाञ्चेत्यादि। २८७। मनुष्याणां द्विजभिन्नानांपशूनां * चाङ्गावपीड़नायां भङ्गादौव्रण *

मोषितयोः*तयोश्च*यावत्ताकाले ननसा। १। पूर्व्वबलमबलस्थानं सा*नावत्काल पथ्यौषधादिषुयावान्*व्ययोभव तिताबन्तं*मथ पीडादि- द्रापाः। २। अथवातस्यापार्ज नहानादिकं*सर्व्वदण्डं सदापाःस्यात्। १। २८७

द्रव्याणिहिंस्याद्योयस्यज्ञानतोऽज्ञानतोपिवा। सतस्योत्पादयेत्तुष्टिं राज्ञोदद्याच्चतत्समं॥ २८८॥

द्रव्याणीत्यादि। २८८। ज्ञानतोऽज्ञानतोवायोयस्यद्रव्याणिहिंस्यात्*क्षिप्रादिना सतस्मोत्पादयेत्तुष्टिं तत्पाद्येत्* यावतार्थं नष्टं कमगतन्तद्द्यासम राज्ञोदद्यात्। १। २८८।

चर्म्मचार्म्मिकभाण्डेषुकाष्ठलोष्ट्रमयेषुच। मूल्यात्पञ्चगुणोदण्डःपुष्पमूलफलेषुच॥२८९॥

चर्म्मेत्यादि। २८९। चर्म्मादिषुनष्टेषुकृतेषुतस्य*मूल्यात्पञ्चगुणोदण्डः*पुष्पादिषुचनष्टेषु* मूल्यात्पञ्च गुणोदण्डः। १। २८९।

यानस्यचैवयातुश्चयानस्वामिनएवच। दशातिवर्त्तनान्याहुःशेषेदण्डोविधीयते॥ २९०॥

यानस्येत्यादि। २९०। यानस्यरथादेर्यातुश्च*नरश्वादिनायोयानितस्य* तद्रथादियानस्वामिनश्चेति* त्रयस्यवक्ष्यमाणानि*। १। छिन्ननास्यादीनिदश*दण्डमतिवर्त्तनानि * दण्डोनास्तितिदण्डवर्ज्जाण्याहुर्मन्वादयः* शेषेदण्डोविधीयते। २। २९०॥ दशानाह।

छिन्ननास्येभग्नयुगेतिर्य्यक्प्रतिमुखागते। अक्षभङ्गेचयानस्यचक्रभङ्गेतथैवच॥२९१॥

छेदनेचैवयन्त्राणांयोक्त्ररश्म्योस्तथैवच। आक्रन्देचाप्यपैहीतिनदण्डंमनुरब्रवीत्॥२९२॥

छिन्नेत्यादि॥ २९१॥ नासागतायायारज्ज्वबलिवर्द्दादीनां तच्छेदनेदण्ड *मनुर्नाब्रवीत्रथादेर्युगा ख्यो* काष्ठभङ्गेदण्डंनास्ति। १। तस्मिन्युगेपर्य्यादोषा* अब्रवीत्यर्थ्यागते प्रतिमुखागतेच * दण्डंनाब्रवीत्अ क्षभङ्गे * चक्रभङ्गे दण्डंनाब्रवीत्। २। २९१। रथादियानस्यायन्त्राणां चर्म्मादि * वन्धनानां छेदनेदण्डं नमनु*रब्रवीद्योक्त्रा रथादौवाहन * वन्धनस्य छेदनेदण्डंनाब्रवीत्॥ १॥ रश्मेःप्रग्रीवारज्ज्वाश्छेदने दण्डंनाब्रवीत *रथादौचालामानेव। २। नरादीनांपथोऽपसरणार्थं * अपैहीतां वंसारथेराक्रन्दे उच्चैः शब्दे पथोऽनपसरतां * प्राणिनां व्यापादनेदण्डमब्रवीत्। ३। २९२।

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः । प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ २९९ ॥

भार्य्येत्यादि ॥ २९९ ॥ भार्य्यादयः प्राप्तापराधा रज्ज्वा * वेणुदलेन वा ताड्याः स्युः । १ । २९९ ।

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन । अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥ ३०० ॥

पृष्ठतस्त्वित्यादि । ३०० । देहिकताडनादौ दण्डे कर्त्तव्ये * शरीरस्य पृष्ठतस्ताड्या भवन्ति * न कदाचनोत्तमाङ्गे ॥ १ ॥ अतोऽन्यथा पृष्ठा * दन्यत्र प्रहरन् * चौरकिल्बिषं दण्डं प्राप्तो भवति । २ । ३०० ।

एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः । स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णये ॥ ३०१ ॥

एष इत्यादि । एष इत्यादिना दण्डपारुष्यविषयस्योपसंहारः कृतः * उर्द्ध्वमतः स्तेनस्य * विधिर्दण्डनिर्णय उच्यते ॥ १ ॥ ३०१ ॥

परमं यत्नमातिष्ठेत् स्तेनानां निग्रहे नृपः । स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्द्धते ॥ ३०२ ॥

परममित्यादि । ३०२ । नृपः स्तेनानां चौराणां निग्रहे * परमं यत्नमातिष्ठेत् * किमर्थं स्तेनानां निग्रहे कृते ऽस्य * यशो राष्ट्रञ्च वर्द्धते ॥ १ ॥ ३०२ ।

अभयस्य हि यो दाता स पूज्यः सततं नृपः । सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥ ३०३ ॥

नतु किमर्थं स्तेननिग्रहे राजा * परमयत्नमातिष्ठेत् * इत्यत आह अभयस्येत्यादि । १ । ३०३ । हि यस्मात् स्तेनानां निग्रहे प्रजानां * मभयं भवेदभयस्य * दाता यो भवति स च * नृपः सततं पूज्यः स्यात् । १ । कस्मात् हि यस्मात् तस्य * नृपस्याभयदक्षिणं * सत्रं वर्द्धते । २ । ३०३ । कथमित्यत आह ।

सर्व्वतो धर्म्मषड्भागो राज्ञो भवति रक्षतः । अधर्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥ ३०४ ॥

सर्व्वत इत्यादि ॥ ३०४ ॥ प्रजा रक्षतो राज्ञः सर्व्वतः * प्रजानां धर्म्मात् षड्भागो धर्म्मो * लब्धो भवतीत्यस्या * भयदक्षिणं सत्रं स्यात् ॥ १ ॥ चास्मात् हि यस्मात् प्रजा अरक्षतोऽस्य * नृपस्य सर्व्वतः प्रजाभिः कृतात् * पाप धर्म्मात् षड्भागोऽधर्म्मो लब्धः स्यात् । २ । ३०४ । कस्तोधर्म्म * इत्यत आह ।

यदधीते यद्यजते यद्ददाति यदर्च्चति । तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥ ३०५ ॥

यदधीत इत्यादि ॥ १ ॥ ३०५ । ब्राह्मणः क्षत्रियो वैश्यः प्रजा * नित्यं यदधीते यद्देवादीनग्नि * होतादिना

यजते यच्च ददाति ॥ १ ॥ यद्वर्त्तितं साधयनादि षड्भागे कभागभाक्प्रजानां * समारक्षणाद्राजा भवेत् । ३०५ ।

**रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् । यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ ३०६ ॥**

रक्षन्नित्यादि । ३०६ । राजा भूतानि धर्मेण * रक्षन् वध्यांश्च घातयन् तदा लक्षं सहस्रशतदक्षिणैः * यज्ञैः राजा त्वहरहः * यजते इति रक्षणनिग्रहेऽपि धर्मः । १ । ३०६ । प्रजानामरक्षणे दोषमाह ।

**योऽरक्षन्बलिमादत्ते करं शुल्कञ्च पार्थिवः । प्रतिभागञ्च दण्डञ्च स सद्यो नरकं व्रजेत् ॥ ३०७ ॥**

योऽरक्षन्नित्यादि । १ । ३०७ । प्रजा अरक्षन् यः पार्थिवः करं * शुल्कं प्रतिदिनं भागं दण्डञ्च * बलिमादत्ते स राजा * सद्यो नरकं व्रजेत् । १ । ३०७ ।

**अरक्षितारं राजानं बलिषड्भागहारिणम् । तमाहुः सर्व्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥**

अरक्षितारमित्यादि । ३०८ । प्रजानामरक्षितारं * बलिषड्भागादिहारिणं * तं राजानं धर्म्मज्ञाः सर्व्वलोकस्य * समग्रमलहारकं * आहुः तस्मात्प्रजा रक्षेत् । १ । ३०८ ।

**अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम् । अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥ ३०९ ॥**

अनपेक्षितेत्यादि ॥ ३०९ । येन शास्त्रादिमर्य्यादा नापेक्षिता * विप्रलुम्पकं चारचौराद्यन्तं * ईदृशं नृपमधोगतिं विद्यात् । १ । ३०९ ।

**अधार्म्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः । निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥**

अधार्म्मिकमित्यादि । ३१० ॥ राजा त्रिभिर्विधिभिरधार्म्मिकं * प्रयत्नतो निगृह्णीयात् । प्रथमं निरोधेन कारागारे बन्धनेन * द्वितीयं बन्धनेन * तृतीयं विविधेन * वधेन निष्पीडनेन निगृह्णीयात् । १ । अधार्म्मिकाश्चाटतस्करादयश्च * महासाहसिककायस्थादयस्तैः पीड्यमानप्रजारक्षणार्थमेव * राजा तान् त्रिभिर्न्यायैर्निगृह्णीयात् । २ । उक्तं हि याज्ञवल्क्येन * चाटतस्करदुर्वृत्त * महासाहसिकादिभिः । पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः । इति । ३ । तत्र कायस्थानां विशेषतः * इत्युक्तं चाटतस्करादिभ्योऽपि * अधिकप्रजापीडकाः कायस्था इत्यर्थः । ४ । उक्ताः चाटतस्करादयो * न सन्ति सर्व्वजातिषु । पापवशात् * कश्चित्कश्चित्तथाविधो भवति । ५ । कायस्थास्तु प्रागुत्पत्तावेव जाता * लोकक्षयपरा इत्यादि स्कन्देऽकत * स्वभावा एव भगवता सृष्टाः । ६ । तस्मात्कायस्थेभ्यो विशेषतः प्रजा राजा रक्षेदिति * यथा मनुसंहितायां * तेषां प्रागुत्पत्तिर्यथा वक्ष्यते । ७ ।

...यदि स्नात्वा राजसन्निधानं गच्छेत । २ । ३१४ । तदा राजा स्वयं स्कन्धे न च मुषलादिना तमप्रमादायैव ।१।३१५।
...मुषलादिनिहस्तेन तन्मुषलादिनाहतमेन * प्राघनात्ताडनात्तन्मुषलादिनाहतमम * हस्तेन तं स्तेनपति
त्रिमोच्यात्क्षेपणाद्वा ॥ १ ॥ तेन स्तेनो जीवति म्रियते वा* स्तेयात्पापात्तु विमुच्यते । २ । राजा यत
स्तेनमशासित्वा तस्मा* स्तेनस्य पापमाप्नोति ॥ ३ ॥ ३१६ ।

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी। गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ३१७

अन्नादे भ्रूणहेत्यादि ।३१७ भ्रूणहा यस्तस्यान्नं योऽत्ति तन्नादे यतिस्मिन्भ्रूणहा* स्वस्य भ्रूणहत्यापापं मार्ष्टि
...या अपचारिणी भार्या* सा पापं पत्यौ च मार्ष्टि ॥ १ ॥ शिष्यश्च याजश्च यत्पापं करोति* तद् गुरौ मार्ष्टि स्तेनस्तु*
किल्बिषं राजनि मार्ष्टि मार्जनां कृत्वा क्षिपति तस्मात्स्तेनशासनं राजा कुर्यात् । २ । ३१७ ॥

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥३१८॥

राजेत्यादि । ३१८ । सुकृतिनः सन्तो यथा * स्वर्गं यान्ति तथा मानवाः पापानि* कृत्वा राज्ञा निधृतदण्डाः*
निर्मलाः स्वर्गं यान्ति। १ । ३१८ ।

यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्। स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्समाहरेत् ३१९

यस्त्वित्यादि । ३१९ ॥ यः कूपाज्जलोत्थापनार्थं रज्जुं *घटञ्च हरेत् प्रपां पानीयशालां * यश्च बलेन भिन्द्यात्
स तावत्सः* माषं पञ्चकृष्णलिकं दण्डं आप्नुयात् । १। तच्च रज्जुं घटं हृत्वा प्रपां *तस्मिन्स्थाने समाहरेत्*प्रपां कुर्यात्
रज्जुघटौ*पानीयतत्प्रदद्यात् । २ । ३१९ ।

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः। शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम्॥३२०

धान्यमित्यादि ।३२०। दशभ्यः कुम्भेभ्योऽधिकं *धान्यं हरतश्चौरस्य*शरीरे वधस्थाने वधो दण्डः स्यात्*न हस्त
च्छेदनं दण्डः ।१। कुम्भोऽत्र द्रोणः पञ्चकृष्णलिकमाषपाणा*सर्पोमायस्तोलकं ।३। चतुःषष्टितोलकस्तु* शरावः स्यात् द्वावि
मच्छरावाद्द्रोणो * मानानभिज्ञः प्रमादीव*व्याचष्टे द्विपलशतं *द्रोणो विंशति द्रोणः कुम्भः । २ । तन्मानशास्त्रे
तदनुतला*इतो दशद्रोणधान्या* धिकधान्याच्छेषे दश * द्रोणपर्यन्तधान्यानां हरणे । ३ । हृतधान्यादेका
दशगुणं धान्यं हर्ता दाप्यः* स धान्यस्वामिनो*तद् हृतं धान्यं धनं स चौरो राज्ञा दाप्यः । ४ । ३२० ।

तथा धरिममेयानां शतादभ्यधिके वधः। सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् ॥ ३२१॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥३२२॥

तथेत्यादि। ३२१। सुवर्णरजतादीनां *वाससामुत्तमानाञ्च*धरिमाणां तौलदण्डेन मेयानां * पलशतादभ्यधिके हृते चौरस्य तथा वधः। १। नवगुडकमेयानां *वधोऽपि प्राणनाशो*न हस्तच्छेदनं तस्य* पञ्चाशतोऽधिके हृते विधानात्। २। ३२१। पञ्चाशतइत्यादि। ३२२। सुवर्णरजतादीनां * वाससामुत्तमानाञ्च धरिममेयानां पलपञ्चाशतोऽभ्यधिके हृते चौरस्य*हस्तच्छेदनमिष्यते ॥ १ ॥ शेषे पलपञ्चाशत्पर्यन्ते स्वर्ण*रजतादीनां वाससां* उत्तमानाञ्च हरणे चौरस्य हृतद्रव्यस्य*मूल्यादेकादशगुणं *राजा दण्डं प्रकल्पयेत्। २। ३२२।

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः। मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति ॥ ३२३॥

पुरुषाणामित्यादि। ३२३। सत्कुलीनानां पुरुषाणां *नारीणाञ्च सत्कुलीनानां *विशेषतो मुख्यानाञ्चैव * रत्नानां मरकतादीनां। १। हरणे चौरो वधमर्हति प्राणनाशमेव न तु छेदनम्। २। ३२३।

महापशूनां हरणे शस्त्राणामौषधस्य च। कालमासाद्य कार्यञ्च दण्डं राजा प्रकल्पयेत् ॥ ३२४।

महापशूनामित्यादि ॥ ३२४ ॥ महापशूनां हस्त्यश्वादीनां *शस्त्राणां खड्गादीनामौषध* स्यापि हरणे कालं*कार्यञ्चासाद्य राजा। १। कालानुरूपं कार्यानुरूपञ्च* दण्डविशेषं प्रकल्पयेत् ॥ २ ३२४।

गोषु ब्राह्मणसंस्थासु छुरिकायाश्च भेदने। पशूनां हरणे चैव दण्डः कार्योऽर्द्धपादिकः ॥ ३२५

गोष्वित्यादि। ३२५। ब्राह्मणसंस्थासु गोषु*ब्राह्मणानां स्वहे पुंस्थितासु गोषु*छुरिकायाः क्षुद्रशस्त्र* विशेषाभेदने ब्राह्मणगवामङ्गभङ्गे ॥ १ ॥ पशूनाञ्च हरणे ऽर्द्धपादिको * यथायोग्यं मूल्यं तस्याम् * तासां पादस्यार्द्धं सद्योदण्डः कार्यः स्यात् ॥ २ ॥ ३२५ ॥

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च। दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६
वेणुवैदलभाण्डानां लवणानां तथैव च। मृन्मयानाञ्च हरणे मृदो भस्मन एव च ॥ ३२७
मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च। मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥३२८
अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च। पक्वान्नानाञ्च सर्व्वेषां तन्मूल्याद्द्विगुणो दमः ३

छत्रेत्यादि ॥ ३२६ ॥ ३२७ ॥ ३२८ ॥ ३२९ ॥ छत्रादीनां पक्वान्नान्तानां हरणे * तन्मूल्याद्विगुणो दमो * मूल्यन्तु स्वामिने दाप्यो*दापास्तमाचतज्जनमितानुवृत्ते: । १ । ३२६ । ३२७ । ३२८ । ३२९ ।

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च । अन्येष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥

पुष्पेष्वित्यादि । ३३० । हरिते हरिद्रार्द्रकादौ * नहरिद्वर्णे धान्ये गुल्मादि* पुनां षुचापरिपूतेषु*पञ्चकृष्णलकोदण्डःस्यात् । १ । ३३० ।

परिपूतेषु धान्येषु शाकमूलफलेषु च । निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः ॥ ३३१ ॥

परिपूतेष्वित्यादि । ३३१ । धान्येषु पुलाकादितः*परिपूतेषु शाकादिषु च परि*पूतेषु निरन्वये स्वामिने जन*हीने सति हृतेषु । १ । कृष्णलानां शतं दण्डो राज्ञा कार्यः*सान्वये ऽर्द्ध शतं दमः * पञ्चाशत्कृष्णलानाम् । २ । ३३१ । ननु कथं निरन्वये शतं दण्डः* सान्वये ऽर्द्धशतमिति*तत्राह ।

स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् । निरन्वयं भवेत्स्तेयं हृत्वापह्नूयते च यत् ॥ ३३२ ॥

स्यादित्यादि । १ । ३३२ । अन्वयवत्स्वामिनो जनान्वितं * प्रसभं हठाद्यत्कर्म कृतं स्या*त्तत्सहसा कृतत्वात् साहसं स्यात् । १ ॥ १ । निरन्वयं स्वामिनो जनहीनं य * द्द्रव्यं हृत्वापह्नूयते * तत्कर्मस्तेयं भवे*त्ता प स्तेयसाहसयोर्भेद उक्तः । २ । ३३२ ।

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः । तमाद्यं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥ ३३३ ॥

यस्त्वित्यादि । ३३३ । यो नरस्त्वेतानि सूत्रकार्पासादि*परिपूतशाकमूल*फलान्तानि द्रव्याण्युप*क्लृप्ता निर्भागार्थं क्लृप्तानि*कृतानि स्तेनयेच्चोरयेत् । १ । तं नरमाद्यं प्रथमं *साहसं राजा दण्डयेत् * मूल्याद्विगुणो दमस्त्वनुपक्लृप्त*छत्रादिहरणे प्रयुक्तः । २ । यश्चोपक्लृप्तमग्निं गृहादग्निहोत्रगृहं प्रं*चोरयेत्तं च प्रथमं * साहसं राजा दण्डयेत् । ३ । ४ ३३३ ।

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते । तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥ ३३४ ॥

स्तेनो येन येनाङ्गेन नृषु यथा विचेष्टते *विपर्यासचेष्टां करोति पार्थिव* स्तस्य नरस्य प्रत्यादेशाय । १ । पापस्य तत्कर्मकारणस्य रक्षणाय तत्तदेवाङ्गं हरेत् । २ । ३३४ ।

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ३३५

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥ ३४८ ॥

शस्त्रमित्यादि । ७४८ । द्विजातीनां वर्णानां कालेन*कारिते विप्लवे यत्र धर्म*उपरुध्यते तत्र*द्विजाति-
शस्त्रं ग्राह्यम् । १ । ७४८ । किमर्थं द्विजातिभिः*शस्त्रं ग्राह्यमित्यत*आह ।

आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च धर्मेण घ्नन्न दुष्यति ॥ ३४९ ॥

आत्मनश्चेत्यादि ॥ १ ॥ ७४९ ॥ द्विजातिर्ब्राह्मणः क्षत्रियो वैश्यो वा*आत्मनः परित्राणे च* दक्षिणानामपहृत-
जनानां च परित्राणे *स्त्रीविप्राभ्युपपत्तौ च ॥ १ ॥ शस्त्रं गृहीत्वा साहसिकं घ्नन्* धर्माद् न पतति तस्मात्*द्वि-
जातिभिः शस्त्रं ग्राह्यम् ॥ २ ॥ ७४९ ॥

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ३५० ॥

गुरुमित्यादि ॥७५०॥ प्रमादिनो व्याचक्षते *आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः । वधस्तत्र तु नैव स्यात्
पापे हीने वधो भृगुः ॥ इति कात्यायनेनोक्तम् इत्यस्य वचनस्य व्याख्या कृता । ते न ब्राह्मणं वा बहुश्रुत * मित्यत्र
श्रुतं तपः *स्वाध्यायजन्मनो हीनं वै ब्राह्मण* मातताथिनं हन्यादेवावि* विचारः कार्य इति ॥ ३ ॥ बहुश्रुतं
ब्राह्मणं त्वाततायिनं *न हन्यादिति तन्न सत्*वसिष्ठोक्तेन विरोधात् ॥ ४ ॥ वसिष्ठेन स्मर्यते यथा *अग्नि-
दो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः । ५ ॥ आततायिनमायान्तमपि वेदान्तपार-
गम् ॥ जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ ६ ॥ स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छति । इति । उभयत्र मनुवसिष्ठवचने * आततायिनमायान्तमित्यत्र *
यस्य गृहेऽग्निदानाद्यर्थमायाति ॥ ८ ॥ तं गुरुं वा बालं वा वृद्धं वा बहु*श्रुतं वेदान्तपारगं *तपस्विनमबहुश्रुतमपि
वा*ब्राह्मणमाततायिनं ॥ ९ ॥ स हन्यादेव नात्र विचारः कार्यो*यस्त्वाततायी परस्य* गृहेऽग्निं भोजनादौ गर*
दद्यात् क्षेत्रं दारान्वाहरेत् । ११ । शस्त्रादिकं गृहीत्वा प्राणान् हन्यात् * तस्मिंस्तपःस्वाध्यायजन्मश्रेष्ठे *
त्वाततायिनि राजा वधो न कार्यः । ११ । हीने पापे न ब्राह्मणे पि वधो*दण्डो राज्ञा कार्यः इति*भृगुः स्वसंहितायां
राज्ञा कर्तव्य * आततायिब्राह्मणस्य ॥ १२ ॥ वधार्थं त्वगत्वा गन्यस्य * गृहेऽग्निदानाद्यर्थमागच्छति यस्तत्र
विप्र ब्राह्मणस्तं मन्यु स्वामी हन्यादिति वसिष्ठमनुवचनमत्रार्थः । १३ । इत्येषउक्तः प्रमादिभिः पठितं*कात्यायनोक्त-
वचनस्य सिद्धान्तः । १४ ।

नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥ ३५१ ॥

नाततायीत्यादि ॥ ३५१ ॥ आगच्छन्तमाततायिनं *हन्तुराततायिवधे *कश्चन दोषो न भवति* प्रकाशमप्रकाशं वा *तत्रामन्युः क्रोधस्तमामन्युमृच्छति ॥ १ ॥ ३५१ । इति साहससङ्ग्रहः। स्त्रीसंग्रहणं*माह*

परदाराभिमर्षेषु प्रवृत्तान्नॄन्महीपतिः। उद्वेजनकरैर्दण्डैश्छिह्नयित्वा प्रवासयेत् ॥ ३५२ ॥

परदारेत्यादि ॥ ३५२ ॥ परदाराणामभिमर्षे *बलाद्धर्षणे प्रवृत्तान्* साहसिकान्नरानुद्वेजनकरैः* दण्डैः छिह्नयित्वा महीपतिः स्वदेशात् प्रवासयेत् ॥ १ ॥ ३५२ ॥ कस्मादित्यत आह ।

तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः। येन मूलहरोऽधर्मः सर्व्वनाशाय कल्पते ॥ ३५३ ॥

तत्समुत्थो हीत्यादि ॥ ३५३ ॥ हि यस्मात् परदाराभिमर्षणात् पुंसां तत्समुत्थः सुपुत्रादिवर्णसङ्करो जायते । येन वर्णसङ्करेण *सर्व्वार्थसाम्मूलं धर्मं* हरति यः स अधर्मः सर्व्वलोकस्य* सर्व्वनाशाय कल्पते ॥ २ ॥ ३५३ ॥

परस्य पत्न्या पुरुषः संभाषां योजयन्रहः। पूर्व्वमाचारितो दोषैः प्राप्नुयात् पूर्व्वसाहसम् ३५४

परस्येत्यादि । ३५४ । पूर्व्वमाचारितः पूर्व्वं मैथुनकदर्थमिताक्षराः पुरुषस्तथा परस्य पत्न्या सह रहो* गोपने संभाषां परस्परसक्तिं* योजयन् ॥ १ ॥ तैर्दोषैः *पूर्व्वसाहसं प्राप्नुयात्* रहस्कथी विधिनोत्पन्नः । २ । ३५४ ।

यस्त्वनाचारितः पूर्व्वमभिभाषेत कारणात्। न दोषं प्राप्नुयात् किञ्चिन्नहि तस्य व्यतिक्रमः ३५५

यस्त्वित्यादि । ३५५ । यस्तु पुरुषः परस्य* पत्न्या सह पूर्व्वमनाचारितः खलु मैथुन प्रतानाद्युद्देश *कारणात् कतचि दभिभाषेत । १ । स किञ्चिद्दोषं तेन न प्राप्नुयात् नहि तस्य तत्र कश्चित् व्यतिक्रमो विद्यते । २ । ३५५ ।

परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा। नदीनां वापि संभेदे स संग्रहणमाप्नुयात् ॥ ३५६ ॥

परस्त्रियमित्यादि । ३५६ । यः पुरुषस्तीर्थादिषु गतां परस्त्रियमभिवदेत् तस्मात् स पञ्चगादण्डवद्य * माणं संग्रहणमाप्नुयादिति ॥ १ ॥ ३५६ ॥

उपचारक्रियाकेलिः स्पर्शो भूषणवाससाम्। सहखट्टासनञ्चैव सर्व्वं संग्रहणं स्मृतम् ॥ ३५७ ॥

उपचारेत्यादि । ३५७ । पुरुषस्य परस्त्रियाउपचार*क्रिया गन्धमाल्यादाहरणादिका * करणं केलिः क्रीडा करणं भूषणादिः स्पर्शः* । १ । सहखट्टादासनोपवेशनञ्च* सर्व्वमेवैतत् स्त्रीसंग्रहणं स्मृतम् । २ । ३५७ ।

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया। परस्परस्यानुमते सर्व्वं संग्रहणं स्मृतम् ॥ ३५८ ॥

*शूद्रस्य लिङ्गोद्धारः*सर्वस्वहरणञ्च*गुप्तायां द्वयोऽधिकः । १ । इति । ३७४ ।

वैश्यः सर्वस्वदण्डः स्यात् संवत्सरनिरोधतः । सहस्रं चत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥ ३७५

वैश्य इत्यादि । ३७५ । वैश्यो हि जातवर्णस्त्रीजनरक्षया*रहे संवत्सरनिरोधतः संवत्सरं निरुध्य सह*स्या वसन्*सर्वस्वदण्डः स्यात् । १ । चत्रियः संवत्सरनिरोधतः स * द्भावसन्सहस्रं दण्ड्यः स्यात्*मूत्रेन मौण्ड्यञ्चार्हति नतुजलेन । २ । ३७५ ।

ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ । वैश्यं पञ्चशतं कुर्यात् चत्रियन्तु सहस्रिणम् ॥ ३७६

ब्राह्मणीमित्यादिना विशेषमाह । ३७६ । वैश्यपार्थिवौ ब्राह्मणी*मगुप्तां यदि गच्छेतां* वैश्यं तामुपयानं *पञ्चशतदण्डं कुर्यात् । १ । चत्रियं तामुपयानं सहस्रिणं * सहस्रं दण्डं कुर्यादिति । २ । ३७६ ॥

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ ३७७ ॥

उभावपीत्यादि । ३७७ । तावेव वैश्यपार्थिवावुभावपि*गुप्तया ब्राह्मण्या सह*विप्लुतौ तस्याः कामाभावे स*ङ्गतौ स्यातां तदा*शूद्रवत्सर्वस्वं दण्ड्यौ ॥ १ ॥ अथवा कटाग्निना कटेनावेष्ट्य*तावुभावपि दग्धव्यौ । २ । ३७७ ।

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥ ३७८

सहस्रमित्यादि । ३७८ । ब्राह्मणो गुप्तां विप्रां ब्राह्मणीं बला*द् व्रजन् गच्छन् सहस्रं * दण्ड्यो भवति तथा* परस्परं वस्यं च्छन्त्या*सङ्गतः पञ्चशतानि । १ । ३७८ । दण्डप्रकारमाह ।

मौण्ड्यं प्राणान्तिकं दण्डो ब्राह्मणस्य विधीयते । इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ ३७९

मौण्ड्यमित्यादि । ३७९ । यत्प्राणान्तिको दण्ड * उक्तस्तत्र ब्राह्मणस्य*मौण्ड्यं शिरोमुण्डनमेव वधः स्यात् । १ इतरेषां चत्रियवैश्यशूद्राणां *तत्प्राणान्तिक एव*दण्डो विधातव्यो मर्त्यः । २ । ३७९ । ननु कस्मादेवं दण्डविभाग*मित्यत आह ।

न जातु ब्राह्मणं हन्यात् सर्व्वपापेष्वपि स्थितम् । राष्ट्रादेनं बहिः कुर्यात् समग्रधनमचतम् ॥ ३८०

न जात्वित्यादि । १ । ३८० । जातु कदाचिदपि*प्राणान्तिकादिसर्व्व* पापेष्वपि च स्थितं *ब्राह्मणं न हन्यात् । १ । तर्हि किं कुर्य्यादित्येनं पापिनं ब्राह्मणं समग्रधनान्वितं * मचतं देहेचतेन * कृत्वा राष्ट्राद्बहिः कुर्य्यात् २ । ३८० । कस्मात् हननादित्यत आह ।

न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि। तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥ ३८१ ॥

नब्राह्मणवधादित्यादि। १। ३८१। ब्राह्मणवधाद्भूयान् बहुतरो * भुवि नाधर्मो विद्यते * तस्मादस्य ब्राह्मणस्य वधं राजा * मनसापि न चिन्तयेत्। २। ३८१।

वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत्। यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ ३८२ ॥

वैश्यश्चेदित्यादि। ३८२। वैश्यश्चेद् गुप्तां क्षत्रियां * मकामां बलाद् व्रजेत् * क्षत्रियो वा वैश्यां गुप्तां * मकामां बलाद् व्रजेत्। १। यो वा क्षत्रियो वैश्यो वा * ब्राह्मणामगुप्तायामकामायां बला * द् व्रजन् यद्दण्डस्तत्कृताबुभौ क्षत्रिय * वैश्यौ तद् दण्डमर्हतः। २। ३८२।

सहस्रं ब्राह्मणो दण्ड्यं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥ ३८३

सहस्रमित्यादि। ३८३। ते क्षत्रियावैश्ये द्वे * गुप्ते बलाद् ब्राह्मणो व्रजन् * ताम्रपणानां सहस्रं दण्डं दाप्यः। १। शूद्रायां गुप्तायामकामायां व * व्रजतोः क्षत्रियविशोः * स्ताम्रपणानां सहस्रं * दमो दण्डो भवतीति। २। ३८३।

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतं दमः। मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रिये दण्डमेव वा ॥ ३८४ ॥

क्षत्रियायामित्यादि। ३८४। अगुप्तायां क्षत्रियायां * मकामायां बलादेव * व्रजति वैश्ये ताम्रपणानां * पञ्चशतं दमः स्यात्। १। अगुप्तायां क्षत्रियायां * मकामायां बलाद् व्रजति क्षत्रिये * मूत्रेण मौण्ड्यं मुण्डन * मथवा दण्डमेव दण्ड मिच्छेत्। २। ३८४।

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन्। शतानि पञ्च दण्ड्यः स्यात् सहस्रन्त्वन्त्यजस्त्रियम् ॥ ३८५ ॥

अगुप्ते इत्यादि। ३८५। अगुप्तां क्षत्रियां वैश्यां * शूद्रां वापरकामां बला * द् ब्राह्मणो व्रजन् पणानां * पञ्चशतानि दण्ड्यः स्यात्। १। अन्त्यजस्त्रियं चण्डालादीनां स्त्रियं * व्रजन् सहस्रं दण्ड्यः स्यात्। २। ३८५।

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्। न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥ ३८६

यस्येत्यादि। ३८६। यस्य राज्ञः पुरे देशे * ग्रामनगरग्रामनगरा * स्तेनो नास्ति नास्ति चान्य * स्त्रीगामी नास्ति दुष्टवाक्। १। न च साहसिको नापि * दण्डघ्नो यो दण्डादिना परान् हन्ति * स राजा शक्रलोकभाक्। २। ३८६।

मर्य्यादाचारात्। १। तेषां तुलाकरणं यद्रक्तिकमाषक* प्राणादिभाण्डादिकं *तत्प्रतीमानमिति। २। तत्सर्व्वं सर्व्वोचितमनुना*नधिकतयै वलोचितं स्यात्*पुनरेव सर्व्वं पट् सु*षट् सुमासेषु परीक्षयेत्। १। ४०३।

**पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे। पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्॥ ४०४॥**

पणमित्यादि। ३। ४०४। शून्यनद्यादितरे*याने दोलाद्ययाने*वानरे पारकरणे नाविकाय*तामु साप्पणं दाप्याः। १। नृपोनिर्दिश्येत्पौरुषं पुरुषमात्रं तरे त्वर्द्धपणं दाप्यः। २। पादं पणमयानःपशुर्योषिच्च * तरे दाप्या रिक्तकोभारविहीनः*केवलःपुमान्पणस्यापादार्द्धं तरे दाप्यः। २। ४०४।

**भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः। रिक्तभाण्डानि यत्किञ्चित् पुमांसश्चापरिच्छदः॥ ४०५॥**

भाण्डेत्यादि। ४०५। पण्यभाण्डपूर्णानियानानि*शकटादीनिसारतःपण्य*द्रव्यासारोत्कर्षापकर्षा* वपेक्ष्यातार्य्यमातरं। १। दाप्यानिनृपोनिर्दिश्येत् * रिक्तभाण्डानियानानि * किञ्चिद्दाप्यानिनिर्दिश्येत्। १। अपरिच्छदादरिद्रान*पुमांसस्वरिक्तपुरुषस्यापादा*र्द्धापेक्षयापिस्वल्पं किं*चित्तार्य्यंदाप्याभवन्ति। ३। ४०५।

**दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्। नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम्॥ ४०६॥**

दीर्घाध्वनीत्यादि। ४०६। दीर्घाध्वनिदेशतरे*यथादेशं यथाकालं तरीतरेत्*तथातत्तार्य्यं विद्यात्। १। नदीतीरेषु दीर्घाध्वनि*यथादेशं यथाकालं च*तथातार्य्यं विद्यात्समुद्रे * तार्य्यस्यालक्षणं नैवास्ति। १। ४०६

**गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः। ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे॥ ४०७॥**

गर्भिणीत्यादि। ४०७। सर्व्वस्तारतारिकमातरं* द्विमासादिगर्भिणीप्रव्रजितो * भिक्षुकाश्रमीवनिर्वान प्रस्थः। १। लिङ्गिनोमेखलाजिनादिचिह्न*धारिणोब्राह्मणाश्चते*नदाप्याभवन्तीति। २। ४०७।

**यन्नावि किञ्चिद्दासानां विशीर्य्येतापराधतः। तद्दासैरेव दातव्यं समागम्य स्वतोऽंशतः॥ ४०८॥**

यन्नावीत्यादि। ४०८। यस्यां नावि दासानां कैवर्त्तानां तारकाणां *यस्यापराधतोयत्किञ्चिद्द्रव्यं* शीर्य्यते भज्यते तद्दासैःसर्व्वैः*समागम्यस्वतोऽंशतोदातव्यं। १। ४०८।

**एष नौयायिनामुक्तो व्यवहारस्य निर्णयः। दासापराधतस्तोये दैविके नास्ति निग्रहः॥ ४०९॥**

एषइत्यादि। ४०९। नौयायिनामेषव्यवहारस्य*निर्णयःप्रोक्तस्तोये नद्यादौ*व* दैविके निपातनादौदासापराधतोनिग्रहोनैवविद्यते। १। ७०९।

णिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च । पशूनां रक्षणञ्चैव दास्यं शूद्रं द्विजन्मनाम् ॥४१०

वाणिज्यमित्यादि । ४१० । नृपो वैश्यं वाणिज्यं कुसीदं कृषिं *पशुरक्षणं कारयेत् * शूद्रं द्विजन्मनां ब्राह्मण त्रिय*वैश्यानां दास्यं कारयेत् । १ । ४१० ।

त्रियञ्चैव वैश्यञ्च ब्राह्मणो वृत्तिकर्षितौ । बिभृयादानृशंस्येन स्वानि कर्म्माणि कारयन् ॥४११॥

क्षत्रियमित्यादि । ४११ । ब्राह्मणो वृत्तिकर्षितौ*क्षत्रियवैश्यावानृशं* स्येनानिन्दनेन कर्म्माणि*स्वानिकार न्बिभृयात् । १ । ४११ ।

ास्यन्तु कारयंल्लोभाद्ब्राह्मणः संस्कृतान्द्विजान् । अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि ट् ॥ ४१२ ॥

दास्यमित्यादि ॥ ४१२ । दास्यमनिच्छतः संस्कृतान्द्विजान्*ब्राह्मणक्षत्रियवैश्यान् * ब्राह्मणो लोभाल्लोभं दृष्ट्वा दास्यं*प्राभवत्यात्प्रभुत्वात् । १ । कारयन्राज्ञा शतानां पणानां षट्*शतानि दण्ड्यः कर्त्तव्यः । २ । ४१२ ।

द्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा । दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा ॥ ४१३ ॥

शूद्रन्त्विमादि । ४१३ । क्रीतमक्रीतं वा शूद्रं *ब्राह्मणो दास्यं कारयेत् * कस्माद्धि यस्मात्स्वयम्भुवाऽसौ शूद्रो* ब्राह्मणस्य दास्यायैव*पुरा स्वयमेव सृष्टः । १ । ४१३ ।

स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते । निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति ॥४१४॥

नस्वामिनेत्यादि । ४१४ । स्वामिना निसृष्टः खलु*त्यक्तोऽपि शूद्रो न दास्याद्विमुच्यते * कस्माद्धि यस्मात्तस्य द्रस्य दास्यं *निसर्गजं स्वभावजम् । १ । कोजनस्तस्माच्छूद्रात्*स्वभावजं तद्दास्यं * मपोहति नाशयति ।४१४

जाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ । पैत्रिको दण्डदासश्च सप्तैते दासयोनयः ॥४१५॥

ध्वजेत्यादि ॥ ४१५ ॥ न केवलं शूद्र एव दासो भवेत्*ध्वजाहृतादयः सप्त*दासयोनयो भवन्ति* ध्वजाहृतो युद्धे वामि*समक्षे जित्वैवानीतः*भक्तदासो यस्तु यो*भक्तं भुक्त्वा उपजीवति *अन्नमात्रभक्तदासः स्यात् ॥ २ ॥ गृहजः स्व हे दासी*गर्भजातः क्रीतो धनेन क्रय*केनचिद्दत्तो दत्रिमः* पितृरागतस्तु दासः पैत्रकः स्यात् । ३ । दण्डदास णादिदण्डपरि*शुद्ध्यर्थं स्वीकृतदासः । ४ । ४१५ ।

अथोद्देशक्रमेण स्त्रीपुंधर्मं वक्तुं नवममध्यायमारभते *पुरुषस्य स्त्रियाश्चेत्यादि । १ । १ ।

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः । संयोगे च विभागे च धर्मान्वक्ष्यामि शाश्वतान् ॥१॥

धर्म्ये वर्त्मनि तिष्ठतोः * स्त्रीपुंसयोः संयोगे च विभागे च * पुरुषस्य स्त्रियाश्च शाश्वतान् धर्मान् * अहमथ वक्ष्यामि ॥ १ । १ ।

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ २ ॥

अस्वतन्त्रा इत्यादि ॥ २ ॥ स्वैः पुरुषैः स्त्रियोऽस्वतन्त्राः कार्याः । ता* कथमित्यत उच्यते * विषयेषु अदत्तकर्म्मा* दिषु दिवानिशं सज्जन्त्या* आत्मनो वशे संस्थाप्याः ॥ १ ॥ २ ॥ स्वैः पुरुषैरिति केन केनेत्यत आह ।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥

पिता रक्षतीत्यादि ॥ १ ॥ ३ ॥ पितेत्युपलक्षणात्*पिता तत्स्वजनश्च * कौमारे यावद्विवाहं* कन्यां स्त्रियं रक्षति । १ । ततो वराय दत्तां तां *यौवने भर्त्ता रक्षति* स्थविरे वार्द्धके तां * पुत्रादयो रक्षन्ति ॥ २ ॥ इतीत्थं रक्ष्यमाणा स्त्री न कदापि*स्वातन्त्र्यमर्हतीति ॥ ३ ॥ ३ ॥

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः । मृते भर्त्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥४॥

कालेऽदातेत्यादि । ४ । काले विवाहयोग्ये कन्याया अदाता पिता*लोके भर्त्सनवाच्यः स्यात् । १ ॥ उपगमनयोग्ये काले तु भार्य्याः * अनुपयन् अनुपगच्छन् पति*र्वाच्यः स्यात् भर्त्तरि मृते * मातुररक्षिता पुत्रो वाच्यः स्यात् । २ । ।

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥५॥

सूक्ष्मेभ्य इत्यादि । ५ । सूक्ष्मेभ्योऽपि कुकर्म्मणः प्रसङ्गेभ्यः * स्त्रियो विशेषतो रक्ष्याः स्वैः सर्वैर्हि यतस्ता अरक्षिताः सत्यो द्वयोः*कुलयोः शोकमावहेयुः । १ । ५ ।

इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् । यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्व्वला अपि ॥ ६॥

इमं हीत्यादि । ६। सर्ववर्णानां स्त्रीणामिममुत्तमं *धर्मं पश्यन्तो भर्त्तारो*दुर्व्वला अपि कृशा अपि*भार्य्यां रक्षितुं यतन्ते । १ । ६ ।

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च । स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ॥ ७ ॥

स्वामित्यादि । ७ । पुरुषः प्रयत्नेन जायां रक्षन् सन् * स्वप्रसूत्यादीन् रक्षति । १ । ७ । कथं जायां रक्षन् स्वप्रसूत्यादीन् * रक्षतीत्यत उच्यते ।

पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते । जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ८ ॥

पतिर्भार्यामित्यादि । १ । ८ । पतिः खल्वात्मा मनःशरीरमिति * त्र्यात्मकः स्थूलपुरुषः * स रागशुक्ररूपेण * भार्यां संप्रविश्य तस्याः * गर्भाशयं संप्रविश्य * गर्भो भूत्वेह जायते । १ । भार्या च तं गर्भं प्रसूयते ततो * जायां रक्षन् स्वप्रसूतिं * रक्षति तस्याश्चरित्रं रक्षति * यतोऽस्यां पुनर्जायते । २ । तद्धि जायाया जायात्वं * तस्या * व्यभिचारेण * दोषे तस्यां जन्म तस्य * न विशुद्धं भवतीति * तस्मादात्मानं रक्षति । ३ । ८ । कथं कुलं रक्षतीत्यत आह ।

यादृशं भजते हि स्त्री सुतं सूते तथाविधम् । तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः ॥ ९ ॥

यादृशमित्यादि । १ । ९ ॥ यादृशं पुरुषं स्त्री भजते * तथाविधं सुतं सूते * व्यभिचारेणान्यस्मात् * गर्भं गृहीत्वा तादृशं * सुतं प्रसवं कुलं नाशयेत् । १ । तस्मात् प्रजाविशुद्ध्यर्थं पुरुषः * प्रयत्नतः स्त्रियं रक्षेत् * जायां रक्षन् स्वप्रसूत्यादीन् रक्षतीति । २ । ९ ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् । एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ १० ॥

न कश्चिदित्यादि । १० । कश्चिदपि पुरुषो योषितः * प्रसह्य बलेन परिरक्षितुं * शक्तो न भवति तास्तु * योषितः खलु ते वे । १ । वक्ष्यमाणैरुपाययोगैः * परिरक्षितुं पुंभिः शक्याः * अथ ते चोच्यन्ते । २ । १० ।

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥ ११ ॥ वे

अर्थस्येत्यादि । ११ । एनां भार्यामर्थस्य संग्रहे धन * रक्षणे व्यये च पुमान् * नियोजयेत् शौचे तस्याः शरीरस्य * स्वं गृहशौचे नियोजयेत् । १ । धर्मेऽग्निहोत्राग्निरक्षणादौ चैनां * नियोजयेदन्नपक्त्यां * नियोजयेत् पारिणाह्यस्य गृहोप * करणस्यावेक्षणे च । २ । ११ ।

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः । आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२ ॥

अरचितेत्यादि। १२। याश्चात्मानमात्मनात*रक्षेयुः दुर्जरागि*कारिभिः स्वाभ्यहे रुद्धा * अपि न *अरक्षि
ताः। १। या स्वम् आत्मानमात्मना रक्षेयु*स्ताः सुरक्षिता भवन्ति। २। १२।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥ १३ ॥

पानमित्यादि। १३। मद्यादिपानं दुर्जनसंसर्गश्च*पतिविरहश्च*इतस्ततोऽटनं* स्वप्नः स्वप्नविशुद्धसमा
दि*परगृहे च निचिराचिरवासः। १। एतानि षट् *नारीणां सं*दूषणानि*भवन्तीति। २। १३।

नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ १४ ॥

नैता इत्यादि। १४। एतामद्यपायिनीदुर्जनसंसर्ग*कारिणीपतिविरहिणीसञ्चरण* भ्रमणशीलाश्च
दूषिता स्वपर*गृहवासिन्यो याः पितोयाभवन्ति। १। ताः पुंसां रूपं न परीक्षन्ते *वयसि यौवने संस्थितिर्न* चेदा
सां तथापि पुमा*निति मत्वा सुरूपं वा*विरूपं वा ता भुञ्जते। २। १४।

पौंश्चल्याच्चलचित्तत्वान्नैःस्नेह्याच्च स्वभावतः। रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥ १५ ॥

पौंश्चल्यादित्यादि। १५। एता मद्यपानादियुक्ता याः पितः* यत्नतोऽपि रक्षिताः पौंश्चल्यात् * चित्तत्वान्नै
स्नेह्यात् स्वभावतश्च भ*र्तृषु विकुर्वते विरुद्धं कुर्वते। १। १५।

एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम्। परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥ १६ ॥

एवमित्यादि। १६। प्रजापतेर्निसर्गाज्जातमेवं*स्वभावमासां नारीणां * ज्ञात्वासां रक्षणं प्रति*पुरुषः
परमं प्रयत्नमातिष्ठेत्। १। १६।

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम्। द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥ १७ ॥

मनुरित्यादि। १७। मनुः प्रजापतिः स्त्रीभ्यः स्त्रीलोकार्थं*शय्यादिकमकल्पयत्। १। १७।

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः। निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥ १८ ॥

नास्तीत्यादि। १८। स्त्रीणां धर्मार्थं क्रिया मन्त्रैर्नास्तीति*धर्मो वेदे व्यवस्थितः*तस्मान्निरिन्द्रिया इन्द्रः
ईश्वरः परमात्मा*तदिन्द्रकार्यमिन्द्रियम्। १। स्त्रियस्तस्मादमन्त्राः सन्ता*ईश्वरकार्यविहीना * अतः स्त्रियोऽनृतं
मिथ्येति स्थितिः। २। १८। तर्हि कथमासां निष्कृतिः स्यादित्यत आह।

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि । स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः ॥१९॥

तथा चेत्यादि । १ । १९ । तथा च ताः शृण्वपि स्त्रीणां * तासां * स्वालक्षण्यपरीक्षार्थं * व्यभिचार * दोषगुण परीक्षार्थम् ॥ १ ॥ निगमेषु अपि वह्व्यः श्रुतयो * निगीताः वर्त्तन्ते तासाम् * निष्कृतीः प्रायश्चित्तानि * इमा वाचः शृणु । २ । १९ । तद्यथा

यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता । तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥

यन्मे इत्यादि । २० । यन्मे इत्यादि पिता वृङ्क्तामित्यन्तो * मन्त्रः ऽस्या व्यभिचारदोषशान्त्यै * निदर्शनम् एतद् एकं * मनसा श्रुतयो दृष्टव्याः । २ । निदर्शनमात्रमेव * श्रुतिवाक्यानि श्रुतयो * निष्कृतीरिति वचनं * न दोषमावहति २ । प्रमादी एकवचनस्य * स्थाने बहुवचनं प्रयुक्तवानिति * व्याचष्टे तन्न निदर्शनमित्युक्तं * कस्याश्चित्कस्यचित् पुत्र आह मम माता खलु पतिव्रता सती * विचरन्ती यत् प्रलुलुभे तद्रेतो * रजो मम पिता वृङ्क्तां शोधयतु । ४ । २० ।

ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा । तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते २१॥

ध्यायत्यनिष्टमित्यादि ॥ २१ । पाणिग्राहस्य पत्युर्यत् * किञ्चिदनिष्टं भार्या मनसा ध्यायति * तस्य एतस्य व्यभिचारस्य निह्नवो * मन्त्रः सम्यगुच्यते । १ । २१ ।

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि । तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥

यादृगित्यादि । २२ । भर्त्रा यादृग्गुणेन स्त्री * यथाविधि संयुज्यते * सा स्त्री तादृग्गुणा भवति स्वीय * गुणान् जहाति तद् यथा * समुद्रेण निम्नगा नदी । १ । २२ । तत्रोदाहरणं दर्शयति ।

अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥

अक्षमालेत्यादि । १ । २३ । अधमयोनिजा अक्षमाला नाम काचिद् वसिष्ठेन सह * संयुक्ता शारङ्गी नाम * काचिदधमयोनिजा * मन्दपालेन संयुक्ता । १ । अभ्यर्हणीयतां सर्वतोऽर्हतां * लोके जगाम वसिष्ठ * मन्दपालयोर्गुणयोगात् । २ । २३ ।

एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः । उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥२४

एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा । प्रेत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥२५

एता इत्यादि ॥ २४ ॥ स्पष्टार्थोऽयं श्लोकः । २४ । एषोदितेत्यादिश्लोकः स्पष्टार्थः ॥ २५ ॥

प्रजनार्थं महाभागा:पूजार्हागृहदीप्तय:। स्त्रिय:श्रियश्चगेहे पुनर्विशेषोऽस्तिकश्चन ॥ २६ ॥

प्रजनार्थमित्यादि ॥ २६ । महाभागा ब्राह्मणाद्यय:पूजार्हा विधिना*यथोक्तलक्षणा द्विजकन्यायाम्प्रतिलोमजा: ॥ १ ॥ मन्त्रै रुक्ता:स्वेनैक्तौलता*स्वगोत्रवर्णादिभाजश्च* स्त्रिय:पत्नीगृहदीप्तया*गृहे पुरश्रियश्चभवन्ति ॥ २ ॥ तेषां ब्राह्मणादीनां पत्नीनां ब्राह्मणादीनां सवर्णजातलोमजानां तासांश्चप्रजानार्थं * मपत्यौत्पादनार्थं न*कश्च नविशेषोऽस्तीतिसर्व एवश्रुतावर्णमपत्यं प्रजायन्ते॥ ३ ॥ २६ ॥

उत्पादनमपत्यस्यजातस्यपरिपालनम्। प्रत्यहंलोकयात्राया:प्रत्यक्षंस्त्रीनिबन्धनम् ॥२७॥

उत्पादनमित्यादि। २७। अपत्यस्योत्पादनं पुंसां *स्त्रीनिबद्धनं प्रत्यक्षं *जातस्याऽपत्यस्यपरि* पालनं स्त्रीनिबन्धनं प्रत्यक्षं। १। प्रत्यहं लोक*यात्राया*गृहकर्म्मण:*साधनं *स्त्रीनिबन्धनं प्रत्यक्षम । २। २७।

अपत्यंधर्म्मकार्य्याणिशुश्रूषारतिरुत्तमा। दाराधीनस्तथास्वर्ग:पितृणामात्मनश्चह ॥२८॥

अपत्यमित्यादि। २८। अपत्यं दाराधीनं दाराधीनानि*चधर्म्मकार्य्याणिशुश्रूषा * चोत्तमारति*श्चदाराधीनासर्ग:*पितृणामात्मनश्चदाराधीन:स्यात्। १। २८। कं यां दाराणास्तुधीनानीमानि*भवन्तीत्यतआह।

पतिंयानाभिचरतिमनोवाग्देहसंयता। साभर्तृलोकमाप्नोतिसद्भि:साध्वीतिचोच्यते ॥२९॥

पतिमित्यादि। १। २९। यानारीमनोवाग्देहसंयता*परपुरुषाश्लिष्टा*पतिं नव्यभिचरति* सानारी भर्तृलोकानाप्नोति*साध्वीचेतिसद्भिरुच्यते। १। २९।

व्यभिचारात्तुभर्त्तु:स्त्रीलोकेप्राप्नोतिनिन्द्यताम्। शृगालयोनिञ्चाप्नोतिपापरोगैश्चपीड्यते ॥ ३० ॥

व्यभिचारात्त्वित्यादि। ३० ॥ स्त्रीभार्य्याभर्त्तुर्व्यभिचारा*ल्लोके वनिन्द्यतां प्राप्नोति*प्रेतामृगालयोनिं प्राप्नोतिपापरोगैश्चपीड्यते। १। ३०।

पुत्रंप्रत्युदितंसद्भि:पूर्व्वजैश्चमहर्षिभि:। विश्वजन्यमिमंपुण्यमुपन्यासंनिबोधत ॥ ३१ ॥ वी

सद्भि:पूर्व्वजैर्महर्षिभि:पुत्रं * प्रत्युदितं विश्वजन्यं * सर्व्वजनसम्बन्धिनं * पुण्यमिमं वक्ष्यमाण*मुपन्यासं निबोधत। १। ३१। उपन्यासमाह।

भर्त्तु:पुत्रंविजानन्तिश्रुतिद्वैधन्तुभर्त्तरि। आहुरुत्पादकंकेचिदपरेक्षेत्रिणंविदु: ॥ ३२ ॥

भर्त्तरित्यादि। १। ३२। सर्व्वेजनाजानन्तिस्त्रियाभर्त्तु * पुत्रइतिस्त्रियाभर्त्तरि * श्रुतिद्वैधन्तुवर्त्तते

तद्यथा । १ । कश्चित्पूर्व्वं जामदग्न्यः स्त्रिया*अपतासगौत्पादकोयो*वोढ़ावापोवोढातस्या*स्तं भर्त्तावं प्राहस्तथा तद्पता । २ । अपरं पूर्व्वं जामदग्न्यः स्त्रियावोढारं *भर्त्तारं विदुस्तथा व* स्त्रियामवोढारोयाः* यस्त्वपतां जनयति । ३ । वोढ़ वपतामितिसर्व्वेजानन्ति*नत्व गोढ़ःपुत्रइति । ४ । तत्रश्च व्रजःकाणीनःमद्वोढ़ः*वोढ़ःपुत्रायदितत्र*काणीनप्रत्नभवतो*गर्भिणीश्चनकश्चिद्वहति । ५ । तदाकाणीनोद्वोजनयिष्टःपुत्रो*भवता मातामहस्यो*तियास्वत्काडक्तवान् । ६ । ३२ ।

चेत्रभूतास्मृतानारीवीजभूतःस्मृतःपुमान् । चेत्रवीजसमायोगात्सम्भवःसर्व्वदेहिनाम् ३३

चेत्रभूतेत्यादि । ६१ । स्पष्टार्थोऽयं श्लोकः । ३३ ।

विशिष्टं कुत्रचिद्वीजं स्त्रीयोनिस्त्वेवकुत्रचित् । उभयन्तुसमंयत्रसाप्रसूतिःप्रशस्यते ॥ ३४ ॥

विशिष्टमित्यादि । ३४ । उभयं वीजं योनिश्चेतिद्वयं *नृवीजं नृयोनिश्चगोवीजं गोयोनि*रिता वं नवप्रवीजं पशयोनिः ।१। तत्रापिसामान्यविशेषाऽवधार्याः * यथाब्राह्मणसामन्वे*विवाहे ब्राह्मणचत्रियवैश्या*कन्याभिः सामां भवति । २ । ३४ । अस्तुवीजयोन्युभयसाम्ये* मसवणायस्त्वां वीजयोनि * वैषम्ये प्रसवःकीदृक्*सादि तातःपुनराह ।

वीजस्यचैवयोन्याश्चवीजमुत्कृष्टमुच्यते । सर्व्वभूतप्रसूतिर्हि वीजलक्षणलक्षिता ॥ ३५ ॥

वीजस्यचेवेत्यादि । ३५ । वीजयोन्योर्मध्ये वीज*मुत्कृष्ट मत्यादित्युच्यते *कृतइत्यतउच्यते * सर्व्वभूतप्रसूतिर्हीत्यादि । १ । हियस्माद्वीजलक्षणं सर्व्व*भूतप्रसूतिरुत्पत्ति*र्नयोनिलक्षणात्तथापि । २ ।३५। तदेवाह रति ।

यादृशन्तूप्यते वीजं चेत्रे कालोपपादिते । तादृग्रोहतितत्तस्मिन्बीजं स्वैर्व्यञ्जितं गुणैः३६॥

यादृशमित्यादि । ३६ । कालोपपादिते चेत्रे *यादृशं वीजमुप्यते *तद्वीजं तस्मिन्चेत्रे स्वै*र्गुणैर्व्यञ्जितं लक्षितं*तादृगेवरोहतीति । १ । ३६ ।

इयंभूमिर्हिभूतानांशाश्वतीयोनिरुच्यते । नचयोनिगुणान्कांश्चिद्वीजं पुष्यतिपुष्टिषु ॥ ३७॥

इयमित्यादि । ३७ । हियस्मादियं भूमिर्भूतानानां योनिः*शाश्वतीतत्रोप्तं वीजं * पुष्टिषुङ्कुरादिक्रमात्*

क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते । तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ ५३॥

क्रियाभ्युपगमेत्यादि । १ । ५३ । यत्फलाभिसन्धिना क्षेत्रिकस्येदं *बीजं क्षेत्रं तवास्तु त्वं योनि*र्बीजयोर्मा यत्क्रियाभ्युपगमस्तं ॥ १ ॥ क्षमेदं धान्यबीजं तत्राभिनृत्येत*उपाभितवचममत्फलं स्यात् * इतिक्रियामभ्युपगम्य*तद्बीजार्थं प्रदीयते । २ । इहतस्योत्फलस्याभागिनौ बीजी*च क्षेत्रिकश्च उभौदृष्टौ* तस्मात्फलाभिसन्धौन* बीजाद् गरीयसीयोनिः । १ । ५३ । फलानभिसन्धौतु क्षेत्रिण फलं *यथातदाह ।

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति । क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥ ५४ ॥

ओघेत्यादि । १ । ५४ । ओघेन वेगेन वातेनाहृत *बीजं कस्याप्यभिसन्धि*र्न भवतितत्तद्बीजं * यस्य क्षेत्रे प्ररोहति । १ । तद्बीजं फलञ्च क्षेत्रिकस्यैव*भव तितद्बीजीफलं नलभते * परपुरुषस्य क्रियाभ्युपगमा*भावे क्षेत्रिणःपुत्रः स्यात् । २ । ५४ ।

एषधर्मोगवाश्वस्यदास्युष्ट्राजाविकस्यच । विहङ्गमहिषीणाञ्चविज्ञेयःप्रसवंप्रति ॥५५ ॥

प्रसङ्गाद् गवादिप्रसवभाग * माह एषधर्मइत्यादि । १ । ५५ । यथागोऽश्वादीदासीनामित्यादि दृष्टान्ता प्रागुक्ताः ।१। तासां विहङ्गीनाञ्चप्रसवं प्रति*च एतत्फलानामनभिसन्धौपर*उपभादिभिर्जनित*च क्षेत्रिणःफलं भवति । २ । फलाभ्युपगमे यथाभ्युपगमं *फलभागित्वं स्यात्*स्वामित्वे क्षेत्रिणः । १ । ५५ । उपसंहाराभिधेयमाह तद्वः*सारफल्गुत्वमिति त्वमित्यादि । १ । ५६ ।

एतद्वःसारफल्गुत्वंबीजयोन्योःप्रकीर्त्तितम् । अतःपरंप्रवक्ष्यामियोषितांधर्ममापदि॥५६॥

बीजयोन्योःसारत्वं प्रधानत्वं * फल्गुत्वञ्च तुच्छत्वमप्राधान्यमेतद्वः*परं क्षेत्रजत्वपालित * सन्तानभागित्वं मतम् । १ । योषितामपुत्रकत्वात्तिकायां * मापद्विधर्मं वक्ष्यामि । २ । ५६ । अपुत्रकत्वापदियथा *यतःपुत्रउत्पाद्यस्तदुक्तमाह ।

भ्रातुर्ज्येष्ठस्यभार्य्यायागुरुपत्न्यनुजस्यसा । यवीयसस्तुयाभार्य्यास्नुषाज्येष्ठस्यसास्मृता५७

भ्रातुरित्यादि । १ । ५७ । ज्येष्ठस्यभ्रातुर्या भार्य्या*सानुजस्यभ्रातुर्गुरु * पत्नीमातृवद्भवति ।१। यवीयसः कनिष्ठस्य* भ्रातुर्या भार्य्या साखलु*ज्येष्ठस्यभ्रातुःस्नुषेवभवतीति । २ । ५७ ।

ज्येष्ठोयवीयसोभार्य्यांयवीयान्वाग्रजस्त्रियम् । पतितौभवतोगत्वानियुक्तावप्यनापदि॥५८

औद्वाहिकेषु मन्त्रेषु*क्वचनापि विधवायाअपि * नियोगः कचिदपि मन्त्रेषु नैव * कीर्त्यते कन्याया एव*हि विवाहमन्त्राउक्ता नतु नियोगे । १ । विवाहविधौ उक्तायाविधवाया*वेदनं न वचोक्तं । २ । ६५ ।

**अयं द्विजै र्हि विद्वद्भिःपशुधर्म्मो विगर्हितः। मनुष्याणामपिप्रोक्तोवेणे राज्यंप्रशासति ॥६६॥**

ननु तर्हि प्रयाप्यदि*विधवाया नियोगः किं* प्रशस्तोधर्मइत्यत*उच्यते ऽयं द्विजै रित्यादि । १ । ६ । अयं विधवायाः क्षेत्रयोने रक्षेत्रयोने र्यथया*विधिर्देवरादिषु*परपुरुषे पुनर्नियोगो*विगर्हितःपशुधर्मः । १ । विद्वद्भि र्द्विजै र्महर्षिभिरेव*वेणे राजा प्रशासति*मनुष्याणामपिविधे यतया प्रोक्तः । ६६ । कस्मात्तदानीमेव पशुधर्म्मो मनुष्याणां विधे यतया प्रोक्त इत्यत आह ।

**स महीमखिलांभुञ्जन्राजर्षिप्रवरःपुरा। वर्णानांसङ्करंचक्रे कामोपहतचेतनः ॥ ६७ ॥**

स महीमखिलामित्यादि । १ । ६७ । स राजर्षिप्रवरो वेणो नाम*राजा पुराऽखिलां महीं * भुञ्जन्पालयन् कामोपहतचेता*वर्णानां सङ्करं चक्रे । १ । प्रतिलोमादि*परस्त्रीषु पुरुषान्नियुज्यैव * सङ्करजाति पुत्रानजीजनदिति । २ । ६७ । ततःप्रभृति देवरादिषु विधिता नियोगः सङ्करोत्पादको नाम महर्षिभिर्विचिन्तितः ॥

**ततःप्रभृतियोमोहात्प्रमीतपतिकांस्त्रियम्। नियोजयत्यपत्यार्थं तं विगर्हन्तिसाधवः ॥६८ ॥**

ततःप्रभृतीत्यादि । ६८ । ततो वेणराजसमयात्प्रभृति यो*मोहात्प्रमीतपतिकां * विधवां क्षेत्रयोनिं स्त्रियं पुत्रार्थं *देवरादिमार्गेऽनाम्नि । १ । नियोजयतितं जनं*साधवोऽर्थं विगर्हन्ति * नतु विधिनादेवरप्रभृतिषु* पुत्रार्थं विधवानां *नियोक्तारं विगर्हन्ति । २ । प्रमादिनस्त्वयं द्विजै र्हीति श्लोके * त्वयमिति पदे नवे धोऽस्ति धर्मः सर्व एवनियोगःपशुधर्म्मो विगर्हित*इतिव्याचक्षिरे । ३ । तन्नसाधुस्वयं मनूक्तस्य* यो पिता धर्मोमापद्यन्तेऽथ*नुपपत्तेर्गर्हितोहि*धर्मोनधर्मउच्यते ।४। वर्णानां सङ्करं चक्रे *इत्यस्यानुपपत्तेः*नहिविधिना क्षेत्रे जातःपुत्रो*वर्णसङ्करोभवति । ५ । अनाथायामपि*योनिपर्यसङ्करः*सामी पुत्र्योऽनियो* क्ताविगर्हितस्यात् । नतुपूर्वोक्तसत्रन्*कन्याप्रदेयतइति*सनामिकसकन्यागादिभिःकन्या* दानं तयाविधवाग दत्तायायदि*पति म्रियते तस्याःकिं नविवाहः स्यात् । १ । तत्राह ॥

**यस्याम्रियेतकन्यायावाचासत्ये कृते पतिः। तामनेनविधानेन निजोविन्देतदेवरः ॥ ६९ ॥**

यस्या इत्यादि ।६९। यस्याःकन्यायाःपित्रादिनादानवाग्यादिना*दाने सत्ये कृते सति*सभार्याःपतिःकथञ्चित्*

द्यद्भिर्म्रियेत तत्र दाता *मनेननियोगविधिना । १ । निजोदेवरोविन्देत*नतु सपिण्डोनोदेवरः * उत्तमवर्णः पुमान्वा । २ । ६९ । तर्हि किं नियोगविधानेनामन्त्रं * स्त्रीत्वाभार्यायाया*मिवोपभोगं कुर्य्यात् * इत्यत आह ।

**यथाविध्यनुगम्यैनांशुक्लवस्त्रांशुचिव्रताम्। मिथोभजेताप्रसवात्सकृत्सकृदृतावृतौ॥७०॥**

यथेत्यादि । १ । ७० । यथोक्तेननियोगविधिनैवैनां *वाग्दत्तां मृतस्यभ्रातु* र्भार्य्यां विवाहमन्त्रैरसंस्कृतां *शुक्लवस्त्रां शुचिव्रताम् ।१। अनुगम्यपापाकृतावृतौमिथः*सकृत्सकृदाप्रसवाद्भजेत * नत्वनृतावृतौचनपुनर्भजेत*नवागर्भाधानेजाते भजेत् ।२। इत्यप्रसूतां सकृत्कन्याप्रदाने *आपद्धर्म्मोभवत्युक्तः*एतेनवाग्दत्तादीनां *सप्तानां कन्यानामापद्धर्म्मोव्याख्यातः । ३ । नन्वादित्यपुराणे* देवरेणसुतोत्पत्तिर्दत्तकन्याप्रदीयते । दत्तौरसेतरेषान्तुपुत्रत्वेनपरिग्रहः । ४ । कलेरादौव्यवस्थापूर्व्वकांप्रति * प्रतिषेधःकृतःकथं कलौ * क्षेत्रजः पुत्रविधानमापद्धर्म्मःस्यादितिचेत्तत्रोच्यते । ५ । कलौमनुष्यासामनन्ताच्छल्या * इयथाविधिनियुक्तत्वेनदेवर* *स्याप्रवृत्त्याप्रवृत्त्याप्रतिषेधेपि । ६ । उत्तमवर्णात्पुत्रोत्पादनमेव*निर्द्दोषं सम्भवतीति । ७ । ७० । ननुयदि कश्चिद्दीर्घायुर्वाग्दत्तां *कन्यां विधवामविधवां वानाम्ने*दद्यात्तदासधर्म्मोऽधर्म्मोवेत्यत*आह ।

**नदत्त्वाकस्यचित्कन्यांपुनर्दद्याद्विचक्षणः। दत्त्वापुनःप्रयच्छन्हिप्राप्नोतिपुरुषानृतम्॥७१॥**

नदत्त्वाकस्यचिदित्यादि ।१।७१ विचक्षणःसज्जनःकन्यां कस्यचिज्जनस्य*वागादिभिर्द्दत्त्वातेन*सहसंस्कृतामकृत्वा*पुनरन्यस्यकस्यचिन्नदद्यात् ।१। वागादिभिःकन्यामेकस्मैदत्त्वा*तेनसहसंस्कृतांच*नकृत्वापुनरन्यस्मै*प्रयच्छन्पुरुषानृतं*चौरदण्डञ्चप्राप्नोति । २ । याज्ञवल्क्येनोक्तं हि*सकृत्प्रदीयते कन्या* हरंस्तां चौरदण्डभाक् । दत्तामपिहरेत्पूर्व्वाच्छ्रेयांश्चेद्वर आव्रजेत् । ३ । इतिपूर्व्ववराच्छ्रेष्ठवरस्य*त्वागमनेवागादिभि*र्दत्तकन्यायाअदानेदण्डाभाव*इतिचेत्तर्हि साकन्या ॥ ४ ॥ पुनरन्यस्मैदानेकिमदोषास्या*दितितत्रोच्यते पर*पूर्व्वत्वदोषवतीस्यात् । उक्तंह्याङ्गिरससंहितायां यथा । ५ । अन्यदत्ताद्याकन्यापुनरन्यस्य दीयते । तस्याश्चान्नंनभोक्तव्यं परपूर्व्वेतिगीयते । इति । ६ । वशिष्ठेनचोक्तं स्वसंहितायां * अद्भिर्वाचाचदत्तायाम्रियेताथवरोयदि । नचमन्त्रोपनीतास्यात्कुमारीपितुरेवसा । ७ । यावच्चेदाहृताकन्यामन्त्रैर्यदिनसंस्कृता । १ अन्यस्मै विधिवद्देयायथाकन्यातथैवसा । ८ । इति । नन्वादित्यपुराणेदत्तकन्यायाः*पुनर्दानंकलौप्रति * सिद्धं कथमेतत्सर्व्वयुगतिधि*रूपपद्यतइतिचेत् । ९ । तत्रोच्यते सतां सर्व्व*युगेष्वेवपुनःकन्यादानस्य * प्रतिषेधः पुनर्दत्तायाःपरपूर्व्वकत्वदोषात् । १० । तद्दार्ढ्यार्थं पुनःकलौदत्तकन्या*दानप्रतिषेधःकृतः । ११ । ७१ ।

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम्। व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्॥ ७२॥

विधिवदित्यादि॥ १। ७२। दाता विगर्हितां व्याधितां वा* विप्रदुष्टां वा या कन्या* छद्मना चोपपादिता* विधिवत्प्रतिगृह्यापि सप्तपदीगमनान्त*क्रियामन्त्रैः संस्कृतां *वरो यदीच्छति तदा*त्यजेत्तत्र दोषो नास्ति। २। ७२। ननु देयं दत्त्वा तस्यां त्याज्यत्वं स्यादित्य*त आह।

यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्। तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः॥७३

यस्त्वित्यादि। १। ७३। यस्तु दुरात्मा कन्यां *दोषवतीमनाख्याय*वराय दानमुपपादयेत्तस्य*दुरात्मनः कन्यादातु*स्तद्दानं वितथं कुर्यात्॥ १। ७३।

विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः। अवृत्तिकर्षिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि७४

विधायेत्यादि। ७४। कार्यवान्नरो यः कश्चित् * किमपि कार्यं साधयितुं प्रवासं* गन्तुमिच्छेत्तदा स* भार्याया वृत्तिं विधाय प्रवसेत्। १। अनाथात्वेऽवृत्तिकर्षिता जीविकां*विना कर्षिता सती स्त्री* स्थितिमती स्थैर्यवती भर्त्रापालनमपि प्राप्य प्रदुष्येत्। २। ७४। तदा प्रोषितभर्तृका*कथं वर्त्तेतेत्यत आह।

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता। प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः॥७५

विधायेत्यादिश्लोकं। १। ७५। वृत्तिं विधाय प्रोषिते भर्त्तरि स्त्री * मनोवाक्कायैः * नियममास्थिता जीवेत्। १। वृत्त्यभावे यदि वृत्तिं*अविधायैव * भर्त्ता प्रवसेत्तदा प्रोषिते भर्त्तरि साध्वी * स्वयमगर्हितैः शिल्पैः* कर्म्मभिरर्थमर्जयित्वा जीवेत्। २। ७५। अविहितवृत्तिप्रोषितभर्तृका*कतिकालानेवं जीवेदित्यत आह।

प्रोषितो धर्म्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः। विद्यार्थं षड्यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान्॥ ७६॥

प्रोषितइत्यादि। १। ७६। अविहितवृत्तिकया*भार्यया धर्म्मकार्यार्थं * प्रोषितो नरो भर्त्ताष्टौ* समाः प्रतीक्ष्योऽस्यादय। १। विद्यार्थं यशोऽर्थं वा प्रोषितो भर्त्ता*षट् समाः प्रतीक्ष्यः स्यात् कामार्थं धना* द्यर्थं प्रोषितो भर्त्ता त्रीन्*वत्सरान् प्रतीक्ष्यः स्यात्॥ २॥ ७६॥

संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः। ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत्॥७७॥

संवत्सरमित्यादि॥७७॥ पतिः स्वं द्विषन्तीं योषितं * संवत्सरं प्रतीक्षेत * ततो यदि द्वेषं न जहाति तदा * संवत्सरादूर्द्ध्वमेनां * स्वं द्विषन्तीं योषितम्। १। दायं स्वदत्तं धनं हृत्वा तया च * सह नैव संवसेत्। २। ७७

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा। सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा॥७८

अतिक्रामेदित्यादि॥७८॥ या भार्या प्रमत्तं मत्तं रोगार्त्तं वा * पतिमतिक्रामेत् सा भार्या * भूषणपरिच्छदविहीना कृता शासनार्थं त्रीन् मासान् परित्याज्या भवतीति। १। ७८।

उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम्॥७९॥

उन्मत्तमित्यादि। ७९। उन्मत्तादीन्‌ तं पतिं द्विषन्त्या * भार्यायास्त्यागो नास्ति दायस्य * पवर्त्तनं हरणं नास्तीति। १। ७९।

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता साऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा॥८०

मद्यपेत्यादि। ८०। या भार्या मद्यपादिः तया आपत्य * सा खल्वपरां परिणी * याधिवेत्तव्या भवति॥८०॥

वन्ध्याऽष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥८१॥

वन्ध्येत्यादि॥८१॥ वन्ध्या भार्या प्रथमर्त्तु * कालमवधीकृत्यैव * सप्तवत्सरान् प्रतीक्ष्य * तावत्कालमप्रसूता चेत्तदा अपरां च भार्यां * परिणीयाधिवेदनात्॥१॥ मृतप्रजा प्रजा भूत्वा मृता यस्याः * म्रियते सा भार्या चापरां दशमे * वर्षे परिणीयाधिवेद्या भवति॥२॥ या भार्या क्रमेणैव स्त्रीजननी स्यात् * सैकादशेऽब्दे त्वपरां * भार्यां परिणीयाधिवेद्या॥३॥ या भार्या त्वप्रियवादिनी भवति * सा सद्य एवापरां भार्यां * परिणीयाधिवेत्तव्या।४।८१

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित्॥८२

रोगिणीत्यादि॥८२॥ या भार्या हिता रोगिणी * न प्रजां प्रसूते या च * शीलतः सम्पन्ना न प्रजां प्रसूते। १। सा त्वनुज्ञाप्य तस्या अनुज्ञया अन्या * परिणीयाधिवेत्तव्या * कर्हिचिन्नावमान्या॥२।८२।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्। सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ॥८३

अधिविन्नेत्यादि॥८३॥ अधिविन्ना या नारी रुषिता सती * गृहान्निर्गच्छेत् सा सद्यः * सन्निरोद्धव्या निर्ग

न्तु * यथानभक्तगात्प्रान्तु * ध्वाक्रोशयदिनतिष्ठेत् । १ । तदाकुलसन्निधौ तासां स्थापा * यथान्वेषा गच्छेत् । २ । ८३ ।

**प्रतिषिद्धापि चेद्या तु मद्यमभ्युदयेष्वपि। प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट्॥ ८४**

प्रतिषिद्धापीत्यादि । ८४ । या स्त्री प्रतिषिद्धापि मद्यं गच्छेत् * या प्रतिषिद्धापि विवाहाद्यभ्युदयेष्वपि ॥ १ ॥ प्रेक्षासमाजं नृत्यगीतादिदृश्या * सभां * गच्छेत् सा षट्कृष्णलानि * सुवर्णं सा दण्ड्या भवेत् । २ । ८४ ॥

**यदि स्वाश्चापराश्चैव विन्देरन् योषितो द्विजाः। तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च॥ ८५**

यदीत्यादि । ८५ । यदि द्विजा ब्राह्मणादयः स्वा सवर्णा * अपराश्चानुलोमजाश्च सवर्णा योषितो वर्णक्रमेण विन्देरं स्तासां मध्ये वर्णक्रमेण * ज्यैष्ठ्यं पूजा वेश्म च भवतीति । १ । ब्राह्मणस्य ब्राह्मण्याः कनिष्ठायाः * अपि ज्येष्ठत्वादिकं मा * तदभावे क्षत्रियजातायास्तदभावे वैश्यजातायाः ॥ २ ॥ क्षत्रियस्य क्षत्रियायाः कनिष्ठाया * अपि ज्येष्ठत्वादिकं मा * तदभावे वैश्याजायाः । ३ । ८५ ।

**भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम्। स्वा चैव कुर्यात् सर्वेषां नास्वजातिः कथंचन॥ ८६**

भर्तुरित्यादि ॥ ८६ ॥ सर्वेषामेव द्विजानां प्राग्विवाहात् स्वा स्वजातिः * या भार्या सा भर्तुः शरीरशुश्रूषां * नैत्यकं धर्मकार्यं च * सायं प्रातर्होमादि कुर्यात् । १ । स्वजातिभार्यायां सत्यां * या प्राग्विवाहादन्यजातिर्भार्या सा * कथंचन भर्तुः शरीरमा * शुश्रूषां धर्मकार्यं च न वै कुर्यात् । २ । ८६ ।

**यस्तु तत्कारयेन्मोहात् स्वजात्यां स्थितयाऽपराम्। यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः॥ ८७**

तत्कारयेन्मोहाद्यस्त्वित्यादि । ८७ । यस्तु द्विजः स्वजातां प्राग्विवाहात् * स्वजातिजायां भार्यायां * स्थितायां परामनुलोमजां भार्यां * तत् देहशुश्रूषादिकम् । १ । मोहात् कारयेत् स तु * पूर्वदृष्टो ब्राह्मणचाण्डालो * यथा तथैव भवति । २ । ८७ ।

**उत्कृष्टायाभिरूपाय वराय सदृशाय च। अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि॥ ८८**

उत्कृष्टायेत्यादि ॥ ८८ ॥ अप्राप्तां विवाहकाल * मप्राप्तामपि तां बालां * कन्याम् उत्कृष्टायोत्तमगुणरूपाय १

दद्यात्*सदृशाय*वरायतस्मै प्राप्तां*यथाविधिसम्प्रदद्यात् ॥ ८८ ॥

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि । नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥८९

काममित्यादि ॥ ८९ ॥ ईदृशवरसाम्प्राप्तौ*ऋतुमत्यपिकन्याकामं यथेच्छं* मामरणादनूढैव गृहे तिष्ठेत् ।१। न मां कन्यां *गुणहीनाय*वरायकर्हिचित्*नतुप्रयच्छेत् । २ । ८९ । यदि कन्यायै *च्छतिविवाहं * तदाकिं कार्यं*तत्राह ।

त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमतीसती। ऊर्द्ध्वंतुकालादेतस्माद्विन्देतसदृशंपतिम्॥९०॥

त्रीणीत्यादि । १ । ९० । ऋतुमतीसतीकुमारीपितरं*त्रीणिवर्षाण्युदीक्षेत * एतस्मात्त्रिवर्षात्कालात्*ऊर्द्ध्वं सदृशं सवर्णं *स्वाभिमतमुत्तमं वा ॥ १ ॥ पतिं विन्देत स्वयं वृणुयात्*मात्रं *त्रिवर्षादिति विशेषः ॥२॥९०॥ एवं स्वयं वरे किं *कन्यायादोषोनभवे *दित्यत्राह ।

अदीयमानाभर्त्तारमधिगच्छेद्यदिस्वयम् । नैनःकिञ्चिदवाप्नोतिनचयंसाधिगच्छति॥९१॥

अदीयमानेत्यादि । १ । ९१ । ऋतुमतीकन्यादाता*त्वदीयमानायदित्रि*वर्षं प्रतीक्ष्योर्द्ध्वं स्वयं *भर्त्तारमधिगच्छेत्तदा*किञ्चिदपि नोनावाप्नोति । १ । सायञ्चभर्त्तारमधिगच्छतिन*सापिकिञ्चिदेनोऽवाप्नोति ॥ २ ॥ ९१ ॥

अलङ्कारंनाददीतपित्र्यंकन्यास्वयंवरा । मातृकंभ्रातृदत्तंवास्तेनास्याद्यदितंहरेत्॥९२

अलङ्कारमित्यादि । ९२ । स्वयंवरापितुरनुज्ञया* स्वयंपतिंवराकन्या*पित्र्यंमातृकंभ्रातृदत्तंवाकञ्चिदलङ्कारंनाददीत । १ । कस्माद्यतस्तमलङ्कारंयदि*साहरेत्तदास्तेनास्यात् * पित्रादीनामत्यास्वयंवरात्तत्*मलङ्कारंहरेत् । २ । ९२ ।

पित्रेनदद्याच्छुल्कन्तुकन्यामृतुमतींहरन् । सहिस्वाम्यादतिक्रामेदृतूनांप्रतिरोधनात्॥९३

पित्रेनेत्यादि । ९३ । ऋतुमतींकन्यांहरन्वहन्पुमान्* कन्यायाःपित्रेशुल्कंन * दद्यात्कस्माद्धियस्मात्*कन्यायाःपिताऋतूनांप्रतिरोधात् । १ । कन्यायाःस्वाम्यादतिक्रामेदिति *क्रमास्वत्वहीनोवर्त्तते २।९३

त्रिंशद्वर्षोवहेत्कन्यांहृद्यांद्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षांवाधर्म्मेसीदतिसत्वरः॥९४

त्रिंशद्वर्ष इत्यादि। ९४। त्रिंशद्वर्षः पुमान् हृद्यां* द्वादशवार्षिकीं कन्यां *वहेदित्यन्वयः। धर्मे सीदति* रेवार्थं च पूर्वोक्तं द्योतयतीति ॥ १ ॥ धातवो ह्यनेकार्थाः अन्तरेण* उपसर्गं प्रकरणादितश्च* विवक्षितमर्थमभिदधति। २ त्र्यष्टवर्षः अष्टवर्षीं प्रतित्र्यष्टवर्षो वा*पुमानष्टवर्षां कन्यां *वहेदतः सत्वरो नान्यथा*तु*पुमान् वहन् धर्मे सीदति ॥ ९४ ॥

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः। तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ ९५

देवदत्तामित्यादि। ९५। उद्वाहमन्त्रे हि भगोऽर्यमा* सविता पुरन्धिर्मह्यं * वोढुर्गार्हपत्याय देवा * अदुरिति देवैर्दत्ताम्। १। भार्यां पतिर्विन्दते*नत्वात्मन इच्छया * देवदत्तां तां साध्वीं भार्यां *तेषां तु देवानां प्रियं*माचरन्पुमान् नित्यं बिभृयात्पुष्णीयात्। २। ९५।

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थं च मानवाः। तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥ ९६

प्रजनार्थमित्यादि ॥ ९६ ॥ प्रजनः प्रसवः सन्तानोऽपत्यजननं बीजमिति * प्रजनार्थं स्त्रियो मानवाः*सन्तानार्थं विधात्रा सृष्टाः। १। तस्माच्छ्रुतौ पत्न्या सह* पत्युः साधारणो धर्मः* उदितो भाषित इति। २। ९६।

कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः। देवराय प्रदातव्या यदि कन्यानुमन्यते ॥ ९७ ॥

कन्यायामित्यादि। ९७। दत्तशुल्कायां कन्यायां *सत्यां शुल्कदः पतिस्तु*यदि प्राक् संस्कारान्म्रियेत * तदा इयं कन्यानुमन्यते। १। तदा तस्या देवराय*सा कन्या दातव्या प्रदातव्या भवति। २। ९७।

आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्। शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयम् ॥ ९८ ॥

आददीतेत्यादि ॥ ९८ ॥ शूद्रोऽपि नितरां द्विजः शूद्रश्च* दुहितरं ददच्छुल्कं नाददीत* कस्माद्धि यस्माच्छुल्कं गृह्णन् कन्यायाः*ददच्छन्नं दुहितृविक्रयं कुरुते ॥ १ ॥ ९८ ॥

एतत्तु न परे चक्रुर्नापरे जातु साधवः। यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥ ९९ ॥

एतत्तु नेत्यादि ॥ ९९ ॥ अन्यस्य कन्यां दास्य* प्रतिज्ञाय अन्यस्य*कन्या यद्दीयते ॥ १ ॥ एतत्तु परे जाताः* अपरे जाताश्च*साधवो जना न*जातु कदाचिच्चक्रुः ॥ २ ॥ ९९ ॥

नानुशुश्रुम जात्वेतत्पूर्वेष्वपि च जन्मसु। शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥ १०० ॥

जातमात्रेण *आनन्त्यं मोक्षमश्नुते । १। स एवज्येष्ठः पुत्रो धर्मजो धर्मोत्पादितः* इतरान् द्वितीयादिपुत्रान् कामजान् * सर्वे मनुष्यायोनिजाः*धर्मार्थमनावश्यकत्वात् । २ । विष्णुनाप्युक्तं च * संहितायां यथा* पुत्रः पितृविशा*लाभेपि पिण्डं ददात् । ३ । पुन्नाम्नोनरकाद्यस्मात्पितरं त्रायते यतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा । ४ । ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् । ५ । पुत्रेण लोकान् जयति तीर्थं च *वसिष्ठेनाप्युक्तं यथा । ६ । ऋणमस्मिन् सन्नयति *अमृतत्वञ्च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् । ८ । अनन्ताः पुत्रिणां लोका * नापुत्रस्य लोकोऽस्तीति *श्रूयते *प्रजाः सन्त्वपुत्रिण इत्यपिशापश्च । ९ । प्रजाभिरग्ने अमृतत्वमश्याम *इत्यपि नियमो भवति पुत्रेण लोकाञ्जयतीति । १० । १०७ ।

पितेव पालयेत्पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः। पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः॥१०८

पितेवेत्यादि।१०८। न केवलं यथैव पितरं पुत्रा*उपजीवन्ति तथैव * ज्येष्ठमेव भ्रातरमुपजीवेयुः।१। किन्तु ज्येष्ठोपि भ्रातॄनिमान् गृहीत्वा पितेव * स्वधर्मानाचरन् यवीयसो भ्रातॄन्* पुत्रानिव पालयेत् ज्येष्ठे भ्रातरि *यवीयांसः पुत्रवच्च वर्त्तेरन्निति । २ । १०८ । कस्मादित्यत्राह ।

ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः । ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥१०९

ज्येष्ठ इत्यादि । १०९ । ज्येष्ठो भ्राता कुलं वर्द्धयति वा*विनाशयति वा लोके ज्येष्ठो भ्राता पूज्यतमः*पितेव सद्भिरविगर्हितः स्यात् । १०९ ।

यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः । अज्येष्ठवृत्तिर्यस्तु स्यात् स सम्पूज्यस्तु बन्धुवत् ॥ ११० ॥

यइत्यादि । ११० । यो ज्येष्ठो भ्राता पितृवत्तत्र वर्त्तते * पालनादिज्येष्ठवृत्तिः * स्यात्स मातेव पितेव । १ यस्तु ज्येष्ठो भ्राता ज्येष्ठवृत्तिर्न स्यात्*सोपि बन्धुवत्सम्पूज्यः । २ । ११० । तर्हि किमेवमेव सर्व्वे भ्रातरः * सहैव वसेयुः पृथक् * नवसेयुरित्यत * उच्यते ।

एवं सह वसेयुर्व्वा पृथग्वा धर्मकाम्यया । पृथग्विवर्द्धते धर्म्मस्तस्माद्धर्म्या पृथक्क्रिया ॥१११॥

एवं सहेत्यादि । १ । १११ । एवमुक्तरूपेण सर्व्वे भ्रातरः*पितृहीना मातापितृहीना वा * समेताः पैतृकं रिक्थं गृहीत्वा । १ । ज्येष्ठो वा पितृव्यं रिक्थं गृहीत्वा* सहवसेयुर्व्वा धर्म्म * कामाया पृथग्भूत्वा * भ्रातरस्ते

हन्त्रे भाः । ४० । यदि विद्यागुणहीनो ज्येष्ठो ज्येष्ठांशं न लभेत कथं ज्येष्ठपुत्रतया पितुः पिण्डं दद्यात् । दद्यादपि
एवं हरेदनमिताक्षरः । विद्यागुणहीनस्य जन्मज्येष्ठस्य ज्येष्ठत्वाभावे खल्वनुपनीतस्य पूर्व्वं कनिष्ठानामुपनयनवेदा
रम्भविवाहाग्निग्रहणानि भवन्तु । तेषु कृतेषु कनिष्ठाः पतिता न भवन्तु तस्मात्तत्प्रमादविद्याख्यानमसाधु । ननु तर्हि
ज्यायान् ज्येष्ठादिलक्ष्म किं जन्म एव यातु * पूर्व्वं जातास्तु द्वितीयादि * भार्य्यापि सती ज्येष्ठा स्या * दिति चेत्तत्राप्युच्य
ते ॥ ४१ ॥ द्वे हि जन्मनी द्विजानां * तत्रैकं मातृगर्भतो * द्वितीयं वेदमन्त्रतः ॥ ४२ ॥ तत्र यस्मिन् जन्मनि यः * पू
र्व्वं जायते स तस्य * ज्येष्ठ उच्यते सर्व्वत्र ॥ ४३ ॥ पूर्व्वं मातृतो या जाता कुमारी * सानूढावस्थायामवरजातानां *
ज्येष्ठा यद्यपि वेदे विवाहमन्त्रैः * पुनर्जायते पत्या सहैकात्मीभूय । ४४ । तदा पूर्व्वमूढा वयःकनिष्ठापि * पूर्व्वजत्वात्
प्रथमा जाया ज्येष्ठा स्यात् * पश्चादूढानां द्वितीयादीनां वयो * ज्येष्ठानामपि जायानामवरजत्वात् । ४५ । तास्तु कनिष्ठा ,
ह्यपि वयसो * ज्येष्ठा स्वजायाभ्यो न हि * द्वितीयं जन्म पश्चात् ॥ ४६ ॥ एवं यदि क्षत्रियकन्या वैश्या * कन्या वा ब्राह्मणेन
न सूढा ज्येष्ठा स्यात् * वर्णतो वयसा च ज्येष्ठा ब्राह्मणी * कन्या पश्चादूढा कनिष्ठा पत्नी स्यात् । ४७ तर्हि सवर्णा ज्येष्ठपत्नी
भार्य्ये * मिश्रा च पत्नी पुत्र कनिष्ठयैव * सवर्णया पत्न्या सह ॥ ४८ ॥ धर्म्माचरणमुक्तं न * ज्येष्ठयानुलोमजया * तस्मा * ज्जाया
नामन्यवर्णानां * ज्येष्ठा न प्राग्जन्म तद्धि ॥ ४९ ॥ भवति धर्म्माचरणे हि * न पत्नीनां ज्येष्ठाकनिष्ठत्वादिना *
विवाहगतमुभयतः सावर्ण्ये * मुख्यत्वेन विधानमुक्तं तत्रापि । ५० । कनिष्ठयापि सवर्णयेति * कनिष्ठत्वमुक्तं सव
र्णाया * मिश्राश्च जायाश्च तस्मात् * जन्मतो ज्येष्ठामितरां ॥ ५१ ॥ शूद्रस्यापि मन्त्रैर्विवाहविधाना * भावाज्जायानां
द्वितीय * जन्माभावेऽपि या यस्याः * पूर्व्वमूढा सा तस्या ज्येष्ठैवेति ज्येष्ठा । ५२ । ननु ब्राह्मणो ज्ञानतो ज्येष्ठः * क्षत्रि
यः * शौर्य्यवीर्य्यतः । १ । वैश्यो ज्येष्ठस्तु धनतः शूद्रस्तु वयसाधिकः ॥ १ । इति वचनं जन्मतो ज्येष्ठावचनेन विरु
ध्यते इति * चेन्न तद्द्विजातिसामान्ये न पुरुषसामान्याद्युक्तं २ । तस्यापवादे भ्रातृणां * सपत्नीनां मध्ये जन्मतो
ज्येष्ठ * वचनमन्यथा दोष * उच्यते ।

**जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ १२६**

जन्मज्येष्ठेत्यादि ॥ १ ॥ पुत्रस्य ज्येष्ठं * पूर्व्वं जन्म एवोच्यते * यतः सुब्रह्मण्याख्य * ज्योतिष्टोमीयमन्त्रेषु
।१०। यजमानस्य जन्मज्येष्ठेनैव * पुत्रेणामुकस्याह्वानं * तद्यत्र विधौ विहितम् । २ । जन्मज्येष्ठपुत्रमात्रमामो
चार्य्यैव * मामुकेयेदमुकस्य पिता * यजते मुकत्वमेहीति ॥ ३ ॥ नात्र विद्यागुणावपेक्ष्येते तर्हि * स्त्रीणां
जन्म विद्यागुणैस्त्रिभिर्ज्येष्ठ * मिति चेत्तत्राप्युच्यते ॥ ४ ॥ गर्भेषु यमयोर्जातयोः * पुत्रयोः कन्ययोरपि * जन्म
त एव ज्येष्ठता * नात्र विद्यागुणापेक्षा । ५ । अन्यायोपनयनविवाहेषु * विद्यादिमतः कनिष्ठस्यापूर्व्वं * उपनयनो

वाचाप्रक्र.ब्रवरायेदं ब्रूयात् * वभ्यामिमामभ्रातृकां * दुहितरमहं ददे * यदस्यां पुत्रोभवेत्स * समापित्र पौत्रोभवेदिति ॥ ६ ॥ ममयंदृष्टिकतापुत्रइत्यवमति *. कतिरितिपुत्रिकेति ॥ ७ ॥ यद्दिवरस्यसौभ्यां दितावं * मनुमौयेतमङ्क तवातदा * मनसैवैवं पुत्रिका।* कत्वावरायप्रद्दात् ॥ ८ ॥ ततोवाचाप्रकाश्य ब्रूयादिमां*महं मनसापुत्रिकाकल्पितावभामस्मैसमिति । ९ । गौतमेनोक्तमपिच* पितोत्सृजेत्पुत्रिकामनपत्यो ऽग्निं *प्रजापतिञ्चेष्ट्वाऽस्मदर्थमपत्यमितिसंवादा ।१० । अभिसन्धिमात्रा*दित्येकेतस्य यथा * मोपयच्छेद भ्रातृकामी इति । ११ । वसिष्ठेनाप्युक्तं यथा*विज्ञायते ऽभ्रातृका * पुंसःपितृनभ्येति*प्रतीचीनं गच्छति* पुत्रत्वं तत्रश्लोकः । १२ । अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् । अस्यां योजायते पुत्रःसमे पौत्रोभवेदि ति । १३ । इति । विष्णुनाप्युक्तं तद् यथा*यस्तस्याःपुत्रःसमे पौत्रोभवे * दितियापित्रादत्तासापुत्रिका । १४ । पुत्रिकाविधिनाप्रति*पादितापितृभ्रातृ*विहीनापुत्रिकेव । इति । १५ । एतेनपितृमरणेपि *माता*पुत्रिकां कर्त्तुमर्हतीति*विज्ञापितम् । १६ । वसिष्ठविष्णुवचनयो*र्विशेषेणपुत्रपदोपादानाद *नापत्यपदेनपुत्रो*विव क्षितोनदुहिता । १७ । १२७ । अत्रपुराकल्पं *दर्शयतानेनतु*विधानेनेत्यादि । १ । १२८ ।

**अनेनतुविधानेनपुराचक्रेऽथपुत्रिकाः । विवृद्ध्यर्थं स्ववंशस्यस्वयंदक्षःप्रजापतिः ॥ १२८ ॥**

पुरादक्षःप्रजापति*रपुत्रकःस्वयं स्ववंशस्य विवृ*द्ध्यर्थमनेनतुविधानेनैव*बह्वीःपुत्रिकाश्चक्रे यथा ॥१२८।

**ददौसदशधर्म्मायकश्यपायत्रयोदश । सोमायराज्ञेसत्कृत्यप्रीतात्मासप्तविंशतिम् ॥ १२९ ॥**

ददावित्यादि । १२९ । सदक्षःप्रजापतिर्दशदुहितॄः *धर्म्मायपुत्रिकाःकृत्वा*ददौत्रयोदशकन्याःपुत्रिकाःकृत्वा कश्यपायददौ । १ । सप्तविंशतिंदुहितॄः* पुत्रिकाःकृत्वासोमाय * राज्ञेसत्कृत्यददौ । २ । १२९ । इतोऽवं पुत्रिकाकृता * सुतापितुरपुत्रस्य * धनंहरेत्पिण्डंददात्*यथापुत्रस्यार्थहरःपिण्डदायी ॥ २ ॥ इतरथाप्य पुत्रसाधनंसर्व्वं * भ्राताहरेत्तदभावे सपिण्डाश्चतुर्थ *पुरुषात्परः* पञ्चमादिःपुरुषो * योवर्त्ततेसहरेत्पिण्ड* मेकश्चैवैकोद्दिष्टश्राद्धे*चतस्रोदद्यात्अत्रविप्रतिपत्तिंदर्शयति ।

**यथैवात्मातथापुत्रःपुत्रेणदुहितासमा । तस्यामात्मनितिष्ठन्त्यांकथमन्योधनंहरेत् ॥ १३० ॥**

यथैवात्मातथेत्यादि ॥१॥१३०। आत्मावैजायतेपुत्र * इतियथात्मातथैव*पुत्रःपुत्रेणसमादुहिताभवेत् ।१। तस्यांदुहितरिखलुात्मरूपायां* तिष्ठन्त्यामकृतायांपुत्रिकायांसत्यां *कथमन्योवक्ष्यमाणो * यःसपिण्डः*

दनन्तरः पञ्चमादिः पुरुषः स धनं हरेत् ॥ पुत्रिकायामकृतायां कथं नानी हरेत् ॥ २ ॥ १३० ॥ अस्यां विप्रतिपत्तौ सिद्धान्तमाह ।

**दुहितुर्यौतकं यत्स्यात्कुमारीभाग एव सः। दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥१३१॥**

दुहितुर्यौतकमित्यादि । १ । १३१ । अथया दुहिता न पुत्रिका कृता * तस्या विवाहकाले * यत् पित्रा यौतकं धनं दीयते * स कुमार्या दायभागः स्यात् । १ । तस्या दत्तयौतकादवशिष्टं धनं * यत्तत्सर्व्वमौरसादिद्वादशपुत्र पौत्रप्रपौत्रैकजातभ्रातृपुत्रपौत्रप्रपौत्राणामेव भवति । २ । तदभावे त्वपुत्रस्य * च स्यात् पुत्रकस्याकृतपुत्रिकस्य * धनं सपिण्डादनन्तरः पुरुषो हरेत् पिण्डमपि दद्यात् ॥ ३ ॥ कृतपुत्रिकस्य तु पुत्रिकैव * दुहिता धनं हरेन्नान्यः * पुत्रिकामरणे मातामहस्य । ४ । धनमखिलं दौहित्र एव पुत्रिकापुत्र * पौत्रवद्दौहित्रो हरेन्नत्वन्यो दौहित्रो नाप्यन्यः सपिण्डादनन्तरः । ३ । १३० । कस्मादित्यत उच्यते ।

**दौहित्रो ह्यखिलं मातुरपुत्रस्य पितुर्हरेत्। स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥१३२॥**

दौहित्र इत्यादि । ४ । १३२ । यस्मात् पुत्रिकापुत्रो दौहित्रो * मातुरपुत्रस्य पितु * रखिलं रिक्थं हरेत् । १ । स एव पुत्रिकापुत्रः पौत्र एव दौहित्र * स्वस्य पित्रे यथैकं पिण्डं तथा * मातामहाय चैकं पिण्डमेकोद्दिष्टं चाब्दिकं च दद्यादिति द्वौ पिण्डौ दद्यात् । २ । ननु पुत्रदुहितृप्रतिकृतिः पुत्रि * का तस्याः कस्मान्न पित्रे * पिण्डोदकमेकोद्दिष्टं दद्यात् । ३ । उच्यते पूर्व्वमुक्तं नास्ति स्त्रीणां क्रियामन्त्रैरिति धर्म्मे व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिरिति । ४ । तस्मात् पौत्र एव पुत्रिकापुत्रो * मन्त्रैः पिण्डं दद्यान्न तु * पुत्रिका मन्त्रैः क्रियाविरहादिति ॥ १३२ ॥ यावच्च पुत्रिकायाः पुत्रो न भवति तावत् पुत्रिकैव पिण्डं दद्यादिति । २ । ननु कस्मादेवं स्यादित्यत आह । पौत्रेत्यादि श्लोकम् । १ । १३३ ।

**पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥१३३॥**

लोके धर्म्मतः पौत्रदौहित्रयोः * पौत्रस्य पुत्रिकापुत्रस्यैव दौहित्रस्य * विशेषो नास्ति कस्मात् * हि यस्मात्तयोः पौत्रदौहित्रयोः * पितरौ * पिता च माता च तिष्ठतः तद्देहसम्भूतौ । १ । १३३ । अथ तर्हि पौत्रस्य पितुस्तथा * दौहित्रस्य पुत्रिकापुत्रस्य मातुस्तदेकपितृ * सम्भूतत्वादेव पौत्रपुत्रिकापुत्रदौहित्रयोरविशेषः । ३ । तर्हि सर्व्वस्या एव दुहितुः पुत्रो दौहित्रः पौत्रसमः स्यात् * किमर्थं तर्हि पुत्रिका * कर्त्तव्या स्यादित्यतोऽवक्ष्यते । ४ । पुत्रिकापुत्रादपरदौहित्राणां भेद एव मातुः प्रथमतः पिण्डमित्यादिना । ५ । । १२ । पुत्रिकापुत्रिकयोरभेदमाह ।

**पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥१३४॥**

।२। इतौरसपुत्रपुत्रिकयोरभावे*क्षेत्रजःपुत्रस्तद्धनं* हरेत्पिण्डञ्चदद्यादिति।४। इत्ये वमौरसाभिप्रायेण मनु*गौतमाभ्यां द्वादशसु*पुत्रेषु पुत्रिकानोक्ता*याज्ञवल्क्येन द्वितीय*पुत्रःपुत्रिकापठिता*मौरसाभिप्रायेणैव।५। औरसाधमाँ क्षेत्रजस्तत्समःपुत्रिकासुतः। इति। पुत्रिकाचासौसुतश्चेति।६। विष्णु वसिष्ठाभ्यान्तुक्षेत्रजः पुत्रो * द्वितीयःपुत्रिकापुत्र* स्तृतीयःपुत्रइत्युक्त * स्तयोरभिप्रायएष। ७। पुत्राभावेक्षेत्रजपुत्रं कुर्यात्*दौरसतुल्यत्वात्तु*दुष्करं मत्वा निच्छया*शास्त्रार्थ्यात्तदाभ्रातां*पुत्रिकां कुर्यादिति। ८। ९ ।१४। मनुयस्तुपुत्रकःपुत्रिका*कन्यं नेच्छतिनास्तिवा*यद्यनुमतापि तदन्य*कर्तुं नेच्छतिनपुत्रार्थं*को हरेत्पिण्डञ्चदद्यात्।१। इत्यतश्चाह।

**उपपन्नोगुणैःसर्व्वैःपुत्रोयस्यतुदत्त्रिमः। सहरेतैवतद्रिक्थंसम्प्राप्तोप्यन्यगोत्रतः॥१४६॥**

उपपन्नोगुणैःसर्व्वैः*पुत्रइत्यादि।१।१४६। यस्यापुत्रस्यान्यगोत्रतःपुत्रो*यथाविधिदत्तोत्तदत्त्रिमःपुत्रः सर्व्वैःसद्गुणैरुपपन्नोभवति।१। सच्चौरसपुत्रपुत्रिकाक्षेत्रज*पुत्रपौत्रप्रपौत्राणामभावे स*तस्माद्गोत्रतःसम्प्राप्तोपि*तद्रिक्थंहरेतैव।२। इतोयस्तृतीयःपुत्रो*मनुगौतमाभ्यामुक्तो*विष्णुयाज्ञवल्क्यवसिष्ठैरपि* पुत्रिकापुत्रायत्र*एवमुक्तोनातोविरोधः।१।१४६। नन्वेवदत्त्रिमःपुत्रो* भिन्नगोत्रतोभ्यागतो *भिन्नगोत्रएवकथं*रिक्थंहरेतेववविनापिण्ड*मित्यतश्चाह॥

**गोत्ररिक्थेजनयितुर्नहरेद्दत्त्रिमःक्वचित्। गोत्ररिक्थानुगःपिण्डोव्यपैतिददतःस्वधा॥१४७**

गोत्रेत्यादि।१४७। दत्त्रिमःपुत्रोजनयितुःपितु*र्गोत्ररिक्थेक्वचिन्नैव* हरेत्कस्मादित्यतआह* व्यपैति इत्यतइति।१। यतोऽन्यस्मै पुत्रं ददतःपितुः*स्वधापिण्डोदकक्रिया*तस्मात्पुत्रात्व्यपैति।२। कस्मादित्यतउच्यते*गोत्ररिक्थानुगःपिण्ड*इतिपिण्डोहिगोत्ररिक्थानुगो * योयस्यगोत्ररिक्थंहरेत्सतस्यपिण्डदायीस्यात्।३। यस्मै पुत्रोदत्तःस्तस्यगोत्रभाक्*सपुत्रस्तद्रिक्थभाक्चस्यात्।४।१४७। उपसंहरति।

**एतद्विधानंविज्ञेयंविभागस्यैकयोनिषु। बह्वीषुचैकजातानांनानास्त्रीषुनिबोधत॥१४८॥**

एतद्विधानमित्यादि।१४८। एकयोनिषुस्त्रीषुइति*प्राग्विग्राह्यस्याः स्त्रियः *एकस्यांयोनौजाता*।१। ब्राह्मणयोनौ ब्राह्मणकन्या बह्वीषुपत्नीषु * एकजातानामेकस्माद् ब्राह्मणाज्जातानां पुत्राणांदायविभागस्य।२। तथाक्षत्रिययोनौजातायाःस्त्रियः* स्तासामेकस्यामनेकासुस्त्री * ष्वेकजातानामेकस्मात्क्षत्रियात्*पत्नीजातपुत्राणांदायभागस्य।३। तथावैश्यायोनौजातायाःस्त्रिय*स्तासामेकस्यामनेकासुस्त्री*ष्वेकजातानामेकस्माद्वैश्यात्पत्नी*जातानांपुत्राणांदायविभागस्य।४। तथाशूद्रयोनौजातायाःस्त्रिय*स्तासा

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः। तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः ॥१४९॥

ब्राह्मणस्येत्यादि । १ । १४९ । ब्राह्मणस्य यद्यानुपूर्व्या पत्न्यो ब्राह्मणकन्याक्षत्रियकन्यावैश्या *कन्याशूद्रकन्याश्चेति चतस्रः स्युः । १ । तस्मात्तासु चतसृषु जातेषु पुत्रेषु क्रमात् *विप्रवद्भिरभिधिता * दायस्तु पारगतेषु । २ । पितृवद्वा पितुरिच्छया वा * स्वधनस्य विभागेऽयं विधिर्व्वक्ष्यमाणो विहितः स्मृतः । १ ।१४९ । कोऽयं विधिरित्यत आह ।

कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च। विप्रस्योद्धारिकं देयमेकांशश्च प्रधानतः ॥ १५० ॥

कीनाश इत्यादिकम् । १ । १५० । कीनाशः कर्षकोहलो *गोवृषो गोषु वृषभो* यानं रथादिदोलादि* अलङ्कारश्च वेश्म च । १ ॥ विप्रस्य ब्राह्मणकन्यायां जायायां * ब्राह्मणाज्जातस्य पुत्रस्योद्धारिकं देयं सर्व्वस्मादपरश्चैकांशो* देयः कस्मात् प्रधानतो ज्यैष्ठ्यात् । २ ॥ ज्यैष्ठोद्धारः पूर्व्वमुक्तः एकं वृषभमुद्धारमिति* वृषभश्च कस्मादिति च । ३ । विप्रशब्दो द्विजमात्रे *यथा गालवशब्दो ब्राह्मणजातौ च *विप्रे गालवश्च च ॥ ४॥ यथोक्तं शब्दमहार्णवे * इत्येवमादि तथैव *ब्राह्मणसामान्यजातौ *ब्राह्मणविशेषे च विप्रशब्दः ॥४॥ ब्राह्मणाद्ब्राह्मणकन्यायां क्षत्रिय* कन्यादिष्वपि ब्राह्मणाच्च* जाताः पुत्रा ब्राह्मणजाता एव विप्राः ॥५॥ तत्र सामान्ये विप्रशब्दो वर्त्तते * विशेषे च ब्राह्मणकन्यायां * पत्न्यां जाते च पुत्रे विप्रशब्दः ॥ ६ ॥ इति ब्राह्मणजातिसामान्ये* विशेषे च निमित्तसङ्केता * द्विप्रशब्दो नैमित्तिको* विद्वत्सु पारिभाषिकः ॥७॥ इति द्विविधो हि सङ्केतो शब्दः* परिभाषा चेति द्विविधा * सङ्केतस्त्वियं यथा विद्यायां यातीति विप्रत्व * मिति परिभाषा निर्णीता ॥ ८ ॥ तेषु च विप्रशब्दो ब्राह्मणात् * स्वोढायां ब्राह्मणकन्यायां यः * पुत्रो जायते स एव * मनुना विवक्षितः ॥ ९ ॥ स्वोढायां क्षत्रियकन्यायां वैश्या* कन्यायां च जातानां मूर्द्धाभिषिक्ता *दाम्बष्ठानामतज्जत्वं वचनात् ॥ १० ॥ न तु प्रधानत इति यदुक्तं *तत् किं ज्यैष्ठ्यात् तस्य नोपपद्यते *पूर्व्वमुक्तं द्विजन्मतोमन्त्रे विवाहतश्चापि ॥ ११ ॥ सदृशीषु स्त्रीषु जातानां पुत्राणां *मातृतो ज्यैष्ठ्यं नास्ति*जन्मतो ज्यैष्ठ्यं च वचनात् *तेनानुलोमजायान्तु *पूर्व्वजो ज्यैष्ठो भवति ॥ १२॥ मतान्तरे तत् प्राधान्यं नास्य ज्यैष्ठ्यात्ः* किन्तर्हि जातितो न च *जातितः पत्नीषु यस्मात् *सम्भूताये जाताः श्रेयांस्त एव ते ॥१३॥ इति वचनात् तत्राह *प्राधान्यं कौलीन्यात् एव प्रातः *ब्राह्मणात् स्वोढायां ब्राह्मणकन्यायां*मयं द्विजातो ब्राह्मणः॥१४ उभय*कुलतः श्रेष्ठत्वादेव* क्षत्रियकन्यायां वैश्या * कन्यायां पत्न्यां ब्राह्मणाज्जातास्तु * ब्राह्मणा एव मूर्द्धाभिषिक्ताद्याम्बष्ठाः १५ ॥ नोभयकुलतः श्रेष्ठाः* मातृपितृतोऽपकर्ष * वर्णजातत्वाज्जाताज्ज्ञेयास्ते एवेति ॥ १६ ॥ १५० ॥ इतो वक्ष्यमाणे सर्वान्ते शेष*धनविभाग इत्यतः * ।

धनं तस्याश्राद्धादिषु * कर्म्मश्राद्धादिकारीवाय कुर्य्यात् । १३ । तदभावे एवं ष्वस्यामिवस्य * तद्धनाधिकारः स्यादिति । १४ । अयदसापरे त्विति * द्यमब्दोपादानेन * पुंसएकजातभ्रातृपुत्रः * स्त्रीणां सपत्नीपुत्रश्चपुत्रः । १५ । सव्वादमपुत्राभावे * सर्व्वरिक्थहरइति * स्थापितं द्व्याधिकत्वात् । इति ।१६। १६५। नन्वौरस इतिकि * उरसानिर्म्मितइति* योगरूपात्मव्यार्थो * याद्यशःस्यात्तथाविधः।१। उतानयाव्यद्रतातः * प्रता कं पुत्रःपरिभाष्यते * ।

स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धियम्। तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम्॥१६६

स्वे क्षेत्र इत्यादिना । २ । उरसोऽग्राचेतिनिर्म्मितेऽर्थेविहित * उरसानिर्म्मित इत्यण्प्रत्यये * औरसश्चात्मनउरःस्थत्वादुरः * आत्मातेननिर्म्मितइत्यात्मजइति । २ । सचनानाविधःसम्भवतितत्र * परस्त्रेव आदिव्यावृत्त्यर्थमाह * स्वे क्षेत्र इत्यादिश्लोकम् । ३ । संस्कृतायामिति स्त्रीपुंसयोःस्वस्व * वर्णोक्तविधिना*विवाहक्रियया*संस्कृतायां नार्य्यामिति । ४ । नन्वनावर्णस्यानवर्णोक्तेन*विधिनासंस्कारःशास्त्रे*क्वा प्यभिहितोना*पामन्त्रैर्द्विजाना*विवाहसंस्कारउक्तः ।५। तथाचस्त्रीपुंसयोस्स्वस्ववर्णोक्त*विधिनाविवाहेसंस्कृ तायां नार्य्यां स्वे क्षेत्रइवैतिच्चेतेयं । ६ ।स्वयमुत्पादयेत्पुत्रं *तं प्रथमकल्पितमौरसं पुत्रं विजानीयात् । ७ । त तद्यथायःकश्चिद्ब्राह्मणोब्राह्मण*दुहितरमुद्वहेत्तस*तयोःस्वस्ववर्णोक्तविधिनामन्त्रैर्विवाहः ।८। तेनसंस्कृता यां तस्यां पत्न्यां स्व*क्षेत्रे स्वयमुत्पादितः*पुत्रऔरसउच्यते ।९ योवाब्राह्मणःक्षत्रियदुहितर*मुद्वहेत्सतयोः स्वस्य*वर्णोक्तविधिनामन्त्रैर्विवाहः । १० । तेनसंस्कृतायां क्षत्रियकन्यायां *ब्राह्मण्यां स्वे क्षेत्रे स्वय*मुत् पादितःपुत्रऔरसो*मूर्द्धाभिषिक्तादिनामब्राह्मणः ।११ ।यश्चब्राह्मणोवैश्यादुहितर*मुद्वहेत्सतयोःस्वस्व*वर्णोक्त विधिनामन्त्रैर्विवाहः । १२ । तेनसंस्कृतायां वैश्याकन्यायां *ब्राह्मण्यां स्वे क्षेत्रे स्वय*मुत्पादितःपुत्रऔर* सोऽम्बष्ठोनामब्राह्मणः ।१३।एवं प्रकारेणयःकश्चिद्ब्राह्मणोब्राह्मणकन्यां *क्षत्रियकन्याञ्चोद्वहेत्तयोःस्वमुत्पादि तौ*पुत्रौतथैवौरसौस्तः।१४।एवञ्चयःकश्चिद्ब्राह्मणोब्राह्मण*कन्यां वैश्याकन्याञ्चोद्वहेत्तयोश्च*स्वयमुत्पादितौपुत्रौ तथैवौरसौभवतः १५ ।एवमपियःकश्चिद्ब्राह्मणोब्राह्मण*क्षत्रियवैश्याकन्याउद्वहेत्तासु*स्वयमुत्पादिताःपुत्रा*स्त थैवौरसाभवन्ति । १६ । एवं क्षत्रियःक्षत्रिय*कन्यां वैश्याकन्यां वाहेवायद्वादवहे त्*सतयोःस्वस्ववर्णोक्त*विधिना विवाहएव । १७ । तेनसंस्कृतायां तस्यां तस्यां पत्न्यां * स्वे क्षेत्रे स्वयमुत्पादितःस्स पुत्रःक्षत्रियएवौरसउच्यते । १८ । एवं वैश्योवैश्याकन्या*मुद्वहेत्सतयोःस्वस्व * वर्णोक्तविधिनामन्त्रैर्विवाहः । १९ । तेनसंस्कृतायां स्वे क्षेत्रे *स्वयमुत्पादितःपुत्र*औरसपुत्रउच्यते । २० । स्वस्ववर्णोक्तविधिना*मन्त्रैरेवद्विजाना विवाहउक्तः*शूद्रा

प्रथमा धर्मपत्नी च * द्वितीया रतिवर्द्धनी । धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् ॥४८॥ इति तत्प्रथमोढाया धर्मपत्न्या आशङ्का * निरस्यते * पुनर्धर्मेति पदं ॥४९॥ नन्वसवर्णा वा धर्मपत्नी तस्या * एव पुत्र औरस इति चेन्न * यस्य द्विजब्राह्मणस्य प्रथमा * क्षत्रियकन्या सा सा धर्मपत्नी स्यात् ॥५०॥ यथागस्त्यस्य राजनकदुहिता * लोपामुद्रा सधर्मिणी * यमदग्नेः सधर्मिणी * गाधिनृपतेर्दुहिता ॥ ५१ ॥ तस्यां जातः पुत्र एवौरसः स्यात् * द्वितीयां ब्राह्मणकन्यायां जात * पुत्रोनौरसः पुत्रो भवत्विति । ५२ । स्वयं याज्ञवल्क्योक्तमेषां दाय * विभागो नोपपद्यते * चतुस्त्रिद्व्येकभागाः स्यु * र्वर्णशो ब्राह्मणात्मजाः ॥ इति ॥ ५३ ॥ तस्माद्बौधायनवचने सवर्णा * शब्दो मन्त्रैर्विवाहेन * संस्कृतायां सवर्णायामित्यर्थो न जन्मतः । ५४ । याभिर्भार्याभिः सहपत्न्यस्य * संयोगस्ता विप्रा नोक्ताः । ५५ ॥ सवर्णास्ववकभार्यासु * विद्यमानासु ज्येष्ठया * सहधर्मकार्यं कुर्यात् । ५६ । मिश्रासु च कनिष्ठयापि समान * वर्णया समानवर्णाभावे त्व * नन्तरयैवापदि च * न त्वेव द्विजः शूद्रया ॥ इति ॥ ५७ ॥ तस्माद्द्विजानां सवर्णा * नुलोमजद्विजकन्यासु पत्नीषु * जाताः पुत्रा औरसाः स्युः ॥ ५८ ॥ १६६ ॥

**यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥१६७**

अथ क्रमोद्दिष्टः क्षेत्रजपुत्रो लक्ष्यते * यस्तल्पेत्यादि ॥ १ ॥ १६७ । तल्पः शय्या पत्युस्तल्पे * शयनाधिकारो भार्याया मेव * तेनोपचारात्तल्पशब्देन पत्नी * लक्ष्यते न तु पत्नी ॥ १ ॥ संस्कृतप्रकरणात्तथा च स्मृति * प्रमीतस्य द्विजस्य क्लीबस्य च * चतुर्विधस्य व्याधितस्य शारीर * मानसदोषागन्त्वभिशापादिभ्यः * ॥ २ ॥ च शब्दो जातव्याधिमतश्चकारात् प्रव्रजितस्य पतितस्य च खलु * पुत्राभावापदि यया * विधिधर्मेण नियुक्तायाम् ॥ ३ ॥ देवरात्सगोत्राद्वोत्तमाद्वा स्वस्य * तल्पे शयितायां पत्न्यां * जायते यः पुत्रः स तु * द्वितीयकल्पितः क्षेत्रजः स्मृतः । ४ । पराशरेणाप्यौरसः * क्षेत्रजश्च दत्तः कृत्रिमकः * सुतः इत्युक्ताः क्षेत्रज * पुत्रकरणार्थं सूक्तं ।५। नष्टे मृते प्रव्रजिते * क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां * पतिरन्यो विधीयते इति । ६ । तेन नियोगविधिना * वान्यः पतिर्विधीयते * न विवाहविधानेन * पुनर्भूत्वदोषापत्तेः पराशरेणापौनर्भवस्योक्तेः । ७ । क्लीबाश्चतुर्विधाः प्रोक्ताश्चरकेण * बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् । क्लीबाः सम्पद्यते तस्याणुसामान्यलक्षणम् । ८ । इत्यादितत्र द्रष्टव्यः * कात्यायनेनचोक्तं * क्लीबत्वस्य लक्षणं ॥ ९ ॥ न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति ॥ मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीबः स उच्यते ॥ १० ॥ याज्ञवल्क्येनाभिहितं * क्षेत्रजः क्षेत्रजनितः * सगोत्रेणेतरेण वा । ९ । इति विष्णुनाप्युक्तं यथा * नियुक्तायां सपिण्डे * नोत्तमवर्णेन वोत् * पादितः क्षेत्रजो द्वितीयः ॥ १० ॥ इति ॥ स्वधर्मेण नियुक्तायामित्यनेन * द्विविधः क्षेत्रजउक्त * एको नार्य्यां नियोगेन * द्वितीयो वा भिचाराभावाद्धर्माविरोधेन * स्वयं प्रतिपन्नायां प्रतारितायां * बलात्उपभुक्तायाञ्च

उत्पद्यते गृहे यस्यन च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः॥ १७०

उत्पद्यत इत्यादि। १। १७०। यः पूर्वो यस्य स्वे भार्यायां *उत्पद्यते स कस्य सम्भोगात्* ज्ञातो न च विज्ञाते *स्वे गूढ एवोत्पन्नः। १। स पुत्रो यस्य तल्पजो *भार्यायां जातस्तस्यैव * स पुत्रः स्याद् गूढोत्पन्नो नाम षष्ठ इति २। विष्णुनाप्युक्तं गृहे च *गूढोत्पन्नः षष्ठो यस्य तल्पजस्तस्यासौ। इति *वशिष्ठेनाप्युक्तं गृहे च गूढोत्पन्नः षष्ठ इति। याज्ञवल्क्येन चोक्तं यथा * गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतो मतः इति। ४। १७०। क्रमिकत्वादपविद्धः पुत्रो लक्ष्यते*।

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते॥ १७१॥

मातेत्यादि। १। १७१। मातापितृभ्यामुभाभ्यां *तयोरन्यतरेण वा* मात्रा वा पित्रा वोत्सृष्टं *त्यक्तं यं पुत्रं यः पुत्रं *परिगृह्णीयात् स तस्यापविद्धः पुत्र उच्यते। १। विष्णुनोक्तमपविद्धस्तु कादृशः *पित्रा मात्रा च परित्यक्तः* स च येन गृहीतस्तस्य। इति। २। वशिष्ठेनोक्तम् *अपविद्धः पञ्चमोऽयं *मातापितृभ्यामपास्तं प्रतिगृह्णीयात्। इति ३। याज्ञवल्क्येनोक्तम् *उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः। इति। ४। १७१। क्रमिकत्वात् कानीनः पुत्रो लक्ष्यते॥

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्॥१७२॥

पितृवेश्मनीत्यादि॥ १। १७२। कन्यापितृवेश्मनि यं *पुत्रं रहो जनयेत् तं *कन्यासमुद्भवं पुत्रं * तस्याः कन्याया वोढुः *कानीनं पुत्रं नाम्ना वदेत्। इति। विष्णुनाचोक्तं कानीनः पञ्चमः *पितृगृहे ह्यसंस्कृतयैवोत्पादितः *स च पाणिग्राहस्येति। २। याज्ञवल्क्येन चोक्तं यथा * कानीनः कन्यकाजातो मातामहसुतो मतः इति। ३। वशिष्ठेनाप्युक्तं॥ कानीनः पञ्चमोऽयं पितृगृहे * असंस्कृतां कामादुत्पादयेत् तस्य *मातामहस्य पुत्रो भवतीत्याहुरिति। ४। १७२। उद्दे यक्रमात् सहोढः *पुत्रो लक्ष्यते।

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते॥ १७३

या गर्भिणीत्यादि॥ १॥ १७३॥ या ज्ञाता गर्भिणी सती *मन्त्रं विनाप्युद्वहं संस्क्रियते *या वाप्यज्ञातगर्भिणी* *सती मन्त्रैः संस्क्रियते॥ १॥ स गर्भो वोढुर्भवति *स च पुत्रः सहोढ इत्युच्यते* यद्यप्यज्ञातगर्भिणीत्यतो मन्त्रैः* संस्क्रियते चेतयोनिः॥ २॥ ज्ञानमन्त्रसंस्कृताया * च्छूद्रा भार्या वभार्याया* च न धर्मपत्नीत्वस्यात्॥ ३॥

ननिर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात्। स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया॥१९९

ननिर्हारमित्यादि ॥ १९८ ॥ स्त्रियो भर्त्तुरनाज्ञया*कुटुम्बबहुमध्यगात्* साधारणभूताद्वित्तात् *किञ्चिदपि निर्हरणं *नकुर्युः स्वकादपि च*वित्तान्न निर्हरणं कुर्युः। १। ०। १९९।

पतौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥२००॥

पतावित्यादि। २००। स्त्रीभिः पतौ जीवति यो*ऽलङ्कारो धृतो भवेत्*तमलङ्कारं दायादाः पुत्रादयो न*भजेरन् भजमानास्ते*दायादाः पतन्तीति। १। विष्णुनापि तद्वचनस्यामर्थ*ये पुत्रान पितृधनापि प्रमाप्र्युः* प्रानाश्च नं प्रावित्यादिश्लोकेन। २००।

अनंशौ क्लीवपतितौ जातऽन्धबधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥२०१॥

अनंशावित्यादि। २०१। क्लीवश्च पतितश्च जात्यन्धश्च*जन्मबधिरश्चोन्मत्तश्च जडश्च*मूकश्च ये च निरिन्द्रियाः पुत्राः। १। खञ्जपङ्ग्वादयस्ते च*सर्वेनांशभागिनः स्युः। २। अनंशवचनेनेदं*ख्यापितं क्लीवपतितादयो यदानींऽशौ क्लीवत्वादि * दोषश्चीनो वर्त्तते। ३। तदानांशभाज एव * यदि न वर्त्तते ऽनांऽशी * केवलएक एवाधिकारी क्लीव*पतितादीनामनन्तमो वर्त्तते कोपि। ४। तदा सर्व्वं रिक्थं हरस्तु स्यात्*पितृदायित्वादित्यत*स्तद्भावे योऽधिकारी*सन तद्धनं हरेदिति। ५। विष्णुनाचोक्तमेवं*पतितक्लीबाऽचिकित्स्य * रोगविकलाश्चभागहारिणः स्युः*रिक्थग्राह्यपादिभिस्ते भर्त्तव्याः। ६। तेषां चौरसाः पुत्राभाग*हारिणो* नत्पतितस्य*पतनीयं कर्म्म णिकृते *अनन्तरोत्पन्नाः पुत्राः। ७। प्रतिलोमासूत्पन्ना*श्चाभागिनस्तत्पुत्राश्च* पैतामहे पार्थ्येऽस्य*ग्रासाभिश्च भरणीयाः। ८। इति। याज्ञवल्क्येनाप्युक्तं* क्लीवोऽथपतितस्तज्जः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः। ९। औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः। सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्त्तृसात्कृताः॥ १०॥ अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः। निर्व्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च। ११॥ इति॥ २०१॥ एतदेवाह सर्व्वेषाम्।

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् २०२

सर्व्वेषाममपीत्यादि ॥ १॥ २०२॥ सर्व्वेषां तु क्लीवादीनां *ग्रासाच्छादनं तद्धन * हारिणा मनीषिणा * शक्त्या दातुं न्याय्यं स्यात्*तददत्स्वन्नत्यन्तं च पतितो भवेत्॥ १॥ २०२॥

**यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥२०**

यद्यर्थितात्वितादि ॥२०३॥ अंशिनिसतिक्लीबादीनां कथञ्चि * दन्धीतं दारैर्यद्यर्थिता ऽर्थित्वं * पुत्रार्थं नाकारित्वं स्यात्तदा ॥ १ ॥ पुत्रोत्पादने उत्पन्नं तन्तुरूपं * भर्तुः पुत्रार्थित्वं येषां * तेषां दाराणां भर्तृनियोगेन * नियुक्तानामपत्यं ॥ २ ॥ क्षेत्रजातः पुत्रः पितामहस्य * दायमर्हति न तु पतनीयं * कर्म्मणि कृते तदनन्तरं तदुत्पन्नः ॥ ३ ॥ कृतदारस्य पश्चाद्ध्वजभङ्गादिना क्लीबत्वे जाते नियोगात् * पुत्रः सम्भवति तथा ॥ ४ ॥ वशिष्ठेनोक्तं यथा * क्लीबोन्मत्तपतितादेः स्वभरणं * क्लीबोन्मत्तानां प्रेतपत्नीषण्मासं * व्रतचारिणी * क्षारलवणामिषं * भुञ्जाना * अधः शयने शयीत ॥ ५ ॥ ऊर्द्ध्वं षड्भ्यो मासेभ्यः स्नाता श्राद्धं तु पत्ये दद्यात् ॥ ६ ॥ विद्याकर्म्मगुरुयोनिसम्बन्धान् * सन्निपात्य तस्याः पिता भ्राता वा * नियोगं कारयेत्तपसे वा नोन्मत्तामवशां व्याधितां वा ॥ ७ ॥ नियुञ्ज्याज्ज्यायसीमपि * षोडशवर्षां न चेदामयाविनी स्यात् प्राजापत्ये मुहूर्त्ते * पाणिग्रहणवदुप * चारः ग्राम्यामिनी स्यात् ॥ ८ ॥ उन्मत्तामवशां व्याधितां वा * न नियुञ्ज्यादनायसं स्यापि * वाक्पारुष्याद्दण्डपारुष्याच्च * ग्रासाच्छादनस्नानादिषु च ॥ इति ॥ ९ ॥ जातान्धजन्मबधिरादेर्विवाहः * कथञ्चन सम्भवति * तेनौरसपुत्रश्च स्यात् यथा धृतराष्ट्रादेर्यौधिष्ठिरादिः ॥ १० ॥ २०३ ॥ धृतराष्ट्रपाण्डुप्रभृतिः ॥ १० ॥ अत्र कात्यायनः प्राह * अक्रमोढासुतश्च सगोत्राद्यस्तु जायते । प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति ॥ ११॥ अक्रमोढासुतस्तु रिक्थी सवर्णाजो यदा भवेत् । असवर्णाप्रसूतश्च क्रमोढायाञ्च यो भवेत् । इति ॥ १२॥ योब्राह्मणादिरनुलोमजां पूर्व्वं * मुद्वहति पश्चात् सवर्णजां कन्यां * साद्यैव क्रमोढापत्नी भवति ॥ १२ ॥ तयोर्द्विसगोत्रात्तु क्षेत्रजः पुत्रः स्यात् * दत्तश्च प्रव्रज्यावसितात् प्रव्रज्यां कृत्वा * पुनः स्वजायायां पुत्रं जनयति * स पुत्रः प्रव्रज्यावसिताज्जातस्तेषु रिक्थं नार्हति तत्र त्वक्रमोढायां सवर्णाजापत्नीतस्याः सगोत्राज्जातः क्षेत्रजः रिक्थी स्यान्नानुलोमजापुत्रः । यदानुलोमजाजायाक्रमोढास्यात्तस्याः सगोत्राज्जातः पुत्रश्च सवर्ण एव रिक्थी स्यादिति । अथ स्त्रोपार्ज्जितधनभागमाह ।*

**यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति । भागो यवीयसां तत्र यदि विद्यानुपालिनः २०४॥**

यत्किञ्चिदित्यादि श्लोकस्य ॥ १॥२०४॥ पितरि प्रेते ज्येष्ठो भ्राता यत्किञ्चि * द्धनमधिगच्छति तत्र धने च * विद्यानुपालिना विद्याभ्यासिनां * यवीयसां भागो वर्त्तत एव ॥१॥ यदि विद्यानुपालिनो * नावरजा भवन्ति न * चोपार्ज्जने ज्येष्ठा जर्धन्ति तदा न * यवीयांसस्तद्धन * भागमर्हन्तीति ज्ञेयं ॥ २ ॥ यद्यत्र केनापि तद्धनमुक्तं * तर्हि यदि विद्याहीना अपि केना * पुत्रपार्य नधनमर्जयन्ति * तदा किं स्या * दित्यत आह ।

**अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनं भवेत् । सममत्र विभागः स्यादपित्र्य इति धारणा ॥२०५॥**

अविद्यानामित्यादि । २०५ । अविद्यानां शास्त्रविद्यारहितानां * भ्रातॄणां सर्व्वेषां धनार्थमीहया * योय द्धनमर्जयेत् * तान्वापाधिकं वा । १ । तत्रापित्र्ये स्वस्वोपार्जिते पिधने * समो विभागः स्यादिति * धर्म्म शास्त्रेषु धारणा । २ । याज्ञवल्क्येनोक्तञ्च * सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः । इति ॥ २ ॥ २०५ ।

**विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् । मैत्र्यमौद्वाहिकञ्चैव माधुपर्किकमेव च ॥ २०६ ॥**

विद्याधनन्त्वित्यादि । २०६ । भ्रातॄणां यस्य यद्विद्याधनं तस्यैव * तद्धनं न वै विभक्तव्यं भवेत् * विद्याधनं कात्यायनेनोक्तं यथा । १ । परभक्तप्रदानेन प्राप्ता विद्या यदान्यतः । तया प्राप्तञ्च विधिना विद्याप्राप्तं तदुच्यते ।२। उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् । विद्याधनं तच्च विद्याद्विभागे न विभज्यते । ३। शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् । ४। विद्याधनं तच्च प्राहुर्न विभागे विभज्यते । नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित् । ५ । समविद्याधिकानान्तु देयं वैद्येन तद्धनमिति * अत्र वैद्येनेति विद्या ब्रह्मचर्याश्रमविधिनाधीता निःशेषेण समाप्ता प्रशस्ता अस्त्यस्य स वैद्यः गौतमेनाप्युक्तम् । ६ । स्वयमर्जितमवैद्यो *ऽवैद्येभ्यः कामं न दद्यात् * वैद्याः समं भजेरन्निति । ७ । मैत्र्यं लब्धं धनं विवाहे लब्धञ्च * मधुपर्के च लब्धं धनं * यस्य यत्तस्यैव तत्स्यात् न तद्विभक्तव्यमिति । ८ । तत्रौद्वाहिकं धनं * उक्तं तु बृहस्पतिना * वैवाहिकन्तु तद्विद्याद्भार्य्यया यत्सहागतमिति ।९। याज्ञवल्क्येनाप्युक्तं * पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत् । १० । दायादेभ्यो न तद्देयाद्विद्यया लब्धमेव च ॥ इति ॥ १० ॥ नारदेन चोक्तं यथा * शौर्य्यभार्य्याधने हित्वा यच्च विद्याधनं भवेत् । त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥ ११ । ॥ २०६ ॥

**भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा । स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम् २०७**

भ्रातॄणामित्यादि । २०७ । भ्रातॄणां मध्ये यस्तु भ्राता शक्तः * स न पितृक्रमागतं धनमीच्छेत् * तस्मात्स्वकादंशात् दुपजीवनं * किञ्चिद्दत्वा भ्रातृभिः स निर्भाज्यः । १ । याज्ञवल्क्येन चोक्तं * शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया । इति । २ ॥ २०७ ।

**अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् । स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥२०८**

अनुपघ्नन्नित्यादि । २०८ । भ्रातॄणां मध्ये यो भ्राता * पितृद्रव्यं नोपघ्नन् स्वयं श्रमेण * यदुपार्जयेत् तद्धनं * स्वे पि

लब्धं नाकामो दातुमर्हति । २ । विष्णुनाप्येतद्वचनमुक्तं । २०८ ॥ पैतृकमित्यादि । २०९ ।

**पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ॥२०९**

यद्ग्रामादिकं पैतृकं द्रव्यं । १ । परैरपहृतं पितामहादिभिरसामर्थ्यात्पूर्व्वं नावाप्तं यः स्वशक्त्या तद्द्रव्यं चेदाप्नुयात्तद्धनं स्वयमर्जितमकामस्सन्पुत्रैःसार्द्धं न भजेत् इच्छया पैतृकन्तु पुत्रैःसार्द्धं भजेत् । २ । एतेन पैतृकधने पितापुत्रयोः स्वामित्वं समानमिति ज्ञापितम् ।३। अन्यथा ह्यकाम इति वचनानुपपत्तिः स्यात् पिता हि स्वेच्छया पुत्रान् विभजेदिति वचनात् । ४ । याज्ञवल्क्येनाप्युक्तं क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च । इति । ५ । विष्णुनाप्युक्तं तद्यथा पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वं । इति । ६ । अत्रेदमवधातव्यं वर्त्तमाने पितामहे पौत्रो यदि जायते ततः पितामहो म्रियते । ७ । तदा पैतामहे धने पितापुत्रयोस्तुल्यं स्वामित्वं भवेत् वर्त्तमाने पितामहे जातस्य पौत्रस्य पितृवित्तत्वात् । ८ । प्राक्पौत्रोत्पत्तेस्तस्य मृतस्य पौत्रो लब्धधनो भवति बृहस्पतिनाप्युक्तं तद्यथा ।९। पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितं । विद्याशौर्यादिनाप्तं तत्स्वाम्यं पितुः स्मृतम् ।१०। प्रदानं स्वेच्छया कुर्य्याद्भोगं चैव ततो धनात् । तदभावे तु तनयाः समांशाः परिकीर्त्तिताः इति । ११ । २०९ ।

**विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि । समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥२१०॥**

विभक्ता इत्यादि । २१० ॥ ऊर्द्ध्वं पितुश्च मातुश्च विभक्ता भ्रातरः पिता माता च स्वेच्छया कृता विभक्ता भ्रातरः । १ । पुनः सह जीवन्त एकत्र भूत्वा जीवन्तः सन्तः पुनर्यदि विभजेरं स्तदा तत्र समो विभागः स्यात्तु तत्र ज्यैष्ठ्यो भागो न विद्यते ।२। याज्ञवल्क्येनाप्युक्तं अन्योन्यापहृतं द्रव्यं विभक्तं यत्तु दृश्यते । तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ इति ॥ ३ । विष्णुयाज्ञवल्क्याभ्यामुक्तं संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्याच्चापहरेदंशं जातस्य च मृतस्य च । इति । ४ । याज्ञवल्क्येन पुनश्चोक्तं अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् । असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥ ५ ॥ २१० ॥

**येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः । म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ २११**

येषां ज्येष्ठ इत्यादि ॥ २०२॥ येषां भ्रातॄणां ज्येष्ठो भ्राता कनिष्ठो भ्राता वा दूरदेशस्थत्वे भ्रातृभिरंश

दानतोहीयते ॥ १ ॥ विभागकाले तयोरिक्थांशप्रदानं नक्रियते * तयोरन्यतरो ज्येष्ठः * कनिष्ठोवाभ्रातामियेत * तस्यभागोनलुप्यते ॥ २ । योधनाधिकारीवर्त्तते तस्मै * तद्धनांशोदातव्यःस्यात् । प्रदानतोहीयतइति सप्तम्याः * तसिलपादाने पञ्चम्यास्तसि * अपादाने चाहीय * रुहोरितितसिवर्ज्जनात् ॥ ४ ॥ गौतमेनाप्युक्तं यथा * ज्येष्ठोऽप्यविभागआगा * म्रियते हीयते वा * तस्यापिदद्युरितिः ॥ ५ ॥ यदापुत्रकःसज्येष्ठःकनिष्ठोवा * म्रियते तदातस्यांशं * तस्यधनाधिकारीहरेत् ॥ इति ॥ ६ ॥ २११ ।

सोदर्य्याविभजेरंस्तं समेतय्यसहिताःसमम् । भ्रातरोयेचसंसृष्टाभगिन्यश्चसनाभयः ॥ २१२

सोदर्य्याइत्यादि ॥ २१२ । तस्यद्रव्यंयस्यस्य * ज्येष्ठस्यवाकनिष्ठस्यवा * पुत्रहीनस्यापुनरागमना * सम्भवे मृतस्यापि ॥ २ । संसृष्टायेसोदर्य्याभ्रातरोयाश्च * संसृष्टाःसनाभयोऽनूढत्वेनभ्रातयःसोदर्य्याः भगिन्यएव ३ । तेसर्व्वे सहितएकत्रीभूताः * सन्तःसमेत्यतमंशं * समंसमानांशं विभजेरन्निति ॥ ४ ॥ २१२ ॥

योज्येष्ठोविनिकुर्व्वीतलोभाद्भ्रातॄन्यवीयसः । सोऽज्येष्ठःस्यादभागश्चनियन्तव्यश्चराजभि.२१३

योज्येष्ठइत्यादि ॥ २१३ ॥ योज्येष्ठोभ्रातालोभाद्यवीयसः * भ्रातॄन्पैतृकरिक्थांशात् * विनिकुर्व्वीतनिराकुर्य्यात् । १ । सज्येष्ठोप्यज्येष्ठइव * तस्माद्राजभिर्नियन्तव्यःसम्भागश्चभागहीनःस्यात् । २ । २१३ ।

सर्व्वएवविकर्म्मस्थानार्हन्तिभ्रातरोधनं । नचादत्वाकनिष्ठेभ्योज्येष्ठःकुर्व्वीतयौतकम् २१४

सर्व्वएवेत्यादि । २१४ । येभ्रातरोयथास्वकर्म्मभ्योभिन्न * कर्म्मस्थास्ते विकर्म्मस्थाः * ज्येष्ठोवामध्यमोवा कनिष्ठोवापि * सर्व्वएवहिभ्रातरः । १ । धनंमातापितृरिक्थंनैवार्हन्ति * किमन्येषामितिबोधः । २ । ज्येष्ठश्चभ्राताकनिष्ठेभ्योभ्रातृभ्यो * पितृमातृवंधन * मदत्वात्मनो * यौतकमात्मसात्नकुर्व्वीतनतु * सज्येष्ठोविकर्म्मस्थःसन्नार्थमर्हेत् ॥ ३ ॥ २१४ ॥ ननुपितरिवर्त्तमाने पुत्राश्चेत् * पार्थक्यमिच्छन्तितत्रपिता * स्म * तं पार्थक्यं कर्त्तुमिच्छतिनतदा * पुत्राःपृथग्भवितुंप्रभवन्ति । १ । पितरिजीवतिहिपुत्रा * दारापत्यधनादिपूर्णं * च प्रभवन्ति ॥ २ ॥ यत्रक्वचित्तेयत्किञ्चित्प्राप्नुयुः * सर्व्वंतत्पित्र्यंदद्युःपित्राज्ञातास्तु * तद्धनंवायोपभोगादिकंकर्त्तुं * प्रभवन्तिनचाननुज्ञानात्पितुः । ३ । सचपितायदिपुत्रान् * विभक्तुमिच्छतितदा * कथंविभजे * दित्यतआह ।

भ्रातॄणामविभक्तानांयद्युत्थानंभवेत्सह । नपुत्रभागंविषमंपितादद्यात्कथञ्चन ॥ २१५ ॥

र्व्वजादिद्धिपितृकत्वाद्यर्थं ॥ २४ ॥ नपुनरेकएवपुत्रोयस्येति*बहुव्रीहिस्तथान्यपदार्थप्रधानत्वेनषष्ठी तत्पुरुषात्दुर्व्बलत्वात् । २५ । इतियत्तन्नयुक्तिविरोधान्नहि*शास्त्रे समासानां बलाबलत्व* कल्पनास्तिस्वरतोहि*समासविशेषावाधःस्यात् । २६ । यथेन्द्रशत्रोर्विवर्द्धस्वेत्यत्र*कर्म्मधारयस्वरेण*त्वष्टारविनाशोऽभूत् ।२७ इन्द्रस्यासौशत्रुरिति*नपुनरिन्द्रःशत्रुः*नवाइन्द्रःशत्रुर्यस्येति*स्वरमविहाय्समास * बलाबलमशास्त्रिकंवदतीति । २८ । अपरञ्चएतजादि*पुत्रो पौत्रस्याभावे * सर्व्वस्यैवधनस्याधिकारीकस्मात् * सपितृधनविभागे * पुत्रेणसहद्व्यंशीनस्यात् । २९ । तस्मादेकःपुत्रोयस्ये * त्येकपुत्रइतिसाधु*तत्पुरुषोऽत्रनयुक्तः । ३० । २१५ ।

नन्वेवंपितृकृतविभागेषु*पुत्रेषुयदिपुनः*पुत्रोजायते तदातस्यपुत्रस्य । १ । पूर्व्वविभक्तभ्रातृधनांशःस्यान्न*नवेत्यतउच्यते ।

ऊर्द्ध्वंविभागाज्जातस्तुपित्र्यमेवहरेद्धनम् । संसृष्टास्तेनवायेस्युर्विभजेतसतैःसह ॥ २१६॥

ऊर्द्ध्वंविभागादित्यादि ॥ २१६ ॥ पित्राकृतात्पुत्राणांविभागादूर्द्ध्वं*जातःपुत्रःपितरिमृते पित्र्य*मेवधनंहरेन्नविभक्तानां*भ्रातृणांधनंविभज्यांशंहरेत् । १ । नवातेचभ्रातरःपुनरिदं * पित्र्यंधनंचविभज्य* भागंहरेयुरिति ॥ २ ॥ तत्रयेतुभ्रातरःपित्रा*विभक्ताःपुनःपित्रासहसंसृष्टा*भवन्तितैर्भ्रातृभिःसह * सपश्चात्जातःपुत्रः । ३ । संसृष्टभ्रातृधनंपित्र्यं*धनञ्चसर्व्वंसमंविभजेतन*ज्येष्ठोद्धारंपूनर्दद्यात् । ४ । याज्ञवल्क्यो ... वमुक्तं*विभक्तेषुसुतोजातःसंसृष्टानांविभागभाक् । दृश्याद्वातद्विभागःस्या*दायव्ययविशोधितात् । इति । ५ । अत्रप्रमादिभिःसंसृष्टानामिति*नपठित्वासवर्णाया*मितिपठ्यतेतस्य * दृष्टमनुवचनेस* संसृष्टाइत्युक्तविरोधात् । ६ । विष्णुनाप्युक्तंतद्यथा*पितृविभक्ताविभागानन्तरोत् * पन्नस्यभागंनदद्युः । ७ । संसृष्टिनःसंसृष्टीसोदरस्यतुसोदरः । दद्याद्पहरेच्चांशंजातस्यचमृतस्यच । इति । ८ । एतदभिप्रायेणागौतमेनोक्तं*मातुर्निवृत्तेरजसि*जीवतिचेच्छतिच*पितृधनविभागइति । ९ । २१६ । अथपितृकृतविभक्तानामेव* पुत्राणांमध्ये ... कश्चिदपुत्रको*म्रियतेतस्यचमाताजीवति*जीवतिचानिवृत्तरजस्कापत्नी । १ । कस्तस्यधनंहरेदितिचेत्तत्र*पूर्व्वसक्तम्प्रथममेव । २ । संस्थितस्यानपत्यस्य * सगोत्रात्पुत्रमाहरेत् । पत्नीतद्रिक्थजातंयत्तस्मिन्प्रतिपादयेत् । इति । ३ । अनपत्यस्यौरसादिपुत्रपौत्र * प्रपौत्राद्येकजातभ्रातृपुत्र * पौत्रप्रपौत्रादौ हि व*पर्य्यन्तरहितस्य । ४ । अनिवृत्तरजस्कापत्नीधनं* हरेन्नियुक्ताधर्म्मेण*सगोत्रात् पुत्रंजनयेत्*तस्यरिक्थजातंत*त्तस्मिन्पुत्रेप्रतिपादयेत् । ५ । तत्रयदिदुहितास्यात्* तदादुहितेवसर्व्व*मृद्धन्त्रीमातादत्तावजनयित्वा*पुत्रंतस्मैपुत्रायतत्*पितृधनंदद्यादिति । ६ । यस्यापुत्रकस्यैकजातभ्रातृ* पुत्रपौत्रप्रपौत्रपर्य्यन्ताभाव*

स्वसातृमाताजीवति। ७। मृतस्यतस्यधनं को * हरेदित्यतउच्यते *।

**अनपत्यस्यपुत्रस्यमातादायमवाप्नुयात्। मातर्यपिचवृत्तायांपितुर्माताहरेद्धनम् २१७**

अनपत्यस्यपुत्रस्येति ।८। २१७। अनपत्यस्यौरसादिपुत्रपौत्र* प्रपौत्रैकजातभ्रातृ*पुत्रपौत्रप्रपौत्रपर्यन्तहीनपुत्रस्य। १। मृतस्यधनं माताहरेन्मातरि*मृतायां पितामहीहरेत्*यस्यचैवमनपत्यस्यपिता*जीवतितस्यमृतस्यपिताहरेत्। २। तदुक्तं पूर्व्वं स्वयमेव*नभ्रातरोनपितरः*पुत्रारिक्थहराःपितुः। पिताहरेदपुत्रस्य*रिक्थं भ्रातरएवचेति। ३। इति। पितुरभावे एकजात*भ्रातातदभावे माता*तदभावे पितामही। ४। तदभावेऽनेकजात * भ्रातातदभावेऽनेक जातभ्रातृ * पुत्रस्तदभावे चोक्तं। ५। अनन्तरःसपिण्डाद्य * स्तस्यतस्य धनं भवेत् * अतऊर्द्ध्वं सकुल्यःस्या * दाचार्य्यःशिष्यएववा ॥ इति ॥ ६। विष्णुनाप्येतदभिप्रायेणैव पुत्रप्रकरणे पूर्व्वं। ७। एकोढानामप्येकस्याः * पुत्रःसर्व्वासां पुत्रएवचैकस्य * भ्रातृणामेकजातानाम्स्वं त्वमुक्तं ॥ ८॥ पिताचेत्पुत्रान्विभजेत्तस्य * स्वेच्छास्वयमुपार्ज्जितेऽर्थे * पैतामहेत्वर्थे पि*ता*पुत्रयोस्तुल्य स्वामित्वं ॥ ९॥ पितृविभक्ताविभागानन्तरोत्पन्नस्यभागं नदद्यु * ज्येष्ठोऽलिप्सितेभ्राताभ्रातृभागात्स्वयंत्यजेदित्याहतस्यापि च ॥ १०॥ अपुत्रपौत्रसन्ताने दौहित्राधनमवाप्नुयुः। पूर्व्वेषान्तुस्वधाकारे पौत्रादौहित्रकासमाः। ११। अपुत्रकस्यधनं पत्न्यभिगामित * दभावे दुहितृगामि * तदभावे पितृगामि * तदभावे मातृगामि*तदभावे भ्रातृगामि। १२। तदभावे भ्रातृपुत्र*गामितदभावे बन्धु*गामितदभावे सकुल्यगामितदभावे सहाध्यायिगामि। १३। तदभावे ब्राह्मणधनवर्ज्जं*राजगामिब्राह्मणार्थोब्राह्मणानां *वानप्रस्थस्यधनमा* चार्य्यगच्छेद्यादिच्छिष्यो वाइति ।१४। अत्रापुत्रस्यौरस*पुत्रपौत्रप्रपौत्रान्त*सन्तानहीनस्यपुत्रिकापुत्रो*योदौहित्रःसधनमाप्नुयात् ।पूर्व्वेषां पितृपितामहप्रपितामहानां स्वधाकारे यथापौत्रास्तथापुत्रिकापुत्राएवदौहित्रकादौहित्राइवप्रतिकृतयासमाःनत्वन्येदौहित्राइतिइतोवमेकजातभ्रातृपुत्रपौत्रप्रपौत्ररहितस्यापुत्रस्यधनं पत्न्यभिगामि ॥१५॥ पत्नीतनिवृत्तरजस्का*यानियोगात्पुत्रोत्पादने * समर्था भवति ॥ १६॥ दुहितापुत्रसमा विज्ञेया*पुत्राभावेऽविधवाचा* पितरावितिपितुरभावे माता ॥१७॥ इतोत्र परमतमप्रतिषेधा*सपत्नीपुत्रे षाःस्त्रीणामेकजातभ्रातृपुत्रेषभ्रातॄणां * पुत्रित्वमनुमतैव ।१८॥ एतदनुसृतयाज्ञवल्क्येनाप्युक्तं तद्यथा * विभागञ्चेत्पिताकुर्य्यात् * स्वेच्छयाविभजेत्सुतान् * ज्येष्ठं वाश्रेष्ठभागेनसर्व्वे वास्युःसमांशिनः। १७। यदिकुर्य्यात्समानांशान्पत्न्यःकार्य्याःसमांशिकाः। नदत्तं स्त्रीधनं यासां भर्त्त्रावाश्वशुरेणवा ।१८। विभक्तेषुसुतोजातःसंसृष्टेषुविभागभाक्। दृश्याद्वातद्विभागःस्यादायव्ययविशोधितात्। १९। पितृभ्यां यस्ययद्दत्तं तत्तस्यैवधनं भवेत् ॥ इत्यादनन्तरमपुत्रकस्य

इति। अत्रापायोजः प्रयागाह स्थाल्यादियोगक्षेमं *वस्त्राच्छाद्य योजितं यद्योगवहवतिनान्यत् ॥ ७ ॥ अथकात्या यनउवाच * आरुह्य संशयं यत्र प्रसभं कर्म कुर्व्वते । तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥ तव लब्धन्तु यत्किञ्चिद्धनं शौर्य्येण तद्भवेत्। ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ॥ ६॥ संग्रामादाहृतं यच्च विजित्य द्विषतां बलम्। स्वाम्यार्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते । १० । वैवाहिकन्तु तद्विद्याद्भार्य्यया यत् सहागतम् । ११ । इति याज्ञवल्क्येनोक्तञ्च * दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति ॥ ११ ॥ अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्। न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् । १२ । शङ्खलिखिताभ्यामुक्तं *नवास्तु विभागो नोदकपात्रान्न*पत्नालङ्कारोपयुक्तस्त्रीवाससां * गवां प्रचाररथ्यानां *विभाग इति प्रजापतिः ॥ १२ ॥ अत्र वास्तु वसतिस्थानं यत्र*यस्मान्गृहं वर्त्तते तत्स्थानं तत्*तस्य नैव नास्य विभागः कर्त्तव्यः । १४ । प्रमादोतूद्यानादिस्थानमपि*वाचष्टे तन्नवास्तु अध्यानभि*ध यत्वालोके पितन्न वस्तुच्यते ॥१५॥ ॥ २१६ ॥ उपसंहरति

**अयमुक्तो विभागो वः पुत्राणाञ्च क्रियाविधिः। क्रमशः क्षेत्रजादीनां द्यूतधर्म्मान्निबोधत ॥२२०॥**

अयमित्यादि ॥ २२०॥ अयं दायभागं निवोधत तत्र भ्रा*प्रचयतद्दत्यन्ते न*दायस्य विभाग उक्तः । १ । क्षेत्रजादीनां पुत्राणाञ्च*क्रमशः क्रियाविधिः*करणप्रकार उक्तः* इतऊर्द्ध्वं द्यूतधर्म्मान् निवोधत ।२॥२२० ॥ इति दायभागः समाप्तः ॥ * ॥ * ॥ * ॥ * ॥

---

अथोद्दिष्टं द्यूतमुच्यते ॥

**द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवारयेत्। राजान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम्॥२२१॥**

द्यूतमित्यादि ॥ २२१ ॥ पदार्थाख्यातन्त्वयुक्ता वद्यूत *शब्देन द्यूतसमाह्वयावुच्येते *क्रीडासामान्यात् द्वौ राजा राष्ट्रान्निवारयेत् कस्मात् ॥ १ ॥ यतः पृथिवीक्षितां राज्ञां राजान्तकरणावेतौ * समाह्वयौ द्वौ दोषौ स्तः ॥ २ ॥२२१ ॥ कथं दोषावित्यत आह ।

**प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ। तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥ २२२॥**

प्रकाशमेतदित्यादि । १ । २२२ ॥ देवनसमाह्वयौ द्वौ* पणपूर्व्वकक्रीडाभेदौ * यद्यस्मात्प्रकाशं तास्कर्य्यमेतत्*तयोः प्रतीघाते नित्यं * नृपतिर्यत्नवान्भवेत् । १ ॥ २२२ ॥ ननु किं द्यूतं कः समाह्वय इत्यत आह ॥

अप्राणिभिर्यत्क्रीड़तितल्लोके द्यूतमुच्यते । प्राणिभिःक्रीड़नेयस्तु सविज्ञेयःसमाह्वयः ॥२२३॥

अप्राणिभिरित्यादि । १ । २२३ । यदप्राणिभिःशलाकादिभिर्लोके * क्रीड़तितद्द्यूतमुच्यते * प्राणिभिर खादिभिर्यत्क्रीड़ति * ससमाह्वयोविज्ञेयः । १ ॥ २२१ ॥ असाद्दण्डकरणमाह ।

द्यूतंसमाह्वयंचैवयःकुर्य्यात्कारयेतथा । तान्सर्व्वान्घातयेद्राजाशूद्रांश्चद्विजलिङ्गिनः२२४

द्यूतंसमाह्व * यंचेत्यादि । १ । २२४ । योद्यूतंवासमाह्वयंवाकुर्य्यात् * राजातान्सर्व्वान्घातयेत् * द्विजलिङ्गिनशूद्रांश्च*राजाघातयेदिति ॥ १ ॥ २२४ ॥

कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्चमानवान्। विकर्म्मस्थान्शौण्डिकांश्चक्षिप्रंनिर्व्वासयेत्पुरात ॥ २२५ ॥

कितवानित्यादि २२५ । नकेवलंद्यूतादिकारिणो*धूर्त्तान्*राजाघातयेत्सर्व्वान्वकितवान्*पुरान्निर्वासयेत्कुशीलवांश्च । १ । नटगीतादिवृत्त्युपजीविनश्च* कुशीलवाविवक्षिताः *क्रूरान्कुटिलचित्तान्पाषण्डांश्च*वेदद्विषःशास्त्रव्रतिनः ॥ २ ॥ विकर्म्मस्थान्सम्परायद्रूक्तकर्म्म*विपरीतकर्म्मकृतः* शौण्डिकांश्चपुरात्क्षिप्रं* राजानिर्व्वासयेद्धाम*स्थानान्निर्गमयेदिति । २ । २२५ । कस्मादेतान्निर्व्वासयेदित्यतआह* ।

एतेराष्ट्रेवर्त्तमानाराज्ञःप्रच्छन्नतस्कराः । विकर्म्मक्रिययानित्यंबाधन्तेभद्रिकाःप्रजाः ॥ २२६

एतदित्यादि ।१॥ ॥ २२६। एतेहिकितवादयःप्रच्छन्न*तस्कराराज्ञोराष्ट्रेवर्त्तमाना*विकर्म्मक्रिययाविपरीतकार्य्य*करणेनभद्रिकाःप्रजाबाधन्ते । १ । २२६ । एतेषुप्रधानंदोषमाह ।

द्यूतमेतत्पुराकल्पेदृष्टंवैरकरंमहत् । तस्माद्द्यूतंनसवेतहास्यार्थमपिबुद्धिमान् ॥ २२७ ॥

द्यूतमित्यादि । १ । २२७ । पुराकल्पेद्यूतंयदप्राणिभिः*क्रीड़नमेतन्महद्वैरकरं * दृष्टःतस्माद्बुद्धिमान् हास्यार्थमपि*द्यूतंकथञ्चननसेवेत ॥ १ ॥ २२७ ॥ यदिसेवेततदाकिंस्यादित्यतआह ।

प्रच्छन्नंवाप्रकाशंवातन्निषेवेतयोनरः । तस्यदण्डविकल्पःस्याद्यथेष्टंनृपतेस्तथा ॥ २२८॥

प्रच्छन्नमित्यादि ॥ १ ॥ २२८ ॥ यस्तुद्यूतंप्रच्छन्नंवा* प्रकाशंवानिषेवेत * तस्यदण्डविकल्पोयथानृपते * रिष्टमभीष्टंतथास्यात् । १ । २२८ । अथास्यदण्डप्रसङ्गात्* सर्व्ववर्णानांयत्दण्ड्यो * विघातव्यस्तद्दानंयथा त्यांस्तदाह ।

चत्रविट्‌छूद्रयोनिस्तु दण्डं दातुमशक्नुवन्। आनृण्यं कर्म्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥२२९

चत्रेत्यादि। ०। २२९। क्षत्रियवैश्यशूद्रयोनिस्तु* दण्डं दामशक्नुवन्* कर्म्मणा शरीरपरि *श्रमेण* यथा योग्यं नानृण्यं गच्छेत्। १। विप्रस्तु शनैः शनैः दण्डमर्थं *दद्याच्छक्तः सद्योदद्यात्। २। २२९।

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम्। शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥२३०

स्त्रीत्यादि। २३०। स्त्रीबालादीनां दमः * हस्तशाखिशिफयाविदलेन वा * वज्राद्दिनावाञ्पतिर्विदधात्। १। २३०।

ये नियुक्तास्तु कार्य्येषु हन्युः कार्य्याणि कार्य्यिणाम्। धनोष्मणा पच्यमानास्तान्निःस्वान् कारयेन्नृपः॥ २३१॥

येनियुक्तास्त्वित्यादि॥ २३१॥ येषां कार्य्यिणां कार्य्ये ष्वुनियुक्ताये *धनोष्मणा निजनिज*धनवत्ताबुद्धागर्व्वौ ष्मणापच्य*मानाविकृतिमापन्नाः॥ १॥ तेषां कार्य्याणि तानिकार्य्याणि हत्वा*नृपस्तान्निःस्वान्धना*निर्गता न्कारयेत्तेषां *धनानिहृत्वा निर्धनान्कारयेदिति॥ २॥ २३१॥

कूटशासनकर्त्तृंश्च प्रकृतीनाञ्च दूषकान्। स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विट्‌सेविनस्तथा॥ २३२॥

कूटेत्यादि। २३२। राजाप्रजानां विचारार्थं स्वेन* नियुक्तानां प्रकृतीनां* प्राड्विवाकादीनां धनं *दूषकान् कूटशासनकर्तृनजनान्। १। स्त्रीबालब्राह्मणघ्नान्स्वद्वेष*कारिसेविनश्च हन्यात्॥ २॥ २३२॥

तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्। कृतं तद्धर्म्मतो विद्यान्न तद्भूयोनिवर्त्तयेत्॥ २३३॥

तीरीतञ्चेत्यादि॥ २३३॥ यत्र क्वचनपुरुषे* यत्कर्म्मानुशिष्टमिदं*मेवं कृतमिदम्* नैवं कृतमिति उप*देशेनकारितं यत्कर्म्मतीरीतं। १। समाप्तिंगतं भवेत्तत्*कर्म्मधर्म्मतस्तेन कृतं विद्यात्*भूयःपुनःकरणे व ननिवर्त्तयेन्नशारयेत्॥ २॥ २३३॥

अमात्याः प्राड्विवाकोवा यत्कुर्य्युः कार्य्यमन्यथा। तत्स्वयं नृपतिः कुर्य्यात्तान् सहस्रञ्च दण्डयेत्॥ २३४॥

अमात्यादत्यादि। २३४। राजकार्य्ये ष्वुनियुक्ता* अमात्याःप्राग्विवाकोवा * यत्कार्य्यमन्यथाकुर्य्युः*तत् कार्य्यं स्वयं नृपतिः*कुर्य्यात्सहस्रञ्चपणानां तान् दण्डयेत्। १। २३४।

ब्रह्महाचसुरापश्चस्तेयीचगुरुतल्पगः। एतेसर्व्वे पृथग्ज्ञेयामहापातकिनोनराः॥ २३५॥

ब्रह्महेत्यादि। २३५। ब्रह्महाचावैधसुरापश्चविप्रः*स्वर्णस्याकर्षमितस्तेयी*गुरुतल्पगश्चगुरुपत्नीगामी॥ १॥ एतेचत्वारोनराःपृथक् प्रतीकं*महापातकिनोज्ञेयाः॥ २॥ २३५॥

चतुर्णामपिचैतेषांप्रायश्चित्तमकुर्व्वताम्। शारीरंधनसंयुक्तंदण्डंधर्म्म्यंप्रकल्पयेत्॥२३६॥

चतुर्णामित्यादि॥ २३६॥ एतेषांचतुर्णामपि*ब्रह्महादीनांप्रायश्चित्तमकुर्व्वतांधनसंयुक्तंशारीरं*धर्म्म्यंदण्डंप्रकल्पयेत्। १। स्वधनाधिकाराद्वहिष्कृतंवै* शरीरेचिह्नंकारयेत्। २। २३६। कथमित्यतआह

गुरुतल्पेभगःकार्य्यःसुरापानेसुराध्वजः। स्तेयेचश्वपदंकार्य्यंब्रह्महण्यशिराःपुमान्॥२३७॥

गुरुतल्पइत्यादि। १। २३७। शारीरदण्डमेवंकल्पयेद्यथा*गुरुतल्पगतस्यादृशा*भगःस्त्रीयोन्याकारचिह्नंकार्य्यं। २। सुरापानेसुराध्वजः*कार्य्यःस्वर्णस्तेयेनरे* श्वपदंकुक्कुराकृतिचिह्नं* कार्य्यंभवति। २। ब्रह्मघ्निनरेशिरो*हीनपुरुषाकृतिचिह्नंकार्य्यं*नकेवलमिदमन्यच्चोच्यते। १। २३७।

असम्भोज्याह्यसंयाज्याअसंपाठ्याविवाहिनः। चरेयुःपृथिवींदीनाःसर्व्वधर्म्मबहिष्कृताः२३८

असम्भोज्याइत्यादि। २३८। ज्ञातिबान्धवादिभिस्ते*ह्यसंभोज्याअसंयाज्या*असंपाठ्याअविवाहिनश्चसन्तः *सर्व्वधर्म्मबहिष्कृता*दीनाःपृथिवींचरेयुः। १। २३८।

ज्ञातिसम्बन्धिभिस्त्वेतेत्यक्तव्याःकृतलक्षणाः। निर्दयानिर्नमस्काराःस्तन्मनोरनुशासनम्॥२३९॥

ज्ञातीत्यादि। २३९। एतेचत्वारोयथोक्त*चिह्नैराह्वाकृतचिह्नाः*निर्दयादयातोनिर्गताएवं* निर्नमस्काराश्चनोषां*नमस्कारान्निर्गताश्च। १। ज्ञातिसम्बन्धिभिस्त्यक्तव्याभवन्ति*मनोरितानुशासनम्। २। २३९।

प्रायश्चित्तन्तुकुर्व्वाणाःसर्व्वेवर्णायथोदितम्। नाङ्क्याराज्ञाललाटेस्युर्दाप्यास्तूत्तमसाहसम्२४०

प्रायश्चित्तमित्यादि॥ २४०॥ ब्रह्महादयएतेचत्वारोमहा*पातकिनःसर्व्ववर्णाः*यथोदितंप्रायश्चित्तं*कुर्व्वाणाललाटेराज्ञा*यथोक्ताङ्कैरङ्क्यानस्युः। १ उत्तमसाहसन्तुदण्डंतेराज्ञा*दाप्यादापनीयाश्चस्युः। १। २४०। तत्रविशेषउच्यते।

आगःसुब्राह्मणस्यैवकार्य्योमध्यमसाहसः। विवास्योवाभवेद्राष्ट्रात्सद्रव्यःसपरिच्छदः॥ २४१॥

आगःस्वित्यादि। १। २४१। आगःस्वकामतोऽकामतश्चकृतेषु * ब्राह्मणस्यब्रह्महत्यादि पापेषु*चवर्णप्रायश्चित्तं चकुर्व्वतोमध्यमःसाहसोदण्डोराज्ञाकार्य्यः। १। अथवामध्यमसाहसं दण्डं * नकुर्वासब्रव्यःसपरिच्छद*एवसराज्ञाराष्ट्राद्विवासनीभवेत्॥ २॥ २४१॥

इतरे कृतवन्तस्तुपापान्येतान्यकामतः। सर्व्वस्वहारमर्हन्तिकामतस्तुप्रवासनम्॥ २४२॥

इतरइत्यादि॥ २४२॥ इतरे क्षत्रियवैश्यशूद्राब्रह्म*हत्यादीन्येतानिचत्वारिपापानि * त्वकामतःकृतवन्तः* सर्व्वस्वहारमर्हन्ति। १। कामतस्त्वेतानिचत्वारिपापानि * कृतवन्तःप्रवासनम्। २। उत्तमसाहसंदण्डं कृत्वा*सद्रव्याःसपरिच्छदा*राज्ञाकारितं स्वराष्ट्रा* न्निर्गमनमर्हन्तीति॥ २॥ २४२॥ नन्वेवंब्रह्महत्यादिपातकिनः*कृतप्रायश्चित्ताअपि*कृतदण्डाराज्ञास्वराष्ट्राद्वहिः * च्युताराज्यान्तरे वसन्तु। १। यत्तद्धनं राजादण्डयेन्तत्किं*स्वयमपभुञ्जीतेत्यत*आह।

नाददीतन्नृपःसाधुर्महापातकिनोधनम्। आददानस्तुतल्लोभात्तेनदोषेणलिप्यते॥ २४३॥

नाददीतेत्यादि। १। २४३। महापातकिनोधनं*साधुर्नृपोनाददीत *लोभात्तदादानस्तेन*महापातकदोषेणलिप्यते। १। २४३। तर्हि किंकुर्य्यादित्यत*आह।

अप्सुप्रवेश्यतं दण्डं वरुणायोपपादयेत्। श्रुतवृत्तोपपन्ने वाब्राह्मणे प्रतिपादयेत्॥ २४४॥

अप्सुप्रवेश्येत्यादि। १। २४४। राजामहापातकिनां दण्डंतं*मर्थमप्सुप्रवेश्यप्रक्षिप्य*वरुणायदेवायोपपादयेत्। १। अथवाश्रुतवृत्तोप*पन्ने ब्राह्मणेतं दण्ड* मर्थं प्रतिपादयेद्दद्यात्२। २४४। कस्माद्वरुणायोपपादयेद्*ब्राह्मणे वाप्रतिपादये*दित्यतआह।

ईशोदण्डस्यवरुणोराज्ञांदण्डधरोहिसः। ईशःसर्व्वस्यजगतोब्राह्मणोवेदपारगः॥ २४५॥

ईशइत्यादि। १। २४५। वरुणोदेवदण्डस्येशःप्रभुः*यस्माद्राज्ञां दण्डधरः* तस्मात्तस्मायुपपादयेत्। १। वेदपारगोब्राह्मणः*सर्व्वस्यजगतईशः*तस्मात्तस्मिन्दण्डमर्थं प्रतिपादयेदिति। २। २४५। किमर्थं राजामहापातकिनां*दण्डमर्थं नगृह्णीया*दित्यतआह।

यत्रवर्जयते राजापापकृद्भ्योधनागमम्। तत्रकाले नजायन्ते मानवादीर्घजीविनः॥ २४६॥

यत्रेत्यादि। १। २४६। यत्रदेशे राजापापकृद्भ्योधनागमं वर्जयते * तत्रदेशे मानवाःकालेनैव * दीर्घजीविनोजायन्ते। १। २४६। अपरञ्चाह।

निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक्। बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥२४७॥

निष्पद्यन्त इत्यादि । १ । २४७ । यत्र देशे राजा पापकृद्धीन् भो* धमागमं वर्जयते * तत्र देशे विशां यथोप्तानि पृथक् *तथा सस्यानि निष्पद्यन्ते । १ । न च तत्र देशे बाला म्रियन्ते * न च विकृतं जायते । २ । २४७ ।

ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्। हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८॥

ब्राह्मणानित्यादि ॥ २४८ ॥ ब्राह्मणान् कामाद्बाधमानमवर*वर्णजं शूद्रं नृपः उद्वेजन* करैश्चित्रैः राज्यों वधोपायैः * यद्दण्डेन बाधयेत्तद्दण्डं हन्यात् । १ । २४८ । इतीतं शूद्रस्य हनने राज्ञः किं * पापं न स्यादित्यत* आह ।

यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे । अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥ २४९ ॥

यावानित्यादि । १ । २४९ । अवध्यस्य वधे यावानधर्मः * तावानधर्मो नृपतेः * वध्यस्य मोक्षणे दृष्टः * वध्यं विनियच्छतस्तु धर्मो दृष्टः । १ । २४९ । उपसंहरति ।

उदितोऽयं विस्तरशो मिथो विवदमानयोः । अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥

उदित इत्यादि । २५० । मिथो विवदमानयोः*रष्टादशसु मार्गेषु * व्यवहारस्य निर्णयो * विस्तरशोऽय उदितः । १ । २५० ।

एवं धर्म्याणि कार्याणि सम्यक् कुर्वन् महीपतिः । देशानलब्धान् लिप्सेत लब्धांश्च परिपालयेत् ॥२५१॥

एवमित्यादि । । २५१ । महीपतिरेवमनेन*प्रकारेण धर्म्याणि कार्याणि सम्यक् । *कुर्वन्नलब्धान् देशान् लिप्सेत लब्धान्*देशांश्च पालयेदिति । १ । २५१ ।

सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः । कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥

सम्यगित्यादि । २५२। महीपतिः सम्यङ्निविष्टदेशः*शास्त्रतः कृतदुर्गश्च*सन् कण्टकोद्धरणे च * नित्यमुत्तमं यत्नमातिष्ठेदिति । १ । २५२ । तेन किं स्यादित्यत आह ॥

रक्षणादार्यवृत्तानां कण्टकानां च शोधनात् । नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥२५३॥

रक्षणादित्यादि ॥ १ ॥ २५३ ॥ नरेन्द्रराजानश्चार्य्यास्तानां *नृणां रक्षणात्कण्टकानाञ्च तथा* शोधनात् प्रजापालने *तत्पराः सन्तो दिवं यान्ति ॥ १ ॥ २५२ ॥ कण्टकानाञ्च* शोधने किं स्यात्* इत्यत आह।

**अशासंस्तस्करान्यस्तुबलिंगृह्णातिपार्थिवः। तस्यप्रक्षुभ्यतेराष्ट्रंस्वर्गाच्चपरिहीयते ॥ २५४॥**

अशासन्नित्यादि। १। २५४। यस्तु पार्थिवस्तस्करा* नशासन्प्रजाभ्यो बलिं गृह्णाति* तस्य राष्ट्रं प्रक्षुभ्यते तैस्तस्करैः* स च स्वर्गात्परिहीयते ॥ १। २५४।

**निर्भयन्तुभवेद्यस्यराष्ट्रंबाहुबलाश्रितम्। तस्यतद्वर्द्धते नित्यंसिच्यमानइवद्रुमः॥ २५५॥**

निर्भयन्नित्यादि। २५५। यस्य राज्ञो राष्ट्रं बाहु* बलाश्रितं निर्भयं* भवेत्तस्य राष्ट्रं सद्भिः * सिच्यमानो द्रुम इव* नित्यं क्रमेण वर्द्धते। १। २५५। ते च के पुनस्तस्करा इत्यत* आह ॥

**द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान्। प्रकाशांश्चाप्रकाशांश्चचारचक्षुर्महीपतिः॥ २५६**

द्विविधामित्यादि। १। २५६। परद्रव्यापहारकान्* तस्करान् प्रकाशानप्रकाशांश्च द्वि* विधान्महीपति श्चार* चक्षुश्चारैश्चक्षुर्भिर्व्वक्ष्यमाणैर्विद्यात्। १। २५६।

**प्रकाशवञ्चकास्तेषांनानापण्योपजीविनः। प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥ २५७॥**

प्रकाशेत्यादि ॥ २५७। तेषां द्विविधानां तस्कराणां मध्ये *नानापण्योपजीविनो ये मानवाः* ते प्रकाशवञ्चकास्तस्करा ज्ञेयाः। १। ये मानवास्ते नाश्चाटविकाः पथि* दस्यवः आदिनाग्रह *मागतावधघ्नन्धना* हृतहारकाद स्तेन* ते प्रकाशवञ्चकाः। २। २५७। के पुनराटविकादय इत्यत आह।

**उत्कोचकाश्चौपधिकावञ्चकाःकितवास्तथा। मङ्गलादेशवृत्ताश्चभद्राश्चेक्षणिकैःसह ॥२५८**

उत्कोचकादित्यादि। १। २५८। २५९। २६०। उत्कोचकादीनाद्यलिङ्गानाद्यन्तान्* प्रकाशान् लोककण्टकान्* तस्करान्राजा विजानीयात् ॥ १॥ उत्कोचकाः कार्य्यभ्योऽर्थं ये गृह्णीयुः* यथार्थमयथार्थमयथार्थं *यथार्थं कुर्व्वन्तीति ते चोत्कोचकाः। २। औपधिकाश्च ये लोकान्* भयं प्रदर्श्यार्थं तेभ्यो* गृह्णन्ति विनाकारणं। ३ वञ्चकाः स्वर्णादिषु न्यूनात्* द्रव्यं मिश्रयित्वा दद्युः* कितवा धूर्त्ता मङ्गलादेशवृत्ताः* पुत्रजन्मादिवार्त्तामा* दिश्य धनं गृह्णन्ति। ४। भद्राः प्रकाशकल्याणाचारा अन्तः* परद्रव्यापहारकाः* ईक्षणिकाः सामुद्रिकादिशास्त्रैः करचक्षुरादि दर्शकाः ५ ॥ २५८ ॥

असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः । शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ॥ २५९ ॥

असम्यगित्यादि । २५९ । महामात्रा हस्तिशिक्षोपजीविनो* ये ऽसम्यङ् हस्तिनं शिक्षयन्ति* ये चिकित्सका असम्यक् चिकित्सन्ति* ये वासम्यक् शिल्पोपचारयुक्ता रहः । १ । याः पण्ययोषितो वेश्या निपुणा* रतिकेलिकोविदा न्ताः ॥ २ । २५९ ।

एवमादीन् विजानीयात् प्रकाशांल्लोककण्टकान् । निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः ॥ २६० ॥

एवमादीनित्यादि । २६० ॥ एतत्प्रकारादीनन्यांश्च निगूढ* चारिण आर्यलिङ्गान् द्विजातिलिङ्गा* ननार्यान् शूद्रान् एतान् प्रचारिणः । १ । प्रकाशलोककण्टकान्* राजा विजानीयाच्चारै* र्ज्ञात्वा यत्कार्य्यं तदाह । २ । २६० ।

तान् विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः । चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत् ॥ २६१ ॥

तानित्यादि ॥ २६१ ॥ राजा सुचरितैरेतत्कर्मज्ञैः* गूढैस्तत्कर्म्मकारिभिर्नानापण्योपजीवि* स्तेनादिवेषधारिभिः । १ । अनेकप संस्थानैर्वेशरूपिभि* श्चारैस्तान् नानापण्योपजीविनः* स्तेनादीन् विदित्वा प्रोत्सा द्य । २ । प्रकर्षेणोत्सादितान् निरोधान् कृत्वा* स्ववशमानयेदिति । २ । २६१ । तानवशं नीत्वा राजा किं कुर्यादित्यत आह ।

तेषां दोषानभिख्याप्य स्वे स्वे कर्म्मणि तत्त्वतः । कुर्व्वीत शासनं राजा सम्यक् सारापराधतः ॥ २६२

तेषां दोषामित्यादि । १ । २६२ । राजा तेषां दोषानभिख्याप्य तान् * प्रकाशकर्थणत्वा स्वे स्वे कर्म्मणि* सारतश्चापराधतश्च सम्यक् *तेषां शासनं सर्व्वं कुर्व्वीत । १ । २६२ । कस्मादित्यत आह ।

न हि दण्डादृते शक्यः कर्त्तुं पापविनिग्रहः । स्तेनानां पापबुद्धीनां निभृतं चरतां क्षितौ ॥ २६३ ॥

नहीत्यादि । १ । २६३ । क्षितौ स्तेनानां पापबुद्धीनां *निभृतं क्षितौ चरतां *स्तेनानां पापनिग्रहं * स्तेनकर्म्म भोगनिवृत्तिः* दण्डादृते कर्त्तुं केऽपि न शक्ताः । १ । २६३ । अथ यत्नतश्चारान्* प्रेरयेत् *तदाह ।

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः। चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥२६४॥
जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च। शून्यानि चाप्यगाराणि वनान्युपवनानि च २६५
एवंविधान्नृपो देशान्गुल्मैः स्थावरजङ्गमैः। तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत्॥२६६

सभेत्यादि। १। २६४। २६५। २६६। सभादीनुपवनान्तान्देशान्नृपः स्थावरैरेकस्थानस्थैर्जङ्गमैश्च* पुनः पुनः कुटिलं गच्छद्भिर्गुल्मैः। १। सेनासमूहैः सहैव* चारैस्तस्कराणां प्रति* षेधार्थमनुचारयेत्। २। २६४। २६५। २६६।

तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः। विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः॥२६७॥

तत्सहायैरित्यादि। २६७। राजाज्ञयानुगतैस्तत्तत्पण्योप*जीवितस्करादीनां सहायैस्तेषां* तेषां कर्मप्रवेदिभि* र्निपुणैः पूर्वतस्करैः। १। पूर्वं ये तस्करा आस*न्नधुनातास्कर्यं त्यक्ता* राजानुगतास्तैश्चतां* स्तस्करान्विद्यादुत्सादयेच्चैवेति। २। २६७। ॥

भक्ष्यभोज्योपदेशैश्च ब्राह्मणानां च दर्शनैः। शौर्यकर्मापदेशैश्च कुर्युस्तेषां समागमम् ॥ २६८ ॥

भक्ष्येत्यादि। २६८॥ तेषां चौराणां सहाया* ये राजानुगताः पूर्वं* तस्करास्ते भक्ष्यभोज्योपदेशा*न्निमन्त्रणादिकरणात्* ब्राह्मणानां दर्शनैश्च। १। शौर्यकर्ममल्लक्रीडा*द्यपदेशैः* स्तेषां समागमं कुर्युः। २६८।

ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये। तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान् ॥ २६९

येतत्रेत्यादि॥ २६९॥ तत्र भक्ष्यभोज्यादिषु* ये जना नोपसर्पेयु* र्ये च मूलं पूर्वं तस्कर राज्ञा * नियुक्ताः प्रणिहितवन्तो* न वै तत्रोपसर्पन्ति। १ नृपस्तांश्चौरान्विदित्वा* समित्रज्ञातिबान्धवान्* प्रसह्य सहसैव हननात् ॥२६९

न होढेन विना चौरं घातयेद्धार्मिको नृपः। सहोढं सोपकरणं घातयेदविचारयन् ॥२७०

न होढेनेत्यादि॥ २७०॥ होढं हृतद्रव्यं हरणोप*करणमस्त्रादिकञ्च यद्*त्तेन विना चौरमिति * मानवेन नमश्चोरम्॥ १॥ धार्म्मिको नृपो न घातयेत्* सहोढं सोपकरणञ्च* चौरमविचारयन्धर्म्म * ज्ञो नृपो घातयेदि २॥ २७०॥

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः। भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् २

ग्रामे ष्वपीत्यादि ॥ २७१ ॥ येषुग्रामे षुयेकेचि * च्चौराणां भक्तदायका *चौराणां भाण्डादिद्रव्य* स्थापन स्थानदायकास्तानपिसर्व्वान्राजाघातयेत् ॥ १ ॥ २७१ ॥

राष्ट्रेषुरक्षाधिकृतान्सामन्तांश्चैवचोदितान्। अभ्याघातेषुमध्यस्थान्शिष्याच्चौरानिवद्रुतम् ॥ २७२ ॥

राष्ट्रेष्वित्यादि ॥ २७२ ॥ राजाराष्ट्रेषुस्वराज्येषुरक्षार्थं *मधिकृतानियुक्तायें *ये चसामन्ताःसमन्ताद्वसन्त *श्चौर्यार्थं चोदयन्तितान ॥१॥ येचपरद्रव्याणामभ्याघातेषु*मध्यस्थास्तांश्चचौरा*निवद्रुतं शिष्यादिति । २७२ ।

यश्चापिधर्म्मसमयात्प्रच्युतोधर्म्मजीवनः। दण्डेनेवतमप्योषेत्स्वकाद्धर्म्माद्धिविच्युतम् २७३

यश्चापीत्यादि ॥ २७३ ॥ यश्चापिधर्म्मजीवणो* धर्म्मसमयाद्धर्म्मेणकृतोयोनियमस्तस्मात्*च्युत ःस्तमपि हि*यस्मात्स्वकाद्धर्म्मादि*च्युतं तस्माद्दण्डेनोषेत् ॥ १ ॥ २७३ ॥

ग्रामघातेहिताभङ्गेपान्थमोषाभिदर्शने। शक्तितोनाभिधावन्तोनिर्व्वास्याःसपरिच्छदाः२७४

ग्रामघातइत्यादि ॥२७४॥ दस्युप्रभृतिइराक्रमिभिर्ग्रामसंघाते *द्रव्यापहरणपीडनादौकृते *हितानांसेतुप्रभृती नामाभङ्गे । १ । पथिदस्युभिःकृतस्य*पान्थानां द्रव्यामोषसाभिदर्शने * रक्षार्थं येशक्तितोनाभिधावन्ति * ते सपरिच्छदानिर्व्वास्याः । २ । २७४ ।

राज्ञःकोषापहर्त्तॄंश्चप्रतिकूलेषुचस्थितान्। घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्॥२७५

राज्ञइत्यादि ॥२७५॥ राज्ञःकोषापहर्त्तॄन्राज्ञःप्रति*कूलेषुचस्थितान्राज्ञ*श्चारीणाञ्चपजापकान्*ग्राम् समी पेऽनारम्य चण * वाक्यं वदतोजनांश्च । १ । राजाविविधैर्दण्डैर्घातयेदिति * राजधर्म्मवाव्यवस्थितम् ॥ २ ॥ २७५ ॥

सन्धिंच्छित्वातुयेचौर्य्यंरात्रौकुर्व्वन्तितस्कराः। तेषांछित्वान्नृपोहस्तौतीक्ष्णशूलेनिवेशयेत् ॥ २७६ ॥

सन्धिमित्यामि । २७६ । येतस्करान्नृहस्थानां *गृह संन्धिंच्छित्वारात्रौ * चौर्य्यं कुर्व्वन्तितेषान्तु * हस्तौ च्छित्वानृपस्तीक्ष्ण*शूलेतान निवेशयेदिति । १ । २७६ ॥

अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥२७७॥

अङ्गुलीरित्यादि । २७७ । वस्त्रस्वर्णादिबन्धनग्रन्थेः* भेदस्य चौरस्य प्रथमे तु* तदपहरणे छेदे नार्थस्य* अपहरणेऽङ्गुलीश्छेदयेत् । १ । यदि प्रथमापहरणे सग्रन्थि*भिच्चौरो धृतो न भवेत्* ततो द्वितीये ग्रन्थिभेदे तस्य* हस्तचरणौ छेदयेत् । २ । यदि द्वितीयेऽपि धृतो* न स्यात्तदा तृतीये ग्रन्थिभेदे* स चौरो वधमर्हति । १ । २७७ ।

अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान् । सन्निधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः ॥२७८

अग्निदानित्यादि । २७८ । मोषस्य चौरस्य अग्निदान्* भक्तदान् शस्त्रस्थापनार्थं अवकाशस्थानदान्* चौरस्य सन्निधिदान्* चौरमिव राजा हन्यात् । १ । २७८ ।

तडागभेदकं हन्यादप्सु शुद्धवधेन वा । तद्वापि प्रतिसंस्कुर्याद् दाप्यस्तूत्तमसाहसम् ॥२७९॥

तडागमित्यादि । २७९ । जनानां स्नानपानाद्युपपत्तौ* तडागस्य भेदकं राजा देहे* ताडनेन हन्यात् अप्सु वा तत्तडागान्निर्गमिताम्बुनि वधेन हन्यात् । १ । अथवा तां वापीं स प्रतिसंस्कुर्यात्* उत्तमसाहसञ्च* राज्ञा दाप्यो भवतीति । २ । २७९ ।

कोष्ठागारायुधागारदेवतागारभेदकान् । हस्त्यश्वरथहन्तॄंश्च हन्यादेवाविचारयन् ॥ २८० ॥

कोष्ठेत्यादि । २८० । कोष्ठागारादिभेदकान्* हस्त्यश्वरथहन्तॄंश्च* राजा हन्यात् तत्र विचारो न कार्यः । १ । २८० ।

यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत् । आगमं वाप्यपां भिन्द्यात् स दाप्यः पूर्वसाहसम् २८१

यस्त्वित्यादि । २८१ । प्रजानां स्नानपानाद्युपपत्तौ* पूर्वनिविष्टस्य जनस्य* तडागस्योदकं यस्तु* नालादिना हरेदथवा ततोऽपामागमं भिन्द्यात् ।१। जलसरणिं निरुन्ध्यात्* पूर्वसाहसं प्रथम*साहसं स राज्ञा दाप्यः ।२। २८१ ।

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि । स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥२८२

समुत्सृजेदित्यादि । २८२ । यस्त्वनापदि पुरीषाद्यमेध्यं* राजपथे समुत्सृजेत्* स द्वौ ताम्रकार्षापणौ दद्यात्* तदमेध्यञ्च शोधयेत् । १ । २८२ ।

आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव वा । परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥ २८३

आपद्गतइत्यादि । २८३ । आपद्गतःपुरीष*वेगादिधारणाशक्तोयुवा*इद्धोवागर्भिणीवाबालएतना*राजमार्गे यदामेध्यं*पुरीषादिसमुत्सृजेत् । १ । तदापरिभाषणंतत्*कर्मपुनःकरणपरित्यागाय*भाषणीमेवंसयो ऽर्हति*तच्चामेध्यंशोधयामितिभाषेत । २ । २८३ ।

चिकित्सकानांसर्व्वेषांमिथ्याप्रचरतांदमः । अमानुषेषुप्रथमोमानुषेषुतुमध्यमः ॥ २८४

चिकित्सकानामित्यादि । २८४ ॥ मिथ्याप्रचरतामयथाविधिना* चिकित्सांकुर्व्वतांचिकित्सकानां * मानुषेषुहस्त्यश्वादिषुदमः*प्रथमःसाहसोराज्ञाकर्त्तव्यः । १ । मानुषेषुमिथ्याप्रचरतां* चिकित्सकानांमध्यमः*साहसोदमःकर्त्तव्यः । २ । २८४ ।

संक्रमध्वजयष्टीनांप्रतिमानाञ्चभेदकः । प्रतिकुर्य्याच्चतत्सर्व्वंपञ्चदद्याच्छतानिच ॥ २८५ ॥

संक्रमेत्यादि । २८५ । संक्रमादोलारथशकटादय * स्तेषां ध्वजयष्टीनाञ्चभेदकः*प्रतिमानांदेवादिकप्रतिमूर्त्तीनांभेदकः । १ । तत्सर्व्वंप्रतिपुनस्त*द्रूपंकुर्य्यात् पञ्च*शतानिताम्रकार्षापणानांदद्यात् । २ । २८५ ।

अदूषितानांद्रव्याणांदूषणेभेदनेतथा । मणीनामपवेधेचदण्डःप्रथमसाहसः ॥ २८६ ॥

अदूषितानामित्यादि । २८६ । यानिद्रव्याणिनदूषितानितेषां *केनचिद्दूषणेनदूषणेकृते *भेदनेवाकृते मणीनामपायवेधेकृतेप्रथमसाहसोदण्डः । १ । २८६ ।

समैर्हिविषमंयस्तुचरेद्वैमूल्यतोपिवा । समाप्नुयाद्दमंपूर्व्वंनरोमध्यममेववा ॥ २८७ ॥

समैर्हीत्यादि । २८७ । योरिक्तेतात्तद्द्रव्यतःसमैः*विषमंचरेत्तद्द्रव्यंनदत्वात्तन्मूल्यद्रव्यंदत्वाविषमंनरोमूल्यतोवायश्चविषमंचरेत् । १ । येनमूल्येनयद्द्रव्यं*विक्रेतुमवधारितंतत्वाल्प*मूल्यंतथाविधद्रव्यं*वञ्चयित्वाददातीति । २ । सनरःपूर्व्वंसाहसंमध्यमंवा*साहसंदमंप्राप्नुयात् । २ । २८७ ।

बन्धनानिचसर्व्वाणिराजमार्गेनिवेशयेत् । दुःखितायत्रदृश्येरन्विकृताःपापकारिणः ॥ २८८

बन्धनानीत्यादि । २८८ । विकृताश्चौर्य्यादिपापकारिणो*दुःखिताःसर्व्वैर्जनैरेवयत्र* दृश्येरंस्तत्रराजमार्गेसर्व्वाणि*बन्धनानिकारागाराणिनिवेशयेत् । १ । २८८ ।

प्राकारस्यचभेत्तारंपरिखानाञ्चपूरकम् । द्वाराणाञ्चैवभङ्क्तारंक्षिप्रमेवप्रवासयेत् ॥ २८९

प्राकारस्येत्यादि । २८९ । प्राकारस्य भेत्तारं * परिखाणां पूरकं * द्वाराणां भङ्क्तारं * क्षिप्रं वै प्रवासयेत् । १ । २८९ ।

अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः । मूलकर्म्मणि चानाप्तैः कृत्यासु विविधासु च ॥२९०॥

अभिचारेष्वित्यादि । २९० । आभिचारिकेषु कर्म्मसु सर्व्वेषु * तत्कर्म्मकर्त्तुः द्विशतः * कार्षापणानां नृपेण * दमो दण्डः कर्त्तव्यः । १ । उच्चाटनादिषु धनिना मूलस्य * स्वाहादावनाप्तैः परैः * कीलकादेः खनने कर्म्मणि कृतायाञ्च * विविधास्वनिष्ट क्रियासु कृतासु । २ । कार्षापणानां द्विशतस्तत्कर्म्म * कारिणां दमः कर्त्तव्यः । ३ । २९० ।

अबीजविक्रयी चैव बीजोत्कृष्टं तथैव च । मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम् ॥२९१॥

अबीजेत्यादि । २९१ । बीजोत्कृष्टमिति वद * न्नबीजविक्रयी यः स्यात् * तथैव मर्य्यादायाः सीमाया यो * भेदकः सवधं देहे * विकृतं रूपं प्राप्नुयात् । १ । २९१ ॥

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः । प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥२९२॥

सर्व्वेत्यादि । २९२ । सर्व्वकण्टकपापिष्ठं हेमकारं स्वर्णकारं * मन्यायेप्रवर्त्तमानं * पार्थिवः क्षुरैर्लवशः * ऽल्पमल्पं छेदयेद्दङ्गम् । १ । २९२ ।

सीताद्रव्यापहरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥२९३

सीतेत्यादि । २९३ । सीता लाङ्गलपद्धतिः * तस्या अङ्गस्य द्रव्यस्यापहरणे * शस्त्राणामपहरणे * औषधानाञ्चापहरणे । १ । कालं कार्य्यञ्चासाद्य * राजा तस्य * पहर्त्तुर्दण्डं प्रकल्पयेत् । २९३ ।

स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते २९४

स्वाम्यमात्यावित्यादि । २९४ । स्वामी राजा मन्त्रिप्रभृतिरमात्यः * पुरं राजाधिष्ठितं नगरं राष्ट्रं * देशः कोषो धनागारं * दण्डो हस्त्यश्वरथादिः । १ । सुहृत् सप्तमाध्यायोक्तं * त्रिविधं मित्रम् एतास्तु * सप्त प्रकृतयो राज्यस्य भवन्ति * तस्मात् सप्ताङ्गं राज्यं * महर्षिभिरुच्यते । २ । २९४ ।

सप्तानां प्रकृतीनान्तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत् ॥२९५

राज्यस्यास्यासां सप्तानां प्रकृतीनां * व्यसनं वापत्तिर्यथा * क्रमं पूर्व्वं पूर्व्वं गुरु * तरं बुद्धिमान् जानीयात् । १ ।

।इद्व्यसनमपेक्ष्य*दण्डव्यसनं गुरुतरं भवति*दण्डव्यसनात्कोषव्यसनं कोष*व्यसनाद्राष्ट्रव्यसनम् । २ । राष्ट्रव्य
सनात्पुरव्यसनं पुर*व्यसनादमात्यव्यसनममात्य*व्यसनात्स्वामिव्यसनं गुरुतरं । १ । २९५ ।

**समाङ्गसप्तराजाद्यास्ताविष्टभ्य सप्तविदण्डवत् । अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते २९६**

समाङ्गेत्यादि । २९६ । दण्डराजाद्याः सप्ताङ्गपाङ्क [illegible] *विदण्डवद्विष्टभ्य* किञ्चिदङ्गं कुतश्चिद्*पाङ्गान्नैवातिरिच्यते । १ । २९६ ।

**तेषु तेषु कृतं येषु तत्तदङ्गं विशिष्यते । येन यत्साध्यते कार्यं सञ्चिन्त्य गुरुलाघवम् ॥ २९७**

तेषु तेष्वित्यादि । २९७ । सप्तानामङ्गानां [illegible] कृतं यत्* विशिष्यते तस्मान्नातिरिच्यते । १ । कनीविशिष्यते [illegible] साध्यते *[illegible] साध्यं भवति* तस्मिन्कार्ये तत्श्रेष्ठं भवति । २ । २९७ ।

**चारेणोत्साहयोगेन क्रियया चैव कर्म्मणाम् । स्वशक्तिं परशक्तिञ्च नित्यं विद्यान्महीपतिः ॥२९८**

चारेणेत्यादि । २९८ । महीपतिश्चारेण चारेत्*साहयोगेन कर्म्मणां क्रियया च* स्वशक्तिं परशक्तिञ्च नित्यं विद्यात् । १ । २९८ ।

**पीडनानि च सर्व्वाणि व्यसनानि तथैव च । आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम् ॥ २९९॥**

पीडनेत्यादि । २९९ । परपक्षे स्वपक्षे च*पीडनानि रोगादीनि*सर्व्वाणि व्यसनानि वोक्तसमानि *गुरुलाघवं [illegible] सञ्चिन्त्य कार्यमारभेत । १ । २९९ ।

**आरभेतैव कर्म्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्म्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ ३०० ॥**

आरभेतेत्यादि । ३०० । पुरुषः श्रान्तः श्रान्तः पुनः पुनश्च*कर्म्माण्यारभेतैव न निवर्त्तेत * कस्माद्धि यस्मात् पुरुषं*कर्म्माणि*आरभमाणं श्रीर्लक्ष्मीर्निषेवते * । १ । ३०० ।

**कृतं त्रेतायुगञ्चैव द्वापरं कलिरेव च । राज्ञो वृत्तानि सर्व्वाणि राजा हि युगमुच्यते ॥ ३०१ ॥**

कृतमित्यादि । ३०१ । कृतादीनि चत्वारि युगानि* सर्व्वाणि राज्ञो वृत्तानि*तो राजा युगमुच्यते । १ । ३०१ ।
कथमेतदित्याह ।

कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम्। कर्म्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम्॥ ३०२

कलिरित्यादि। १। ३०२। स राजा प्रसुप्तः कलिर्भवति* मोहादकर्त्तव्यात्स पुनर्जाग्रत सन्* द्वापरं युगं भवति ज्ञाने नत्वात्। १। ततः कर्म्मस्वभ्युद्यतः स राजा* त्रेतायुगं भवति ततः स राजा* विचरन् सन् कृतयुगं भवति। ३०२।

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्॥ ३०३

इन्द्रस्येत्यादि। ३०३। इन्द्रादीनां देवतानां* तेजोवृत्तं नृपश्चरेत्* स्वराज्यपरिपालनार्थं। १। ३०३ कथं तत्तेजो* वृत्तं राजाचरे*दित्यत आह॥

वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति। तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्॥ ३०४

वार्षिकांश्चेत्यादि। १। ३०४। इन्द्रो यथा वार्षिकांश्चतुरो मासा*नभि सर्व्वतः प्रवर्षति तथेन्द्र* व्रतं चरन् राजा कामैः* स्वं राष्ट्रमभिवर्षेत्। १। ३०४।

अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत्॥ ३०५

अष्टावित्यादि। ३०५। आदित्यो यथाष्टौ मासा*न् रश्मिभिस्तोयं हरति* तथा राजा राष्ट्रात्करं* नित्यं हरेदिति तद्धि* राज्ञो भवत्यर्कव्रतं॥ १॥ ३०५॥

प्रविश्य सर्व्वभूतानि यथा चरति मारुतः। तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम्॥ ३०६॥

प्रविश्येत्यादि॥ ३०६। मारुतो यथा सर्व्वभूतानीमानि* प्रविश्य चरति तथा* राज्ञा चारैः सर्व्वं राष्ट्रं* प्रवेष्टव्यमेतद्राज्ञो* हि मारुतं व्रतं स्मृतम्। १। ३०६।

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति। तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम्॥ ३०७।

यथा यम इत्यादि॥ ३०७॥ यमो यथा काले प्राप्ते प्रिय* द्वेष्यौ नियच्छति न* क्षमते तथैव राज्ञा* प्रजा नियन्तव्याः काले* न क्षमा इति यमव्रतं। १। ३०७॥

वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते। तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम्॥ ३०८।

वरुणेनेत्यादि। ३०८। यथा वरुणेन पाशै*र्बद्ध एव सर्व्वोऽभिदृश्यते तथा* राजा प्रजाः पापान्निगृह्णीयादेत*द्राज्ञो वारुणं व्रतं स्यात्। १। ३०८।

परिपूर्णं यथाचन्द्रं दृष्ट्वाहृष्यन्तिमानवाः। तथाप्रकृतयोयस्मिन्सचान्द्रव्रतिकोनृपः ॥ ३०९ ॥

परिपूर्णमित्यादि ॥ ३०९ ॥ यथापरिपूर्णं चन्द्रं दृष्ट्वामानवाहृष्यन्ति*तथासर्व्वाःप्रकृतयोयस्मिन्राजनिसन्ततं दृष्ट्वामानवाहृष्यन्ति*सनृपश्चान्द्रव्रतिकोज्ञेयः । १ ॥ ३०९ ॥

प्रतापयुक्तस्तेजस्वीनित्यंस्यात्पापकर्म्मसु। दुष्टसामन्तहिंस्रश्चतदाग्नेयंव्रतंस्मृतम् ॥३१०॥

प्रतापेत्यादि । ३१० । अग्नियथानित्यमेव*प्रतापयुक्तस्तेजस्वी*तथाराजा[illegible] । १ । तथा पयुक्तस्तेजस्वीचदुष्ट*सामन्तहिंसश्चस्यात्*दाग्नेयंव्रतं स्यात । १ । ३१० ।

यथासर्व्वाणिभूतानिधराधारयतेसमम्। तथासर्व्वाणिभूतानिविभ्रतःपार्थिवंव्रतम् ॥ ३११॥

यथासर्व्वाणीत्यादि । ३११ । धरापृथिवीयथासर्व्वाणीमानि* भूतानिसमंधारयतेनैवं*विषमंतथा सर्व्वाणिभूतानि*समंविभ्रतोराज्ञःपार्थिवंव्रतं । १ । ३११ ।

एतैरुपायैरन्यैश्चयुक्तोनित्यमतन्द्रितः स्तेनानराजानिगृह्णीयात्स्वराष्ट्रे परमेवच ॥ ३१२॥

एतैरित्यादि ॥ ३१२ । एतैरन्यादिभिरष्टाभिस्तेजोभि*रन्यैश्चोपायैर्युक्तोराजानित्य*मतन्द्रितःस्वराष्ट्रे स्तेनान्निगृह्णीयात् । १ । परंमत्रमे वचनिगृह्णीयात्*प्रमादीलत्रपरएवचेति*परित्वापरंराष्ट्रे च*स्तेनानितिवाचष्टे । २ । तन्नपरःकापुरुषः*सन्किंस्वराज्यस्थितानस्तेनान्परेगाराज्ञाभिप्रगात् । २ । ३१२ ।

परामप्यापदंप्राप्तोब्राह्मणान्नप्रकोपयेत्। तेह्येनंकुपिताहन्युःसद्यःसबलवाहनम् ॥३१३॥

परामपीत्यादि । ३१३ । राजापरामत्युत्कृष्टामत्यन्तमप्या*पदंप्राप्तोब्राह्मणान्नप्रकोपयेत्* हि यस्मात्ते ब्राह्मणाःकुपिताएनं*नृपंसबलवाहनंसद्योहन्युः । १ । ३१३ ।

यैःकृतःसर्व्वभक्षोऽग्निरपेयश्चमहोदधिः। क्षयीचाप्यायितःसोमःकोननश्येत्प्रकोप्यतान्३१४

तद्दृष्टान्तानाहयैरित्यादि । ३१४ । यैर्ब्राह्मणैरग्निःसर्व्वभक्षःकृतो*लवणोदोमहोदधिरपेयः*कृतःसोमश्चक्षयीकृतश्चाप्या*यितःकृतस्तान्प्रकोप्यकोननश्येत् । १ । ३१४ ।

लोकानन्यान्सृजेयुर्येलोकपालांश्चकोपिताः। देवान्कुर्युरदेवांश्च कःक्षिण्वंस्तान्समृध्नु-
यात् ॥ ६१५ ॥

अपरञ्चाह लोकानित्यादि । ३१५ । ये ब्राह्मणा इन्द्रादिभिर्लोकपालैरपि कोपिता भूर्लोकादिभ्योऽन्यान् लोकान् लोकपालांश्च सृजेयुः । १ । देवानदेवांश्च कुर्युः कस्तान् ब्राह्मणान् हिंसन् समृध्यात् समृद्धिमाप्नुयादिति । २ ३१५ ।

यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्व्वदा । ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः ॥ ३१६ ॥

अपरञ्चाह यानित्यादि । ३१६ । यान् ब्राह्मणानुपाश्रित्य भूर्लोकादयो लोकाश्च देवाश्च सर्व्वदा तिष्ठन्ति वर्त्तन्ते येषां ब्राह्मणानां धनं ब्राह्म जिजीविषुः कस्तान् हिंस्यात् । १ । ३१६ । तर्हि किमीदृशाः सर्व्वे ब्राह्मणा नर्कार्ह्या इत्यत आह ।

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ३१७ ॥

अविद्वांश्चेत्यादि । १ । ३१७ । अविद्वांश्च विद्वांश्च ब्राह्मणो महद्दैवतं यथाग्निर्मन्त्रैः प्रणीतश्चाप्रणीतश्च महद्दैवतमेवेति । १ । ३१७ अपरञ्चाह ।

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति । हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते ॥ ३१८ ॥

श्मशानेष्वित्यादि । ३१८ । तेजस्वी पावकः श्मशानेष्वपि न दुष्यति पुनर्यज्ञेषु च हूयमानो भूय एवाभिवर्द्धते । [illegible] । ३१८ ।

एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्व्वकर्म्मसु । सर्व्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥ ३१९ ॥

एवमित्यादि । ३१९ । एवं सति यद्यपि ब्राह्मणा अनिष्टेषु सर्व्वकर्म्मस्वपि वर्त्तन्ते तथापि ब्राह्मणाः पूज्याः सर्व्वथा ते हि [illegible] । १ । कस्मात् हि यस्माद्ब्राह्मण एव परमं श्रेष्ठं दैवतम् ॥ २ । ३१९ ॥

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्व्वशः । ब्रह्मैव सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ॥ ३२० ॥

क्षत्रस्येत्यादि । ३२० । अतिप्रवृद्धस्य क्षत्रियस्य सर्व्वशः सम्यङ् नियन्तृ तद् ब्रह्मैव स्याद् यद्वा खलु ब्राह्मणान् अतिवर्त्तते । १ । कस्मात् हि यस्मात् क्षत्रं क्षत्रियत्वं ब्रह्मसम्भवं भवति । २ । ३२० ।

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२१ ॥

अद्भ्य इत्यादि । ३२१ । यद्यप्यग्निरपां इतिमाकर्षण स्तथाप्यग्नेरपामुत्पत्तिः लक्षण [illegible] मश्मरूपस्य प्रवेशः क्षत्रियात्मिका

प्रजेत्यादि। १॥३२७। हि यस्मात् पशून् सृष्ट्वा प्रजापतिः* वैश्याय ददौ सर्वास्तु* प्रजाः सृष्ट्वा ब्राह्मणाय राज्ञे च* परिदत्तवान्। १। तस्माद्वैश्यः पशून् रक्षेद्, ब्राह्मणो* राजा च प्रजा रक्षेदिति। २। ३२७। किमर्थं पशून् रक्षेदित्यत आह।

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन। ३२८।

न च वैश्यस्येत्यादि। १। ३२८। पशून् नहं रक्षेय* मिति कामो वैश्यस्य च* न स्यात्तत्स्वभावादेव। १। वैश्ये तु पशुरक्षा* मिच्छति सति नान्येन* वर्णेन पशवः कथ* ञ्चिद् रक्षितव्याः वैश्ये *त्वनिच्छति रक्षितव्या इत्यनेनोक्तमिति। २। ३२८।

मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च। गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्। ३२९।

मणीत्यादि। ३२९। मण्यादीनामर्घबलाबलं मूल्य* न्यूनाधिक्यं वैश्यो विद्यात्॥१॥ ३२९।

बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च। मानयोगञ्च जानीयात्तुलायोगांश्च सर्वशः। ३३०

बीजानामित्यादि। ३३०। बीजानां वपनं यथा कर्त्तव्यं* वैश्यस्तद्वित् स्यात् क्षेत्रदोषगुणस्य* वेत्ता च स्यात्। मानयोगं* प्रस्थकादिपरिमाणम्। १। तुलायोगांश्च तौलयोजनाक्रियाः सर्व्वशो वैश्यो जानीयात्॥ ३३०।

सारासारञ्च भाण्डानां देशानाञ्च गुणागुणान्। लाभालाभञ्च पण्यानां पशूनां परिवर्द्धनम्। ३३१

सारासारमित्यादि॥ ३३१॥ भाण्डादीनां द्रव्याणां सारासारं* भद्राभद्रं देशानाञ्च* गुणागुणान्* पण्यानां लाभालाभं पशूनाञ्च* परिवर्द्धनं वैश्यो जानीयादिति। १। ३३१।

भृत्यानाञ्च भृतिं विद्याद्भाषाश्च विविधा नृणाम्। द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ३३२

भृत्यानामित्यादि। ३३२। यस्य भृत्यस्य यावती* भृतिर्वेतनं तावतीं* वैश्यो विद्यात् नृणां नाना* देशीयां विविधाश्च भाषा विद्यात्। १। द्रव्याणां यस्य द्रव्यस्य* यत्र स्थापनं भद्रं स्यात्* तत्स्थानयोगांश्च विद्यात् क्रयविक्रयञ्च विद्यात्। २। ३३२।

धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम्। दद्याच्च सर्व्वभूतानामन्नमेव प्रयत्नतः॥ ३३३।

धर्म्मेणेत्यादि। ३३३। वैश्यो धर्म्मेण द्रव्याणां* मण्यादीनां द्रव्यवृद्धौ उत्तमं यत्नं* मातिष्ठेत् कुर्य्यादित्यर्थः* सर्व्व

भूतानामन्नं * दद्यादेव च । १ । अन्नमितिर्वैश्यस्य साग्निकस्य * वैवाहिकाग्नौ पक्वमोदनादि * तस्यान्नं
सर्वैर्वर्णैर्भोक्तव्यं । २ । यथा साग्निकस्य ब्राह्मणस्य * क्षत्रियस्य चान्नं सर्वैर्भोज्यं * वैवाहिकाग्नौ पक्वेन *
सायं प्रातर्होमो विहितः स्यात् । ३ । एवदेव यमः श्राद्धं पितृयज्ञो * वैश्वदेवो भूतयज्ञ * आतिथ्यं योगृयज्ञ * तत्र तैः
पक्वैरन्नैः स्यात् * तस्मात् सर्वैस्तद्भोक्तव्यं । ४ । उक्तं ह्याङ्गिरसापस्तम्बाभ्यां यथा * अमृतं ब्राह्मणस्यान्नं क्षत्रिया
न्नं पयः स्मृतम् । वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् । ५ । वैश्वदेवेन होमेन देवताभ्यर्च्चनैर्जपैः ।
अमृतं तेन विप्रान्नम् ऋग्यजुःसामसंस्कृतम् । ६ । व्यवहारानुरूपेण धर्म्मेणोच्छलवर्जितम् । क्षत्रियान्नं पयस्तेन
भूतानां पालनेन च । ७ । स्वकर्म्मणा च वृषभैरनुसृत्या समर्ज्जितः । खलयज्ञातिथिभ्योन वैश्यान्नं तेन संस्कृ
तम् । ८ । अज्ञानतिमिरान्धस्य मद्यपानरतस्य च । रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम् । ९ । ब्राह्म
णस्य सदा भुङ्क्ते क्षत्रियस्य च पर्व्वणि । वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन । १० । इति । तेन वैवाहिका
ग्नौ पक्वैरन्नैः * यस्यादेवस्य यथोपकरणैः * सामिषैर्निरामिषैर्वा पूजनं * शास्त्रविहितं तथैव कर्त्तव्यम् । ११ ।
व्यासेनोक्तं यथा * कृतदारोऽग्निपत्नीभ्यां कृतवेश्माथ गृहे वसेत् । स्वकृतं वित्तमासाद्य वैतानाग्निं न हापयेत् । १२
स्मार्त्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु । कर्म्म कुर्यात् प्रतिदिनं विधिवत्प्रीतिपूर्व्वकम् । इति । १२ । श्राद्ध
स्य यथोक्तं सामिषं तस्मिन् * वैवाहिकाग्नौ पक्वैर्विहितं * सपिण्डीकरणान्तं प्रेतश्राद्धं * मासानुमासिकमाब्दि
कादि च तदुक्तं लघुहारीते * सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडश । पक्वान्नेनैव कार्य्याणि सामिषेण द्विजा
तिभिः । १३ । इति । मासानुमासिकादिकं * स्वयमेव पूर्व्वोक्तं * सामिषं पक्वान्नेन । १४ । साग्निकानाञ्च
त्रयाणां वर्णानां * माषैर्वैश्यकान्नेन च फलेन चाग्निहोत्रहोमः । १५ । महायज्ञविधानन्तु न कुर्य्यान्मृतज
न्मनोः । होमं तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा । १६ । तथापदि तीर्थेषु चन्द्रार्कग्रहणे * च निरग्नीनां चामा
न्नेन * श्राद्धमुक्तं प्रचेतसा । १७ । आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा । आमश्राद्धं द्विजैः कार्य्यं शूद्रेण
तु सदैव च । इति । १८ । द्विजैः साग्निकैर्निरग्निभिश्चापदि * राजकदैविकाद्यापत्काले तीर्थे * प्राप्तिनिमित्तं
चन्द्रार्कग्रहणे * निमित्ते वैवाहिकाग्न्यभावे च । १९ । आमश्राद्धं कार्य्यं साग्निकानामग्नेः * रभावः पुनर्माविणां
पञ्चाहे * भवति तस्याहिताह * स्तदग्निहोत्रेण युक्तः । २० । निरग्नीनान्तु सदैव * त्रिवाहाग्नेरभावोऽस्ति * लौकि
काग्नावसंस्कृतत्वात् पक्व * मन्नं पापं श्वपाकवत् * तदुक्तमत्रिसंहितायां । २१ ॥ योऽगृहीत्वा विवाहाग्निं गृहस्थ इति
मन्यते । अन्नं तस्य न भोक्तव्यं श्वपाको हि स उच्यते ॥ २२ ॥ श्वपाकं हि भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ॥ प्राणा
नऽप् क्षत्रियायस्य घृतं प्राश्य विशुद्ध्यतीति ॥ २३ ॥ लौकिकेऽत्वसंस्कृतेऽग्नौ पक्वमन्नं निरग्नेर्गृहस्थस्य * न द्विजै
र्भोक्तव्यं हि श्वपाकात् * पापान्नमुक्तमङ्गिरसा ॥ २४ ॥ दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ॥ योयस्यान्न

अथयएषचतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्रजातीनां तत्तोधर्मस्तत्र यमाम्नः। इत्यन्तेद्विवद्ग्रोजातयस्ता एवकिं चतुर्षु वर्णेष्वन्तर्भूतास्तत उक्ताधर्माएव यथायथं सर्व्वासां जातीनामथवा चतुर्भ्योवर्णेभ्योऽतिरिक्ता अपराजातयो यद्यतिरिक्ताःस्युस्तदा तासां किं धर्मं किञ्चकर्म्मेति। एवमाशङ्कायां चतुर्भ्योवर्णेभ्योनातिरिक्तोवर्णोऽस्ति चतुर्ष्ववर्णेषु सर्व्वाजातयोऽन्तर्भूतास्तत्रयाचजातिर्यत्रान्तर्भूता यदधिकं धर्म्मकर्म्मच तत्सर्व्वं वक्तुं दशमाध्याय मारभते ॥

अधीयीरंस्त्रयोवर्णाः स्वकर्म्मस्थाद्विजातयः। प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ॥ १ ॥

अधीयीरन्नित्यादि ॥१॥ यथाविधिवेदध्यायिनः स्वकर्म्मस्थाःपञ्चमहा*यज्ञादिकर्म्मकारिण*स्वध्ययनाध्यापनभेदाद्द्विविधा * नातरब्रह्मयज्ञः कर्त्तव्योऽस्तीति। १। त्रयएवद्विजातयोवर्णाःस्वय * मधीयीरन्स्वाध्यायं कुर्व्वीरं स्तेषां*त्रयाणां द्विजातीनां मध्ये ब्राह्मण*एवप्रब्रूयादध्यापयेन्नेतरौ। २। ब्राह्मणएवाध्यापनं ब्रह्मयज्ञं* कुर्य्यादितरौक्षत्रिय*वैश्यावध्यापनं ब्रह्म*यज्ञं नकुर्व्वीयातामित्येषनिश्चयएवोक्तः।३। तेनोपजीवनार्थमध्यापनं ब्रह्मयज्ञार्थमध्यापनञ्चविना*क्षत्रियवैश्यावध्याप*येतामितिपूर्व्वं कार्त्ता वीर्य्यातानिनिवर्त्तन्ते* ब्राह्मणात्क्षत्रियमतीति ॥ ४ ॥ ० ॥ १ ॥ ० ॥

सर्व्वेषांब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि। प्रब्रूयादितरेभ्यश्चस्वयञ्चैवतथाभवेत् ॥२॥

सर्व्वेषामित्यादि।२।०। सर्व्वेषां वर्णानां यथाविधि * वृत्त्युपायान् ब्राह्मणोविद्यादि * त्यातद्वृत रेभ्यःस्वस्मा*दन्येभ्यः शास्त्रंप्रब्रूयात्। १। स्वयञ्चब्राह्मणस्तथान्नेनापित*शास्त्रमध्यापितोभवेत्।२।०। ।२।०। कस्माद्ब्राह्मणःसर्व्वेषां * वृत्त्युपायान् विद्यादित्यातउच्यते* ।

वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्यचधारणात्। संस्कारस्यविशेषाच्चवर्णानांब्राह्मणःप्रभुः॥३॥

वैशेष्यादित्यादि॥ ३ ॥ वर्णानां ब्रह्मभूर्ब्राह्मणस्तस्मात्*सर्व्वेषां वृत्त्युपायान्विद्यात्कस्मात्*वर्णानां प्रभुरित्यत*आहवैशेष्यादित्यादि। १। सर्व्वेभ्योवर्णेभ्योब्राह्मणस्य * वैशेष्याद्वायवीछन्दसापे * ब्रह्मणाद्ब्रह्मणा सृष्टत्वात्*प्रकृत्यास्वभावाच्छ्रैष्ठ्यात्। २। दशविधस्यनियमस्यधारणात् * संस्कारस्योपनयनस्यविशेषात् * वर्णानां प्रभुर्ब्राह्मणः। २। दशनियमाउक्ताश्रमिणायथा*शौचमिज्यातपोदानं*स्वाध्यायोपस्थनिग्रहौ * व्रत

मौनोपवासाश्च * स्नानञ्च नियमादश । इति । ४ । ० । २ । त्रयो वर्णा द्विजातय इति * यदुक्तं केचन वर्णा ये तु * द्विजातयः कास्तावावर्णा एक * जातिरित्यत आह ।

**ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ ४**

ब्राह्मण इत्यादि । ४ । उक्तं प्रथमाध्याये * लोकानान्तु विवृद्ध्यर्थं * मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं
शूद्रं च निरवर्त्तयत् । इति । १ । य एष आदित्यो नारायणश्चक्षुर्यो * मण्डलमध्यवर्त्ती पञ्चवदनो * महाब्रह्मा
लोकविवृद्ध्यर्थं । २ । स्वमुखबाहूरुपादतः क्रमात् * शुक्ललोहित पीत श्यामान्मूर्त्तान् * ब्राह्मणक्षत्रियवैश्य
शूद्रसंज्ञां * श्चतुरो वर्णान्निरवर्त्तयदिति । ३ । वसिष्ठेनाप्युक्तं * इत्थं यताभिहितं * तदत्र प्रदर्श्यते । ४
ब्राह्मणोऽस्य मुखमासीत् * बाहू राजन्यः कृतः * ऊरू तदस्य यद्वैश्यः * पद्भ्यां शूद्रोऽजायत । इति । ५ । गायत्र्या
छन्दसा ब्राह्मणमसृज * त्रिष्टुभा राजन्यं जगत्या वैश्यं न * केनचिच्छन्दसा शूद्र* मितास्संस्कार्यो विज्ञायते । ६
इति । तत्र ब्राह्मणादयस्त्रयो वर्णाः * ब्राह्मणक्षत्रियवैश्याः * द्विजातयो द्विजाती * जन्मनोऽपरं भवतः । ७
अयमेते वर्णा ब्रह्मणासृष्टा * स्त्वेकैको वर्णो द्विधा पाटितस्स * स्यादर्द्धं पतिरर्द्धं पत्नी * तदैव ब्रह्मणाऽकल्पि । ८
तदुक्तं व्याससंहितायां * पाटितोऽयं द्विजः पूर्व्वमेकदेहः स्वयम्भुवा । पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति
श्रुतिः । ६ । यावन्न विन्दते जायां तावदर्द्धो भवेत्पुमान् । नार्द्धं प्रजायते पूर्णः प्रजायेतेति च श्रुतिः । १०
क्षणमरीरिणं पुरुषं * देवनरतिर्यग्योनिषु * कर्म्मफलेन तत्तद्वीजं प्रविश्य * स्त्रीपुरुषदेहमापद्यमानं । ११
चत्वारस्ते त्वमूर्त्ता वर्णाः प्रथमं * मातृगर्भाद्ब्राह्मणादि * जाताभिवाजान्ते स्त्री * मूर्त्ता पुरुषमूर्त्ताश्च । १२
ततस्ते ब्राह्मणक्षत्रियवैश्य * शूद्रा इत्यभिधीयन्ते । १३ । तत्र त्रयो वर्णा ब्राह्मणक्षत्रिय * वैश्या अर्द्धार्द्धभूता
स्त्री * पुरुषरूपा वर्त्तन्ते । १४ । तत्र पुमांस उपनयनेन * वेदे पुनर्जाता द्विजा भवन्ति * स्त्रियश्च मन्त्रैर्विवाहात्
। १५ । पतयास्सहैकीभावमापन्नाः पत्या * स्वशरीररूपेण * पुनः श्वशुरकुले जायन्ते पति * गोत्राः पतिवर्णाश्च
। १६ । एतत्स्त्रीणां द्वितीयं जन्म तेन * द्विजा भवन्तीदम्पति * रूपोऽयं पूर्णः सन्प्रजायते । १७ । शूद्रस्तु वर्ण
न द्विधा * ततः स्वयम्भुवापूर्व्व * नमन्त्रैः संस्कारविधि * स्तेनैकजन्म तदेकजातिः शूद्रवर्णश्चतुर्थः भवति । १८
पूर्व्वसृष्ट्यभावात्पञ्चमो वर्णस्तु * नास्तीति मनुः प्रतिपन्न । १९ । महाभारते चानुशासनपर्व्वणि चोक्तं भीष्मेण यथा
स्मृता स्ववर्णाश्चत्वारः पञ्चमो नाधिगम्यते । इति । २० । ब्राह्मणक्षत्रियवैश्याः * शूद्राश्च मन्वाद्यस्तोराकृत्
दिताः * पुत्राः शूद्रसमानधर्म्मकत्वाच्छूद्राः * प्रतिलोमजाश्च शूद्राः । २१ । स्वयमेव मनुनोक्तं * स्वजातिजानन्तरजा
षट्सुता द्विजधर्म्मिणः । शूद्राणाञ्च सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः । इति । २२ । एतद्विस्मृत्या कश्चि

प्रमादीत्वाच्च*पञ्चमःपुनर्वर्णोनास्ति । २३ । सङ्कीर्ण*जातीनांत्वश्वतरवत्*मातापितृजातिव्यतिरिक्तजात्यन्तरत्वान्नवर्णत्वमिति।२४। तद्यथाधुद्विजवर्णानांस्त्रीपुंसानां सम्बन्ध*विवाहादेःकालक्रमेण*समानयोनित्वाच्चाद्या*मपतानां पितृवर्ण*जातित्वात्सङ्कीर्णत्वं । २५ । द्विजानां शूद्राविवाहोनमन्त्रेण*तस्माद्धि शूद्रायां जाताः*पुत्राःप्रतिलोमजाश्च*पुत्राःसङ्कीर्णाःशूद्रसधर्मत्वाच्छूद्राः । २६ । कःपुनःपञ्चमोयस्य*वर्णत्वं नास्तितस्मात्*द्व्याख्यानमसाधुत्वेयं । २७ । स्वयमेवमतरत्वि * न्नधाय्येवद्याते हि * क्वतादीनां च वर्णत्वं तद्यथा । २८ ।
एते षट् सदृशान्वर्णान्जनयन्तिस्वजातिषु । इति*विष्णुनाचद्वाभ्यां द्वाभ्यां *वर्णाभ्यां जातोऽपत्यं *वर्णशब्दःप्रयोजितस्तद्यथा । २९ । अनुलोमाश्चमाश्चवर्णा इति*एकलोहितवर्णयो*मिश्रीभावे पाटलवर्णः* किं नवर्णःस्यादतश्चतदसाधु । २ । ४ । ० । नन्वयदिपञ्चमोवर्णोनास्ति*धात्रापूर्व्वमसृष्टत्वा * त्तर्हि एकवर्णाभ्यां द्वाभ्यां द्वाभ्यां वर्णाभ्यां च जाताः*किं वर्णाःस्युस्तत्राह । ० ।

**सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥ ५ ॥**

सर्व्ववर्णेष्वित्यादि*सर्व्ववर्णेषुब्राह्मण*क्षत्रियवैश्यशूद्रेषु*तुल्यासुतुल्यवर्णासु*नारीषुपरोढास्वक्षतयोनिषु ।१। दृढवर्णजातिपुरुषेभ्यःसम्भूता*ये ते जातास्तएवपितृवर्णा*एवक्षेत्रबीजप्राधान्या* सङ्करतोऽतिरिक्ताःस्युः । २ । तुल्यात्वंद्विनारीणां पुरुषैःसह * मातृतोजन्मनामन्त्रैर्विवाहेनोभयतश्चभवतीति* विधातव्यतानारीणां । ३ । तद्यथा । ब्राह्मणेनमन्त्रेणोढा * ब्राह्मणकन्याक्षत्रिय * कन्यावैश्यकन्यावपतितुल्याख्याः *चापुनर्भूश्च । ४ । तास्वपरेणब्राह्मणेनजनिताः * पुत्राःसधवायांकुण्डाः * विधवायांगोलकाः * पुनर्भूषुपौनर्भवा * ब्राह्मणा एवभवन्ति ।५। स्वयमेवमनुनोक्तं * अतः पङ्क्तिदूषणाब्राह्मणेषु * वागदुष्टःकुण्डगोलकाविति । ६ । परपुत्रात्परभार्यायां जातौ * द्विकुण्डगोलकौस्याताम् * । ७ । एवं क्षत्रियेणमन्त्रेणोढातु * क्षत्रियकन्यावैश्यकन्याचक्षत्रिया*भवतितस्यामपरेण ।८। क्षत्रियेणजनिताःपुत्राः*क्षत्रियाएवसधवायां कुण्डो*विधवायां गोलकःपुनर्भ्वां पौनर्भवः । ९ । तथावैश्येनमन्त्रेणोढावैश्या*तस्यापरेणवैश्येन*जनितःपुत्रोवैश्यएव । १० । तत्र सधवायां कुण्डो*विधवायां गोलकः*पुनर्भ्वां पौनर्भवः । ११ । एवं शूद्रात्परभार्यायां शूद्रायां * जातःशूद्रःसधवायां *कुण्डोविधवायां गोलकः* पुनर्भ्वां पौनर्भवःस्यात् । १२ । शूद्रात्स्वोढायाश्चशूद्रायां जातः * पुत्रःशूद्रो भवतीति*सर्व्ववर्णेषुतुल्यासु*नारीष्विदमुदाहरणानि । १३ । तथाद्विजेभ्यःस्वोढासु*शूद्रासुमन्त्रेणविवाहाभावात्*तुल्यात्वाभावाज्जाताः*पुत्रानपितृजातिवर्णाः । १४ । अपधं सजातत्वात्*शूद्रसधर्म्माणःशूद्राःस्युः*यतस्तर्हि चानुलोमजाःकथ्यन्ते*चरितार्थाः पत्नीष्विति । १५ । पत्युर्नोयज्ञसंयोग*इतिपाणिनीयसूत्रेण * स्त्रियां पत्नी

ब्रह्मस्थानकारविधि*यं ग्रस योगे गम्यमाने । १६ । अन्ये विवाहे नब्राह्मणस्यच*विधानं ब्राह्मणकन्यायाश्चविप्र*
कन्यायां वैश्यकन्यायांचशूद्रोक्तं तेमब्राह्मणस्यातिथः पञ्चांशः । १७ । एवंक्षत्रियस्यक्षत्रियकन्या * वैश्यकन्या
भ्यां चतु*मन्ये विवाहाद्युत्रविधानं वैश्य* कन्यायास्तुवैश्यस्य । १८ । तेमक्षत्रियस्याहे पञ्चांशोच त्रिए * कन्या
वैश्यकन्यायां*वैश्यस्यैकांशश्चैवयथा* ब्राह्मणादिभ्यस्त्वपत्नीषु जाताः*पुत्राजातायामएवपितृवर्णा एवत्रयाः ।२०।
एवमेवोक्तमत*मानुशासनपर्व्वणि*महाभारते भीष्मेणचत्वारिंशदध्याये ।२१॥ तत्रविवाहकथने तूक्तं *तिस्रोभार्या
ब्राह्मणस्याद्द्वे भार्य्ये क्षत्रियस्याच । वैश्यः स्वजात्यां विन्देततास्वपत्यं समं भवेत् ॥ २२ ॥ ब्राह्मणीतुभवेज्ज्येष्ठा
क्षत्रियाक्षत्रियस्यतु ॥ रत्यर्थमपि शूद्रास्यादित्याहुरपरे बुधाः ।२३॥ अपत्यजन्मशूद्रायां नप्रशंसन्तिसाधवः शूद्रायां
जनयन्विप्रः प्रायश्चित्तीयते यतः । ब्राह्मणःक्षत्रियोवैश्यस्त्रयोवर्णा द्विजातयः । एतेषुधर्म्मोविहितोब्राह्मणस्य युधि
ष्ठिर ॥ वैषम्याद्यथवालोभात्कामाद्वापिपरन्तप । ब्राह्मणस्यभवेच्छूद्रानतुधर्म्मार्थतःस्मृता ॥ त्रिषुवर्णे
षु ये पुत्राब्राह्मणस्ययुधिष्ठिर । वर्णयोश्चद्वयोःस्यातां दौराजन्यस्यभारत । एकोविड्वर्ण एवाथतथात्रैवोप
लक्षितः । त्रिषुवर्णेषुपत्नीषु ब्राह्मणाद्ब्राह्मणोभवेत् । ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणःस्यादसंशयं ।
क्षत्रियायाश्चयःपुत्रोब्राह्मणःसोऽप्यसंशयः । तथैवब्राह्मणःस्यात्सवैश्यायामपिब्राह्मणात् । इति ॥ दायभाग
प्रकरणे चतत्रैवभीष्मेणोक्तं ॥ ० ॥ तिस्रःकृत्वापुरःभार्याः पश्चाद्विन्देतब्राह्मणीम् । सापिज्येष्ठासापिपूज्या
साभार्य्यास्याद्गरीयसी । लक्षणान्यसभंयानं यत्प्रधानतमं भवेत् । ब्राह्मण्यास्तद्धरेत्पुत्रएकांशंवापितृध
नात् ॥ शेषन्तुदशधाकृत्वाब्राह्मणस्वंयुधिष्ठिर । ततस्तेनैवहर्त्तव्याश्चत्वारोंऽशाःपितृधनात् ॥ क्षत्रियायाश्च
यःपुत्रोब्राह्मणःसोप्यसंशयः । सतुमातुर्विशेषात्तु त्रीनंशान्हर्त्तुमर्हति ॥ ब्राह्मणाश्चैवजातस्तुवैश्याया
ब्राह्मणाच्चयः । द्विरंशस्तेनहर्त्तव्योब्राह्मणस्वं युधिष्ठिर ॥ युधिष्ठिरउवाच ॥ ब्राह्मण्यां ब्राह्मणाज्जातोब्राह्मण
स्यान्नसंशयः । क्षत्रियायां तथैवस्याद्वैश्यायामपितथैवच । कस्मात्तुविषमं भागं भजेरन्नृपसत्तम । यदस्तुति
स्रः प्रोक्ताब्राह्मणाद्इति ॥ भीष्मउवाच ॥ दाराइत्युच्यते लोके नाम्नैकेनपरन्तप ॥ प्रोक्तेनचैतेन
नाम्नायं विशेषःसुमहान्भवेत् ॥ २८ ॥ तिस्रःकृत्वापुराभार्याःपश्चाद्विन्देतब्राह्मणीम । साश्रेष्ठासाचपूज्या
स्यात् साचभार्य्यागरीयसी । इत्यादावुक्त्वापुनरुवाच ॥ ब्राह्मण्याः सदृशःपुत्रःक्षत्रियायाश्चयोभवेत् । राज
न्विशेषोयस्तत्रवर्णयोरुभयोरपि ॥ १० ॥ नतुजातायासमालोके ब्राह्मण्याःक्षत्रियात्मजा । ब्राह्मण्याःप्रथमःपुत्रो
भूयान्स्याद्राजसत्तम ॥ ११ ॥ भूयोभूयोपिसंहार्यः पितृवित्तं युधिष्ठिर ॥ यतोनसदृशीजातुब्राह्मण्याःक्षत्रि
यात्मजा ॥ १२ ॥ क्षत्रियायास्तथावैश्योचतानसदृशोभवेत् । इत्यादि । तथापुनरपिभीष्मउवाच । आनुशासनि
कपर्व्वणिचाष्टचत्वारिंशदध्याये ॥ ० ॥ भार्याश्चतस्रोविप्रस्यतिसृषुसंस्वजायते । आनुपूर्व्व्याच्चतोहीनामा

जातोऽपच्यते ॥ २१ ॥ पारशवो ब्राह्मणस्य प्रपुत्रः शूद्रापुत्रं पारशवं तमाहुः । शुश्रूषकः स्वस्य कुलस्य स्यात् स्वचारित्रं नित्यमथो न जह्यात् ॥ २४ ॥ तिस्रः क्षत्रियसम्बन्धाद् द्वयोरात्मास्य जायते । हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः ॥ २५ ॥ द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते । हीनवर्णो द्वितीयायां करणो नाम जायते ॥ २६ ॥ शूद्राशूद्रस्य चाप्येका शूद्रमेव प्रजायते । अतोऽविशिष्टस्त्वधमो गुरुदारप्रधर्षकः । पूर्व्वं पूर्व्वं भवास्येव कामसम्मोहात् परःपरः । बाह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितमिति ॥ २८ ॥ अत्र भार्यास्तिस्र इत्यादि ॥ विप्रस्य चतस्रो भार्या ब्राह्मणक्षत्रियवैश्याशूद्रकन्याः । आनुपूर्व्यादानुलोम्यात् तत्रादौ तिसृषु भार्यासु स्वस्याविशेषात्मा एव अपत्यरूपेण ब्राह्मणो जायते ॥ आत्मशब्देन ब्राह्मणरूपत्वमपत्यानामुक्तं । ततो हीना शूद्राभार्या मातृजातोऽपच्यते ॥ कं प्रसूयते तदुक्तं पारशव इत्यादिना पारशवमिति । अस्मिन् वचने क्वचित् पुस्तके प्रमादिलिखितं पाठान्तरं दृश्यते । तद्यथा ॥ भार्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते । आनुपूर्व्यात् द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ॥ इति तद् दृष्ट्वा प्रमादीव्याचष्टे । विप्रस्य चतस्रो भार्यास्तयोर्द्वयोर्वानुपूर्व्यात् ब्राह्मणीक्षत्रियायामात्मा ब्राह्मणः प्रजायते ॥ तयोः परिशेषाद् वैश्याशूद्रे भार्ये पूर्व्वाभ्यां हीनौ मातृजात्यौ प्रसूयत इति तदसाधु मद्विपाठस्तु प्रमादिनाकृतः ॥ यतस्तिस्रः क्षत्रियसम्बन्धाद् द्वयोरात्मास्य जायते । इति परवचने विरुद्धयोर्विरुद्धं । द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते ॥ एतद्वचनं विरुध्यमिति स्थाने द्वयोरिति पठितं ॥ तेन क्षत्रियस्य क्षत्रियावैश्ययोरात्मा क्षत्रियरूपेण जायते इति भवतस्समाक्षे । वैश्यस्य द्वयोर्वैश्याशूद्रयोरात्मा वैश्यरूपो जायते इति विरुध्यते ॥ वैश्यस्य हि शूद्रायां भार्यायां करणो नाम शूद्र एव जायते ॥ तद्द्व श्लोकश्च न पठितः । यदि क्षत्रियस्य द्वयोः क्षत्रियावैश्ययोरात्मा क्षत्रिय एव यथा जायते वैश्यायामपि विवाहात् क्षत्रियत्वप्राप्तेः तथा ब्राह्मणेन वैश्यायामपि विवाहाद् ब्राह्मणत्वप्राप्तौ तस्यां वैश्याकन्यायां भार्यायां ब्राह्मणाज्जातः पुत्रः कथं ब्राह्मणो न भवेत् वैश्यः स्यात् । तथा त्वद्भीष्मस्य पूर्व्वोक्तं वचनं विरुध्यते किं हि भीष्मो भ्रमितो वा मत्तो वासीत् । युधिष्ठिरश्चापि किमेवमनवधानमासीच्छ्रुत्वा किमपि न विप्रतिपेदे । अपरश्च तस्मिन्नपि पाठे त्वेष एवार्थो भवति । यथा क्षत्रियामन्त्रेण ब्राह्मणोढा ब्राह्मणी भवति तस्यां ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणो भवति । तथा ब्राह्मसेन मन्त्रेणोढा वैश्यापि ब्राह्मणी भवति सा वैश्याकन्या ब्राह्मणीमातृजाता ब्राह्मणजाता ब्राह्मणात् प्रसूयते ॥ शूद्रा त्वमन्त्रं ब्राह्मणेनोढा शूद्रैव मातृजात्या शूद्रं ब्राह्मणात् प्रसूयते इति एवं पारिशेष्यात् प्रथमे द्वे भार्ये वैश्याशूद्रे हीनौ मातृजात्यौ प्रसूयत इत्यर्थो वैतण्डिकत्वेऽपि न कल्पयेदिति ॥ तथा विधार्थेऽपि सत्पाठो न युक्तः । मातृजात्याधिक्यजातो भवति इत्यर्थे यत्प्रत्ययविधानाभावादप्यनुप्रयत इत्यपि परस्मैपदमसाधु । अयञ्च मनुनाविरुद्ध्यते *यथा त्रयाणां वर्णानां * द्वयोरात्मास्य जायते । आनन्तर्यात् स्वयोन्यान्तु तथा बाह्येष्वपि क्रमादिति । अस्यायमर्थः । यथा त्रयाणां वर्णानां पूर्व्वत्वाद् ब्राह्मणक्षत्रियवैश्यानां मध्ये द्वयो

ब्राह्मणक्षत्रियर्योरात्मा स एवानन्तर्यात् स्वयोन्यां प्रजायते। ब्राह्मणस्यानन्तर्यात् मन्त्रविवाहेन स्वयोन्यां क्षत्रियकन्यायां ब्राह्मण्यां वैश्यकन्यायाञ्च ब्राह्मण्यां पत्न्यां प्रजायते ऽपत्यरूपेण स एव ब्राह्मणो जायते क्षत्रियस्यानन्तर्यात् मन्त्रविवाहेन स्वयोन्यां वैश्याकन्यायां क्षत्रियायां पत्न्यामात्मा स एव क्षत्रिय एव जायते तथावाह्यो प्रतिलोमजं पूर्विक्रमात् जायते इति ॥ दायभागेच पूर्वमुक्तं ॥ पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्वजः। कथं तत्र विभागः स्यादितिचेत् संशयो भवेत् ॥ ० ॥ एकं वृषभमुद्धारं संहरेत स पूर्वजः इति। ब्राह्मणस्य ज्येष्ठायां ब्राह्मणकन्यायां पत्न्यां चेत् कनिष्ठः पुत्रो जायते। कनिष्ठायां क्षत्रियकन्यायां पत्न्यां वैश्यकन्यायां वा पत्न्यां पूर्वजः पुत्रो जायते। तदा ज्येष्ठांशो दायभागः कथं स्यात् ॥ तत्रोक्तं ॥ एकमित्यादि ॥ स कनिष्ठायां जातः पूर्वजः एकं वृषभमुद्धारं ज्येष्ठांशं संहरेतेति। ज्येष्ठपुत्रत्वेन दायभाजने ज्येष्ठांशग्रहणं पितृश्राद्धकरणाधिकार उपनयन विवाहादौच पूर्वं कर्त्तव्यं ब्राह्मणादुक्तं। नतु पितृजातितो भिन्नजातता तत्रापद्यते। मन्त्रविवाहादि ब्राह्मणस्य क्षत्रियकन्या वैश्यकन्याच पत्नीभूता ब्राह्मणीजातता भवति ॥ तस्यां ब्राह्मण्यां ब्राह्मणाज्जातः पुत्रः ब्राह्मणः स्यादिति। व्यासंसंहितायाञ्चोक्तं ॥ उद्वायात्तु सवर्णायामन्यां वा काममुद्वहेत्। तस्यामुत्पादितः पुत्रो न सवर्णात् प्रहीयते। उद्वहेत् क्षत्रियां विप्रो वैश्याञ्च क्षत्रियो विशां ॥ नतु शूद्रां द्विजः कश्चिन्नाधमः पूर्ववर्णजाम्। विप्रवद्विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत्। जातःकर्माणि कुर्वीत वैश्याविन्नासु वैश्यवत्। वैश्याक्षत्रिय विप्रेभ्योजाताः शूद्रासु शूद्रवदिति ॥ ० ॥ तथाच। ब्राह्मणात् स्वोढायां ब्राह्मणकन्यायां पत्न्यां जातः पुत्रो ब्राह्मण एव ब्राह्मणात् स्वोढायां क्षत्रियकन्यायां ब्राह्मण्यां पत्न्यां जातः पुत्रो मूर्द्धाभिषिक्तादिसंज्ञो ब्राह्मण एव। ब्राह्मणात् स्वोढायां वैश्याकन्यायां पत्न्यां ब्राह्मण्यां जातः पुत्रो ऽम्बष्ठसंज्ञो ब्राह्मण एव ॥ तथा क्षत्रियात् स्वोढायां क्षत्रियायां पत्न्यां जातः पुत्रः क्षत्रिय एव क्षत्रियात् स्वोढायां वैश्याकन्यायां पत्न्यां क्षत्रियायां जातपुत्रो माहिष्यसंज्ञः क्षत्रिय एव। वैश्यात् स्वोढायां वैश्यायां जातः पुत्रो वैश्य एवेति षट् पुत्राः पत्नीषु यतः सम्भूता जातास्तएवेति निश्चयं ॥ ० ॥ अथाक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्तएवते। इति। यस्मात् तिभ्यो येभ्यो ऽनुलोमास्वक्षतयोनिषु नूढासु क्षत्रियकन्यासु वैश्याकन्यासुच सम्भूता ये पुत्रास्ते कानीना जातास्त एव पितृजातय एव ज्ञेयाः ॥ जातिरत्र न केवलं वर्णमात्रं किन्तु वर्णाभि व्यञ्जकं जरायुजस्वेदोद्भिद्योनिवात् पार्यादेवनरतिर्यग्योनयस्तासु सामान्यभूतं यज्जन्म सा जातिः। तत्क्रमेणानुलोम्यं योनितो वर्णतश्च। तद्यथा देवजातितोऽनुलोमजाति नरजातिस्ततश्च तिर्यग्जातिरिति ॥ तथाच। ब्राह्मणादक्षतयोनौ क्षत्रियायां जातः कृष्णद्वैपायनो व्यासः कानीनो ब्राह्मण एव। देवात् सूर्यात् क्षत्रियात् क्षत्रियायां कुन्त्यां नरजाता वाक्षतयोनौ जातः कानीनः कर्णो मातापित्रोर्वर्णतः सामान्ये पियोनिजजातितो ऽनुलोमत्वान्मातुः पितृजातिः

क्षत्रिय एव ॥ इति । ब्राह्मणादिभ्यः शूद्रास्वक्षतयोनिषु जातास्सङ्कीर्णा एव शूद्रा न तु पितृजात्या तेषां व्यपध्वंस जत्वात् । असत्यापत्यादेवचार्ते । शूद्राणाञ्च सधर्माणः सर्वेऽपध्वंसजाः स्मृता इति । आनुलोम्यादित्युक्त्या सवर्णास्वक्षतयोनिषु सम्भूतान् पितृजातीयानिति ख्यापितं । न तु चण्डालजातीयानित्युक्तं ब्रह्मसंहितायां । कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः । ब्राह्मण्यां शूद्रतो जातश्चण्डालस्त्रिविधः स्मृत इति ॥ ० ॥ अत्र पितृकुमारी सवर्णैवेति निश्चयं विशेषेणोक्त्यभावात् । एतत्सर्वं शास्त्रं नष्ट्वा प्रमादिनो वचनमिदमन्यथायद्वा च चष्टे तदत्र प्रदर्श्यते । ० । ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि * समानजातीयासु यथाशास्त्रं * परिणीतास्वक्षतयोनिषु स्त्रीषु । २ । आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां * क्षत्रियेण क्षत्रियायां * मित्यनेनानुक्रमेण * ये जातास्ते मातापित्रोः * जात्या तुल्यास्तज्जातीया एव । आनुलोम्यपदस्यात्र * मन्त्रोपयुक्तसवर्णस्त्री * केनूपयोज्यते । ४ । अक्षतपत्नी पदेन * इतरपत्नीजनितानां * न ब्राह्मणादिजातित्वं * तथा च देवलेनोक्तं । ५ । द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते । अव्यावट इति ख्यातः शूद्रधर्मा स जातितः । ६ । व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः । उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृता इति । ७ । व्यासेनाप्युक्तं यथा * ये च जाताः समानासु संस्कार्याः स्युरतोऽन्यथा इति । ८ । याज्ञवल्क्येनापि हि यथा * सवर्णेभ्यः सवर्णासु * जायन्ते हि स्वजातयः । इत्यभिधाय विन्नास्वेष विधिः स्मृतः । ९ । इति ब्रुवाणः स्वपत्न्युत्पादितस्यैव * ब्राह्मणादित्वं निश्चिकायेति । १० । प्रमादिना तेनैतत्* द्व्याख्याने नापि विप्रमूर्द्धाभिषिक्त * स्ववर्णाभिषगम्बष्ठाः * ब्राह्मणा एव सिद्ध्यन्ति । ११ । ब्राह्मणेन हि मन्त्रेणो * ढा ब्राह्मण * इव क्षत्रिय दुहिता वैश्य * दुहिता च पत्न्याः सहैकात्म्याभावात् । १२ । पतिगोत्रा पतिसपिण्डा भवन्ती * पतिसवर्णा ब्राह्मणी * सती तुल्या यज्ञसंयोगात् पत्नी भवति । १३ । तावत्तस्याज्जातास्ते जाता ब्राह्मणा * एवं क्षत्रियस्य क्षत्रिय * दुहिता वैश्य दुहिता मन्त्रोढा * क्षत्रियासात्स्वसा तुल्या पत्नी च स्यात् । १४ । तस्यां तस्याज्जातौ क्षत्रियमाहिष्यौ * जात्या क्षत्रियावेव सिद्धौ * किन्तु तत्र यदुक्तं ब्राह्मणादिषु * वर्णेषु चतुर्ष्वपीति । १५ । तत्र यथाशास्त्रं परि * णीतापि समानजातीया शूद्रा * शूद्रस्य पत्नीति न भवति * यज्ञसंयोगाभावात् । १६ । पत्युर्नो यज्ञसंयोगे इति पाणिनीय शासनेन पत्न्याः * स्त्रियां यज्ञसंयोगे नकारविधानात् । १७ । न हि शूद्रस्याग्निहोत्रादियज्ञ * संयोगोऽस्ति शूद्रायां * शूद्राज्जातस्य शूद्रत्वा * नुपपत्तिरयं द्वितीयः प्रमादः । १८ । समानजातीयास्वानुलोम्याभावः * स्तत्र च यदेतदुक्तं । १९ । आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां * क्षत्रियेण क्षत्रियायां * मित्यनेनानुक्रमेण * ये जाता इति तदसत् । २० । ब्राह्मणात् पूर्वं क्षत्रियात् * क्षत्रियायां जातस्य क्षत्रियत्वा * नुपपत्तेर्वैवं वैश्यादेस्तथा । २१ । क्षत्रियादेः परं ब्राह्मणाद्ब्रा ह्मण्यां * जातस्य ब्राह्मणत्वानुपपत्तिः स्यात् * तादृशोऽनुक्रमस्तु किं * ग्रामे ग्रामे देशे देशे वा । २२ । तदनुगमाभावा दनुलोमत्व * इति तद्व्याख्यानं भवति । २३ । तृतीयस्तु प्रमादः * संस्कृतस्याद्विरेण * ब्राह्मणेन ब्राह्मण्यां * जात इति न

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने । रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥५४॥

अन्नमेषामित्यादि ।५४। एषां चाण्डालश्वपचानामन्नं * भिन्नभाजने पराधीनं परैर्जनैर्देयं ते चाण्डालश्वपचा ग्रामेषु * नगरेषु च रात्रौ विचरेयुः ।१।५४।

दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः । अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः ॥५५॥

दिवेत्यादि ।५५। ते राजशासनैश्चिह्निताः कृत * चिह्ना एव कार्यार्थं दिवा ग्रामेषु * नगरेषु च चरेयुरिति ।१। अबान्धवं शवञ्चैव * निर्हरेयुरिति स्थितिः * शास्त्रव्यवस्थाविधिर्वा ।२।५५।

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया । वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥५६॥

वध्यांश्चेत्यादि ।५६। ते चाण्डालश्वपचाः नृपाज्ञया * वधार्हपापिनो वध्यान् सततं * यथाशास्त्रं हन्युः । वध्यवासांसि * शय्याश्चाभरणानि च ते गृह्णीयुः ।१।५६।

वर्णापेतमविज्ञातं नरं कलुषयोनिजम् । आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥५७॥

वर्णापेतमित्यादि ।५७। अविज्ञातं वर्णादपेतञ्च नरं * अनार्यं ब्राह्मणक्षत्रियवैश्येभ्यो * भिन्नमार्यरूपिणं ब्राह्मणाद्यन्य * तमार्यरूपधारिणं बुद्धिमान् ।१। तस्य स्वैः कर्मभिर्विभावयेद्यत् * जातिरसौ रोभवेत् ।२।५७। कैः कर्मभिरित्यत आह * ।

अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥५८॥

अनार्यतेत्यादि ।१।५८। कलुषयोनिजं पुरुषं * अनार्यतादीनि लक्षण * मीहलोके व्यञ्जयन्ति ।१।५८। कुत एवमित्यत आह ।

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा । न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥ ५९ ॥

पित्र्यं वा भजत इत्यादिकं ।१।५९। दुर्योनिः पुरुषः पित्र्यं शीलं वा * मातुः शीलं वा तदुभयं शीलं वा * भजते कथञ्चनस्वां * प्रकृतिं न नियच्छति ।१।५९।

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः । संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥६०॥

द्वयुगावधिनयम युगपर्य्यन्तं * यो यमो जातिं गच्छति । १ । क्षत्रात्क्षत्रामलयोपि इत्योक्त * क्रमेयकाति कालानधममधा * मोत्तमवैश्यजातिं गच्छति । २ । ततः कतिकालान धममधा * मोत्तमक्षत्रियजातिं गच्छतौ * तो च पञ्चयुगपर्य्यन्तं जायते । ४ । प्रपञ्चं जानिः सकर्म्मकः प्रपूर्ब्ब * स्याप । तु वक्ततः कर्म्मोपितञ्च यको । नवततः सप्तमे युगेऽसौ * पारशवादिकः किं जातिः स्यादिताततथाह ॥ ६४ ॥

**शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥ ६५ ॥**

शूद्रो * ब्राह्मणतामेतीति सखलुयो यसाब्राह्मणादिना शूद्रायां प्रजातः पारशवादिः शूद्रः सप्तमे युगे ब्राह्मणतां यातीति वीजप्रभावा * इत्युकप्रसिद्धिः । ५ । यस्मात् ब्राह्मणाच्छूद्रायां पारशवादि यजायते * सचब्राह्मण आसप्तमाद्युगा * द्राह्मण क्षत्रिय वैश्य जातो * क्रमात् जायते उत् पद्यते इति । ६ । ततः सप्तमे युगे शूद्रतामेति * । ७ । तद्यथा शूद्रागमन * पापेनहीनतपःप्रभावेणासौ * ब्राह्मणः स्यैयसा ब्राह्मणेनकि * ष्विहीनगुणो जायते । ८ । सचपाधीतोवनिर्द्विजः स्यादेवं * क्रमेण हीनगुणः क्षत्रियइव * वैश्य इव कतिकालान् * ब्राह्मणएतम्भूवाच । ९ । कतिकालान् शूद्रइव * ब्राह्मण स्तवः समब्राह्मण * जायते योयइदानीं । १० । निरग्निनिर्वेदश्चामंस्कृतश्च * लोके ब्राह्मणोद्भवाते । ११ । ततः क्रमेण निषादइव * पशुरिवचर्म्मच्छुइव * चाण्डालइवचक्रमा * दुर्ब्राह्मणएवभवति । १२ । ततः कतिकालान धममधा * मोत्तमक्षत्रियोभव * तोथाधममधामोत्तम वैश्यः स्यात् * ततः शूद्रतामेतीति । १३ क्षत्रिमंहिताय उक्तं * देवोऽनिर्द्विजो राजा वैश्यः शूद्रो निषादकः । पशुर्म्लेच्छोपि चाण्डालो विप्रोदशविधः स्मृतः । १४ । सन्ध्यां स्नानं जपं होमं देवतानित्य पूजनम् । अतिथिं वैश्यदेवञ्च देवब्राह्मण आचरन् । १५ । एवसर्व्वांकर्मा ब्राह्मणोदासेन * वेदपारगएवोक्तः । १६ । इष्टिभिः पशुरन्धैश्च चातुर्मास्यो स्तवैवच । अग्निष्टोमादिभिर्यज्ञैर्येनचेष्टं सदृष्टवान् । १७ । मीमांसते च योवेदान्षड्भिरङ्गैः सविस्तरैः । इतिहास पुराणानि सभवेद्वेदपारगः । १८ । इति एषएवद्वन्द्वेणा क्षतकोक्तः * पन्थार्थतोवित्रामोति वेद मन्त्रैः समन्वितम् । सकल्पं सरहस्यञ्च क्रियावांसेन्न क्षतको । १९ । इतो वतसो ब्राह्मणोपि शूद्रं * गच्छन्नपुत्रं जनयित्वा * कर्मपाठन्यादिहीन * गुणो ब्राह्मणो भवति * तल्लक्षणमविशोक्तं । २० । शाके पत्रे फले मूले वनवासे सदारतः । निरतोऽहरहः श्राद्धे सविप्रो ऋषिरुच्यते । २१ । वेदान्तं पठतेनित्यं सर्व्वसङ्गं परित्यजेत् । सांख्ययोग विचारस्थः सविप्रोद्विजउच्यते । २२ । एतोवारयेमावार्यं मात्रमीत्ती यथा * अग्निहोत्रीतपस्वीच वेदमध्यापयेत्ततः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते इति । २३ । राजा

वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः। अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् १०१

वैश्यवृत्तिमित्यादि। १॥ ॥१०१॥ स्वे पथि धर्मे स्थितो ब्राह्मणः * स्ववृत्तिकर्षितो वैश्यवृत्ति * मनातिष्ठन् यः सीदन् सीदतीत्यर्थः इमं * वक्ष्यमाणं धर्मं समाचरेत् ॥१॥ ॥१०१॥ कं धर्ममित्यत आह * ।

सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः। पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ॥१०२॥

सर्वत इत्यादि ॥१॥ ॥१०२॥ अनयमापदं गतो ब्राह्मणस्तु * वृत्तिषु सर्वतः सदसज्जनेभ्यः * प्रतिगृह्णीयात्। नन्वेतत् किं न दोषमावहति ॥१॥ तत्राह पवित्रं सम्पन्नं ब्राह्मणं * एतत् सर्वतः प्रतिग्रह कर्म * दुष्यति मत्पवित्रं विपन्नं। कस्मात् विपन्ने जने दूषणमेतन्नोपपद्यते इति ॥१॥ ॥१०२॥ यतो दूषणं नोपपद्यते तदाह ॥

नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनार्कसमा हि ते १०३

नाध्यापनादित्यादि। १०१। विपन्नानान्तु विप्राणां * गर्हितादध्यापनाच्च गर्हिताद्याजनाच्च * गर्हितात् प्रतिग्रहाच्च * न दोषो भवति कस्मादित्यत आह।१। ज्वलनार्कसमा हि ते इति * हि यस्मात्ते विप्रा ज्वलनाग्नि* समा अर्कसमाश्चेत * तस्मात्ते कैरपि न दोषः। १०१। अपरञ्चाह

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते ॥१०४॥

जीवितेत्यादि।१०४। योजनोऽन्नाभावे जीवितात्यय * रूपां स्थितप्राणनाश * मापन्नो यतस्ततोऽन्न मत्ति भुङ्क्ते * स पापेन न लिप्यते ।१। तत्र दृष्टान्त एव पङ्केन यथा * नाकाशं लिप्यते इति ।१०४। तत्र पुराकल्पं दर्शयति *

अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः। न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥१०५॥

अजीगर्त्त इत्यादि।१०५। अजीगर्त्तो महर्षिर्बुभुक्षितः सन् * सुतं हन्तुमुपासर्पत् * क्षुत्प्रतीकारमाचरन् * स न पापेनालिप्यत ।१०५। अपरञ्चाह

श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्माधर्मविचक्षणः। प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् १०६

श्वमांसमित्यादि।१०६। वामदेव इति स्वयं वामदेव एव * धर्माधर्मविचक्षणः * क्षुधयार्त्तः सन् प्राणानां * रक्षणार्थं श्वमांसमत्तु * मिच्छन् पापेन लिप्तवान् ।१०६। अपरञ्च।

भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने। बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥१०७॥

भरद्वाज इत्यादि।१०७। महातपा भरद्वाजः * सपुत्रस्तु क्षुधार्त्तः सन् * विजने वने वृधुनाम्नस्तक्ष्णो * बह्वीर्गाः प्रतिजग्राह ।१०७। अपरञ्चाह

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम्। चण्डालहस्तादादाय धर्माधर्मविचक्षणः १०८

आपदिसर्व्वं प्रभिमिति ॥ ११ ॥ तत्रचतुर्दश विद्या* स्थानानि याज्ञवल्क्ये* नोक्तानि मयाप्रदर्शन्ते * ॥ २ ॥ पुराण न्यायमीमांसा धर्म्मशास्त्राङ्ग मिश्रिताः। वेदाःस्थानानिविद्यानां धर्म्मस्य च चतुर्दश ॥ इति ॥ ३ ॥ नमा दोषयावष्टे * विद्यावेदविद्याव्यातिरिक्ता * वेदाकतर्कविद्या *पमयनादिविद्यो ति ॥ ४ ॥ तत्रयाम्नकल्का अत्रविरोधात्श्रुतिः * वतनं सेवावृत्तिः ॥ ५ ॥ विपणिःपण्यावीथिका * धृतिकृषिधारण भैक्षं * भिक्षास मूहःकुसीदं * वृद्ध्याधनप्रयोगइति ॥ ११६ ॥

ब्राह्मणःक्षत्रियोवापिवृद्धिं नैवप्रयोजयेत्। कामन्तुखलुधर्म्मार्थं दद्यात्पापीयसेऽल्पिकाम्११७

ब्राह्मणइत्यादि ॥ ११७ ॥ ब्राह्मणोवाक्षत्रियोवा * नैववृद्धिंप्रयोजयेत्* कामन्तुखलिच्छयापापीयसे * शूद्रायाल्पिकांवृद्धिं निष्क्रियाद्द्यात् ॥ ११७ ॥

चतुर्थमाददानोपिक्षत्रियोभागमापदि। प्रजारक्षन्परंशक्त्याकिल्बिषात्प्रतिमुच्यते ॥११८

चतुर्थमित्यादि। ११८। आपदिक्षत्रियश्चतुर्थं भागं * माददानोपिपरंशक्त्याप्रजा * रक्षन्किल्बिषात्प्रति मुच्यतइति। ११८।

स्वधर्म्मोविजयस्तस्यनाहवेस्यात्पराङ्मुखः। शस्त्रेणवैश्यान्रक्षित्वाधर्म्म्यमाहारयेद्बलिम्११९

स्वधर्म्मइत्यादि। ११९। तस्यक्षत्रियस्यस्वधर्म्मोविजयः *स्वधर्म्मश्चाहवे पराङ्मुखोनस्यात् * वैश्यान्शस्त्रेणरक्षित्वा* धर्म्म्यं बलिमाहारयेत् ॥ ११९ ॥ आपदिबलिमाह।

धान्येऽष्टमंविंशंशुल्कंविंशंकार्षापणावरम्। कर्म्मोपकरणाःशूद्राःकारवःशिल्पिनस्तथा१२०

धान्येऽष्टममित्यादि ॥ १२० ॥ क्षत्रियोराजाखलुआपदिधान्ये * त्वष्टममपिभागमाहारयेत् * स्वर्णादीनां शुल्कं विंशं * विंशं विंशतितमं भागं * कार्षापणान्तमाहारयेत् ॥ १ ॥ शूद्राःकर्म्मोपकरणाः * योयत्कर्म्म समर्थःस्यात् * सःतत्कर्म्मराजाकारयेत्। २। तथाकारवोये यत्कर्म्मजानन्ति * तांस्तत्कर्म्मकारयेदेवंशि ल्पिनो * ये यच्छिल्पं जानन्तितत्तान्कारयेत्। १२०।

शूद्रस्तुवृत्तिमाकाङ्क्षन्क्षत्रमाराधयेद्यदि। धनिनंवाप्युपाराध्यवैश्यंशूद्रोजिजीविषेत्१२१

शूद्रस्तित्यादि। १२१। शूद्रोयदि चक्षत्रिय* माराधयेत् सवैतदा* तस्माद्वृत्तिमेव * जीविकामाकाङ्क्षेदिच्छेत्। १। धनिनंवैश्यं वाप्युपाराध्य शूद्रो* जिजीविषेदितिशेषः। २ १२१।

स्वर्गार्थमुभयार्थं वाविप्रानाराधयेत्तु यः। जातब्राह्मणशब्दस्यसाह्यस्यकृतकृत्यता ॥१२२॥

स्वर्गार्थमित्यादि।१२२। सशूद्रःस्वर्गायं उभयार्थं वेति* ऐहिकधनार्थं पारत्रिकार्थं *विप्रानाराधयेत् कस्मात्। १। जातब्राह्मण शब्दस्याराधनाऽस्य शूद्रस्य* हिवस्मात् * कृतकृत्यताकृतस्वधर्म्मता स्यात् २। उपनयनेन ब्राह्मण शब्दो* जातोऽस्येति जात* ब्राह्मण शब्दस्तस्येति। ३। १२२।

विप्रसेवैवशूद्रस्यविशिष्टंकर्म्मकीर्त्तितं। यदतोऽन्यद्धिकुरुते तद्भवत्यस्यनिष्फलम् ॥ १२३ ॥

विप्रसेवैवेत्यादि। १२३। शूद्रस्य विप्रसेवैव* विशिष्टंकर्म्मकीर्त्तितं * कस्मात्हियस्मादतोविप्रसेवना* दन्यद्यच्छूद्रःकुरुते*तदस्यशूद्रस्यनिष्फलम्। १। १२३।

प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः। शक्तिञ्चावेक्ष्य दाक्ष्यञ्च भृत्यानाञ्च परिग्रहम्॥१२४

प्रकल्प्येत्यादि। १२४। तैर्विप्रैस्तस्य सेविनः शूद्रस्य * शक्तिं सामर्थ्यं कर्म्मसु * दाक्ष्यं भृत्यानां पोषणीयानां * परिग्रहं पोष्यजनपोषणमवेक्ष्य। १। यथार्हतः स्वकुटुम्बात् स्वकीय * जनात् वृत्तिः प्रकल्प्या स्यात्। २। १२४।

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः॥१२५

उच्छिष्टमित्यादि। १२५। विप्रैः स्वपात्रोच्छिष्टमन्नं * तस्मै स्वदासाय शूद्राय * दातव्यं जीर्णानि वासांसि * स्वपिहितताक्तानि तथा। १। धान्यानां पुलाकाश्च असारतण्डुलाः * जीर्णाश्च परिच्छदाः शय्यासनोपधानादीनि तस्मै * न्याय्यानि दातव्यानि। २। १२५।

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति। नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिषेधनम्॥१२६

न शूद्र इत्यादि। १२६। धर्म्मार्थं उक्तानामभक्ष्यकर्म्मणां * अकरणे शूद्रे किञ्चिदपि पातकं नास्ति यतः संस्कारं शूद्रो नार्हतीति तस्मात्। १। अस्य शूद्रस्य धर्म्मेऽधिकारो नास्ति * तस्य धर्म्मार्थं उक्तकर्म्माकरणे * पातकं नास्ति धर्म्माद्य * पाकयज्ञादिनिषेधो नास्ति। २। १२६।

धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः। मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च॥१२७

धर्म्मेप्सवस्त्वित्यादि। १२७। धर्म्मज्ञाः शूद्रा धर्म्मेप्सवः सन्तः * धर्म्मं सद्वृत्तिं मन्त्रवर्जमनुष्ठिताः सन्तो न दुष्यन्ति * प्रशंसाञ्च लोके तत्र शास्त्रे प्राप्नुवन्ति। १। १२७।

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः। तथा तथेमञ्चामुञ्च लोकं प्राप्नोत्यनिन्दितः॥१२८॥

यथा यथेत्यादि। १२८। अनसूयकः सन् ब्राह्मणादिर्यथा * सद्वृत्तमनुतिष्ठति तथा * तथैवानसूयकः सन् यः शूद्रः सद्वृत्तमनुतिष्ठति तथा तथा निन्दितः सन्निमं चामुञ्च * लोकं प्राप्नोतीति धर्म्मशास्त्रे स्थितिः। १। १२८।

शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः। शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥१२९॥

शक्तेनापीत्यादि। १२९। शूद्रेण शक्तेनापि धनसञ्चयो * न कार्यः कस्माद्धि यस्माच्छूद्रो धन * मासाद्य ब्राह्मणादीनान् * धनदानेन बाधते। १। १२९।

एते चतुर्णां वर्णानामापद्धर्म्माः प्रकीर्त्तिताः। यान् सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम्॥१३०

एत इत्यादि। १३०। चतुर्णां वर्णानामेते * आपद्धर्म्माः प्रकीर्त्तिताः * यान् धर्म्माननुतिष्ठन्तो * ब्राह्मणादयश्चत्वारो * वर्णाः परमां गतिमन्ते व्रजन्ति। १। १३०।

एष धर्म्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्त्तितः। अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्॥१३१

एष इत्यादि। १३१। एष चातुर्वर्ण्यस्य कृत्स्नो धर्म्म * विधिः कीर्त्तितो भाषितः * अतः परं प्रायश्चित्त * विधिं शुभं प्रवक्ष्यामि। १। १३१। * * * *

॥ * ॥ * ॥ इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * दशमोऽध्यायः ॥ * ॥ १० ॥ * ॥ * ॥

इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * दशमाध्यायस्य प्रसाद * भक्तौर्लिखि दशमाध्यायः। *

* पुत्राणामित्यादि। ३९। विधवहीनो ब्राह्मणः यद्भावेनालिनि शिष्टः स*आपानिपुत्रानि कर्माणि करोति* तत्त्वज्ञः इत्यर्थः*कथयन्ति इत्युक्तम्। १। ३९। कस्मादित्यत आह।

इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून्। हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत्॥४०

इन्द्रियाणीत्यादि। ४०। यस्मादल्पदक्षिणायज्ञो*यजमानस्य इन्द्रियादीनि*हन्ति तस्मादल्पधनो* यज्ञेन यजेत् दक्षिणादि दानाशक्तः। १। ४०।

अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणः कामकारतः। चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत्॥४१

अग्निहोत्रीत्यादि। ४१। अग्निहोत्री ब्राह्मणोऽग्नीनपविध्य*कामकारतः*त्यक्त्वा*प्रकृतमित्यर्थः प्रातः सायं होमं कृत्वा*चान्द्रायणव्रतं मासं चरेत्। १। कस्मादित्यत आह वीरेत्यादि *अग्नित्यागः सायमाप्रातः होमापवर्धः वीर*हत्यासमं वीरः पुत्रः॥ २॥ ४१॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते। ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः॥४२॥

ये शूद्रादित्यादि। ४२। ये ब्राह्मणाः शूद्रादर्थं*मधिगम्याग्निहोत्रमुपासते ते*खलु अग्निहोत्रिणः शूद्रधनप्रदानेन*शूद्राणामृत्विजः। १। ब्राह्मणादिषु मध्ये* तेऽग्निहोत्रिणो गर्हिताः। २। ४२। कस्मादित्यत आह।

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम्। पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत्॥४३॥

तेषामित्यादि। ४३। तेषामज्ञानां सततं* वृषलाग्न्युपसेविनां* मस्तकमाक्रम्य दाता शूद्रः पदा क्रमः*दुर्गाणि खानि सन्तरेदिति। १। ४३।

अकुर्वन्विहितं कर्म निन्दितञ्च समाचरन्। प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥४४॥

अकुर्वन्नित्यादि। ४४। नरः स्वजातीविहितं*कर्माकुर्वन्निन्दितञ्च*कर्मसमाचरन्निन्द्रियार्थेषु* प्रसक्तश्च*प्रायश्चित्तीयते इति। १। प्रायश्चित्तीवाचरति*नतद्विप्राय श्चित्त* कर्त्तुमर्हतीति कारणमुपपितम्। २। ४४।

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः। कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्॥४५॥

अकामत इत्यादि॥ ४५। अकामतः कृते पापे प्रायश्चित्तं कर्त्तव्यमिति*केचिद्बुधा विदुः श्रुतिनिदर्शनात् * एके कामकारकृतेऽपि*पापे प्रायश्चित्तमाहुः। १। ४५।

अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ॥ ४६ ॥

अकामत इत्यादि । ४६ । अकामतः कृतं पापं * वेदाभ्यासेन शुध्यति * मोहात् कामतः कृतं तु * पापं पृथग्विधैः प्रायश्चित्तैर्नश्यतीति । १ । ४६ ।

प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा । न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४७ ॥

प्रायश्चित्तीयतामित्यादि । ४७ । इहजन्मनि दैवात् कृतेन मत्या * पूर्वजन्मनि कृतेन * पापेन तज्जनित* चिह्नेन इह दिना वा व्याधिना । १ । प्रायश्चित्तीयतां प्रायश्चित्तमर्हतां प्राप्य द्विजः खलु कृते * प्रायश्चित्ते * सद्भिः संसर्गं न व्रजेत् । २ । ४७ । न तु पूर्वकृतं पापं * कथं विज्ञायत इति * तदुच्यते ।

इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा । प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥ ४८ ॥

इहेत्यादि । १ । ४८ । केचिद् दुरात्मानो नरा * इहजन्मनि दुश्चरितैः कर्मभिः * रूपविपर्ययं खलु प्राप्नुवन्ति * केचित् पूर्वजन्मकृतैः । १ । ४८ । किं रूपविपर्ययं प्राप्नोतीत्यत * आह ।

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् । ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥ ४९ ॥

सुवर्णेत्यादि । १ । ४९ । सुवर्णचौरो यः पूर्वजन्मनि स * इहजन्मनि कौनख्यं प्राप्नोति यस्तु * पूर्वजन्मनि सुरापः स तु * जन्मनि श्यावदन्ततां प्राप्नोति । १ । यः पूर्वजन्मनि ब्रह्महा स इह * जन्मनि क्षयरोगित्वं प्राप्नोति* यः पूर्वजन्मनि गुरुतल्पगः स इह * जन्मनि दौश्चर्म्यं प्राप्नोति । २ । ४९ ।

पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम् । धान्यचौरोऽङ्गहीनत्वमातिरैक्यं तु मिश्रकः ॥ ५० ॥

पिशुन इत्यादि । ५० । पूर्वजन्मनि यः पिशुनः स इह * पौतिनासिक्यं प्राप्नोति * यः पूर्वजन्मनि सूचको * मिथ्यावादेन खलतां ख्यापयति स पूतिवक्त्रतां । १ । यः पूर्वजन्मनि धान्यचौर इह स * अङ्गहीनत्वं प्राप्नोति । २ । यः पूर्वजन्मनि मिश्रकः शृङ्गधान्यसमीधान्योभयचौरः स * इह अङ्गानामातिरैक्यं प्राप्नोति । ३ । ५० ।

अन्नहर्तामयावित्वं मौक्यं वागपहारकः । वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः ॥ ५१ ॥

अन्नहर्त्तेत्यादि । ५१ । यः पूर्वजन्मन्यन्नस्य हर्त्ता स * इह आमयावित्वं चिर * रोगित्वमेव प्राप्नोति । १ । परं अनध्यापयतात् * मम दीयमानां वाचं * पूर्वजन्मनि यस्त्वपहरति । २ । स इह जन्मनि मौक्यं प्राप्नोति * यो वस्त्रापहारकः पूर्वजन्मनि स इह श्वैत्र्यं रोगं प्राप्नोति । ३ । यः पूर्वजन्मन्यश्वहारकः स * इह जन्मनि पङ्गुतां * प्राप्नोतीति सर्वत्र पोक्तिः ॥ ४ ॥ ५१ ॥

एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः । जडमूकान्धबधिरा विकृताकृतयस्तथा ॥ ५२ ॥

एवमित्यादि । ५२ । एवमनेन प्रकारेण कर्म * विशेषेण पुरुषाः सद्विगर्हितास्तथा जडादयश्च जायन्त इति ॥ १ ॥ ५२ ॥

**अतोऽन्यतममास्थाय विधिं विप्रः समाहितः। ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया ॥८६॥**

अतइत्यादि ॥ ८६ ॥ अतः प्रायश्चित्तवर्गात् * इनातम प्रायश्चित्त * विधिं ब्राह्मणो विप्रः समाहितः सन् ॥ १ ॥ आत्मवत्तयाविशिष्टो ब्रह्महत्या * कृतं पापं व्यपोहति ॥ २ ॥ ८६ ॥ अथक ब्रह्महत्याप्रसङ्गात्सूत्र * प्रायश्चित्त त्वाऽऽचाते

**हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यौ चेजानावात्रेयीमेव च स्त्रियम् ॥ ८७॥**

**उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा। अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम् ॥८८॥**

हत्वागर्भमित्यादि श्लोकद्वयम्। ८७। *। ८८। अविज्ञातं गर्भं हत्वा * ब्राह्मणादिरिदं ब्रह्म * हत्याप्रकरणोदित व्रतं चरेत्। १। एवं राजन्य वैश्यौ चइत्वाऽत्रेयीश्च मतौ * मार्त्तं ब्राह्मणोक्त * निश्चाभान्तरे एजानौ। २। उक्तौ चैतद् ब्रह्महत्योक्तं व्रतं * चरेयातामेवं साक्ष्ये चानृतमुक्त्वा। *तथा गुरुं प्रति रुद्धा * मिथ्यापवादादिना संयोज्य। ३। ब्राह्मणादिवर्णं विना * निक्षेपमपहृत्य स्त्री * वधं सुहृद्वधञ्च * कृत्वा तद् ब्रह्महत्योक्तं व्रतं चरेत्। ४। वशिष्ठेनोक्तं यथा * भ्रूणहनमुदाहरामो * ब्राह्मणं हत्वा भ्रूणहा * भवताऽज्ञातञ्च गर्भं। ५। अज्ञाताद्धि गर्भाः * पुमांसो भवन्तीति * तस्मात्पुरुषकृत्यजुहुयात्। ६। लोमानि मृत्योर्जुहोमि * लोमभिर्मृत्युं वासयइति प्रथमा। १। त्वचं मृत्योर्जुहोमि * त्वचा मृत्युं वासय * इति द्वितीया। २। लोहितं मृत्योर्जुहोमि * लोहितेन मृत्युं वासयइति तृतीया। ३। स्नावं मृत्योर्जुहोमि * स्नावभिर्मृत्युं वासय इति चतुर्थी। ४। मांसानि मृत्योर्जुहोमि * मांसैर्मृत्युं वासय इति पञ्चमी। ५। मेदो मृत्योर्जुहोमि * मेदसा मृत्युं वासय इतिषष्ठी। ६। अस्थीनि मृत्योर्जुहोमि * अस्थिभिर्मृत्युं वासय इति सप्तमी। ७। मज्जानं मृत्योर्जुहोमि *मज्जभिर्मृत्युं वासय इत्यष्टमीम्। ८। राजार्थं ब्राह्मणार्थं वा ग्रामेऽभिवसमाक्रामं घातयेत् विरक्षितो वा * पराऽऽपूतो भवतीति * विज्ञायते। ९। द्विगुणं व्रतं कनीयो भवतीति तद्गुणादाचक्षते। पतित पतिते कृत्वा चौरं चौरं तिवा पुनः। वचसाकृतमपि सम्यग्दोषता व्रते हिति। १०। एवं राजन्यं हत्वाष्टौ * वर्षाणि चरेत् तृषक् वैश्यं * ब्रीणि शूद्रं ब्राह्मणोऽव्दं। ११। आत्रेयीं हत्वा एवम् * गतोऽत्र राजन्यावैश्यौ * चात्रेयीं वदन्ति रजस्वला * मवस्नातामात्रेयीमाहुः। १२। अत्रेतो यामपत्यं भवतीत्यात्रेयी * वा जनाहिंसायां वैश्याहिंसायां * शूद्रं हत्वा संवत्सरम्। इति। ११। ८७। ८८। उपपर्व हरति।





इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥८९॥

इयमित्यादि । ८९ । द्विज ब्राह्मणं क्षत्रियं * वैश्यं वा अकामतः प्रमाप्य हत्वा * पापकारिणामियं द्वादशवार्षिकव्रतादिः शुद्धिरुदिता । १ । कामतो ब्राह्मणवधे * निष्कृतिःपापशुद्धिर्न * वेदादिशास्त्रे विधीयते । २ । ८९ । क्रमिकत्वाद् ब्रह्महत्या *प्रायश्चित्तकथनान्तरं सुरापानपातकप्रायश्चित्तमाह

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स्वकाये निर्दग्धे मुच्यते किल्बिषात्ततः॥९०॥

सुरामित्यादि । ९० । सुरामद्यं मोहात् पीत्वा द्विजो * ब्राह्मणः क्षत्रियो वैश्यः *सुरामेवाग्निनाप्तत्तां *वाग्निवर्णां कृत्वा पिबेत । १ । तयाग्निसन्तप्तया सुरया *पीतया स्वकाये निर्दग्धे *ततः सुरापानजातात् *किल्बिषात् पापान्मुच्यते । २ । ९० ।

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥ ९१ ॥

अपरञ्चाह गोमूत्रमित्यादि । ९१ । अथवा मोहात् सुरापो *गोमूत्रमग्निनासन्तप्ताग्निवर्णं * कृत्वा मरणात् पिबेत् । १ । अथवोदकमग्निवर्णं पयो वा *घृतं वा गोशकृद्रसं *वा मरणात् पिबेदिति । २ । ९१ ।

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥९२॥

अपरञ्चाह कणानित्यादि । ९२ । मोहादेव सुरापः * सुरापानचिह्नपात्रादिभृत्सन् * मेषादिलोमकृतवासा जटावान् *सुरापानापनुत्त्यर्थम् । १ । अब्दमेकं निशि सकृत् *तण्डुलानां कणान् भक्षयेदथवा * निशि पिण्याकं तिलखलं *पिष्टं सकृदेव भक्षयेत् । २ । ९२ । ननु तर्हि किं सर्व्वेषां द्विजानां *मेव *सुरापानं प्रतिषिद्ध *मित्यत उच्यते ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत ॥९३॥

सुरा वा इत्यादि । १ । ९३ । अन्नानां मलमेव सुरा भवति * मलञ्च पाप्मोच्यते तस्माद् ब्राह्मणो *राजन्यो वैश्यश्च सुरां न पिबेत् । १ । ९३ । तर्हि किं तण्डुलकृतास्य मलं *सुरां न पिबेदित्यत *आह ।

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः ॥९४॥

वर्त्तते * तत्रतत्र बदरादीनम्भ सित्वा * मद्यानि प्रोक्तानि पातव्यानि स्युः । १३ । तत्र नियतविधानवशात् अवश्यपात व्यानामनियते तु विधाने प्राप्ते सत्यादिच्छातः पातव्यानामिवेति । १४ । तत्र निवृत्तिस्तु महाफलेति * विवक्षितं विद्यादिति । १५ । ९७ । अथोपसंहरति ।

एषा विचित्राभिहिता सुरापानस्य निष्कृतिः । अत ऊर्द्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ॥९८॥

एषेत्यादि । १ । ९८ । सुरापानस्य विचित्रा निष्कृतिः मया अभिहिता क्रमिका * सुवर्णस्तेयनिष्कृतिं * अत ऊर्द्ध्वं प्रवक्ष्यामि । १ । ९८ ।

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु । स्वकर्म्म ख्यापयन्ब्रूयान्मां भवाननुशास्त्विति ॥ ९९ ॥

सुवर्णस्तेयेत्यादि । १ । ९९ । विप्रो ब्राह्मणस्य सुवर्णस्तेयकृत * प्रायश्चित्तं चिकीर्षुस्तु ॥ १ ॥ राजानमभि गम्य स्व * कर्म्म ब्राह्मणसुवर्णं * स्तेयं ख्यापयन् भवान् मां * अनुशास्त्विति ब्रूयादिति ॥ २ ॥ ९९ । तदा राजा यद्यात् [illegible] * ।

गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन शुद्ध्यति स्तेनो ब्राह्मणस्तपसैव वा ॥ १०० ॥

गृहीत्वा मुषलमित्यादि ॥ १ ॥ १०० ॥ राजा स्वयं मुषलं गृहीत्वा तं * ब्राह्मणसुवर्णस्तेयकारिणं * सकृदेव हन्यात्तेन वधेन ॥ १ ॥ मुषलाभिघातेन स * ब्राह्मणो ब्राह्मणस्वर्णस्तेनो मृतो वा जीवन्नेव वा तस्मात् * पापाच्छुद्ध्यतीति पक्षे एवेति विकल्पः । २ । कथं ब्राह्मणसुवर्णमिति * विज्ञायते शातातप * वचनादिज्ञायते ॥ ३ ॥ शातातपेनोक्तं यथा * कुलघ्नो नरकं यान्ति ज्ञायते विप्रस्य महत् ॥ इति ॥ ४ ॥ पराशरेणापुत्रोक्तं च * अपहृतसुवर्णस्य ब्राह्मणस्यान्त स्वयमिति । याज्ञवल्क्येनाप्युक्तं * ब्राह्मणस्वर्णहारी तु राज्ञे मुषलमर्पयेत् । स्वकर्म्म ख्यापयंस्तेन हतो मुक्तोऽपि [illegible] ॥ २ । १०० ॥ ब्राह्मणः कथं तपसा * स्वर्णस्तेयपापाच्छुद्ध्य *दित्यत आह ॥

तपसापनुनुत्सुस्तु सुवर्णस्तेयजं मलम् । चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ १०१ ॥

तपसेत्या [illegible] १०१ ॥ ब्राह्मणो ब्राह्मणस्य स्वर्णस्तेय * जातं मलं पापं तप * सापनुनुत्सुः सं चीर * वासा ब्रह्मघ्नो [illegible] द्वादशवार्षिकव्रतादानात्स्व * व्रतमरण्ये वसं च्चरेत् । २ । १०१ ।

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः । गुरुस्त्रीगमनीयन्तु व्रतैरेभिरपानुदेत् ॥ १०२ ॥

एतैरित्यादि । १०२ । उक्तैरेतैर्व्रतैर्द्विजो*ब्राह्मणः स्वर्णस्तेयज* कृतं पापमपोहति । १ । गुरुतल्पगमनीयन्तु*पापं द्विज एतैर्वक्ष्य*माणैर्व्रतैरपानुदेत् । २ । १०२ । कैर्व्रतैरित्यत आह ।

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये । सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति १०३

गुरुतल्पीत्यादि । १ । १०३ । गुरुतल्पी द्विज एनो*गुरुतल्पगमनजं * पापमभिभाष्य सूर्मीं लौहमयीं स्त्री प्रतिमा *मग्निना सन्तप्तां ज्वलन्तीमाश्लिष्य । १ । लौहमये ऽग्निना तप्ते *शयने स्वप्यात् मृत्युना*स गुरुतल्पी विशुध्यति । २ । १०३ ।

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ । नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः ॥ १०४ ॥

अपरमाह स्वयमित्यादि । १०४ । अथवा गुरुतल्पी स्वयं निजयो*शिश्नवृषणौ स्वयमुत्कृत्याञ्जलौ*वाधाय धृत्वा नैरृतीं *दिशमजिह्मग आतिष्ठेत् । १ । आनिपातान्मरणकालपर्यन्तं *ततः स विशुध्यति । २ । १०४ अपरमाह ।

खट्टाङ्गी चीरवासा वा श्मश्रुलो विजने वने । प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः १०५

खट्टाङ्गीत्यादि । १०५ । अथवा गुरुतल्पी द्विजः खट्टाङ्गी*खट्टाङ्गात्सन् श्मश्रुल* चीरवासाः समाहितः । १ । विजने वने वसन् प्राजापत्यं *कृच्छ्रमब्दमेकं चरेत् । २ । १०५ अपरमाह ।

चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः । हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये १०६

चान्द्रायणमित्यादि । १०६ । अथवा गुरुतल्पी द्विजस्त्रीन्मासान्*नियतेन्द्रियश्चान्द्रायणमभ्यसेत् *इथवा गुरुतल्पापनुत्तये । १ । नियतेन्द्रियः सन् हविष्येण त्रीन् * मासान् यवाग्वा त्रीन * मासान्व्रतमभ्यसेदिति २ । १०६ । उपसंहरति ।

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम् । उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥ १०७ ॥

गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्जयेत् ॥ २४ ॥ यदासम्पूर्णसर्व्वाङ्गो हीनदेहो भवेत्तदा । गोघातकस्य
तस्यार्द्धं प्रायश्चित्तं विनिर्द्दिशेत् ॥ २५ ॥ काष्ठलोष्ट्रकपाषाणैःशस्त्रेणैवोद्धतो बलात् । व्यापादयति गां यस्तु तस्य
शुद्धिं विनिर्द्दिशेत् ॥ २६ ॥ चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्ट्रके । तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवाति
कृच्छ्रकम ॥ २७ ॥ पञ्चसान्तपने गावः प्राजापत्ये तथात्रयः तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २८ ॥ प्रमा
पणे प्राणभृतां दद्यात्तं प्रतिरूपकम् । तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः । २९ । अनाद ... नलघाभा
वाहने मोहने तथा । सायं संयमनार्थन्तु नदुष्टिर्दोषबन्धयोः ॥ ३० ॥ अतिदाहेऽतिवाहे च नासिका भेद
ने तथा । नदीपर्व्वतसञ्चारे प्रायश्चित्तं विनिर्द्दिशेत् ॥ ३१ ॥ अतिदाहे चरेत्पादं द्वौपादावति वाहने ॥
नासिक्ये पादहीनन्तु चरेत् सर्व्वं निपातने ॥ ३२ ॥ दहनाच्च विपद्येत तत्रबद्धोवापि यन्त्रितः ॥ उक्तं पराशरेणैव
ह्येकपादं यथाविधि ॥ ३३ ॥ रोधबन्धनयोक्त्रेषु भारःप्रहरणेन्तथा ॥ दुर्गप्रेरणयोक्त्रेषु निमित्तानि वधस्याष्ट
३४ ॥ बन्धपाश सुगुप्ताङ्गोम्रियते यदि गोपशुः । भवने तस्य नाथस्य पापे कृच्छ्रार्द्धमर्हति ॥ ३५ ॥ न नारिकेलै
र्नच शाणवालैर्न चापिमौञ्जैर्नचबन्धशृङ्खलैः ॥ एतैस्तु गावो नच बन्धनीया बद्धातु तिष्ठेत्परशुं गृहीत्वा ॥ ३६ ।
कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम ॥ पाशलग्नाग्निदग्धेषु प्रायश्चित्तं नविद्यते ॥ ३७ ॥ यदि तत्र भवेत्
काष्ठं प्रायश्चित्तं कथं भवेत् ॥ जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात् ॥ ३८ ॥ प्रेरयन् कूपवापीषु
वृक्षच्छेदेषु पातयन् ॥ गवाशनेषु विक्रीणं स्ततःप्राप्नोति गोवधम । ३९ ॥ आराधितस्तु यःकश्चिद्भिन्नकक्षो यदा
भवेत् ॥ श्रवणं हृदयं भिन्नं मग्नो वा कूप सङ्कटे । ४० । कूपादुत्क्रमणे चैव भग्नो वा ग्रीवापादयोः । स एव म्रियते
तत्र त्रीन्पादांस्तु समाचरेत् । ४१ । कूपे खाते तटोबन्धे नदीबन्धे प्रपान्तुच । पानीयेषु विपन्नानां प्रायश्चित्तं
नविद्यते । ४२ । कूपखाते तटीखाते दीर्घखाते तथैव च । अन्येषु धर्मखातेषु प्रायश्चित्तं नविद्यते । ४३ ।
वेश्मद्वारे निवासेषु योनरः खातमिच्छति । स्वकार्य्यगृहखातेषु प्रायश्चित्तं विनिर्द्दिशेत् । ४४ । निशिबन्ध
निरुद्धेषु सर्पव्याघ्रहतेषु च । अग्निविद्युद्विपन्नानां प्रायश्चित्तं नविद्यते । ४५ । ग्रामघाते शरौघेण वेश्म
बन्धनिपातने । अतिवृष्टिहतानाञ्च प्रायश्चित्तं नविद्यते । ४६ । संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च ।
दावाग्निग्रामघाते वा प्रायश्चित्तं नविद्यते । ४७ । यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने । यत्ने कृते वि
पद्येत प्रायश्चित्तं नविद्यते । ४८ । व्यापन्नानां बहूनाञ्च बन्धने रोधने पि वा । भिषङ्मिथ्योपचारे च प्राय
श्चित्तं विनिर्द्दिशेत् । ४९ । गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः । नवारयन्ति ता तेषां सर्व्वेषां पात
कं भवेत् । ५० । एकोहतो यैर्बहुभिःसमेतैर्न ज्ञायते यस्य हतोऽभिघातात् । दिव्येन तेषामुपलभ्य हन्ता निवर्त्तनो
योन्पसन्नियुक्तः । ५१ । एका चेद्बहुभिःकापि दैवाद्व्यापादिता भवेत् । पादं पादञ्च हत्याया श्चरेयुस्ते पृथक

पृथक् । ५२ । कृते तु रुधिरं दृश्यं व्याधिग्रस्तः कृशोभवेत् । नानाभवति दृष्टे तु एवमन्त्ये प्रणश्येत् । ५३ । मनुनाचैव मेकेन सर्व्वशास्त्राणि जानता । प्रायश्चित्तन्तु तेनोक्तं गोषु चान्द्रायणं चरेत् । ५४ । केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत् । द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् । ५५ । राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् । ५६ । यस्मान् द्विगुणं दानं केशैश्च परिरक्षितः । तत्पापं तस्य तिष्ठेत्तु वक्ता च नरकं व्रजेत् । ५७ । यत्किञ्चित् क्रियते पापं सर्व्वं केशेषु तिष्ठति । सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् । ५८ । एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम् । न स्त्रियाः केशवपनं न दूरे शयनासनम् । ५९ । न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् । नदीषु सङ्गमे चैव अरण्येषु विशेषतः । ६० । न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत् । त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्च्चनं तथा । ६१ । बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् । गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत् । ६२ । इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति । स याति नरकं घोरं कालसूत्रमसंशयम् । ६३ । विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते । क्लीबो दुःखी च कुष्ठी च सप्त जन्मानि वै नरः । ६४ । तस्मात् प्रकाशयेत् पापं स्वधर्म्मं सततं चरेत् । स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विसर्जयेत् । ६५ । इति । ११६ ।

**एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः । अवकीर्णिवर्ज्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥११७॥**

अतिदिशति एतदेवेत्यादि । ११७ । उपपातकिनो द्विजा अवकीर्णि * वर्ज्जं तदुपपातकस्य शुद्ध्यर्थं * मेतदेव गोघ्नव्रत * मथवा चान्द्रायणं कुर्य्युः । १ । ११७ ।

**अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥ ११८ ॥**

अवकीर्णीत्येत्यादि । ११८ । अवकीर्णी काणेन गर्द्दभेन * निशि रात्रौ चतुष्पथे * पाकयज्ञविधानेन * नैर्ऋतिं देवतां यजेत् । १ । ११८ ।

**हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा । वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाहुतीः ॥११९॥**

हुत्वाग्नावित्यादि । ११९ । हुत्वाग्नाविति निशि चतुष्पथे * काणेन गर्द्दभेन विधिवत्पाक * यज्ञविधानेन निर्ऋतिं देवता * मग्नौ होमान् हुत्वान्ततश्चेतान्ते । १ । समासिञ्चन्तु मारुता * इत्यनयर्चा वाय्वादीनां * माहुतीः सर्पिषा जुहुयात् । २ । ११९ । ननु का पुनरवकीर्णीतात * आह ।

**कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः ॥ १२० ॥**

कामत इत्यादि । १ । १२० । व्रतस्थस्य द्विजन्मनो * ब्रह्मचर्य्याश्रमे वेदव्रतस्थस्य * ब्राह्मणस्य * चत्रियस्य वैश्यस्य च * कामतो रेतसः सेकम । १ । धर्म्मज्ञा ब्रह्मवादिनो * व्रतस्य वेदव्रतस्यातिक्रममवकीर्णमाहुः २ । १२० । तत्र किं स्यादित्यत आह ।

**मारुतं पुरुहूतञ्च गुरुं पावकमेव च । चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः ॥ १२१ ॥**

मारुतमित्यादि । १ । १२१ । इत्येवं व्रतिनस्तु द्विजन्मनः * कामतः स्विन्नरेतसः * खल्ववकीर्णिनो ब्राह्मं * तेजश्चतुरो मारुतादीनभ्येति । १ । १२१ । तत्प्रायश्चित्तमुक्तं * काणगर्द्दभेन होम * स्तथापरञ्चोच्यते ।

**एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनं । सप्तागारं चरेद्भैक्ष्यं स्वकर्म्म परिकीर्त्तयन् ॥ १२२**

एतस्मिन्नित्यादि । १ । १२२ । एतस्मिन्नुक्ते कामतो * रेतःसेकादेनसि प्राप्ते द्विजन्मा * ब्रह्मचारी गर्द्दभाजिनं * वसित्वा परिधाय । १ । सप्तागारं स्वकर्म्म कामतो रेतः * सेकं कीर्त्तयन् भैक्ष्यं चरेत् । २ । १२२ ।

**तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकम् । उपस्पृशंस्त्रिषवणं त्वब्देन स विशुध्यति ॥ १२३ ॥**

तेभ्य इत्यादि । १२३ । सोऽवकीर्णी तेभ्यः सप्तभ्योऽगारेभ्यो * लब्धेन भैक्ष्येण एककालं भुक्त्वा * वर्त्तयन् त्रिषवणमुपस्पृशन् । १ । अब्देन संवत्सरेण तत्तेन * तस्मात् पापाद्विशुद्ध्यति । २ । १२३ ।

**जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया । चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ १२४**

जातिभ्रंशेत्यादि । १२४ । ब्राह्मणस्य रुजः कृत्वेत्याद्युक्तं * जातिभ्रंशकरं च * मन्यतमं कर्म्म द्विज * इच्छया कृत्वा सान्तपनं चरेत् । १ । अनिच्छया कृत्वा स * प्राजापत्यं * कृच्छ्रं चरेत् । २ । १२४ ।

**सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम् । मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ १२५ ॥**

सङ्करेत्यादि । १२५ । खराश्वादिवधे सङ्करीकरणे * निन्दितेभ्यो धनादानादिषु पात्री * करणे सर्व्वेषु पापेषु कृतेषु । १ । द्विजानामैन्दवं चान्द्रायणं व्रतं * मासं कुर्व्वतां शोधनं ॥ २ ॥ क्रिमिकीटवयोहत्यादिषु

एतदेव व्रतं कृत्स्नं षण्मासान्शूद्रहा चरेत्। वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥१३०

एतदित्यादि । १ । १३० । अकामतस्तु शूद्रहा ब्राह्मण* एतदेवमनुक्षणो* व्रतं षण्मासान्यामादूरतरे* वृक्ष मूलनिकेतनः । १ । वसन्नियतोभैक्षाशी जटी स* निन्दां वै कृतं चरेत् * अथवा वृषभैकादशा* गा एक*श्च सिता दद्यागा विप्राय दद्यात् । १३० । अथ सङ्करीकरणा* पात्रीकरणमलावहातिरिक्त* प्राणिहत्या प्रायश्चित्त* माह ।

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च। श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥ १३१ ॥

मार्जारेत्यादि । १ । १३१ । मार्जारादीन्हत्वा शूद्रहत्याव्रतं * ब्राह्मणादिश्चरेदिति । १ । १३१ । अपर ष्वाह ।

पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत्। उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत् ॥१३२

पयइत्यादि । १ । १३२ । अथवा मार्जारादीन्हत्वा त्रिरात्रं * गवां पयः पिबेत् नाना* कथाध्वनो योजनं व्रजेद् यवा* स्रवन्त्यां नद्यामुपस्पृशेत् ॥ १ ॥ अथवाब्दै* वतं सूक्तं * जपेदिति* चत्वारः कल्पाः । २ । १३२ ।

अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः। पलालभारकं षण्डे सीसकञ्चैकमाषकम् ॥१३३

अभ्रिमित्यादि । १३३ । सर्पमहिंस्रातिरिक्तं * भुजङ्गजातिविशेषं * हत्वा कार्ष्णायसीमभ्रिं * तीक्ष्णाग्र दण्डं द्विजोत्तमो दद्यात् ॥ १ ॥ षण्डे सर्पे हते तद्वधे * पलालस्य तुच्छधान्यस्य भारं * माषपरिमितं सीसकं चदद्या दिति ॥ २ ॥ १३३ ॥

घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरौ। शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम् ॥१३४॥

घृतेत्यादि ॥ १३४ ॥ वराहे स्वहते घृतकुम्भं दद्या* दितिपूर्व्वेण योजना* तित्तिरौ हते तिलस* द्रोणं दद्या त्शुके हते * द्विहायनं व्रतं चरेत् वत्स गोवत्सं॥ १॥ क्रौञ्चं हत्वा द्विक हत्वा* त्रिहायणं * व्रतं चरेत् ॥ १३४ ॥

हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च। वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ १३५ ॥

हत्वेत्यादि ॥ १३५ ॥ हंसं बलाकां काण्णकौ वकं *श्वेतवकं बर्हिणञ्च*वानरं श्येनं भासञ्च* हत्वा गां ब्राह्मणाय स्पर्शयेद्दद्यात् ॥ १ ॥ १३५ ॥

वासोदद्याद्धयंहत्वापञ्चनीलान्वृषान्गजम् । अजमेषावनड्वाहंखरंहत्वैकहायनम् । १३६

वासइत्यादि ॥ १३६ ॥ हयमश्वंहत्वावासो*वस्त्रंदद्यादिति सङ्करीकरणे*यदश्ववधप्रायश्चित्तं* उक्तं तस्य विकल्पोऽयम् ॥ १ ॥ गजंहत्वापञ्चनीलान्वृषान्दद्यात्* वृषोत्सर्गेयन्नीलवृषः* परिभाषितोनात्रस मविवक्षितः किन्तुकृष्णवृषइतिकश्चित् ॥ २ ॥ अजादीन् हत्वैकहायनंवृषं दद्यात् * सङ्करीकरणेविक ल्पोयं ॥ ३ ॥ १३६ ॥

क्रव्यादांस्तुमृगान्हत्वाधेनुंदद्यात्पयस्विनीम् । अक्रव्यादान्वत्सतरीमुष्ट्रंहत्वातुकृष्णलम् ॥ १३७ ॥

क्रव्यादांस्त्वित्यादि । १३७ । क्रव्यादान्मांसाशिनोमृगान् * व्याघ्रादीन्हत्वापयस्विनींधेनुं * दद्यात् अक्रव्यादान् मृगान्*हत्वावत्सतरींदद्यात् । १ । उष्ट्रंहत्वास्वर्णं * सार्द्धमाषंदद्यात् * सङ्करीकरणे*ऽयं विकल्पः । २ । १३७ ।

जीनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये । चतुर्णामपिवर्णानांनारीर्हत्वाऽनवस्थिताः १३८

जीनेत्यादि । १३८ । चतुर्णामपिवर्णानां*मनवस्थितानारीर्व्यभिचारिणीः*हत्वाविशुद्धयेपृथ*गजीनादीन् यथाक्रमंदद्यात् । १ । अनवस्थितां ब्राह्मणीं*हत्वाजीनंचर्मपुटं * दद्यात्क्षत्रियनारींहत्वाकार्मुकंधनु * वैश्यानारींहत्वाबस्तं*छागंशूद्रनारींहत्वाविंमेषं । २ । १३८ । एषुगवानांप्रायश्चित्तमाह ।

दानेनवधनिर्णेकंसर्पादीनामशक्नुवन् । एकैकशश्चरेत्कृच्छ्रंद्विजःपापापनुत्तये ॥ १३९ ॥

दानेनेत्यादि । १ । १३९ । अभ्रिंकार्ष्णायसींदद्या*दित्यादिभिःसर्पादीनां * वधप्रायश्चित्तंयदा* दानमुक्तंतेनतेन*दानेनतत्तद्वधनिर्णेकमशक्नुवन् । १ । द्विजस्तत्पापापनुत्तयेकृच्छ्र*मेकैकशःप्राजापत्य *मनाद्वाकृच्छ्रंचरेत् । २ । १३९ ।

अस्थिमतान्तुसत्त्वानांसहस्रस्यप्रमापणे । पूर्णेचानस्यनस्थ्नान्तुशूद्रहत्याव्रतंचरेत् ॥ १४० ॥

अस्थिमतामित्यादि । १४० । अस्थिमतां सत्त्वानां कृमिकादीनां प्राणिनां *सहस्रस्य प्रमापणे घातने शूद्र हत्याव्रतंचरेत् । १ । अनस्थ्नां सत्त्वानां प्रमापणे *त्वनसिमकटे पूर्णे *शूद्रहत्याव्रतं चरेत् । १ । १४० ।

किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे। अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुद्ध्यति॥१४१

किञ्चिदित्यादि।१४१। अस्थिमतां प्राणिनामर्व्वाक् सहस्रा*द्वधे विप्राय किञ्चिद्देवदानं* दद्यादनस्थ्नां प्राणिनां वधे च।१। शकटपूरणान्न्यूने* प्राणायामेन शुद्ध्यति* प्राणायामश्च मन्त्रोपासनं यदुक्तः।२।१४१।

फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम्। गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्॥१४२

फलदानामित्यादि।१४२। फलदानां वृक्षाणां छेदने च* सावित्र्याद्यृक्शतं जपेत्* तथा गुल्मवल्लीलता पुष्पितवीरुधां छेदने सावित्र्याद्यृक्शतं॥१॥१४२॥

अन्नाद्यजानां सत्त्वानां रसजानाञ्च सर्व्वशः। फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम्॥१४३॥

अन्नाद्यजानामित्यादि।१४३। अन्नपर्य्युषितादिषु जातानां* प्राणिनामिक्षादिरसे* जातानां सर्व्वशः फल* पुष्पोद्भवानां प्राणिनां* हिंसायां घृतप्राशो विशोधनं स्यात्।१।१४३।

कृष्टजानामोषधीनां जातानाञ्च स्वयं वने। वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः॥ १४४॥

कृष्टजानामित्यादि।१४४। कृष्टे क्षेत्रे जातानामोषधीनां* शूकधान्यशमीधान्य* श्यामाकादीनाञ्च फल* पाकान्तानां वने स्वयं* जातानामप्योषधीनाम्।१। वृथाप्रयोजनाभावाच्छेदे* दिनमेकं पयोव्रतः* पयोमात्राहारो गा* श्चरन्तीरनुव्रजेदिति।२।१४४॥ उपसंहरति।

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्। ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे॥१४५

एतैरित्यादि।१४५। हिंसासमुद्भवमेनःपापमेतैः* कृत्स्नैर्व्रतैरपोह्यं स्यात्* अनाद्यभक्षणे कृतम्* ज्ञानाज्ञानकृतात्* मे नोऽपोह्यं तच्छृणुत।१।१४५।

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति। मतिपूर्व्वमनिर्द्देश्यं प्राणान्तिकमिति स्थितिः॥ १४६॥

अज्ञानादित्यादि।१४६। द्विजो विधिं विना वारुणीं सुरां* अज्ञानात् पीत्वा संस्कारात्* पुनरुप* नयनात्

**ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति ॥ १४९ ॥**

सोमपो ब्राह्मणः सुरापस्यास्य * मुखादागतं गन्धमाघ्रायाप्सु * स्थितः सन् प्राणान् त्रीनायम्येति। १। त्रीन् वारान् प्राणायामं * कृत्वा गव्यं घृतं प्राश्य * तस्मात् पापाद्विशुध्यति। १४९।

**अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १५० ॥**

अज्ञानादित्यादि। १५०। द्विजातयो विण्मूत्रमज्ञानात् प्राश्य * सुरासंसृष्टं चप्राश्य * अज्ञानात् प्राश्य पुनरे * वोपनयनसंस्कारमर्हन्तीति। १५०। ननु पुनःसंस्कारं कथं कुर्य्या * दित्यत आह। वपनं * मेखलेत्यादि श्लोकम्। १५१।

**वपनं मेखला दण्डो भैक्ष्यचर्य्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि ॥ १५१ ॥**

द्विजातीनां पुनः संस्कारकर्म्मणि * वपनादीनि पञ्च निवर्त्तन्ते * शेषं सर्व्वमुपनयनोक्तं कर्म्म। १५१। अथानाद्यान्नभोजने * प्रायश्चित्तमुच्यते *

**अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च। जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत् ॥ १५२ ॥**

अभोज्यानामित्यादि। १५२। अभोज्याना न्तुर्थाध्याये पूर्व्वमुक्ताः * नाश्नीयात् व्रतस्य * इत्यादिभिः शस्त्रविक्रयिणो मल * मित्यान्तैः श्लोकैरुक्तानां। १। द्विजानामन्नं भुक्त्वा स्त्री * शूद्रोच्छिष्टञ्चान्नं भुक्त्वा * मांसञ्चाभक्ष्यं जग्ध्वा * सप्तरात्रं यवान् यवमण्डादीन् पिबेत्। २। भोज्याश्च साग्निकानां द्विजानामन्नं * उक्तं तद्यथा विष्णुसंहितायां * बुक्तं तदत्र दर्श्यते। ३। व्याससंहितायां यथा * कृतदारोऽग्निपत्नीभ्यां कृतं स्मार्त्तं गृहं वसेत्। स्वकृतं वित्तमासाद्य वैतानग्निं न हापयेत्। ४। स्मार्त्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु। कर्म्म कुर्य्यात् प्रतिदिनं विधिवत् प्रीतिपूर्व्वकः। इति। ५। विष्णुसंहितायाञ्चोक्तं * गृहाश्रमी वैवाहिकाग्नौ पाक * यज्ञान् कुर्य्यात् सायं प्रातश्चाग्निहोत्रं देवताभ्यो जुहुयात्। इत्यादि। ६। याज्ञवल्क्येनाप्युक्तञ्च * कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही। दायकालाहृते वापि श्रौतं वैतानिकाग्निषु। इति। ७। इत्येतं वैवाहिकेऽग्नावेव पा * ब्राह्मणस्यान्नमन्नतं * क्षत्रियस्यान्नं पयोवत् * वैश्यस्यान्नमन्नमेव * तस्मात् यथायाणामन्नं भोज्यं। ८। एतच्चापस्तम्भाङ्गिरोभ्यामुक्तं * अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं

पयःस्मृतं । वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् । ९ । वैश्वदेवेन होमेन देवताभ्यर्चनेन च । अमृतं तेन विप्रान्नम् ऋग्यजुःसामसंस्कृतम् । १० । व्यवहारानुरूपेण धर्म्मेण च्छलवर्जितम् । क्षत्रियान्नं पयस्तेन भूतानां पालनेन च । ११ । स्वकर्म्मणा च वृषभैरवसृतात्मसम्भृतः । खलयज्ञातिथित्वेन वैश्यान्नं तेन संस्कृतम् । १२ । अज्ञानतिमिरान्धस्य मद्यपानरतस्य च । रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम् । १३ । ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्व्वणि । वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन । १४ । इति वंशाग्निकानां ब्राह्मण * क्षत्रियवैश्यानां वैवाहिके * वह्नौ पक्वमन्नं सर्व्व * वर्णानां भोज्यमुक्तम् । १५ । असंस्कृते वलौकिकेऽग्नौ पक्वं * निरग्नीनां ब्राह्मणक्षत्रियवैश्या * वर्णानामन्नमभोज्यं * तद्वृथापाकमुक्तम् । १६ । अत्रिसंहितायां यथा * योऽन्यहौत्राविवाहाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः । १७ । वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ॥ प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यतीति । १८ । आङ्गिरससंहितायामेतदन्न * विषयत्वं ज्ञायते यथा । १९ । दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति । यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् । २० । ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुत्वकम् । वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् । इति । २१ । अज्ञानविशेषे प्रायश्चित्तमाह अङ्गिरः संहितायां यथा । २२ । शूद्रस्य सततं भुक्त्वा षण्मासान् व्रतमाचरेत् । वैश्यस्य च तथा भुक्त्वा मासत्रयं व्रतं चरेत् । २३ । क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ च व्रतं चरेत् । ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रतं चरेत् । २४ । शूद्रायां ब्राह्मणाद्भुक्त्वा तयोरङ्गवतारिणः । वधकस्य चौरस्य वैरिणश्च तथा स्त्रियाः । २५ । कर्म्मकारस्य वैद्यस्य क्षौरस्य पतितस्य च । रुक्मकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च । २६ । कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च । गणान्नं पृथिपालानामन्नं चैवास्त्रजीविनः । २७ । सोमपान्नं क्षतिकान्नं * भुक्त्वा मासं व्रतं चरेदिति * मनुष्याणामभक्ष्यं * तदितरा पितॄणां देवानाञ्चाभक्ष्याम् ।८।१५२।

शुक्तानिचकषायांश्चपीत्वाऽमेध्यान्यपिद्विजः । तावद्भवत्यप्रयतोयावत्तन्नव्रजत्यधः ॥१५३॥

शुक्तानि चेत्यादि । १५३ । शुक्तानि सन्धानविशेषाणि * च कषायांश्च * विनाभेषजं क्वाथकषायान् अमे * ध्यान्यपि द्रव्याणि । १ । द्विजः पीत्वा तावदप्रयतोऽशुचि * भवति यावत्तज्जीर्णं * भूत्वा नाधो व्रजतीति । २ । १५३ ।

विड्वराहखरोष्ट्राणांगोमायोःकपिकाकयोः । प्राश्यमूत्रपुरीषाणिद्विजश्चान्द्रायणंचरेत्१५

विड्वराहेत्यादि । १५४ । विड्भुग्वराहादीनां * मूत्रपुरीषाणि * द्विजःप्राश्यचान्द्रा * यणंचरेदिति । १ । १५४ ।

**शुष्काणिभुक्त्वामांसानिभौमानिकवकाणिच। अज्ञातञ्चैवसूनास्थमेतदेवव्रतंचरेत्॥१५५॥**

शुष्काणीत्यादि । १५५ । शुष्काणिभक्ष्यमांसानि * भौमानिकवकाणिचेति * शुष्ककाकारेण जातानिप्रसर*विशेषान् कनास्थंवध * स्थानेहतमज्ञातंमांसं । १ । किंशृगालसारिकं छागलोतीव*मज्ञातंमांसभुक्त्वाद्विज*एतदेवचान्द्रायणं*व्रतंचरेत् । २ । १५५।

**क्रव्यादशूकरोष्ट्राणांकुक्कुटानाञ्चभक्षणे। नरकाकखराणाञ्चतप्तकृच्छ्रंविशोधनम्॥ १५६**

क्रव्यादेत्यादि । १५६ । क्रव्यादादीनां मांसस्यभक्षणे द्विजानांतप्त * कृच्छ्रंतत्पापस्यविशोधनं भवेत् ॥ १ ॥ १५६ ॥

**मासिकान्नन्तुयोऽश्नीयादसमावर्त्तकोद्विजः। सत्रीन्यहानुपवसेदेकाहञ्चोदकेवसेत्॥१५७॥**

मासिकान्नमित्यादि । १५७ । असमावर्त्तकोयोद्विजोब्रह्म*चारी मासिक श्राद्धान्नमश्नीयात्*सत्रीण्यहान्युपवसे*देकाहञ्चोदकेवसेत् । जलमात्रपायीस्यात् । १५७ ।

**ब्रह्मचारीतुयोऽश्नीयान्मधुमांसंकथञ्चन। सकृत्वाप्राकृतंकृच्छ्रंव्रतशेषंसमापयेत् ॥१५८॥**

ब्रह्मचारीत्यादि । १५८ । योब्रह्मचारी कथञ्चनमधु*मांसंवाश्नीयात्सप्राकृतंकृच्छ्रं*प्राजापत्यंकृत्वावेद*व्रतशेषंकृद्धासमापयेत् । १ । १५८ ।

**विड़ालकाकाखूच्छिष्टंजग्ध्वाश्वनकुलस्यच। केशकीटावपन्नञ्चपिवेद्ब्रह्मसुवर्च्चलाम् १५९**

विड़ालेत्यादि । १५९ । ब्रह्मचारी विड़ालाद्युच्छिष्टंजग्धा*केशकीटावपन्नञ्च*जग्ध्वाब्रह्मसुवर्च्चलां*वर्याभक्ष्यां सरसीकृतां पिवेत् । १ । १ । १५९ ।

**अभोज्यानामन्नानात्त्वामात्मनःशुचिमिच्छता। अज्ञानभुक्तन्तूत्तार्य्यंशोध्यंवाप्याशुशोधनैः१६०**

अभोज्यानामित्यादि। १६०। आत्मनः शुद्धिमिच्छता * द्विजेनाभोज्यमन्नं भुञ्जानेन तत् वान्तव्यम् अज्ञानभुक्तं * वमनेनोत्सार्य्यमाणं * वापि शोधनैः शोध्यं स्यात् ॥ १ । ५६० । उपसंहरति ।

**एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः। स्तेयदोषापहर्त्तॄणां व्रतानां श्रूयतां विधिः॥१६१**

एष इत्यादि । १६१ । अनाद्यादनस्य पापप्रशमार्थं * व्रतानामेष विविधो * विधिः प्रोक्तः स्तेयदोषापहर्त्तॄणां व्रतानां विधिः श्रूयताम् । १ । १६१ ।

**धान्यान्नधनचौर्य्याणि कृत्वा कामाद्द्विजोत्तमः। सजातीयगृहादेव कृच्छ्राब्देन विशुध्यति॥१६२**

धान्येत्यादि । १६२ । द्विजोत्तमो ब्राह्मणः सजातीयस्य * ब्राह्मणस्य गृहात् कामात् * धान्यादिचौर्य्याणि कृत्वा * कृच्छ्राब्देन वर्षमेकं * कृच्छ्रव्रतेन विशुद्ध्यति । १ । १६२ ।

**मनुष्याणान्तु हरणे स्त्रीणाञ्च क्षेत्रगृहस्य च । कूपवापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ॥१६३॥**

मनुष्याणामित्यादि । १६३ । द्विजोत्तमस्य मनुष्याणां पुंसां * स्त्रीणां च क्षेत्रगृहस्य च कूपादेश्च * हरणे शुद्धिश्चान्द्रायणं स्मृतं । १ । १६३ ।

**द्रव्याणामल्पसाराणां स्तेयं कृत्वान्यवेश्मतः। चरेत् सान्तपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये १६४**

द्रव्याणामित्यादि । १६४ । अल्पसाराणामल्पमूल्यद्रव्याणां * स्तेयं कृत्वा सान्तपनं चरेदेनः * वेश्मनस्तदल्पसारं द्रव्यं निर्या * त्मशुद्धये कृच्छ्रं व्रतं चरेत् । १ । १६४ ।

**भक्ष्यभोज्यापहरणे यानशय्यासनस्य च । पुष्पमूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥ १६५ ॥**

भक्ष्येत्यादि । १६५ । भक्ष्याणां घृतपूरादीनां भोज्यानां * मोदनादीनामपहरणे चौर्य्ये * यानादीनां पुष्पादीनाञ्चापहरणे * पञ्चगव्यं पीतं विशोधनं स्यात् । १ । १६५

**तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च । चैलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम् १६६**

तृणेत्यादि । १६६ । तृणादीनामपहरणे त्रिरात्र * मभोजनं विशोधनं । १ । १६६ ।

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च। अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ॥ १६७॥

मणीत्यादि । १६७ । मणिमुक्तादीनामपहरणे *द्वादशाहं कणान्नता* भग्नक्षुद्रतण्डुलकणानां यवागूादिकान्नभोजनं स्यात् । १ । १६७ ।

कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ॥ १६८ ॥

कार्पासेत्यादि ॥ १६८ ॥ कार्पासादीनामपहरणे त्र्यहं *पयःपीतं विशोधनं स्यात् ॥ १ ॥ १६८ ॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। अगम्यागमनीयन्तु व्रतैरेभिरपानुदेत् ॥ १६९ ॥

उपसंहरति एतैरित्यादि ॥ १६९ ॥ द्विजो ब्राह्मणादिः स्तेयकृतं पापं* मेतैर्व्रतैरपोहेत्*अगम्यागमनीयं तु पापमेभि*र्वक्ष्यमाणैरपानुदेत् । १ । १६९ ।

गुरुतल्पव्रतं कुर्याद्रेतः सिक्त्वा स्वयोनिषु। सख्युःपुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥१७०॥

गुरुतल्पेत्यादि । १७० । स्वयोनिषु पूर्वं स्वगोत्रजासु * न केवलं सोदर्यभगिनीषु * सख्युःपत्नीषु पुत्रपत्नीषु च पूर्वं भिन्नगोत्रजातत्वात् ॥ १ ॥ कुमारीषु सवर्णासु नानुलोमा*स्वच्छतयोनिषु प्रतिलोमा नहि * सख्युर्जाता जाया यास्त एव तद्* वाक्ये स्तथा च व्यासजन्मश्रवणात् । २ । अन्त्यजासु चाण्डालीषु * रेतः सिक्त्वा गुरुतल्पगमनपापव्रतं कुर्यात् । ३ । १७०

पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् १७१

पैतृष्वस्रेयीमित्यादि ॥ १७१ ॥ पैतृष्वस्रेयीं भगिनीं *मातुः स्वस्रीयां भगिनीं* अपि गत्वा चान्द्रायणं चरेत् । १ । एतेन विवाहे मातु*स्सपिण्डत्वेन निषेधे *प्राप्ते विवाहे वर्जनमवोच्यते । २ । मातुश्च भ्रातुस्तनयां * मातुलतनयां मोहतो*गत्वा चान्द्रायणं चरेत् । ३ । मातृविवाहात्पूर्वावस्थायां खलु* सपिण्डतया मातुलतनयायाः*विवाहे वर्जने सिद्धे मोहादुपगमने प्रायश्चित्तमिदं प्रोक्तं ॥ ४ ॥ १७१ ॥ आसां विवाहे वर्जनमाह ॥

एतास्तिस्रस्तु भार्यार्थे नोपगच्छेत्तु बुद्धिमान्। ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः१७२

एतास्त्वित्यादि ॥ १७२ ॥ एतास्तिस्रो भगिनीर्बुद्धिमान् * भार्यार्थं नोपगच्छेत् कस्मा*दित्यत आह ज्ञातित्वेन तादृक्कमहं स्तोकम् ॥ १ ॥ ताः पैतृष्वस्रेया मातृ*स्वस्रीया मातुलकन्याः* सिस्रो ज्ञातित्वेनैव विवाहे नानुपेयाः

या*यस्मात्तामुपयन्नधःपतति ॥ २ । मातुलतनयायामातृ*सपिण्डत्वेन विवाहे* वर्ज्जनसिद्धौ सत्यां पुन*र्विहतद्ग्रहणवचनं नियमार्थं । ३ । ब्राह्मणएवैतास्तिस्रो*न विवहेत क्षत्रियादीनां * नाप्रतिषेधोऽप्रतिषेध इति* महामुनाद्रिस्तयाश्रुतेः । ४ । ५ । १७२ ।

अमानुषीषु पुरुष उदक्यायामयोनिषु । रेतःसिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ १७३॥

अमानुषीष्वित्यादि ॥ १७३। इहलोके त्वमानुषीषु छागी*प्रभृतिषु रेतःसिक्त्वा*उदक्यां रजस्वलायां मानुष्यां तु*रेतःसिक्तातया स्त्रीणा*मयोनिषु रेतःसिक्त्वा ।१। जले चरेतःसिक्त्वा सान्तपनं *कृच्छ्रं पुरुषआचरेत् ।२। १७३ ।

मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः । गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत् ॥१७४

मैथुनन्त्वित्यादि । १७४ । द्विजःपुंसि योषिति वा*मैथुनसमासेव्य गो*याने वाम्भःसु समासेव्य वा*मैथुनं समासेव्य वा दिवा*दिने वासमासेव्य वा ।१। सवासास्तत्क्षणात् स्नानमाचरेदि * तासा विप्रपनं ध्येयं । २ । १७४ ।

चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति ॥ १७५ ॥

चाण्डालान्त्येत्यादि । १७५ । चाण्डालान्तानां*मन्त्यजानां स्त्रियो गत्वा*तेषामन्नं वा भुक्त्वा तेभ्यः प्रतिगृह्य* च द्विजः किञ्चिद्विप्रःपतति । १ । ज्ञानाद्गत्वा भुक्त्वा वा प्रतिगृह्य वा*तेषां सामां गच्छतीति । २ । १७५ ।

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेकवेश्मनि । यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥१७६

विप्रदुष्टामित्यादि । १७६ । भर्त्ता विप्रदुष्टामिच्छयापर * पुरुषमुपगतां स्त्रियमेक * वेश्मनि स्वस्यावासगृहे निरुन्ध्यात् । १ । पुंसः परदारेषु गमने य * द्व्रतं विहितं तद्व्रत * मेनां स्त्रियमाचारयेत् । १७६ ।

सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता । कृच्छ्रं चान्द्रायणं चैव तदस्याः पावनं स्मृतम् १७७

सा चेदित्यादि । १७७ । एवमेकवेश्मनि निरुद्धा तत्त * द्व्रतं चरित्वापि * सा स्त्री चेत्पुनः सदृशेन पुंसोप * यन्त्रितायाचिता प्रदुष्येत् । १ । तदास्याः स्त्रियाः पावनं चान्द्रायणं * कृच्छ्रं व्रतं धीरैः स्मृतम् । २ । १७७ ।

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः। तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति१७८

यदित्यादि।१७८। द्विजो ब्राह्मणादिरेक * रात्रेण वृषलीसेवनाद्यत्पापं * करोति तत्पापं भैक्ष्य भुक् भिक्षान्नभुक्।१। गायत्रीमष्टोत्तरसहस्रं कृत्वा * नित्यं जपन् त्रिभि * र्वर्षैर्व्यपोहति।१७८।

एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः॥१७९

उपसंहरति एषेत्यादि।१७९। चतुर्णामपि वर्णानां * महापापादिपापकृतां नृणां निष्कृति * रेषा मयोक्ता शुभप्रदा।१। पतितैः सह * संप्रयुक्तानां * पापान्निष्कृती * रिमाः शृणुत।१७९।

संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् सद्यो यानासनाशनात्॥१८०

संवत्सरेणेत्यादि।१८०। पतितेन ब्रह्महत्यादिमहा * पातकचतुष्टयान्य * तमपातककारिणा * सह संवासमाचरन् * संवत्सरेण पतति।१। उक्तञ्च याज्ञवल्क्येन * एभिस्तु संवसेद्यो वै * वत्सरं सोऽपि तत्समः। इति।२। याजनाध्यापनात्तथा यौनात्तथा * पुत्रकन्या विवाह *सम्बन्धात्तथा चैकत्र * याना सनाशनाच्च * सद्य एव पततीति।३। उक्तञ्च विष्णुसंहितायां * संवत्सरेण पतति पतितेन सहाचरन्। एकयानभोजनासनशयनै * र्यौनस्रौवमौखै * सम्बन्धात् सद्य एव।५। इति। देवलेनचोक्तं यथा * याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतत्येते पतितेन न संशयः। इति।६। बौधायनेनचतथोक्तं * संवत्सरेण पतति * पतितेन सहाचरन्। याजनाध्यापनाद्यौनात् * सद्योऽन्नशयनाम नात्।७। इति।8।१८०।

यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये॥ १८१॥

योयेनेत्यादि।१८१। एषां ब्रह्महत्यादि पातकचतु * ष्टय कारिणां चतुर्णां मध्ये येन * पतितेन सह यस्तु * मानवः संसर्गं याति।१। स तत्पातकी तस्यैव पातकिन * उक्तं तत्तद्व्रतं तत्संसर्गपाप * विशुद्धये यथोक्तविधिना कुर्यात्।२।०।१८१।०। अथयः पतितः स्यात्तस्याकृत * प्रायश्चित्तस्य किं कुर्यादि * त्येतदाह।

पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः। निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ॥१८२॥

पतितेति। १८२। पतितस्यब्रह्महत्यादिपातकिनः * सपिण्डबान्धवैरेव * ज्ञातयादिसन्निधौनि न्दिते दिवसे * अनिमङ्गलवारादौ। १। सायाह्ने ग्रामाद्बहिरुदककार्यः * तद्विधिरिहवक्ष्यते। १८२।

**दासीघटमपांपूर्णं पर्यस्येत्प्रेतवत्पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १८३ ॥**

तद्विधिमाहदासीत्यादि। १८३। प्रेतवदिति प्रेतं यथैव दग्ध्वा * यथाजलपूर्णं कुम्भं * पश्चात्कुठारपादेनैव* प्रक्षिपेत्तथा सपिण्डबान्धवैः सहतस्यादासी। १। ज्ञातयादिसन्निधौ ग्रामाद्बहिर्गत्वा * जलपूर्णं * घटं पदापर्यस्येत् * । २। ततोबान्धवैः सर्व्वैःसहाहोरात्र * मशौचं सर्व्वज्ञात्यादयोजनाउपसीरन् * ततोयत्कार्यं तदाहद्वाभ्यां श्लोकाभ्यां। १८३।

**निवर्त्तेरंश्चतस्मात्तु संभाषणसहासने। दायाद्यस्यप्रदानञ्चयात्राचैवहिलौकिकी॥ १८४॥**

निवर्त्तेरंश्चेत्यादि। १८४। तस्मात् पतितात् कृतदासीघटा * ज्जनात् सम्भाषणं सहासनं च * दायादाप्रदानञ्चलौ * किकीयात्राचनिवर्त्तेरन् ॥ १८४ ॥

**ज्येष्ठताचनिवर्त्तेत ज्येष्ठावाप्यञ्चयद्धनम्। ज्येष्ठांशंप्राप्नुयाच्चास्य यवीयानगुणतोधिकः॥ १८५॥**

ज्येष्ठताचेत्यादि। १८५। तस्मात्पतितात्दासीघटकृता * ज्ज्येष्ठताचनिवर्त्तेत * ज्येष्ठप्राप्यं धनञ्चनिवर्त्तेत * तस्यप्राप्यं ज्येष्ठांशन्तु। १। अस्यपतितस्य * यवीयान्योभ्राता * गुणतोऽधिक * स्तत्सम्प्राप्नुयात्। २। १८५ ॥

**प्रायश्चित्ते तुचरिते पूर्णकुम्भमपांनवम्। तेनैवसार्द्धंप्रास्येयुःस्नात्वापुण्ये जलाशये ॥१८६**

प्रायश्चित्तेत्वित्यादि ॥ १८६ ॥ तेनपतितेन प्रायश्चित्ते चरिते तेनैवकृतप्रायश्चित्तेनसार्द्धं * ते सर्व्वे जनाःपुण्ये जलाशये । १ ॥ स्नात्वानवं नूतनं कुम्भमपां * पूर्णं प्रास्येयुःप्रक्षिपेयुरिति * ततोयत्कार्यं तदाहसत्वप्स्वित्यादि। १८६।

**सत्वप्सु तं घटं प्रास्यप्रविश्यभवनंस्वकम्। सर्व्वाणिज्ञातिकार्याणियथापूर्व्वं समाचरेत्१८७**

सद्वित्यादि ॥ १८७ ॥ सकृतप्रायश्चित्त * उक्तविधिनातंघट * मप्सुप्रास्यस्वकं भवनं प्रविश्य * यथापूर्व्वं पूर्व्ववत् सर्व्वाणिज्ञातिकार्याणिसमाचरेत् ॥ १ ॥ १८७ ॥

एतमेव विधिं कुर्याद्योषित्सु पतितास्वपि । वस्त्रान्नपानं देयन्तु वसेयुश्च गृहान्तिके ॥१८८॥

एतमेवेत्यादि ॥ १८८ ॥ पतितास्वपि योषित्स्वपि* एतमेवोक्तं दासीघटविधिं *कुर्य्यात् विप्रो वस्तु वेषः ॥१॥ तथा योषितो वस्त्रान्नपानं देयं *तस्या गृहान्तिके सर्व्वं *रक्षणार्थं वसेयुश्च ॥ २ ॥ १८८ ॥

एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्समाचरेत् । कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्१८९

एनस्विभिरित्यादि ॥ १८९ ॥ एनस्विभिर्ब्रह्महत्यादिपापिभिः* रनिर्णिक्तैरकृतप्रायश्चित्तैः सह किञ्चिदर्थं न समाचरेत् ॥ १ ॥ कृतनिर्णेजनान्पुनः कर्हिचिन्न जुगुप्सेत्* त्वमेव पापकृदित्युक्त्वा । २ । १८९ ।

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ १९० ॥

बालघ्नांश्चेत्यादि । १९० । बालघ्नान्कृतघ्नान्शरणागतहन्तॄन्* स्त्रीहन्तॄंश्च यथाविधि* प्रायश्चित्तं चरित्वापि* धर्मतो विशुद्धानपि* न संवसेत् ॥ १ । १९० ॥

येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत्१९१

येषामित्यादि । १९१ । द्विजानामिति द्विजवर्णानामेव* न त्वसंस्काराद्द्विजत्वं जातेति* अतोपनयनानां तेषां *सावित्र्याः अनुवचनात् । १ । येषां द्विजवर्णानां *यथाविधि सावित्री नानूच्येत* नोपनयनं भवति । २ । तान्व्रात्यान्व्रात्यपुत्रादीन्* सर्व्वान् त्रीन्कृच्छ्रान्प्राजापत्यसंज्ञकान्* चारयित्वा* यथाविधि* आचार्य्य उपनाययेत् । ३ । येषामित्यनिर्द्देशोक्त्या* न केवलं व्रात्यानां व्रात्यपुत्र* पौत्रादीनामपीत्युक्तम् ।४। अन्यथा ये व्रात्यास्तांस्त्रीन् कृच्छ्रांश्चारयित्वोपनाययेत्* इत्यर्थो वसिष्ठैर्भवेत् । ५ । तस्मात्प्रमादिना यदिदं व्याख्यातं* येषां ब्राह्मणक्षत्रिय* विशामानुकल्पिकः कालेऽप्युप* नयनं यथाशास्त्रं न स्यात् । ६ । तान्प्राजापत्यत्रयं चारयित्वा* यथाशास्त्रमुपनयेदिति ॥ ७ । तदसाधु ब्राह्मणादीनामष्टम* वर्षैकादशद्वादश* वर्षं कालो मुख्यः स्तत्तद्द्विगुणकालो गौण आनुकल्पिकः । ८ । तत ऊर्द्ध्वमकालोऽम* त्वनुकल्पकाल इति* याज्ञवल्क्येन व्रात्यानामुक्तं *स व्रात्यास्तोममर्हती* व्रात्यानामन्यो साधकं न* इति सर्व्वैः सर्व्वं प्रवक्ति । ९ । एतेन व्रात्यात् स्वस्यासवर्णाया भार्य्याया प्रजाताः पुत्राः स* स्कार्य्या न त्वसंस्कार्य्या इति ज्ञापितम् । १० । यदि व्रात्यस्य पुत्रपौत्रादीनाम्* उपनयनं नास्तीत्युच्यते तत्* ईदृशापस्मृतिप्रायश्चित्तं नैव* सङ्गच्छते तद्यथा प्रदर्श्यते ।११। यस्य पिता पितामहो* वानुपनीतौ स्यातां *तस्य संवत्सरं त्रै* विद्यकं व्रतं चर्य्याम् ।१२। यस्य प्रपितामहादेर्न्न* स्मर्य्यते उपनयनं तस्य* द्वादशवर्षाणि त्रैवि*द्यकं ब्रह्मचर्य्यमिति ।

सत्यमुक्त्वेत्यादि। १९६। सम्यक्कृतप्रायश्चित्तः * स पुरुषस्तत्र विप्रेषु सत्यं पुनरसत्प्रतिग्रहं * न करिष्यामीति प्रतिज्ञां कृत्वा। १। गवां यवसं गोग्रासं * विकिरेत्ततस्तस्मिंश्च * गोभिर्भक्षिते यवसभक्षणे * स्थाने तीर्थीकृते तस्य * परिग्रहं ते विप्राः कुर्युः ४। १९६॥

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च। अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति॥१९७

व्रात्यानामित्यादि। १९७। व्रात्यानां व्रात्यस्तोमादि * प्रायश्चित्तमकृत्वा ये * व्रात्याश्रमिणो भवन्ति। १। तेषां याजनं कृत्वा त्रिभिः कृच्छ्रै * स्तत्पापं व्यपोहतीति। २। व्रात्यानां व्रात्यस्तो * मादिप्रायश्चित्तं * कारयित्वोपनायने न पापं भवेत्। ३। अन्यथा ब्रह्महत्यादि *पापप्रायश्चित्तं दत्वा * याजनेऽपि पापं भवेत्। ३। येषां द्विजानां सावित्रीत्यादिपूर्व * वचनविरोधश्च स्यात्। ४। परेषामज्ञातीनामन्त्यकर्म च * प्रेतकर्म दाहकाले * पिण्डदानकर्म कृत्वा * तत्पापं त्रिभिः कृच्छ्रैर्व्यपोहति। ५। अहीनं नामाभिचारं * कृत्वा च त्रिभिः कृच्छ्रै स्तत् * पापं द्विजो व्यपोहति। ६। एतत्प्रायश्चित्तविधानं सानिकाः * धीतवेदानां निरग्नि * निर्वेदानां न्तु वेदान * ध्ययनमात्रयाजनात् * द्विखिलप्रायश्चित्तं कार्यम्। ७। १९७।

शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः। संवत्सरं यवाहारस्तत्पापमपसेधति॥ १९८॥

शरणागतमित्यादि। १९८। यो द्विजः शरणागतं * परित्यजेन्न रक्षेत्तस्य * यश्च द्विजो वेदं विप्लावयेद्धा * यद्यध्यापयेदनध्यायेऽ * ध्यापयेत्। १। तावद्धापमनध्यायं कृत्वा * शिष्यं समावर्त्तयेत्तस्य * संवत्सरं यवाहारः * संस्तत्पापमपसेधति॥ १९८॥

श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च। नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति॥१९९

श्वशृगालेत्यादि। १९९। श्वशृगालादिभिर्दष्टो यो द्विजः स * प्राणायामेन शुध्यति॥ १९९॥

षष्ठान्नकालता मासं संहिताजप एव वा। होमाश्च शाकला नित्यमपाङ्क्त्यानां विशोधनम्॥२००

षष्ठान्नेत्यादि॥ २००॥ अपाङ्क्त्यानामिति येऽनपतिताः क्लीव* दूताश्चक्रिणां पङ्क्तितो भोजने * मासं षष्ठान्नकालता विशोधनम्। १। द्वाहमुपोष्य तृतीये दिने मध्याह्ने * पिनभुक्त्वा सायं भुञ्जीत तावत् * मासमेकं कार्यम्। २। अथवा मासं वेदस्य संहितायाः * शाखाया जपोऽन्यैः पाठः। ३। मासं नित्यं शाकला होमाश्च कार्याः * देवकृतस्यैनसोऽवयजनम् * सीत्यादिभिरष्टाभिः * मन्त्रैरष्टौ होमाः कार्याः। ४। इति त्रिविधं प्रायश्चित्तं भवति * तदपाङ्क्त्यसहभोजने। २००।

योऽबधीत्वा विवाहाग्निं ब्रह्मघ्न इति मन्यते। अन्नं तस्यानभोक्तव्यं श्वपाको हि स स्मृतः। ५०। श्वपाकं भुञ्जानः प्रायश्चित्तं चरेद्विजः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यति। ५१। महापातकिसंस्पृष्टे स्नानमेव विधीयते। संस्पृष्टश्च यदा भुङ्क्ते स्नानमेव विधीयते। ५२। पतितैः सह संसर्गं मासार्द्धं मासमेव वा। गोमूत्रयावकाहारो मासार्द्धेन विशुद्ध्यति॥ ५३॥ कृच्छ्रार्द्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः। अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सान्तपनं चरेत्। ५४। पतितान्नं यदा भुङ्क्ते भुक्ते चाण्डालवेश्मनि। मासार्द्धं तु पिबेद्वारि इति शातातपोऽब्रवीत्। ५५। यश्चाण्डालीं द्विजो गच्छेत् कथञ्चित् काममोहितः। त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्व्वशः॥ ५६॥ पतितात्तान्नमादाय भुङ्क्ते च ब्राह्मणो यदि। कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्द्दिशेत्॥ ५६॥ ॥ ५७॥ अनाहस्ताच्छ्वचैं छित्त्वा काष्ठलोष्ट्रतृणानि च। न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत्। ५८। चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम्। द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत्। ततः परं न भुञ्जीत त्यक्त्वान्नं स्नानमाचरेत्॥ ६०॥ भुञ्जानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा। त्रिरात्रेण विशुद्धिः स्यादुच्छिष्टस्त्वहिनेन तु। ६१। आरूढो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः॥ चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत्॥ ६२॥ पशुवेश्याभिगमने प्राजापत्यं विधीयते। गोगमने मनुप्रोक्तं व्रतं चान्द्रायणं चरेत्॥ ६३॥ उदक्या सूतिका वापि अन्त्यजां स्पृशते यदि। त्रिरात्रेण विशुद्धिः स्यादिति धर्म्मः पुरातनः॥ ६४॥ संसर्गं यदि गच्छेच्चेदुदक्या वा तथान्त्यजैः। प्रायश्चित्तीस्त्रिविधयः पूर्व्वं स्नानं समाचरेत्॥ ६५। एकरात्रं चरेन्मूत्रे पुरीषे तु दिनद्वयम्। दिनत्रयं तथा पाने मैथुने पञ्च सप्त वा॥ ६६॥ भोजने त्वप्रकृतानां प्राजापत्यं विधीयते। दन्तकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः ६७॥ रजस्वला यदा स्पृष्टा श्वानचाण्डालवायसैः। निराहारा भवेत्तावत् स्नात्वा काले न शुद्ध्यति॥ ६८॥ रजस्वला यदा स्पृष्टा उष्ट्रजम्बुकगर्द्दभैः। पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥ ६९। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या। एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति॥ ७०॥ स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या क्षत्रिया च या। त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा। ७१। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या वैश्यसम्भवा। चतूरात्रं निराहारा पञ्चगव्येन शुद्ध्यति। ७२। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या शूद्रसम्भवा। षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः। ७३। अकामतश्चरेदेवं ब्राह्मणी सर्व्वतः स्पृशेत्। चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्त्तिता ७४। उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः। भोजने मूत्रचारे च शङ्खस्य वचनं यथा। ७५। स्नानं ब्राह्मणसंस्पर्शे जपहोमौ तु क्षत्रिये। वैश्ये नक्तञ्च कुर्व्वीत शूद्रे चैव उपोषितम्। ७६। चर्म्मकारो रजकश्च वैणो धीवरो नटकस्तथा। एतान् स्पृष्ट्वा द्विजो मोहादाचामेत् प्रयतोऽपि सन्। ७७। एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत्। उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुद्ध्यति। ७८। यस्तु छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति।

तप्तस्नानं प्रकुर्व्वीत घृतं प्राश्य विशुद्ध्यति । ७९ । अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत् । मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा । ८० । वृथा मिथ्योपयोगेन भ्रूणहत्याव्रतं चरेत् । अभक्षोद्वादशाहेन पराकेण विशुद्ध्यति । ८१ । शठश्च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । निर्गुणं सगुणो हत्वा पराकव्रतमाचरेत् । ८२ उपपातकसंयुक्तो मासमेकोऽपि यदि । तस्य संस्कारकर्त्ता च प्राजापत्यद्वयं चरेत् । ८३ । अभुञ्जानोऽतिकृच्छ्रं कदाचित्स्पृशति द्विजः । त्रिरात्रमाचरेत् स्नात्वा निषेवमथवाचरेत् । । ८४ । पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणो यः सुरां पिबेत् । उभौ तौ तुल्यदोषौ च वसतो नरके चिरम् । ८५ । ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् । ८६ । राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम् । स्वसुतान्नञ्च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् । ८७ । स्वसुतात्मजातायाना श्नीयात्तद्गृहे पिता । अन्नं भुक्त्वा त्वमायाया पूयं स नरकं व्रजेत् । ८८ । अधीत्य चतुरो वेदान् सर्व्वशास्त्रार्थतत्त्ववित् । नरेन्द्रभवने भुक्त्वा विष्ठायां जायते क्रिमिः ८९ । नवश्राद्धे त्रिपक्षे च षण्मासे मासिकाब्दिके । पतन्ति पितरस्तस्य यो भुङ्क्ते नापदि द्विजः । ९० । चान्द्रायणं नवश्राद्धे पराको मासिके तथा । त्रिपक्षे चैव कृच्छ्रः स्यात् षण्मासे कृच्छ्रमेव च । आब्दिके पादकृच्छ्रः स्यादेकाहं पुनराब्दिके । ९१ । ब्रह्मचर्य्यमनाधाय मासश्राद्धेषु पर्व्वसु । द्वादशाहे त्रिपक्षाब्दे यस्तु भुङ्क्ते द्विजोत्तमः पतन्ति पितरस्तस्य ब्रह्मलोकं गता अपि । ९२ । एकादशाहे ऽहोरात्रं भुक्त्वा सञ्चयने त्र्यहम् । उपोष्य विधिवद्विप्रः कुष्माण्डैर्जुहुयाद्घृतम । ९४ । यद्येवाय दिवामासे यस्य नाश्नन्ति वै द्विजाः । भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् । ९५ । हीनवर्णे च यः कुर्य्यादज्ञानादभिवादनम् । तप्तस्नानं प्रकुर्व्वीत घृतं प्राश्य विशुद्ध्यति । ९६ इति । विष्णुसंहितायाञ्च ब्रह्महत्यादि*पातकेषु प्रायश्चित्त*मुक्त्वा चोक्तं तद् यथा । ९७ । यदुक्तं तत्प्रकीर्ण *प्रकीर्णं पातकं ज्ञात्वा गुरुत्वमथ लाघवम । प्रायश्चित्तं बुधः कुर्य्याद्ब्राह्मणानुमतः सदा । ९८ । इति । याज्ञवल्क्येनाप्युक्तं *अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् । ९९ । देशं कालं वयः शक्तिं पापञ्चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिरिति । १०० । अविद्याप्रवलत्वाभ्या*मुक्तमेतदेक*वचनं प्रसिद्धं नताभ्यां रचितं । १०१। इत्येवं मनुादिभिर्यस्य पापस्य*यत्प्रायश्चित्तमुक्तं तत्*पापीयदि तत्प्राय*श्चित्तं न कृत्वा म्रियते । १०१ । समृत्वा तत्तन्नरकं**गत्वा तन्नरकभोगावसाने य*इह मनुष्येषु पुन*र्जायते स तत्तत्पापचिह्नवान् स्यात् । १०२ । तच्चिह्नं पुर्व्वमुक्तं *तत्तच्चिह्नवांस्तत्तत्पापप्राय*श्चित्तं कुर्य्यादितिज्ञापितं तत्तच्चि*ह्नवचनेनेति निर्णयं ॥ १०४ ॥ शातातपेन च तत्त * चिह्नोक्तप्रायश्चित्तं *यद् यदुक्तं तद्विकल्प*इति निर्णयं तत्प्रदर्श्यते यथा । १०५ । प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम ॥ १०६ ॥

ताड़यित्वा तृणेनापि कण्ठे वाबध्य वाससा । विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०५

ताड़यित्वेत्यादि ॥ २०५ ॥ ब्राह्मणं गरीयांसं वा * क्रोधेन तृणेनापि ताड़यित्वा * कण्ठे वा वाससा पा बध्वा । १ । विवादे विनिर्जित्य वा प्रणिपत्य * स्तुतिवाक्यात् प्रसादयेत् । २०५ ।

अवगूर्य त्वब्दशतं सहस्रमभिहत्य च । जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ २०६ ॥

अवगूर्येत्यादि । २०६ । ब्राह्मणस्य जिघांसया त्ववगूर्य * दण्डोद्यमाद्वर्षाणां * शतमभिहत्य वर्षाणां सहस्रं * अकृतप्रायश्चित्तस्तु * नरकं प्रतिपद्यते । २०६ ।

शोणितं यावतः पांशून् संगृह्णाति महीतले । तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥ २०७ ॥

शोणितमित्यादि । २०७ । अभिहतस्य ब्राह्मणस्य शोणितं * महीतले पतितं यावतः पांशून * संगृह्णाति तावन्त्यब्दसहस्राणि * तद्रक्तपातकर्त्ता नरके वसेत् । २०७ ।

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रौ कुर्व्वीत विप्रस्योत्पाद्य शोणितम् ॥ २०८ ॥

अवगूर्येत्यादि । २०८ । ब्राह्मणमवगूर्य्यैव * कृच्छ्रं प्राजापत्यं चरेत् * निपातने दण्डाद्यभिघाते कृते * ब्राह्मणमतिकृच्छ्रं व्रतं चरेत् । १ । विप्रस्य शोणितमुत्पाद्य पुरुषः * कृच्छ्रातिकृच्छ्रौ कुर्व्वीत । २०८ ।

अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये । शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत् ॥ २०९ ॥

अनुक्तेत्यादि । २०९ । इहमनूपदिष्टेष्वनुप्रोक्ते * धर्म्मशास्त्रे येषां पापानां न * निष्कृतिरुक्ता तेषाम * उक्तनिष्कृतीनां पापानां । १ । अपनुत्तये पापिनां * शक्तिञ्चावेक्ष्य पापञ्चावेक्ष्य विद्वान् * प्रायश्चित्तं प्रकल्पयेत् । २ । इदञ्च मनूक्तं महस्वतां नो * धर्म्मवक्तारोऽप्यविदिषा * प्रस्तयोऽप्यानुक्तपापनिष्कृति * सर्व्वः स्वस्वसंहितायां । ३ । तत्र पापनादिष्टपाप प्रायश्चित्तं * मतिपाशवलकाभ्यां चान्द्रायण * उक्तं तथानात्तस्मर्व्वं * क्रमेणावगम्यते । ४ । तद्यथाऽत्रिसंहितायां * ब्रह्महा प्रथमश्चैव * द्वितीयो गुरुतल्पगः । तृतीयस्तु सुरापोऽथ * चतुर्थः स्तेन उच्यते । ५ । पापिनाञ्चैव संसर्गः * पञ्चमं पातकं महत् । एषामेव विशुद्ध्यर्थं चरेद्वर्षाण्यनुक्रमात् । ६ । त्रीणि कृच्छ्राणि कामश्चेद् ब्रह्महत्यां व्यपोहति । अर्द्धन्तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते । ७ । षड्भागाद्द्वादशश्चैव विट्शूद्रयोर्वधे भवेत् । त्रीन्मासान् नक्तं मश्नीयात् कृमोयजन मेव च । ८ । स्त्रीघाती शक्तिपावं चरेत्कृच्छ्राब्दमेव च । रजकः शैलूषश्चैव वेणुकर्म्मोपजीविनः । एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत् । ९ । सर्व्वान्त्यजानां गमने भोजने संप्रवेशने । पराकेण

विशुद्धिः स्याद्भगवानत्रिरब्रवीत् । १० । चाण्डालभाण्डे यत्तोयं पीत्वा चैव द्विजोत्तमः । गोमूत्रयावकाहारः सप्तविंशदहाच्छुचिः । ११ । संस्पृष्टं यस्तु पक्वान्नमन्त्यजैर्वाप्युदक्यया । अज्ञानाद्ब्राह्मणोऽश्नीयात् प्राजापत्यार्द्धमाचरेत् । १२ । चाण्डालान्नं यदा भुङ्क्ते चातुर्वर्ण्यस्य निष्कृतिः । चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् । १३ । षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च । त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुद्ध्यति । १४ । ब्राह्मणोऽत्र समायुक्तश्चाण्डालो मूलसंश्रयः । फलान्यत्तिस्थित स्तत्र प्रायश्चित्तं कथं भवेत् । १५ । ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । १६ । एकशाखासमारूढश्चाण्डालो ब्राह्मणो यदि । फलान्यत्तिस्थित स्तत्र प्रायश्चित्तं कथं भवेत् । १७ । त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । १८ । स्त्रियाम्लेच्छस्य सम्पर्काच्छुद्धिः सान्तपने तथा । तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषा विधीयते । १९ । संवर्त्ते तु यदा भार्य्या गत्वा म्लेच्छस्य सङ्गता । सचेलं स्नानमादाय घृतस्य प्राशनेन च । २० । स्नात्वा नद्युदके वापि एवं प्राप्य विशुद्ध्यति । संस्पृष्टा तामसैः पत्या अथ मन्त्रैरपि तथा पुनः । २१ । चाण्डालम्लेच्छसङ्गाच्च कपालव्रतधारिणः । अकामतः स्त्रियो गत्वा पराकेण विशुद्ध्यति । २२ । कामतस्तु प्रसूतो वा तत्समो नात्र संशयः । स एव पुरुषस्तत्र गर्भो भूत्वा प्रजायते । २३ । तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः । तैलाभ्यक्तो घृताभ्यक्तश्चाण्डालं स्पृशति द्विजः । २४ । अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति । २४ । शोषपीठलग्नेषु अस्थिकण्टकसेवने ! स्पृष्ट्वा नद्युदके स्नात्वा घृतं प्राश्य विशुद्ध्यति । २५ । मत्स्यास्थि जम्बुकास्थीनि नखशुक्ति कपर्दिकाः । स्पृष्ट्वा स्नात्वा हेमतप्तं घृतं पीत्वा विशुद्ध्यति । २६ । गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः । अमीमांस्यानि शौचानि स्त्रीणां च व्याधितस्य च । २७ । न स्त्री दुष्यति जारेण ब्राह्मणो वेदकर्म्मणा । नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्म्मणा ॥ २८ ॥ पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । भुञ्जते मानवाः पश्चान्नैता दुष्यन्ति कर्हिचित् ॥ २९ ॥ सोमः शौचं ददौ तासां गन्धर्व्वश्च शुभां गिरम् । पावकः सर्व्वमेध्यत्वं मेध्या वै योषितो ह्यतः ! ३० । स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता । बलान्नारी प्रभुक्ता वा चौरभुक्ता तथैव च ॥ ३१ ॥ न त्याज्या दूषिता नारी न कामोऽस्या विधीयते । ऋतुकाले उपासीत पुष्पकालेन शुद्ध्यति ॥ २२ ॥ रजकश्चर्म्मकारश्च नटो बुरुड एव च । कैवर्त्तमेद भिल्लाश्च सप्त ते चान्त्यजाः स्मृताः ॥ २३ ॥ एषां गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च । कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ २४ ॥ सकृद्भुक्ता तु या नारी म्लेच्छैर्वा पापकर्म्मभिः । प्राजापत्येन शुद्ध्येत ऋतुप्रस्रवणेन च ॥ २५ ॥ बलाद्धृता स्वयं वापि परप्रेरितया यदि ॥ सकृद्भुक्ता तु या नारी प्राजापत्येन शुद्ध्यति ॥ २६ ॥ अन्त्यजस्य तु ये वृक्षा बहुपुष्पफलोपगाः । उपभोग्यास्तु ते सर्व्वैः पुष्पेषु च फलेषु च ॥ २७ ॥ चाण्डालेनतु संस्पृष्टं यत्तोयं पिबति

द्विजः। कृच्छ्रपादेन शुध्येत आपस्तम्बोऽब्रवीन्मुनिः ॥ २८ ॥ श्लेष्मोपानहविण्मूत्र स्त्रीरजोमद्यमेव च।
एभिः संदूषिते कूपे तोयं पीत्वा कथं शुचिः ॥ २९ ॥ एकं द्व्यहं त्र्यहञ्चैव द्विजातीनां विशोधनम्। प्रायश्चि
त्तं पुनश्चैवनक्तं शूद्रस्य दापयेत् ॥ ३० ॥ सद्योवान्ते सचैलस्तु विप्रस्तु स्नानमाचरेत्। पर्युषिते त्वहोरात्रमति
रिक्ते दिनत्रयम् ॥ ३१ ॥ शिरःकण्ठोरुपादंश्च सुरया यस्तु लिप्यते। दशषट्चतुरेकाहं चरेदेवमनुक्रमात्
अत्रापुद्दाहरन्ति ॥ ३३ ॥ प्रमादान्मद्यपिष्टान्नं सकृत्पीत्वा द्विजोत्तमः। गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति
ज्यति ॥ ३४ ॥ मद्यपस्य निषादस्य यस्तु भुङ्क्ते द्विजोत्तमः। न देवाभुञ्जते तत्र न पिबन्ति च पितरो जलम् ॥ ३५ ॥
चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधिता। प्राजापत्येन शुध्येत ब्राह्मणान् भोजयेद्दश ॥ ३६ । ये च प्रव्र
जिता विप्राः प्रव्रज्याग्निजलावहाः। अनाशकान्निवर्त्तन्ते चिकीर्षन्ति गृहस्थितिम्। ३७ ॥ धारयेत् त्रीणि
कृच्छ्राणि चान्द्रायणमथापि वा। जातकर्म्मादिकं प्रोक्तं पुनः संस्कारमर्हति । ३८ । नाशौचं नोदकं नाश्रु
नोपवासात्तु कम्पते। ब्रह्मदण्डहतानान्तु न कार्यं कटधारणम् ॥ ३९ । स्नेहं कृत्वाभयादिभ्यो यस्त्वेतानि समा
चरेत्। गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ॥ ४० ॥ चाण्डालस्य च संस्पृष्टं विण्मूत्रस्पृष्टमेव वा। त्रि
रात्रेणविशुद्धिः स्याद्भुक्त्वोच्छिष्टं तथाचरेत्। ४१ ॥ उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च । प्रायश्चित्तं
चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः । ४२ ॥ वर्णवाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः। प्रतिजन्म भ
वेत्तेषां चिह्नं तत्पापसूचकम् ॥ प्रायश्चित्ते कृते याति पश्चात्पापवतां पुनः। १०७ ! महापातकजं चिह्नं
सप्तजन्मानि जायते। उपपापोद्भवं पञ्चत्रीणि पापसमुद्भवम् ॥१०८॥ रोगा दुष्कृतिजा नृणां शान्तिचोपक्रमैः
शमम ॥ जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ १*९ ॥ पूर्व्वजन्मकृतं पापं नरकस्य परिक्षये। बाधते व्या
धिरूपेण तस्य जप्यादिभिः शमः ॥ ११० ॥ कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा। मूत्रकृच्छ्राश्मरीकासा अती
सारभगन्दरौ ॥ १११ ॥ दुष्टव्रणो गण्डमाला पक्षाघातोऽक्षिनाशनम् ॥ इत्येवमादयो रोगा महापापोद्भवाः स्मृ
ताः ॥ ११२ ॥ जलोदरं यकृत्प्लीहा शूलरोगो व्रणास्तथा ॥ श्वासाजीर्णज्वरच्छर्द्दिर्भ्रममोहगलग्रहाः ॥ ११३ ॥
रक्तार्व्वुदविसर्पाद्या उपपापोद्भवा गदाः ॥ दण्डापतानकश्चित्रवपुःकम्पविचर्च्चिकाः ॥ ११४ ॥ वल्मीकपुण्डरीका
द्या रोगाः पापसमुद्भवाः ॥ अर्शआद्या नृणां रोगा अतिपापोद्भवन्ति हि ॥ ११५ ॥ अन्ये च बहवो रोगा जायन्ते वर्ण
सङ्कराः। उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात् ॥११६॥ महापापेषु सर्व्वं स्यात् तदर्द्धमुपपातके ॥ दद्यात्
पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ॥ ११७ ॥ अथ साधारणं तेषु गोदानादिषु कथ्यते ॥ गोदाने वत्ससंयुक्ता
गौः सुशीला च पयस्विनी ॥ ११८ ॥ वृषदाने शुभोऽनड्वान् शुक्लाम्बरः सकाञ्चनः ॥ निवर्त्तनानि भूदाने दश दद्या
द्विजातये ॥ ११९ ॥ दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्त्तनम ॥ दशतान्येव गोचर्म्म दत्वा स्वर्गे महीयते ॥ १२० ॥

सुवर्णं शतनिष्कन्तु तदर्द्धार्द्धं प्रमाणतः । अश्वदाने तु पूर्वस्य अश्वं सोपस्करं ददेत् ॥ १२१ ॥ महिषीं चापि गोदाने दद्यात् स्वर्णायुधान्विताम् दद्याद्गजं महादाने सुवर्णफलसंयुतम ॥ १२२ ॥ लक्षपञ्चाक्षरं पुण्यं प्रदद्याद्व्रतार्च्चने । दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ।१२३। रुद्रं जपेत् लक्षपुष्पैः पूजयित्वा त्र्यम्बकम । एकादशजपेद्रुद्रान् दशांशं गुग्गुलुघृतैः । १२४ । हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्वै वरुणदैवतैः । शान्तिकं गण शान्तिश्च ग्रहशान्तिक्रमपूर्व्वकम् । १२५ । धान्यदाने शुभं धान्यं खारीषष्टिमितं स्मृतम् । वस्त्रदाने पट्टवस्त्र द्वयं कर्पूरसंयुतम । १२६ । दशपञ्चाष्टचत्वारत्रयं वा द्विजान् शुभान् । विधायवे यावी पूजां संकल्प्य निजकामया । १२७ । धेनुं दद्याद्द्विजातिभ्यो दक्षिणाञ्चापि शक्तितः । अलङ्कृताय यथाशक्ति वस्त्रालङ्कारगं द्विजाय १२८ । यावेदुक्तप्रमाणेन प्रायश्चित्तं यथोदितम् । तेषामनुज्ञया कुर्य्यात्प्रायश्चित्तं यथाविधि । १२९ । पुनस्तान् परिपूर्णार्थान् स्वर्ये द्विधिवद्द्विजान् । सन्तुष्टाब्राह्मणा दद्युरनुज्ञां व्रतकारिणे । १३० । जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि । सर्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः । १३१ । ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः । सर्वदेवमया विप्रा न तद्वचनमन्यथा ।१३२। उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः । विप्रैः सम्पादितं सर्व्वं सम्पन्नं तस्य तत्फलम् । १३३ । सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः । प्रणम्य शिरसा धार्य्यं अग्निष्टोमफलं लभेत् । १३४ । ब्राह्मणा जङ्गमं तीर्थं निर्जलं सर्व्वकालिकम । तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः । १३५ । तेभ्योऽनुज्ञामभिप्राप्य प्रणम्य च तथाशिषः । भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः । १३६ । इति शातातपीये कर्म्मविपाके साधारणविधिर्नामप्रथमोऽध्यायः । १ । ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते । प्रायश्चित्तं प्रकुर्व्वीत स तत्पातकशान्तये । १ । चत्वारः कलशाः कार्य्याः पञ्चरत्नसमन्विताः । पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः । अश्वस्थानादि मृद्युक्तास्तीर्थोदकप्रपूरिताः । कषायपञ्चकोपेता नानाविधफलान्विताः । सर्व्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः । रौप्यमष्टपलं पद्मं मध्यकुम्भोपरि न्यसेत् । तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्मुखम् । पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्म्मितम् । अर्च्चयेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम् । यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि । पूर्व्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिणः । पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनैः ॥ दशांशेन ततो होमो ग्रहशान्तिपुरःसरम । मध्यकुम्भे विधातव्यो घृताक्तैस्तिलहेमभिः । द्वादशाहमिदं कर्म्म समाप्य द्विजपुङ्गवः । तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि । ततो दद्याद्यथाशक्ति गोभूहेमतिलादिकम । ब्राह्मणेभ्यस्तथा देयमाचार्य्याय निवेदयेत् । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः । प्रीताः सर्व्वे व्यपोहन्तु मम पापं सुदारुणम् । इत्युदीर्य्य च कर्भक्त्या तमाचार्य्यं क्षमापयेत् । एवं विधाने विहिते श्वेतकुष्ठी विशुद्ध्यति । १२ । १ । कुष्ठी गोवधकारी स्यान्नरकान्ते ऽन्त्यजनि

चत्वारि समधानाग्निघोत्मृजेत् ॥ ९ ॥ दुष्कापतानकयुतः शूद्रहन्ता भवेन्नरः । प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणां ॥ १० ॥ काष्ठणाश्च वधे चैव रूक्षभावः प्रजायते । स एतत्पापशुद्ध्यर्थं दातव्योऽश्वः सितः ॥ ११ ॥ सर्व्वकार्येषु सिद्धार्थो गजघाती भवेन्नरः । प्रासादं कारयित्वा तु गणेश प्रतिमां न्यसेत् । गणनाथस्य मन्त्रन्तु मन्त्रोऽलक्षमितं जपेत् । कुलाखमाकैः पुष्पैश्च गणशान्तिपुरःसरम ॥ १२ ॥ उष्ट्रे विनिहते चैव जायते विकृतस्वरः । स एतत्पाप विशुद्ध्यर्थं दद्यात्कर्पूरकं फलम् ॥ १३ ॥ अश्वे विनिहते चैव वक्रतुण्डः प्रजायते । शतं पलानि दद्याच्च चन्दनानां विशुद्धये ॥ १४ ॥ महिषीघातने चैव कृष्णगुल्फः प्रजायते । खरे विनिहते चैव खररोमा प्रजायते । निष्कत्रयस्य प्रकृतिं सम्यग्दद्याद्विशुद्धये ॥ १५ ॥ तरक्षौ निहते चैव जायते केकरेक्षणः । दद्याद्रत्नमयीं धेनुं स एतत्पातकशान्तये ॥ १६ ॥ शूकरे निहते चैव दन्तुरो जायते नरः । स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम ॥ १७ ॥ हरिणे निहते खञ्जः शृगाले तु विपादिकः । अश्वस्तेन प्रदातव्यः स्वर्णपलनिर्म्मितः ॥ १८ ॥ अजाभिघातने चैव अधिकाङ्गः प्रजायते । अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता ॥ १९ ॥ उरभ्रे निहते चैव पाण्डुरोगी प्रजायते । कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥ २० ॥ मार्ज्जारे निहते चैव पीतपाणिः प्रजायते । पारावतं ससौवर्णं प्रदद्यान्निष्कमात्रकम ॥ २१ ॥ शुकसारिकयोर्घाते नरः स्खलितवाग्भवेत् । सच्छास्त्र पुस्तकं दद्यात् स विप्राय सदक्षिणम ॥ २२ ॥ बकघाती दीर्घनासो दद्याद्गां धवलप्रभाम् ॥ २३ ॥ काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् ॥ २४ ॥ हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता । तदर्द्धार्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात् ॥ २५ ॥ इति शातातपीये कर्म्मविपाके हिंसाप्रायश्चित्तविधि र्द्वितीयोऽध्यायः ॥ * ॥ २ ॥ * ॥ सुरापः श्यावदन्तः स्यात् प्राजापत्यं चरेत्तथा । शर्करायास्तुलाः सप्त दद्यात् पापविशुद्धये । जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः । ततोऽभिषेकः कर्त्तव्यो मन्त्रैर्वरुणदैवतैः ॥ १ ॥ मद्यपो रक्तपित्ती स्यात् स दद्यात् सर्पिषो घटं । मधुनोऽर्द्ध घटं चैव सहिरण्यं विशुद्धये ॥ २ ॥ अभक्ष्यभक्षणे चैव जायते क्रिमिलोदरः । यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥ ३ ॥ उदक्यावीक्षितं भुक्त्वा जायते क्रिमिलोदरः । गोमूत्रयावकाहार स्त्रिरात्रेणैव शुध्यति ॥ ४ ॥ भुक्त्वा चास्पृश्यसंसृष्टं जायते क्रिमिलोदरः । त्रिरात्रं समुपोष्याथ स तत् पापात्प्रमुच्यते ॥ ५ ॥ परान्नविघ्नकरणाद जीर्णमयो जायते । लक्षहोमं स कुर्व्वीत प्रायश्चित्तं यथाविधि ॥ ६ ॥ मन्दोदराग्निर्भवति सतिक्तद्रव्यकदन्नदः । प्राजापत्यत्रयं कुर्याद्भोजयेच्च शतं द्विजान् ॥ ७ ॥ विषदः स्याच्छर्द्दिरोगी दद्याद्दश पयस्विनीः ॥ ८ ॥ मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत् । ९ । पिशुनो नरकस्यान्ते जायते श्वासकासवान् । घृतं तेन प्रदातव्यं सहस्रपलसम्मितम । १० । धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये । ब्रह्मकाष्ठम

पुरुषो जायते नीललोचनः। ब्राह्मणाय प्रदद्यात्तु महानीलमणिद्वयम। १८। कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते। देवतायतनं कार्य्यमुद्यानं तेन प्रत्यहम्। १९। सौगन्धिकस्याहरणाद्दुर्गन्धः प्रजायते। सततं मेघपुष्पाणां जुहुयाज्जातवेदसि। २०। दारुहारी च पुरुषः खिन्नपाणिः प्रजायते। प्रदद्याद्विप्रवर्य्याय काश्मीरजपलद्वयम। २१। विद्यापुस्तकहारी च किल मूकः प्रजायते। न्यायेतिहासं दद्यात्स ब्राह्मणाय सदक्षिणम। २२। वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात् प्रजापतिम। हेमनिर्मितमीशं वा वस्त्रयुग्मं द्विजातये। २३। ऊर्णाहारी लोमशः स्यात्स दद्यात् कम्बलान्वितम। स्वर्णनिर्म्मितं हेमवह्निं दद्याद्विजातये। २४। पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः। तेन धेनुः प्रदातव्या विशुद्ध्यर्थं द्विजन्मने। २५। औषधस्यापहरणे सूर्य्यावर्त्तः प्रजायते। सूर्य्यायार्घ्यः प्रदातव्यो माषं देयश्च काञ्चनम। २६। रक्तवस्त्रप्रवालादिहारी स्याद्वातरक्तवान्। सवस्त्रां महिषीं दद्यान्माणिक्यरागसमन्विताम। २७। विप्ररत्नापहारी चाप्यनपत्यः प्रजायते। तेन कार्य्यं विशुद्ध्यर्थं महारुद्रजपादिकम्। कृतवत्सोदितः सर्व्वो विधिरत्र विधीयते। दशांशहोमः कर्त्तव्यः पलाशेन यथाविधि। २८। देवस्वहरणाच्चैव जायते विविधज्वरः। ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च। ज्वरे रौद्रं जपेत् कर्णं महारुद्रं महाज्वरे। अतिरौद्रं जपेद्रुद्रं [illegible] जपेत्। २९। नानाविधद्रव्यचौरो जायते ग्रहणीगदी। तेनान्नोदकवस्त्राणि हेमदेयं च शक्तितः। ३०। इति शातातपीये कर्म्मविपाके स्तेयप्रायश्चित्तं नाम चतुर्थोऽध्यायः। ४। मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति। चाण्डालीगमने चैव हीनकोषः प्रजायते। तस्याप्रतिक्रियां कर्त्तुं कुम्भं कुर्य्यान्निसेत्। कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम्। तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम। सुवर्णनिष्कपट्टेन निर्म्मितं नरवाहनम। यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम। अथर्व्ववेदविद्विप्रो ह्याथर्व्वणं समाचरेत्। सुवर्णपुत्रिकां कृत्वा निष्कविंशति सङ्ख्यया। दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्। । निधीनामधिपो देवः शङ्करस्य प्रियः सखा। सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु। इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि। दद्याद्देवं हीनकोषलिङ्गनाशे विशुद्धये। १॥ गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते। तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्म्मणा। स्थापयेत् कुम्भमेकन्तु पश्चिमायां घटं दिने। नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम। तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम्। सुवर्णनिष्कपट्टेन निर्म्मितं यादसां पतिम। यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम। सामवित्सामगस्तत्र सामवेदं समाचरेत्। सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया। दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्। यादसामधिपो देवो विश्वेषां पयसां पतिः। संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे। इमं मन्त्रं समुच्चार्य्य [illegible] यथाविधि। दद्याद्देवं मलघ्नं तां मूत्रकृच्छ्रप्रशान्तये। २।

स्वसुतागमने चैव रक्तकुष्ठं प्रजायते । भगिनीगमने चैव पीतकुष्ठं प्रजायते । तस्य प्रतिक्रियां कर्त्तुं पूर्व्वतः कलसं न्यसेत् । पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम् । तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम् । सुवर्णनिष्कषट्केन निर्म्मितं वज्रधारिणम् । यजेत् पुरुषसूक्तेन वासवं विश्वरूपिणम् । यजुर्वेदं ततः सामऋग्वेदञ्च समाचरेत् । सुवर्णपुत्रिकां कृत्वा सुवर्णदशकेन च । दद्याद्द्विजाय सम्पूज्य निष्पापोऽहमिति ब्रुवन् । देवानामधिपो देवो वज्री विष्णुनिकेतनः । शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु । इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि । दद्याद्वत्सं सहस्राक्षः सपापस्यापनुत्तये । २ । भ्रातृभार्य्याभिगमनाद्गलत्कुष्ठं प्रजायते । स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते । तेन कार्य्यं विशुद्ध्यर्थं प्रागुक्तस्यार्द्धमेव हि । दशांशहोमः सर्व्वत्र सताम्रैः क्रियते तिलैः ४ ॥ सुतगमाभिगमनाज्जायते ध्रुवमण्डलम् । कृत्वा लोहमयीं धेनुं तिलषष्टि प्रमाणतः । कार्पासभारसंयुक्तां कांस्यदोहां सवत्सकाम् । दद्याद्द्विजाय विधिवदिमं मन्त्रमुदीरयन् । सुरभिर्वैष्णवी माता मम पापं व्यपोहतु ।५। तपस्विनीसङ्गमने जायते चाश्मरीगदः । तत्पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ दद्याद्द्विजाय विप्राय मधुधेनुं यथोचिताम् । तिलद्रोणशतञ्चैव हिरण्येन समन्वितम् ।६। पितृस्वस्रभिगमनाद्दक्षिणांशव्रणी भवेत् । तेनापि निष्कृतिः कार्य्या अजादानेन भक्तितः ।७। मातुलान्यां तु गमने पृष्ठकुब्जः प्रजायते । कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् ॥ ८ ॥ मातृस्वस्रभिगमने वामाङ्गे व्रणवान् भवेत् ॥ तेनापि निष्कृतिः कार्य्या सम्यग्दासप्रदानतः । ९ । मृतभार्य्याभिगमने मृतभार्य्यः प्रजायते । तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥१०॥ सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी ॥ तेनापि निष्कृतिः कार्य्या महिषीदानतस्तथा ।११। तपस्विनीप्रसङ्गेन प्रमेही जायते नरः । मासं रुद्रजपः कार्य्यो दद्याच्छक्त्या च काञ्चनम् ॥१२॥ दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक् । स पातकविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ।१३। स्वजातिजायागमने जायते हृदयव्रणी ॥ तत्पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥१४॥ पशुयोनौ च गमने मूत्राघातः प्रजायते ॥ तिलपात्रद्वयञ्चैव दद्यादात्मविशुद्धये ॥१५॥ अश्वयोनौ च गमनाद् गुदस्तम्भः प्रजायते ॥ सहस्रकलसस्नानं मासं कुर्य्याच्छिवस्य च ॥१६॥ एते दोषा नराणां स्युर्नरकान्ते न संशयः । स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात् ॥ १७ ॥ इति ॥ * ॥ इति शातातपीये कर्म्मविपाके अगम्यागमनप्रायश्चित्तं नाम पञ्चमोऽध्यायः ॥ * ॥ ५ ॥ * ॥ ये एते रोगाः पूर्व्वजन्मकृत * कर्म्मजाः उक्तास्ते च वातादिदोष * कृता अपि भवन्तीति ।१। तत्र दोषकृता यथोक्तैः न सम्यक् * चिकित्सया प्रशाम्यन्ति * कर्म्मप्राधान्यात् तेषां तत्र प्राय * श्चित्तं तत्तच्चिकित्सितम् । २ । ये च सम्यक् चिकित्सया * न प्रशाम्यन्ति कर्म्मप्राधान्यात् तेषां * उक्तमिदं प्रायश्चित्तं * कर्त्तव्यमिति विशेषं । ३ । चकारेणोक्तं यथा * क्रियाघ्नाः कर्म्मजा रोगाः प्रशमं यान्ति तत् क्षयात् । इति ॥ ४ ॥ * ॥ यमेन च यदुक्तं तदुपदर्श्यते * प्रायश्चित्ते त्वपक्रान्ते कर्त्तार्य्यदि विपद्यते । पूतस्तदहरेवापि इहलोके परत्र च ।१।

गोमूत्रमित्यादि। २१२। गवां मूत्रपुरीषक्षीरदधिसर्पींषीतिपञ्चगव्यानिक्रमो* दकञ्चेतिसर्व्वमेकीकृत्य पूर्व्वदिनं पीत्वैकरात्र * मुपवास इति सान्तपनं कृच्छ्रं ।१। इति गोमूत्रादि कमेकैकं *क्रमेणैकैकमेकम्मिन्नह्नि* पिबेत् सप्तमे ऽहन्युपवसे दिति * महासान्तपनविधिः। २। उक्तञ्चयाज्ञवल्क्येन * पृथक् सान्तपनद्रव्यैः षडहःसोपवासकः। सप्ताहेनतु कृच्छ्रोऽयं महासान्तपनःस्मृतः। २१२। अतिकृच्छ्रमाह।

एकैकं ग्रासमश्नीयात्त्र्यहाणित्रीणिपूर्व्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन्द्विजः॥२१३

एकैकमित्यादि॥२१३॥ द्विजएवाति कृच्छ्रं चरन्पूर्व्ववत् * दिनत्रयं प्रातरेकैकं ग्रासमश्नीयात् त्र्यहाणि * सायमेकैकं ग्रासमश्नीयादथ। १। त्र्यहाणि याचितमेकैकं ग्रास * मश्नीयादिति एवं त्राणित्र्यहाणि * कृत्वान्त्यंत्र्यहमुपवसेदिति॥२१३॥

तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायीसमाहितः॥२१४

तप्तकृच्छ्रमित्यादि॥२१४॥ विप्रोविप्रादिर्द्विजस्तप्तकृच्छ्रं * चरन्सकृत्स्नायीसमाहितःसन् *प्रतित्र्यहं त्र्यहं त्र्यहमुष्णान्जल * क्षीरघृतानिलान् पिबेन्नान्यत्। १। अत्रिसंहितायामुक्तं * त्र्यहमुष्णं पिबेदाप स्त्र्यहमुष्णं पिबेत्पयः * त्र्यहमुष्णं घृतं पीत्वा * वायुभक्षोदिनत्रयम्। २। षट्पलानपिबेदाप स्त्रिपलन्तुपयः पिबेत्। पलमेकन्तु वै सर्पि स्तप्तकृच्छ्रं विधीयते। ३। अत्रपरामर्षेऽपि प्राणिनां * बधमधिकृत्य सान्तपनादिषु * गोदानं गोमूल्यदानञ्चोक्तं तथा * पानाल्पापित्वद्विधेयं वेदितव्यं। ४। तद्यथा॥ पञ्च सान्तपने गावः प्राजापत्ये तथात्रयः। तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश॥ ४॥ प्रमापणे प्राणभृतां दद्यात्तत् प्रतिरूपिकाः। तस्यानुरूपं मूल्यं वादद्यादित्यब्रवीन्मनुः॥ इति॥२१४॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनं। पराकोनामकृच्छ्रोऽयं सर्व्वपापापनोदनः॥२१५॥

यतात्मानइत्यादि॥२१५॥ यतात्मनोद्विजस्याप्रमत्तस्य * द्वादशाहमभोजनं * सर्व्वपापापनोदनः * पराकोनामायं कृच्छ्रः॥२१५॥ अत्रापिव्योक्तामपराणि कृच्छ्राणि * यानत्रानिभवन्तिता * न्यायात्र प्रदर्श्यन्ते। १। दध्नाचत्रिदिनं भुङ्क्ते त्र्यहंभुङ्क्ते च सर्पिषा। क्षीरेणतु त्र्यहंभुङ्क्ते वायुभक्षोदिनत्रयम्।२। त्रिपलन्तुदधिक्षीरं पलमेकन्तुसर्पिषः। एतदेवव्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते॥ ३॥ कृच्छ्रातिकृच्छ्रः

चान्द्रायणं स्मृतम् । इति । याज्ञवल्क्येनाप्युक्तं यथा* तिथिवृद्ध्याचरेत्पिण्डान्शुक्ले शिख्यण्डसम्मितान् । एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन् । ८ । अथ गौतमसंहितायामष्टाविंशाध्याये* अथातश्चान्द्रायणं * तस्योक्तो विधिः कृच्छ्रे *वपनं व्रतञ्चेत्श्वोभूतां *पौर्णमासीमुपवसेत् । १ । आप्यायस्व सन्ते पयांसि* नवो नव इति चैताभिः* तर्पणमाज्यहोमो हविः *षश्चानुमन्त्रणमुपस्थानं । २ । चन्द्रमसो यद्देवा देवहेलन* मिति चैताभिराज्यं जुहुयात् *देवकृतस्येति चान्ते समिद्भिः । ३। ओंभूर्भुवः स्वस्तपः सत्यं *यशः श्रीरूर्ग्गिरौज* स्तेजः पुरुषो धर्म्मः शिवः शिवः ४ । इत्येतैर्ग्रासानुमन्त्रणं *प्रतिमन्त्रं मनसा नमः *स्वाहेति सर्व्वं ग्रास* प्रमाणमास्याविकारेण । ५ । चरुभैक्ष्यसक्तुकण* यावकशाकपयोदधिघृत* मूलफलोदकानि* हवींषुत्तरोत्तराणि प्रशस्तानि । ६ । पौर्णमास्यां पञ्चदश* ग्रासान्भुक्त्वैकापचयेनापरपक्षमश्नीयादमा* वास्यायामुपोष्यैकोप* चयेन पूर्व्वपक्षं * विपरीतमेकेषाम् ७ । एवं चान्द्रायणो मासो* मासमाप्त्वा विपापो* विपाप्मा सर्व्वमेनो हन्ति । ८ । द्वितीयमाप्त्वा दशपूर्व्वान्* दशावरानात्मानञ्चैकविंशं* पङ्क्तिञ्च पुनाति । ९ । संवत्सरञ्चाप्त्वा चन्द्रमसः सलो* कतामाप्नोत्याप्नोति । १० ।
२१७ । नामान्तरेण प्रकारान्तरमाह ।

**अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते । नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥ २१८ ॥**

अष्टावष्टावित्यादि । १ । २१८ । मध्यन्दिने स्थिते नियतात्मा द्विजो * यतिचान्द्रायणं चरन् मासमेकं* शुक्लप्रतिपत्तिथ्यावारभ्य हविष्याशी सन् प्रतिदिनमष्टा* वष्टौ पिण्डानश्नीयात् । १। २१८ ।

**चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः । चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम् ॥ २१९ ॥**

चतुर इत्यादि । २१९ । विप्रो विप्रादिर्द्विजः समाहितः सन्* शुक्लप्रतिपत्तिथ्यावारभ्य प्रातर्मध्यन्दिने चतुरः पिण्डा* नश्नीयादस्तमिते सूर्य्ये *चतुरः पिण्डानेवं मासमदयादिति* शिशुचान्द्रायणं स्मृतम । १ । २१९ ।

**यथाकथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः । मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम् ॥ २२० ॥**

यथाकथञ्चिदित्यादि । २२० । समाहितो द्विजो यथा* कथञ्चित्प्रकारेणैव * हविष्यस्य तिस्रोऽशीतीः* पिण्डानां मासेनाश्नन्स* श्चरितचान्द्रायणः स *चन्द्रस्य सलोकतामेति । १ । याज्ञवल्क्येन चोक्तं यथा* यथाकथञ्चित्पिण्डानां *चत्वारिंशच्छतद्वयं । मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् । २ । कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा । पवित्राणि जपेत्पिण्डान्गायत्र्या चाभिमन्त्रयेत् । ३ । अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामिति । ४ । २२० । अत्रपुराकल्पमाह ।

एतद्रुद्रास्तथादित्यावसवश्चाचरन्व्रतम्। सर्व्वाकुशलमोक्षायमरुतश्चमहर्षिभिः॥ २२१॥

एतदित्यादि १।२२१ एतच्चान्द्रायणं व्रतं*सर्व्वाऽकुशलमोक्षाय* रुद्राश्चादित्यावसवो*मरुतश्चमहर्षिभिः सहाचरन्। १। २२१। अथसर्व्वकृच्छ्रे यत्कर्त्तव्यं तद्‌*दाह।

महाव्याहृतिभिर्होमःकर्त्तव्यःस्वयमन्वहम्। अहिंसासत्यमक्रोधमार्जवञ्चसमाचरेत्॥२२२

महेत्यादिभिश्चतुर्भिः श्लोकैः ।२२। प्राजापत्यादिव्रतमाचरता स्वयं*मन्वहं महाव्याहृतिभिर्होमः*कर्त्तव्यः सत्यं हिंसां सत्यमक्रोध*मार्जवञ्चनितामं तसमाचरेत्। १। २२२।

त्रिरह्नस्त्रिर्निशायाञ्चसवासाजलमाविशेत्। स्त्रीशूद्रपतितांश्चैवनाभिभाषेतकर्हिचित्॥२२३॥

त्रिरह्नः। २२३। अह्नस्त्रिर्निशायां त्रिरिति पट*वस्त्रःसवासाजलमाविशेत्तथा* कर्हिचित्स्त्रीशूद्रादीन्नाभिभाषेत। १। २२३।

स्थानासनाभ्यांविहरेदशक्तोऽधःशयीतवा। ब्रह्मचारीव्रतीचस्याद्गुरुदेवद्विजार्चकः॥२२४

स्थानासनाभ्यामित्यादि। २२४। व्रतीद्विजोब्रह्मचारी* गुरुदेवद्विजार्चकः*सन्कचित्स्थानं कचिदासनमितो*ताभ्यां विहरेत्तत्राशक्तः*क्ष्मा चरऽधःशयीतेति॥ १॥ २२४॥

सावित्रीञ्चजपेन्नित्यंपवित्राणिचशक्तितः। सर्व्वेष्वेवव्रतेष्वेवंप्रायश्चित्तार्थमादृतः॥२२५॥

सावित्रीञ्चेत्यादि। २२५। सव्रतीनित्यं शक्तितः*सावित्रीं पवित्राणिचनित्यं जपेत्*एवं विधःप्रायश्चित्तार्थं सर्व्वे*ष्वेव व्रतेष्वादृतःस्यात्। १। २२५।

एतैर्द्विजातयःशोध्याव्रतैराविष्कृतैनसः। अनाविष्कृतपापांश्चमन्त्रैर्होमैश्चशोधयेत्॥२२६॥

एतैरित्यादि। २२६। आविष्कृतैनसो लोकैर्विख्यात*पापाद्विजातयएतैः*प्राजापत्यादिभिर्व्रतैः*शोध्या भवन्ति। १। अनाविष्कृतपापांस्तुद्विजान्राजा*मन्त्रैर्होमैश्चशोधयेत्। २। २२६।

ख्यापनेनानुतापेनतपसाध्ययनेनच। पापकृन्मुच्यतेपापात्तथादानेनचापदि॥ २२७॥

ख्यापनेनेत्यादि।२२७।योयत्पापं करोतिस*तत्पापमिदंमयाकृतमिति लोकान्ख्यापयित्वा यदि*ख्यापयतिसपापकृत्तेन ख्यापनेनतस्मात्पापान्मुच्यते १। पापकृत्पापंकृत्वाऽनुतापेन*तस्मात्पापान्मुच्यते तथातपसा*वेदस्याध्ययनेनतथाऽऽपदि*दानेनतस्मात्पापान्मुच्यतेइति। २। २२७।

यथायथानरोऽधर्म्मंस्वयंकृत्वानुभाषते। तथातथात्वचेवाहिस्तेनाधर्म्मेणमुच्यते॥ २२८॥

यथायथेत्यादि। २२८। नरोयथायथाधर्म्मं कृत्वा*पश्चादनुभाषते तथातथैव तेना*धर्म्मेणाहिरिवत्वचा मुच्यते। १। २२८।

यथायथामनस्तस्यदुष्कृतंकर्म्मगर्हति। तथातथाशरीरंतत्तेनाधर्म्मेणमुच्यते ॥ २२९ ॥

यथायथेत्यादि। २२९। तस्यपापकारिणोनरस्यमनः * स्वकृतंदुष्कृतंकर्म्मयथायथा * गर्हतितथातथात च्छरीरंतेन * स्वकृतेनाधर्म्मेणखलुमुच्यते। १। २२९।

कृत्वापापंहिसन्तप्यतस्मात्पापात्प्रमुच्यते। नैवंकुर्य्यांपुनरितिनिवृत्त्यापूयतेतुसः॥२३०॥

कृत्वेत्यादि। २३०। यःपापंकृत्वासन्तप्य * तस्मात्पापात् मुच्यते * यःपापंकृत्वापुनर्नैवंकुर्य्यां * मितिनिवर्त्ततेतथा * निवृत्त्यासपूयतेइति ॥ २३० ॥

एवंसञ्चिन्त्यमनसाप्रेत्यकर्म्मफलोदयं। मनोवाङ्मूर्त्तिभिर्नित्यंशुभंकर्म्मसमाचरेत्२३१

एवमित्यादि। २३१। प्रेत्यपरलोकेफलोदयंकर्म्म मनसापुमानेवंसञ्चिन्त्य * मनोवाङ्मूर्त्तिभिःशुभं * कर्म्मनित्यंसमाचरेत्। २३१।

अज्ञानाद्यदिवाज्ञानात्कृत्वाकर्म्मविगर्हितम्। तस्माद्विमुक्तिमन्विच्छन्द्वितीयंनसमाचरेत् ॥ २३२ ॥

अज्ञानादित्यादि ॥ २३२ ॥ पुमान्गर्हितंकर्म्मयद्यज्ञाना * द्यदिवाज्ञानात् कृत्वातस्मात्पापा * द्विमुक्ति मन्विच्छतितदा द्वितीयं * पुनस्तद्गर्हितं कर्म्मनसमाचरेत् ॥ २३२ ॥

यस्मिन्कर्म्मण्यस्यकृतेमनसःस्यादलाघवम्। तस्मिंस्तावत्तपःकुर्य्याद्यावत्तुष्टिकरंभवेत्२३३

यस्मिन्नित्यादि ॥ २३३ ॥ यस्मिन् कर्म्मणिकृते सति * जनस्यास्यमनसोऽलाघवं * गुरुतास्यात्तस्मिन् मनो गौरवे * तावत्तपःकुर्य्याद्यावत् * तत्तपस्तुष्टिकरंस्यात् ॥ २३३ ॥

तपोमूलमिदंसर्व्वंदैवमानुषकंसुखम्। तपोमध्यंबुधैःप्रोक्तंतपोऽन्तंवेददर्शिभिः॥२३४॥

तपइत्यादि। २३४। इदंदैवंसुखंमानुषकञ्चैहिकंयत् * सुखंसर्व्वंतपोमूलं * तपोमध्यं तपोऽन्तञ्च * वेददर्शिभिर्बुधैःप्रोक्तं ॥ २३४ ॥

ब्राह्मणस्यतपोज्ञानंतपःक्षत्रस्यरक्षणम्। वैश्यस्यतुतपोवार्त्तातपःशूद्रस्यसेवनम्॥२३५॥

ब्राह्मणस्येत्यादि ॥ २३५ ॥ ब्राह्मणस्यतपःसर्व्व * भावानांतत्त्वेनज्ञानं * कार्य्याकार्य्यविज्ञानञ्च। १। क्षत्रस्यधर्म्मेणप्रजानांरक्षणं * तपोवैश्यस्यतुवार्त्तावाणिज्यं * तपःशूद्रस्यविप्रसेवनंतपः ॥ २३५ ॥

ऋषयः संयतात्मानः फलमूलानिलाशनाः । तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥२३६॥

ऋषय इत्यादि ॥ २३६ ॥ संयतात्मानः फलमूलानिला * शना ऋषयस्तपसैव सच * राचरं त्रैलोक्यं हि प्रपश्यन्ति ॥ २३६ ॥

औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिद्ध्यन्ति तपस्तेषां हि साधनम् २३७

औषधानीत्यादि ॥ २३७ ॥ तपसैवौषधानि अगदश्च * विद्या च दैवी च विविधा स्थितिः * प्रसिद्ध्यन्ति हि यस्मात् तेषां सर्व्वेषामौषधादीनां * साधनं तपो भवति ॥ २३७ ॥

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् । सर्व्वन्तु तपसा साध्यं तपो हि दुरतिक्रमम् ॥२३८॥

यद्दुस्तरमित्यादि ॥ २३८ ॥ दुस्तरादिकं सर्व्वं तपसा साध्यं भवति* यतो दुरतिक्रमं तपः ॥ २३८ ॥

महापातकिनश्चैव शेषाश्चाकार्य्यकारिणः । तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ २३९॥

महेत्यादि ॥ २३९ ॥ एते ब्रह्महत्यादिमहापातकि * जना अन्ये चाकार्य्यकारिणश्च * पातकादयश्च सुत प्तेन तपसा * तत्किल्बिषान्मुच्यन्ते ॥ २३९ ॥

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च । स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥ २४० ॥

कीटाश्चेत्यादि ॥ २४० ॥ कीटादयोपि * तपोबला * द्दिवं स्वर्ग * * लोकं यान्ति । २४० ॥

यत्किञ्चिदेनः कुर्व्वन्ति मनोवाङ्मूर्त्तिभिर्जनाः । तत्सर्व्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥ २४१ ॥

यत्किञ्चिदित्यादि ॥२४१॥ तपोधनाये जना मनोवाङ्मूर्त्तिभि* र्यत्किञ्चित्पापं कुर्व्वन्ति * तपोधनास्ते तत् सर्व्वं * पापं तपसैवाशु दहन्ति ॥ २४१ ॥

तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः । इज्याश्च प्रतिगृह्णन्ति कामान् संवर्द्धयन्ति च ॥२४२ ॥

तपसैवेत्यादि ॥ २४२ ॥ ब्राह्मणस्य तपसैव विशुद्धस्य * इज्या यज्ञान् दिवौकसः * प्रतिगृह्णन्ति प्राप्य * कामान् संवर्द्धयन्तीति ॥ २४२ ॥

प्रजापतिरिदं शास्त्रं तपसैवासृजत् प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४३ ॥

प्रजापतिरित्यादि ॥ २४३ ॥ प्रभुः प्रजापतिर्ब्रह्मा * तपसैवेदं शास्त्रमसृजत् तथा *वेदानृषयस्तपसा* सर्व्वं प्रतिपेदिरे ॥ २४३ ॥

इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते । सर्व्वस्यास्य प्रपश्यन्तस्तपसः पुण्यमुत्तमम् ॥२४४॥

इत्येतदित्यादि ॥ २४४ ॥ अस्यासर्व्वस्य पुण्यस्य व्रतमुत्तमं * पुण्यं तपसो जातं प्रपश्यन्तो देवा इत्येतद्वचनं * मत्वा कं महाभाग्यस्य * तत्तपसोऽभूदिति प्रवक्ष्यते । १ । ॥ २४४ ॥

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि ॥२४५॥

वेदाभ्यास इत्यादि ॥ २४५ ॥ यथाशक्त्याऽन्वहं वेदाभ्यासो महा * यज्ञानां पञ्चानां क्रिया * क्षमा चेत्येतानि महा * पातककर्म्मब्रह्महत्यादिजानि । १ । महापापान्यपान्यानि पापानि * सर्व्वाण्याशु नाशयन्ति ॥ २४५ ॥

यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं सर्व्वं दहति वेदवित् ॥२४६॥

यथैध इत्यादि । २४६ । यथा वह्निस्तेजसैधः * प्राप्तं क्षणान्निर्दहति * तथा वेदवित् सर्व्वं पापं * ज्ञानाग्निना दहति । २४६ ।

इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि । अत ऊर्द्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥२४७॥

उपसंहरतीत्येतदित्यादि । २४७ । मया यथाविध्येनसां * प्रायश्चित्तमित्येतदुक्तम् * अत ऊर्द्ध्वं रहस्यानां * अप्रकाशितानामेनसां * प्रायश्चित्तं निबोधत । २४७ ।

सव्याहृतिप्रणवकाः प्राणायामास्तु षोड़श । अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥२४८॥

सव्याहृतीत्यादि । २४८ । सव्याहृतिप्रणवका इति सप्तव्याहृतिसहितं * ब्रह्मशिरः मत्येकं सप्रणवं * मित्येतन्मन्त्रं पठन्नसौ * वायोः पूरणं । १ । कुम्भकं रेचनं चकुर्य्यात् * इति प्राणायाम उक्तः * तथाविधस्तु षोड़श * प्राणायामा नित्यं कृताः । २ । मासाद्भ्रूणहनमपि ब्रह्मघ्नं * मनो च पापिनं पुनन्ति । २४८ ।

कौत्सं जप्त्वाप इत्येतद्वासिष्ठञ्च प्रतीत्यृचम् । माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति ॥२४९॥

अपरञ्चाह कौत्समित्यादि । २४९ । कौत्सं कुत्सेन दृष्टं * अपनः शोशुचदघ * मित्येतत् सूक्तं वासिष्ठं * वसिष्ठेन दृष्टम् * प्रतिस्तोमेभिरुषसं वसिष्ठाः । १ । इत्येतदृचं माहित्रं * महित्रीणामवोऽस्त्वित्येतत् सूक्तं * शुद्धवत्यश्चेति शुद्धवत्य एता * इन्द्रं स्तवाम इति । २ । एतस्यऋचो मासमहरहः * षोड़शकृत्वो जपित्वा * सुरापोऽन्यपापश्च विशुद्ध्यति । २४९ ।

सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च । अपहृत्य सुवर्णन्तु क्षणाद्भवति निर्म्मलः ॥२५०॥

सकृदित्यादि । २५० । ब्राह्मणस्य सुवर्णमपहृत्यासौ * वामीयमस्य वामस्य पलितस्य * इत्येतत् सूक्तं शिवसङ्कल्पश्चैतत् । १ । वाजसनेयशाखायां पठितं * तं यज्ञायतो दूरमित्येतत् * मासमहरहः सकृज्जप्त्वा क्षणान्निर्म्मलः स्यात् । २ । २५० ।

अरण्ये वेत्यादि । २५८ । द्विजः प्रयतः सन् अरण्ये वा त्रिः संहिताः शाखामेकां विरभ्यस्य * सर्व्वैः पातकैर्विमुच्यते ॥ १ ॥ त्रिभिः पराकैः शोधितः सन् द्विजः * सर्व्वैः पातकैः प्रमुच्यते ॥ २ ॥ २५८ ॥

त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाघमर्षणम् ॥२५९॥

त्र्यहन्त्वित्यादि ।२५९। युक्तः सन् द्विजः एकस्मात् त्रिस्त्रीन् * वारान् अपोऽभ्युपयन् उपगच्छन् स्नानं कुर्व्वन् * अघमर्षणं त्रिर्जपित्वा त्र्यहं * उपवसेत् स सर्व्वैः पापैः प्रमुच्यते ॥ १ ॥ २५९ ॥

यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः । तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥ २६० ॥

यथाश्वमेधेत्यादि ॥२६०॥ यथा क्रतुराड् अश्वमेधः * सर्व्वपापापनोदनः स्यात् तथा अघमर्षणं सूक्तन्तु * सर्व्वपापापनोदनं स्यात् ॥ १ ॥ २६० ॥

हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः । ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन ॥२६१॥

हत्वेत्यादि ॥ २६१ ॥ विप्र इमांस्त्रीन् अपि लोकान् हत्वा * यतस्ततोऽपि अश्नन् ऋग्वेदं धारयन् * किञ्चनापि एनः पापं न प्राप्नोति । १ । २६१ ।

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यानां सर्व्वपापैः प्रमुच्यते ॥२६२॥

ऋक्संहितामित्यादि ॥ २६२ ॥ विप्रः समाहितः सन् ऋक्संहितां * त्रिरभ्यस्य यजुषां संहितां वा * त्रिरभ्यस्य सरहस्यानां साम्नां वा * संहितां त्रिरभ्यस्य सर्व्वपापैः प्रमुच्यते । १ । २६२ ।

यथा महाह्रदं प्राप्य क्षिप्तं लोष्ट्रं विनश्यति । तथा दुश्चरितं सर्व्वं वेदे त्रिवृति मज्जति ॥२६३॥

यथेत्यादि । २६३ । यथा लोष्ट्रं महाह्रदं * प्राप्य विनश्यति तथा * दुश्चरितं सर्व्वं पापं * त्रिवृति वेदे मज्जति । १ । २६३ । कीदृशः पुनः स त्रिवृद्वेदः स्यादित्यत आह।

ऋचो यजूंषि चान्यानि सामानि विविधानि च । एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२६४॥

ऋच इत्यादि । १ । २६४ । ऋचः यजूंषि च सामानि च * विविधानि अन्यानि सरहस्यानि च * त्रिवृद्वेदः एनं त्रिवृद्वेदं * वेद स वेदवित् इति नियम । १ । २६४ ।

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥२६५॥

आद्यमित्यादि । २६५ । सर्व्ववेदानामाद्यं * त्र्यक्षरं ब्रह्म ॐकारः * ब्रह्मवाचकत्वात् सामवायीवेदः * त्रयी यस्मिन् द्विजे * प्रतिष्ठिता भवति । १ । स ओङ्कारोऽस्य * गुह्यः त्रिवृद्वेदः * यं योऽर्थतो वेद * स द्विजो वेदवित् । २ । २६५ ।

॥*॥*॥ इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * मेकादशोऽध्यायः ॥१॥*॥११॥*॥

इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * मेकादशेऽध्याये । १ । तेदरा गङ्गाधर राय कविरत्न * कृतायां प्रमादभञ्जन्या * मेकादशाध्यायप्रमादभञ्जनी । * । * । * ।

अथोद्देशक्रमात् प्रायश्चित्तात्परं * कर्म्मसम्भवं त्रिविधं * संसारागमनमाह ॥ १ ॥ तत्रऋषीणां प्रश्नः ॥

**ऋषयऊचुः ॥ चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तोधर्म्मस्त्वयाऽनघ । कर्म्मणांफलनिर्वृत्तिं शंसनस्तत्त्वतःपराम ॥ १ ॥**

ऋषयऊचुः * चातुर्वर्ण्यस्येत्यादि ॥ २ ॥ १ ॥ भोअनघमहर्षे भगोत्वया * चातुर्वर्ण्यस्यायं कृत्स्नो * धर्म्मउक्तः कर्म्मणां परां फलं * निर्वृत्तिं तत्त्वतोनःशंस ॥ १ ॥ १ ॥ एवंपृष्टः ॥

**सतानुवाचधर्म्मात्मामहर्षीन्मानवोभृगुः । अस्यसर्व्वस्यशृणुतकर्म्मयोगस्यनिर्णयम् ॥२॥**

सतानित्यादि ॥ २ ॥ महर्षिभिरेवंपृष्टःसधर्म्मात्मा * मानवोभृगुस्तान् * महर्षीनुवाच । १ । भोमहर्षयःसर्व्वस्यास्यकर्म्म * योगस्यनिर्णयंशृणुत ॥ २ ॥ २ ॥

**शुभाशुभफलंकर्म्म मनोवाग्देहसम्भवम् । कर्म्मजागतयोनॄणामुत्तमाधममध्यमाः ॥ ३ ॥**

शुभाशुभेत्यादि ॥ ३ ॥ मनोवाग्देहसम्भवं * कर्म्मशुभाशुभफलं * नॄणामुत्तमाधममध्यमास्त्रिधा * गतयः कर्म्मजाभवन्ति ॥ ३ ॥

**तस्येहत्रिविधस्यापित्र्यधिष्ठानस्यदेहिनः । दशलक्षणयुक्तस्यमनोविद्यात्प्रवर्त्तकम् ॥ ४ ॥**

तस्येहेत्यादि ॥ ४ ॥ देहिनस्त्र्यधिष्ठानस्य * मनोऽधिष्ठानस्यवागधिष्ठानस्य * देहाधिष्ठानस्यचेति ।१। त्रिविधस्येतस्यदश * लक्षणयुक्तस्यशुभाशुभ * फलस्यकर्म्मणःखलु * प्रवर्त्तकंमनोविद्यात् । २ । मनःशब्देनेह बुद्धिरुच्यते * तात्स्थ्यान्नहिमनोमनः * कर्म्मणःप्रवर्त्तकंस्यात् ॥ ३ ॥ यदाहिबुद्धिर्भावात्मनेनपश्यति * तदा मनोनपरद्रव्यं * नाभिध्यायतिपरस्य * निष्टंनचिन्तयतिन * वितथमभिनिविशति । ४ । तत्सत्यदर्शिन्या बुद्ध्याधिष्ठितेनैव* मनसासंयुक्ताचवाक् * पारुष्यमनृतंपैशुन्यवचनं * असम्बद्धालापंनकुर्यात् । ५ । तथैवमनसायुक्त * मिन्द्रियंदेहस्तेनादत्ता * नयानादत्ते नचाविधानतोऽन्यान् * हिनस्तिनपरदारानुपसेवते ।६। इतिशुभफलंदशलक्षणकर्म्म ॥ यदासैवबुद्धिर्भावा * त्मतत्त्वेनपश्यतिपश्यतितु * मिथ्यावानववातिवा । ७ । तदातयादुष्टयामनोऽशुभफलं * कर्म्माचरतितयायुक्तेनच * मनसायुक्तावाग * शुभफलंवाक्यमाह । ८ । तथैवमनसायुक्तमिन्द्रिय*मशुभफलं *कर्म्माचरति । ८ । * । ४ । तद्विशेषयथावत्पश्यन्त्यावृत्या * युक्तःमनोवाग्देहंकिं *माचरतीत्यतआह *

**परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् । वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ ५ ॥**

परद्रव्येष्वित्यादिद्वयं ।५। अयथावत्पथान्यायानुयुक्तेन * मनसा परद्रव्येष्वभिध्यानं * ब्रह्मणेच्छा परस्यानिष्टचिन्तनम् ।१। वितथेऽनृतेऽभिनिवेशश्चेति त्रिविधं मानसमशुभफलं कर्म ।२।५।

**पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः । असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ ६ ॥**

पारुष्यमित्यादि ।६। पारुष्यं कर्कशवाक्यं * अनृतं मिथ्यावचनं * सर्वशः पैशुन्यं खलो * त्रिलोकःप्रत्यसम्बन्ध * प्रलापश्चेति वाङ्मयं * चतुर्धा कर्माशुभफलं ॥१॥६॥

**अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥७॥**

अदत्तानामित्यादि ।७। अदत्तानां द्रव्याणां हस्तेनादानं * अविधानतो हिंसा च * पाणिपादादिभिः पर * दारोपसेवा चाङ्गप्र * त्यङ्गैरिति त्रिविधं तु ।१। अशुभफलं शारीरं * कर्म स्मृतमिति संक्षेपो विस्तरेण मनोवाग्देहसम्भव * मशुभफलं कर्म ज्ञेयं ।२।७।

**मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् । वाचा वाचा कृतं कर्म कायेनैव च कायिकम् ॥८॥**

मानसमित्यादि ।८। मानसं शुभाशुभं कर्मफलं * मनसैवायं कर्त्ता कालत उप * भुङ्क्ते वाचा कृतं शुभाशुभं कर्म * वाचैवोपभुङ्क्ते नत्वन्येनेति ।१। कायिकं शुभाशुभं कर्मफलं * कायेनैवोपभुङ्क्ते ।२।८।

**शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥९॥**

शरीरजैरित्यादि ।९। कर्माण्यैहिककालान्तरफलानि च * यथा तण्डुलादिपाकः * कालान्तरे च शरीर * धातून् पुष्यति न सद्यो * गोदोहनाग्निदाहवत् ।१। तथा शरीरजाः कर्मदोषा यदा * परिणमन्तः फलोन्मुखो भवन्ति * तदा नरकावसाने नरः पुमान् ।२। तैः शरीरजैः कर्मदोषैरिह * स्थावरतां वृक्षादित्वं * याति वाचिकैः कर्मदोषैः * पक्षित्वं मृगत्वं याति ।३। मानसैः कर्मदोषैरन्त्यजातितां * चाण्डालादिशूद्रत्वं प्राप्नोति ।४।९।

**वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥१०॥**

वाग्दण्ड इत्यादि ।१०। वाग्दण्डो मनोदण्डः कायदण्ड * इति त्रयो दण्डा यस्य * बुद्धौ निहिताः स पुमान् * त्रिदण्डीत्युच्यते शास्त्रे ।१।१०।

**विदग्धमेतन्निक्षिप्य सर्व्वभूतेषु मानवः । कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छति ॥ ११ ॥**

विदग्धमित्यादि। ११। यो मानवः कामक्रोधौ*संयम्य सर्व्वभूतेषु तद्विदग्धं * निक्षिप्य विहाय यदा*वर्त्तते तदा सिद्धिं निगच्छति। १। ११। नन्वयमेष पुरुषः कर्म्माणि यैः* वाङ्मनःशरीरैः करोति तानि तु * म्रियमाणो विहाय लोकान्तरं*गच्छति कथमिह तत्फलं भुङ्क्ते। १। इत्यत उच्यते योऽसावात्मनः कार*।

**योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः ॥ १२ ॥**

य इत्यादि। २। १२। अस्य जागरितस्थानस्य स्वप्न * स्थानस्य चात्मनो जागरिते स्वप्ने * यः कर्म्माणि कारयिता*तं क्षेत्रज्ञं प्रचक्षते। १। कः कर्म्माणि तेन प्रयुक्तः करोतीत्यत आह य इत्यादि। २। यो जाग्रद्दिवा कर्म्माणि करोति यश्च*स्वप्नकर्म्माणि करोति*स द्विविधो भूतात्मोच्यते। ३। जागरितस्थानो वैश्वानरो नाम* भूतात्मा बहिःप्रज्ञः सप्ताङ्ग एकोनविंशति मुखः स्थूल*भुक्प्रथमः पादस्तस्य आत्मा। ४। स्वप्नस्थानस्तैजसो नाम भूतात्मा*सोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशति* मुखः प्रविविक्त*भुक् द्वितीयः पादस्तस्यात्मा। ५। भूतानां बाह्यभूतात्मा*न तु भूतानामात्मेति*स्वरूपात्मत्वप्रसङ्गात्। ६। यानि खल्विमानि पञ्च*स्थूलानि भूतानि पूर्व्व*पूर्व्वभूतानुप्रविष्टानि * नो कश्चित् विचतुष्पञ्च*महाभूतात्मकानि खं*वायुर्ज्योतिरापः पृथ्वी। ७। तानि सप्ताङ्गो वैश्वानरो नाम * जागरितस्थानो भूतात्मा। ८। तेषां भूतानां पञ्चानां*यत्त्वात्मकं तेजोभूतं*तद्धि वा भूतमेकं वैश्वानरस्य*मूर्द्धा द्युर्नाम स्यात्। ९। द्वितीयं वैश्वानरस्य*चक्षुर्विश्वरूपो नाम * योऽसौ द्वाविंशको वायुः स*पृथग्वर्त्मा नाम प्राणो*वैश्वानरस्यात्मन इति। १०। योऽसावाकाशः कालविशिष्ट एव*शब्दतन्मात्रः स्थूलता* मापन्नः स बहुलो नाम सन्देहो * वैश्वानरस्यात्मन इति। ११। यास्त्वंशरात्मिका आपः सा रयि*र्नाम वैश्वानरस्य वस्तिर्या पृथिवी* पञ्चात्मिका सा प्रतिष्ठा*नाम वैश्वानरस्य पादौ। १२। इति पञ्च सप्ताङ्गो वैश्वानरो नाम* भूतात्मास्य मुखानि कोनविंशतिः * पञ्चप्राणा दशबाह्यानीन्द्रियाणि*चत्वार्य्याभ्यन्तराणि मनो*बुद्धिरहङ्कारश्चित्तमित्येकोनविंशतिस्तैर्मुखैः ॥ १३ ॥ पञ्चशब्दादयोऽर्थाभोगा एव बहिः*प्रज्ञः स्थूलविषयभुक् ॥ १४। यानि शब्दमालादीनि * पञ्चमहाभूतानि ता*नो वस्वप्नस्थानस्तैजसो नाम * भूतात्मा पूर्व्ववत्सप्ताङ्ग * एकोनविंशतिमुखः। १५। अन्तःप्रज्ञः प्रविविक्त * खल्वाभ्यन्तरे स्वप्ने तु * विषयान् शब्दादीन् भुङ्क्ते इति द्विधा भूतात्मा। १६। नन्वेतौ यत् स्थूलविविक्तभुजौ तत्कथं भुङ्क्त इत्यत आह ॥

**जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम् । येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु ॥ १३ ॥**

जीवेत्यादि। १। १३। सर्व्वदेहिनामन्तरात्मा जीवसंज्ञः क्षेत्रज्ञभूतात्मभ्यामन्यः * सहजः सूक्ष्मशरीर

सर्गे जातः। १। येनान्तरात्मना जीवसंज्ञेन * जन्मसुखं दुःखं च * सर्व्वं भूतात्मनोर्द्वौ * विद्यः पञ्चमो लोके तौ च वेद्यते। ११। ननु कोऽसौ जीवसंज्ञ * इत्यत आह।

**तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च। उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥ १४॥**

तावित्यादि। १। १४। जीवसंज्ञोऽसौ महांश्च क्षेत्रज्ञ * तौ तौ यौ तावुभौ भूत * संपृक्तौ भूतात्मनियुक्तौ। १। कस्मिन् भूते संपृक्तावित्यत आह। २। उच्चावचेष्वित्यादि। २। उच्चावचेषु खलु इहत् * क्षुद्रेषु भूतेषु प्राणिषु * स्थितं तं भूतात्मानं व्याप्य तिष्ठतः इति वेदितव्याम्। २। १४। ननु सुषुप्तौ कः किं कुर्य्यादिति चेदुच्यते वेदं विद्धि यं * यत्र सुप्तो न कञ्चन * कामं कामयते न च * कञ्चन स्वप्नं पश्यति * तत् सुषुप्तिस्थानमिति। १७। सुषुप्तिस्थान एकीभूतः प्रज्ञानघन एवानन्द * मय आनन्दभुक् चेतो * मुखः प्राज्ञस्तृतीयः पादः इति सुषुप्तौ भूतात्मनोरहङ्कारे लयान्न कर्म्मणां कर्त्ता वर्त्तते न च क्षेत्रज्ञः कारयति चेतः प्रज्ञा सुखेनानन्दं भुङ्क्ते। १८। ननु योऽयं प्रज्ञया विश्लिष्टः प्राज्ञः स एनावेवद्वौ * भूतात्मानाववस्थयो * र्द्वयोः कर्म्माणि कारय * तीतौ पञ्चेत्वज्ञ आत्मोच्यते॥ १८। १२। स उक्तेन कर्म्माणि कारयती * त्यत आह।

**असङ्ख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः। उच्चावचानि भूतानि सततं चेष्टयन्ति याः॥ १५॥**

असंख्या इत्यादि। १५। तस्य क्षेत्रज्ञस्य * खल्वात्मनः शरीरत * स्त्वसङ्ख्या मूर्त्तय एव * निष्पतन्ति या मूर्त्तय * उच्चावचानि भूतानि * सततमेव चेष्टयन्ति। १। मुण्डकोपनिषदि चोक्तमेवेदं * यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः * सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सौम्य भावाः * प्रजायन्ते तत्र चैवापियन्ति। इति। २। १५।

**पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्। शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम्॥ १६॥**

पञ्चभ्य एवेत्यादि। १६। दुष्कृतिनां नृणां प्रेत्य * स्वशरीरिले न वर्त्तमानानां * पञ्चभ्य एव मात्राभ्यः। १। आकाशादिभ्यो भूतेभ्यो * यातनार्थीयमन्यच्च * शरीरमेकं ध्रुव * मनश्वरं स्थिरमुत्पद्यते॥ १६॥

**तेनानुभूय ता यामीः शरीरेणेह यातनाः। तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः॥ १७॥**

तेनेत्यादि। १७। तेन यातनार्थीयेन शरीरेण * ता यामीर्यातना एव * भूयावसाने तेषां नृणां * तानि यातनार्थीयानि * शरीराणि। १। विभागशस्तासु * भूतमात्रास्वेव * यतो यत्तत्तदिष्टिं वं प्रलीयन्ते॥ २॥ १७॥

ऽनुभूयासुखोदर्कान् दोषान् विषयसङ्गजान्। व्यपेतकल्मषोऽभ्येति तावेवोभौ महौजसौ१८

सङ्गत्यादि। १८। सङ्कृतिकल्परोपयातनार्थो यच्छरीरमाश्रितः खलुभूतात्मा महत् च एताभ्यां वियुक्तः सन् लोके * विषयसङ्गजानसुखोदर्कान् * दुःखोत्तरान्दोषाननुभूय एव। १। यदा व्यपेतकल्मषो * गतपापफलभोगः स्यात् * तदा तावेवोभौ महौजसौ महत् * च एतौ सम्यक् तौ भूतात्मानः प्रथग् भूयस्थिताव ति॥ १८॥ ननु तौ महौजसौ महत् च एतौ प्रथग् भूयकिं कुरुतः कुत्र च स्थिता विदत्यत आह॥

धर्मं पश्यतस्तस्य पापश्चातन्द्रितौ सह। याभ्यां प्राप्नोति संपृक्तः प्रेत्येह च सुखासुखम्१९

तौ धर्ममित्यादि॥ १९॥ तौ महत् च एतौ सम्यक् तौ तस्य * भूतात्मनः पुरुषस्य * धर्माधर्माभ्यामतन्द्रितावन तैतन्नैव स्थितौ तस्य धर्मं पापञ्च पश्यतः। १। याभ्यां धर्मपापाभ्यां सह संपृक्तः * पुरुषः प्रेत्य च इह च * सुखा खं प्राप्नोति॥ १९॥ ननु तर्हि किं धर्माधर्माभ्यां यामीं यातनामनुभवतीत्यत आह॥

यद्याचरति धर्मं स प्रायशोऽधर्ममल्पशः। तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते॥ २०॥

यद्याचरतीत्यादि। २०। यैः पितृजमातृजमातापितृजा * तेजैश्चतुर्विधैः पञ्चभिर्भूतैः * दारब्धशरीर नृपपुरुषः। १। यद्यल्पशोऽधर्मं प्रायशो धर्ममेव * वाचरति तदा सोऽन्ते * तत् पितृजमातृजात्मज* हाहारजभूतमयं शरीरं। २। विहाय परलोकं गतस्तैरेव चतुर्विधैः * पञ्चभिर्भूतैरावृतः पुनस्तद्भोगशरीरं प्तः॥ स्वर्गे सुखमश्नुते॥ २०॥

यदि तु प्रायशोऽधर्मं सेवते धर्ममल्पशः। तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः॥२१॥

यदीत्यादि। २१। सपुरुषो यदि लधर्मं प्रायशो * धर्ममल्पशः सेवते तदा तैरात्मजादिभिश्चतुर्विधैर्भूतैः रित्यक्तः पञ्चतमात्रैरारब्धं * यातनार्थी यमनाम् * शरीरं प्राप्तः सन् * यामीर्यातनाः प्राप्नोति। २१॥ ननु याम तनाभोगावसाने कथं वर्त्तत इत्यत आह॥

यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः। तान्येव पञ्चभूतानि पुनरप्येति भागशः॥ २२॥

यामीस्ता इत्यादि। २२। ता यामीर्यातना यावत्पापं तावत् * प्राप्य स जीवः पुरुषः। १। वीतकल्मषो विगत * पापफलभोगः सन् पुनस्तान्येव पञ्च * भूतानि पापयातनाभोगावशानीय योनिमासाद्य पितृजादीनि च र्विधानि भागशोऽप्येति। २२।

एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा। धर्मतोऽधर्मतश्चैव धर्मे दध्यात् सदा मनः॥२३॥

एतादृतादि। २३। यस्माज्जीवस्यैता गती * धर्मतः प्रयाम्यधर्मतश्च पश्य * गतीः स्वेनैव तस्मात् पुमान् * सदा धर्मे मनो दध्यात्। २३॥

सत्त्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान्। यैर्व्याप्येमान् स्थितो भावान् महान् सर्व्वानशेषतः॥ २४॥

सत्त्वमित्यादि। २४। सत्त्वादीन् त्रीनात्मनो महतो गुणान् विद्यात् * महानात्मा यैर्व्याप्य इमान् सर्व्वान् * भावानशेषतो व्याप्य स्थितः स्यात्। २४।

योयदैषां गुणो देहे साकल्येनातिरिच्यते। स तदा तद्गुणप्रायं तं करोति शरीरिणम्॥ २५॥

योयदैषामित्यादि। २५। योगुण एषां मध्ये * देहे यदा साकल्येनातिरिच्यते * तदा स गुणस्तद्गुण * प्रायं तं शरीरिणं नरं करोति। २५।

सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्। एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः॥ २६॥

सत्त्वमित्यादि। २६। सत्त्वं गुणो ज्ञानं ज्ञानजनकत्वात् * तमोगुणस्त्वज्ञानं मोहात्मकत्वात् * रजोगुणो रागद्वेषजनकत्वात्। १। एषां सत्त्वादीनां त्रयाणां गुणानां * व्याप्तिमद्व्यभिचारविशिष्टं * सर्व्वभूताश्रितमेतद्वपुर्भवतीति। २६।

तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्। प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत्॥ २७॥

तत्रेत्यादि। २७। तत्र त्रिगुणव्याप्ते शरीरे प्रीति * संयुक्तं यत्किञ्चित् प्रशान्तमिव * शुद्धाभमात्मनि लक्षयेत् सत्त्वगुणकृतमित्युपधारयेत्। २७।

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः। तद्रजोऽप्रतिघं विद्यात् सततं हारि देहिनाम्॥ २८॥

यत्त्वित्यादि। २८। तत्र त्रिगुणव्याप्ते वपुष्यात्मनि * आत्मनोऽप्रीतिकरं * दुःखसमायुक्तं यत्तु * अप्रतिघमक्रोधं। १। सततं देहिनां हारि तद्रजो * रजोगुणकृतं विद्यात्। २८।

यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम्। अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्॥ २९॥

यत्तु स्यादित्यादि। २९। तत्र त्रिगुणव्याप्ते वपुष्यात्मनि * यत्तु किञ्चिदव्यक्तं मोहसंयुक्तं * विषयात्मकमप्रतर्क्यमविज्ञेयं * तत्तमस्तमोगुणकृतं विद्यात्। २९।

त्रयाणामपि चैतेषां गुणानां यः फलोदयः। अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः॥ ३०॥

त्रयाणामित्यादि। ३०। एषां त्रयाणां गुणानां * यः फलोदयः कर्म्मणां * मयोक्तः तं * क्रमशः प्रवक्ष्यामि। ३०।

वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः। धर्म्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्॥३१॥

वेदाभ्यास इत्यादि। ३१। वेदाभ्यासादिकं सात्त्विकं * गुणलक्षणं * वेदितव्यम्। ३१।

आरम्भरुचिताऽधैर्य्यमसत्कार्य्यपरिग्रहः। विषयोपसेवा चाजस्रं राजसं गुणलक्षणम्॥३२॥

आरम्भेत्यादि। ३२। आरम्भरुचि * प्रभृतिकं * राजसं गुण * लक्षणं स्यात्। ३२।

लोभः स्वप्नोऽधृतिः क्रौर्य्यं नास्तिक्यं भिन्नवृत्तिता। याचिष्णुता प्रमादश्च तामसं गुणलक्षणम्॥३३॥

लोभ इत्यादि। ३३। लोभादिकं * तामसमेव * गुणलक्षणं * वेदितव्यम्। ३३।

त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम्। इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम्॥३४॥

त्रयाणामित्यादि। ३४। एतेषां सत्त्वादीनां त्रयाणामेव * गुणानां क्रमश उक्तं * यद्यद् गुणलक्षणं तत् * इदं सामासिकं समस्तं त्रिषु गुणेषु तिष्ठतां ज्ञेयं। ३४।

यत्कर्म्म कृत्वा कुर्व्वंश्च करिष्यंश्चैव लज्जते। तज्ज्ञेयं विदुषा सर्व्वं तामसं गुणलक्षणम्॥३५॥

यत्कर्म्मेत्यादि। ३५। यो यत्कर्म्म कृत्वा कुर्व्वन् * करिष्यंश्च लज्जते तत् * सर्व्वं तामसं गुण * लक्षणं विदुषा ज्ञेयं। ३५।

येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति पुष्कलाम्। न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम्॥३६॥

येनेत्यादि। ३६। येन कर्म्मणा क्रियमाणेन * कृतेन करिष्यमाणेन च * लोकेऽस्मिन् पुष्कलां प्रभूतां * ख्यातिं पुरुष इच्छति। १। असम्पत्तौ यथाविधि * सम्पन्नत्वाभावे सति * न शोचति तद्राजसं * गुणलक्षणं विज्ञेयं। ३६।

यत्सर्व्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन्। येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम्॥३७॥

यत्सर्व्वेणेत्यादि। ३७। यत्कर्म्म कृत्वा कुर्व्वन् करिष्यंश्च * पुरुषः सर्व्वेण प्रकारेण ज्ञातुं * मिच्छति यच्चाचरन् न लज्जति। १। येन कर्म्मणास्य * कर्त्तुरात्मा च * तुष्यति तत् सत्त्वगुणलक्षणं स्यात्। ३७।

तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते। सत्त्वस्य लक्षणं धर्म्मः श्रैष्ठ्यमेषां यथोत्तरम्॥३८॥

तमस इत्यादि। ३८। यद्यपि कामो रजोगुणकार्य्यः * स्तमस्तु न नीरजस्कः वर्त्तते * नित्यसम्बन्धः रज

क्रमशः । १ । तमसः रजोऽवबन्धतमःकाय्यः*कामो रजसो लक्षणं*धर्मः सत्त्वस्य लक्षणं । २ । धर्मएषां तथाकामः*कामार्थधर्म्माणां उत्तरोत्तरं श्रेष्ठं भवति ॥ ३८ ॥

येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते । तान् समासेन वक्ष्यामि सर्व्वस्यास्य यथाक्रमम् ३९

येनेत्यादि । ३९ । योऽयमेषां गुणानां*येन गुणेन यान् संसारान्*पुनःपुनर्जन्ममरणाभ्यामिह*आगमनानिपरत्व*मनुष्यान्निप्रतिपद्यते । १ । सर्व्वस्यास्य तान् संसारान् समासेन*यथाक्रमं प्रवक्ष्यामि । २ । ३९ ।

देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः । तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ ४० ॥

देवत्वमित्यादि । ४० । सात्त्विकजना देवत्वं*यान्ति राजसजनाः*मनुष्यत्वमिह यान्ति । १ । तामसजनास्तिर्य्यक्त्वं यान्तीत्येषा*नित्यं त्रिविधा गतिः स्यात् । २ । ४० ।

त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः । अधमा मध्यमाग्र्या च कर्म्मविद्याविशेषतः ॥ ४१ ॥

त्रिविधेत्यादि । ४१ । एषा तु या त्रिविधा तु*गतिर्गौणिकी त्रिविधा*कर्म्मविद्याविशेषतो*भवत्यधमा च मध्यमा चाग्र्या च । १ । ४१ ।

स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः । पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥ ४२ ॥

स्थावरा इत्यादि । ४२ । तामसास्तिर्य्यक्त्वं यान्तीति यदुक्तं*तत्कर्म्मविद्याहीनाः*स्थावरादयो भवन्ति*सा जघन्या तामसी गतिः । १ । ४२ ।

हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः । सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥ ४३ ॥

हस्तिनश्चेत्यादि । ४३ । कर्म्मविद्यामध्यमत्वात्तिर्य्यक्त्वं*हस्तितुरङ्गादयो ये भवन्ति*सा तेषां मध्यमा तामसी गतिः । १ । ४३ ।

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः । रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ ४४ ॥

चारणाश्चेत्यादि । ४४ । चारणादयोऽपि तिर्य्यक्त्वे*तत्तिर्य्यक्त्वेऽपि याऽत्युत्तमैव*तामसी गतिर्विद्याकर्म्माधिक्यात् । १ । ४४ ।

झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः । द्यूतपानप्रसक्ताश्च जघन्या राजसी गतिः ॥ ४५ ॥

झल्ला इत्यादि । ४५ । मनुष्यत्वञ्च राजसा*इति यदुक्तं तत्तु*ये हीनकर्म्मविद्या राजसास्ते*झल्लादयो भवन्तीति तेषां*जघन्या राजसी गतिः । १ । ४५ ।

बहूनित्यादि। ५४। महापातकिनस्तुर्व्वोक्तमाद* विनानरकान् बहून् गत्वाघोरान् *नरकानुभवक्षयात्नरक भोगक्षयात् *पुनरिमान् संसारान्प्रतिपद्यन्ते। १॥ ५४।

श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति ॥५५

श्वशूकरेत्यादि ॥ ५५॥ ब्रह्महा नरकभोगावसाने * श्वशूकरादीनां योनिं क्रमश ऋच्छति। १। ५५।

कृमिकीटपतङ्गानां विड्भुजाञ्चैव पक्षिणाम्। हिंस्राणाञ्चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत् ॥५६

क्रिमीत्यादि। ५६। अविधिना सुरापो ब्राह्मणो नरकावसाने क्रिमिकीटादीनां योनिं क्रमाद् व्रजेत्। ५६।

लूताहिसरटानाञ्च तिरश्चाञ्चाम्बुचारिणाम्। हिंस्राणाञ्च पिशाचानां स्तेनो विप्रः सहस्रशः ॥५७

लूतेत्यादि ॥ ५७ ॥ ब्राह्मणस्य स्वर्णस्तेनो *विप्रो नरकभोगाव* साने सहस्रशो लूता *दीनां योनिं क्रमाद् व्रजेदिति पूर्व्वेणान्वयः। १। ५७।

तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणामपि। क्रूरकर्मकृताञ्चैव शतशो गुरुतल्पगः ॥ ५८ ॥

तृणेत्यादि। ५८। गुरुतल्पगो नरक* भोगावसाने शतशः* तृणादीनां योनिं क्रमशो व्रजेत् ॥ ५८।

हिंस्रा भवन्ति क्रव्यादाः कृमयोऽमेध्यभक्षिणः। परस्परादिनः स्तेनाः प्रेतान्त्यस्त्रीनिषेविणः ॥५९

हिंसादित्यादि। ५९। अब्राह्मणस्वर्णस्तेनादयो *चौरा नरकावसाने *हिंस्रादयो भवन्तीति ॥१॥५९

संयोगं पतितैर्गत्वा परस्यैव च योषितम्। अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः ॥ ६० ॥

संयोगमित्यादि ॥ ६० ॥ पतितैर्महापातकिभिः सह *संयोगं गत्वा पञ्चम० महापातकी नरः परस्य *योषितां गत्वा विप्रस्वमपहृत्य ॥ १ ॥ नरकभोगावसाने पुनर्विप्र *ब्रह्मराक्षसो भवति ॥ २ ॥ ६० ॥

मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः। विविधानि च रत्नानि जायते हेमकर्तृषु ॥ ६१ ॥

मणीत्यादि। ६१ ॥ मानवो लोभेन मणि * मुक्तादीनि हृत्वा नरकावसाने * हेमकर्तृषु स्वर्णकार* वंशेषु जायते ॥ १ ॥ ६१ ॥

धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः। मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥६२

विविधाश्चैव सम्पीडाः काकोलूकैश्च भक्षणम् । करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान् ॥७६॥

विविधाश्चेत्यादि ॥ ७६ ॥ तत्र तत्र नरके विविधाः पीडाः * काकोलूकैर्भक्षणं करम्भ * वालुकातापान् कुम्भीपाकान्दारुणान् * नरकांश्च ते नराः सम्प्राप्नुवन्ति ॥ ७६ ॥

सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः । शीतातपाभिघातांश्च विविधानि भयानि च ॥ ७७ ॥

सम्भवांश्चेत्यादि ॥ ७७ ॥ तन्नरकावसाने दुःखप्रायेषु * वियोनीषु नित्यशः सम्भवान् शीतातपा * भिघातांश्च विविधानि * भयानि च प्राप्नुवन्ति ॥ ७७ ॥

असकृद्गर्भवासेषु वासं जन्म च दारुणम् । बन्धनानि च काष्ठानि परप्रेष्यत्वमेव च ॥ ७८ ॥

असकृदित्यादि ॥ ७८ ॥ गर्भवासेषु गर्भाशयेषु सकृत् * दारुणमसकृद्दारुणं * जन्म च बन्धनानि च * काष्ठानि च परप्रेष्यत्व * मसकृत्प्राप्नुवन्ति ॥ ७८ ॥

बन्धुप्रियवियोगांश्च संवासं चैव दुर्जनैः । द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् ॥ ७९ ॥

बन्धुप्रियेत्यादि ॥ ७९ ॥ बन्धुप्रियवियोगांश्च * दुर्जनैः संवासञ्च * द्रव्याणां धनानामर्जनं नाशनञ्च * मित्रामित्रस्यार्जनञ्च * पुनः पुनः प्राप्नुवन्ति ॥ ७९ ॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम् । क्लेशांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्जयम् ॥ ८० ॥

जरामित्यादि ॥ ८० ॥ अप्रतीकारां जराञ्च * व्याधिभिरुपपीडनञ्च * विविधांस्तांस्तान् क्लेशांश्च * दुर्जयं मोक्षयोगजयं * मृत्युञ्च ते सम्प्राप्नुवन्ति ॥ ८० ॥

यादृशेन तु भावेन यद्यत्कर्म निषेवते । तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ८१ ॥

यादृशेनेत्यादि ॥ ८१ ॥ यद्यत्कर्म यादृशेन * भावेन सात्त्विकादिना * पुरुषो निषेवते । १ । तादृशेन सात्त्विकादिना * शरीरेण तत्तत्कर्म * फलं शुभाशुभमुपाश्नुते ॥ ८१ ॥ उपसंहरति ।

एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः । निःश्रेयसकरं कर्म विप्रस्येदं निबोधत ॥ ८२ ॥

एष इत्यादि । ८२ । कर्मणां यः फलोदयः * स एष समुद्दिष्टः * विप्रस्य निःश्रेयसकरं कर्म इदं निबोधत ॥ ८२ ॥

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः । अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ ८३ ॥

वेदाभ्यास इत्यादि । ८३ ॥ वेदाभ्यासादिकं कर्म विप्रस्य * निःश्रेयसकरं विद्यात् ॥ ८३ ॥

**सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥**

सर्व्वेत्यादि । ९१ । निष्कामश्च वैदिकं कर्म* कुर्व्वन्द्विजोत्तमः सर्व्व* भूतेषु आत्मानं स्वमात्मनि च सर्व्व* भूतानि पश्यन्नात्मयाजी* स्वाराज्यमधिगच्छति । १ । ९१ ।

**यथोक्तान्यपि कर्म्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ ९२**

यथोक्तानीत्यादि । ९२ । द्विजोत्तमो ब्राह्मणो* यथोक्तानि कर्म्माणि* परिहायात्मज्ञाने शमे च वेदे* अभ्यासे च यत्नवान्भवेदिति । १ । ९२ ।

**एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥ ९३ ॥**

एतदित्यादि । ९३ । द्विज एतदात्मज्ञानं* शमं वेदाभ्यासं प्राप्य * कृतकृत्यः कृतकृत्यो भवति नान्यथा* न कृतकृत्यो भवति । १ । विशेषतो हि यस्माद्ब्राह्मणस्यैतत्* आत्मज्ञानं शमं वेदा*भ्यासं जन्मनः साफल्यं * तस्मात्तत्प्रयत्नेनानुष्ठेयात् । २ । ९३ । तत्र वेदाभ्यासं प्रशंसति*

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् । अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ ९४ ॥**

पितृदेवेत्यादि । १ । ९४ । पितृणां देवानां मनुष्याणां च* सनातनं नित्यं चक्षुः* वेदो भवति नित्यत्वात् । १ वेदशास्त्रं यतो न शक्यं केनापि* कर्त्तुं यतश्चाप्रमेयं* लौकिकैः प्रमाणैर्व्वा* अशक्यमिति प्राप्स्थितिः । २ । ९४ ।

**या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ ९५**

यादित्यादि । ९५ । वेदबाह्या याः स्मृतयो* याश्च काश्च लोकानां कुदृष्टयः ता* स्ताः सर्व्वाः प्रेत्य निष्फलाः । १ कस्मादिति यस्मात्ता वेदबाह्या एव* स्मृतयः कुदृष्टयश्च* तमोनिष्ठा बुधैः स्मृताः । २ । ९५ ।

**उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् । तान्यर्व्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ९६ ॥**

उत्पद्यन्तइत्यादि । ९६ । अतो वेदोक्तकर्म्मभ्योऽन्यानि यानि* कानिचित्तान्युत्पद्यन्ते* च्यवन्ते चार्व्वाक्कालिकतया खलु* निष्फलानि चानृतानि भवन्ति । १ । ९६ ।

**चातुर्व्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यच्च सर्व्वं वेदात्प्रसिध्यति ॥ ९७**

चातुर्वर्ण्यमित्यादि । ९७ । चातुर्वर्ण्यं त्रयो लोका* चत्वारः पृथगाश्रमा* भूतं भव्यं भविष्यदिति त्रिकालं * सर्व्वं वेदात्प्रसिध्यति । १ । ९७ ।

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः । वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्म्मतः ॥ ९८ ॥

शब्द इत्यादि । ९८ । शब्दादयः पञ्चार्था वेदादेव प्रकृतिगुणकर्म्मतः प्रसूयन्ते जायन्ते । १ । ९८ ।

बिभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ९९ ॥

बिभर्त्तीत्यादि । ९९ । सनातनं वेदशास्त्रं सर्व्वभूतानि बिभर्त्ति तस्मादेतद् वेदशास्त्रं परं श्रेष्ठं मन्ये यत् वेदशास्त्रमस्य जन्तोः सर्व्वकर्म्मणां साधनं स्यात् । १ । ९९ ।

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च । सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ १०० ॥

सैनापत्यञ्चेत्यादि । १०० । सैनापत्यादिकं सर्व्वं वेदशास्त्रविज्जनोऽर्हति । १ । १०० ।

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदज्ञः कर्म्मजं दोषमात्मनः ॥ १०१ ॥

यथेत्यादि । १०१ । जातबलो वह्निर्यथा द्रुमानार्द्रानपि दहति तथैव वेदज्ञ आत्मनः कर्म्मजं दोषं पापं दहतीति । १ । १०१ ।

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् । इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥ १०२ ॥

वेदेत्यादि । १०२ । वेदशास्त्रार्थतत्त्वज्ञो जनो यत्र तत्राश्रमे ब्रह्माश्रमे वना श्रमे वा चतुर्थाश्रमे वसन्निहैव लोके तिष्ठन् ब्रह्मभूयाय कल्पते । १ । १०२ ।

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः । धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ १०३ ॥

अज्ञेभ्य इत्यादि । १०३ । अज्ञेभ्यः शास्त्रानभिज्ञेभ्यः श्रेष्ठा ग्रन्थिनो भवन्ति ग्रन्थिभ्यो जनेभ्यो वराः स्युः ग्रन्थमभ्यस्य कण्ठे धारिणो जनाः । १ । ग्रन्थधारिभ्यो जनेभ्यः श्रेष्ठाः स्युः ग्रन्थार्थज्ञानिनो जना भवन्ति ज्ञानिभ्यः श्रेष्ठास्तदनुष्ठानव्यवसायिनः स्युः । २ । १०३ ।

तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

तप इत्यादि । १०४ । तपो विद्या च विप्रस्य परं श्रेष्ठं निःश्रेयसकरं भवेत् तत्र तपसा किल्बिषं पापं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ १०५ ॥

प्रत्यक्षमित्यादि । १०५ ॥ धर्म्मतत्त्वमभीप्सता पुरुषेण * प्रत्यक्षमनुमानञ्च * विविधागमं शास्त्रञ्च त्रितयं सुविदित * मभ्यासेन ज्ञातं कार्य्यं ॥ १०५ ॥

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥ १०६ ॥

आर्षमित्यादि ॥ १०६ ॥ यो वेदशास्त्राविरोधिना तर्केण * खल्वार्षं धर्म्मोपदेशं * अनुसन्धत्ते स एव * धर्म्मं वेद नान्य इतरः ॥ १०६ ॥

नैःश्रेयसमिदं कर्म्म यथोदितमशेषतः । मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥

नैःश्रेयसमित्यादि । १०७ । नैःश्रेयसं कर्म्म यथा भवति तत् * यदस्य प्रत उदितं । १ । मानवस्यास्य शास्त्रस्य * रहस्यं गोप्यं यन्निःश्रेयसं कर्म्म * तदत्र उपदिश्यते ॥ १०७ ॥

अनाम्नातेषु धर्म्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः ॥१०८

अनाम्नातेष्वित्यादि । १०८ । इह संहितायाममाम्नाता अनोक्ता * ये धर्म्मास्तेषु धर्म्मेषु * कथं वर्त्तमानः स्यादिति * चेद्भवेत् तत्रोच्यते । १ । यं धर्म्मं शिष्टा ब्राह्मणा ब्रूयुः * स खलु अशङ्कितो धर्म्मः स्यात् ॥ २ ॥ १०८ ॥ शिष्ट इत्यत आह ।

धर्म्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥

धर्म्मेणेत्यादि । १०९ । यैस्तु खलु धर्म्मेण * ब्रह्मचर्य्येण वेदः खलु * सपरिबृंहणोऽधिगतः * ते शिष्टा ब्राह्मणा ज्ञेयाः । १ । कस्मात् यतस्ते श्रुतिप्रत्यक्षसाक्ष * हेतवो लोके भवन्ति ॥ १०९ ॥

दशावरा वा परिषद्यं धर्म्मं परिकल्पयेत् । त्र्यवरा वापि वृत्तस्था तं धर्म्मं न विचालयेत् ॥ ११० ॥

दशावरेत्यादि । ११० । दशपण्डिता अवरा * न्यूनकल्पे यस्याः परिषद् आदिपण्डितानाञ्च * दश अधिकानां नाशाय यं धर्म्मं परि * कल्पयेदयं वा यावच । १ । त्र्यवरा परिषद्यं धर्म्मं * कल्पयेत्तं धर्म्मं न विचालयेत् ॥ ११० ॥ कीदृशी परिषद् * दशावरा भवतीत्यत आह ।

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः । त्रयश्चाश्रमिणः पूर्व्वे परिषत्स्याद्दशावरा ॥१११॥

त्रैविद्य इत्यादि । १११ । यस्याः परिषदि त्रैविद्यास्त्रिवेद * विदः हैतुकश्चान्वीक्षिकी * विद्यावान् तर्की युक्तिवित् * निरुक्तिविद्यावान् धर्म्म * शास्त्राणां च पाठकः स्यात् । १ । पूर्व्वाश्रमत्रयवन्तस्त्रयो वा विधदशपण्डितवती सभा * दशावरा परिषद् भवति ॥ १११ ॥ त्र्यवरा परिषत्पुनः * कीदृशीत्यत उच्यते ।

**आत्मैव देवताः सर्व्वाः सर्व्वमात्मन्यवस्थितम् । आत्मा हि जनयत्येषां कर्म्मयोगं शरीरिणाम् ११९**

आत्मेत्यादि । ११९ । अयमात्मैव देवमरादिः पुरुष एव सर्व्वा देवताः सर्व्वदेवतामयः * आत्मनि वस्तु सर्व्व मवस्थितमस्ति * हि यस्मादेषां शरीरिणां कर्म्म * योगमात्माजनयति नान्यः । ११९ । अथमात्मनिरूप्य णात् सर्व्व मित्याह ।

**खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् । पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु १२०**

**मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् । वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् १२१**

खमित्यादि ॥ १२० ॥ यएषदेवमरादिः पुरुषस्तस्य शरीरे खेषु सर्व्वेषु छिद्रेषु खशब्दाभिधेयमाकाशमधि * देवं सन्निवेशयेत् । १ । यच्च किञ्चिच्चेष्टते स्पृशति च * तच्चेष्टने स्पर्शनेन्द्रिये च * निलमधिदेवं सन्निवेशयेत् २ । यच्चाभावहरति तच्योपक्तायां लोचनपश्यति तद्दृष्टौ चादितौ * परं तेजोऽधिदेवं सन्निवेशयेत् । ३ । यच्चम नास्वादयति तत्र * स्नेहे रसनादावपो * ऽधिदेवं सन्निवेशयेत् । ४ । याश्चैताः पुरुषे मूर्त्तयो घ्राणा * दयस्तास्वधिदेवता * पृथिवीं सन्निवेशयेत् ॥ १२० ॥ मनसीत्यादि ॥ १२१ ॥ यच्चात्मे नमनजामयते तत्र * मनस्यधिदेवमिन्दुं * चन्द्रमसं सन्निवेशयेत् । १ । यदनेन श्रोत्रेण शृणोति तत्र * श्रोत्रे ऽधिदेवं दिशः सन्निवेशयेत् * क्रान्ते पादे विष्णुमधि * देवमात्मा सन्निवेशयेत् । २ । बले ऽधिदेवं हरं सन्निवेशयेत् * वाच्यग्निमधिदेवमुत्सर्गे पायौ * मित्रमधिदेवं प्रजननउपस्थे * ऽधिदेवं प्रजापतिं सन्निवेशयेत् । ३ । इतीव सर्व्व देवतात्मात्मैवात्मनि च सर्व्व मवस्थितमिति । यावन्तो लोके भावविशेषास्तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोक इति । १२१ ॥ नन्वेते ये देवा यानि तानि कर्म्माणि * कुर्व्वन्ति तानि किं स्वय * मेव कुर्व्वन्त्यथवा किं * प्रयोजिता इत्यत आह ।

**प्रशासितारं सर्व्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥ १२२**

प्रशासितारमित्यादि । १ । १२२ । सर्व्वेषां प्रशासितारं * मन्तर्यामिनमणोरप्यणीयांसं रुक्माभं * सुवर्णवदुज्ज्वलप्रभाभावर्ण । १ । स्वप्नधीगम्यं तत्प्रसिद्धं * परं पुरुषं परात्मानं * परमेशं विद्यात् । २ । वृहदारण्यके चोक्तं * सहोवाच याज्ञवल्क्य * एतद्वै तदक्षरं गार्गी ताः ब्राह्मणा वदन्ति । ३ । एतस्य वा अक्षरस्य * प्रशासने गार्गि सूर्य्या * चन्द्रमसौ तिष्ठतः । ४ । एतस्य वा अक्षरस्य * प्रशासने गार्गि द्यावा * पृथिव्यौ विधृते तिष्ठतः । ५ । एतस्य वा अक्षरस्य * प्रशासने गार्गि निमेषा * मुहूर्त्ता अहोरात्राणि * अर्द्धमासा मासा ऋतव * इति विधृतास्तिष्ठन्ति । ६ । एतस्य वा अक्षरस्य * प्रशासने गार्गि प्राच्यो * ऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः * पर्व्वतेभ्यः प्रतीच्योऽन्याः * यां यां च दिशम् अन्वेति । ७ । एतस्य वा अक्षरस्य * प्रशासने गार्गि ददतो मनुष्याः * प्रशंसन्ति यजमानं * देवा दर्व्वी पितरोऽन्वायत्ताः । ८ । इति । १२२ ।

